

## कृतज्ञतास्वीकारः ।

मयूरभञ्जाधिपः श्रीमन्महाराजश्रीरामचन्द्रभञ्जदेवः पण्डित-वर्गाय वितरणार्थं तत्संख्यासंख्यातखण्डग्रहणायास्य वेदान्तसमन्वयस्य सम्मतिमदात् । अतस्तदनुग्रहोऽयमस्माकं चिरस्मरणीयः सञ्जातः कृतज्ञतापाशेन चास्मानबध्नात् । शमस्तु तस्मायिति नः प्रार्थनम् ।

प्रकाशकानाम् ।

# अनुक्रमः ।

ष्याभिलाषविषयनिर्णयः; (१४) नामरूपकर्मतत्त्वविहृतिः; (१५) तत्त्वत्रयाभिधानम्; (१६) भगवच्छक्त्यैव जगत् प्रवर्त्तते। २६५—३०६पृ,।

तत्त्वविचारार्थाध्यायप्रपूर्त्तिः। ३०६—३११पृ,।

९। देवतावल्लीति नवमस्य। (१) आदित्यश्चन्द्रश्च, (२) मुख्यप्राणः, (३) आत्मतः प्राणः, (४) पापपुण्यतत्त्वम्, (५) प्राण आदित्योऽन्नम्, (६) स्वर्गलोकद्वाराधिष्ठातृदेवाः, (७) प्राणस्य श्रेष्ठत्वविहृतिः, (८) सैव, (९) वाङ्मनःप्राणतत्त्वम्, (१०) प्राणतत्त्वम्, (११) षड्सप्तत्रिंशताधिकत्रिसहस्रदेवानामेकस्मिन् प्राणे पर्य्यवसानं परोक्षब्रह्मतया। ३१२—३५७पृ,।

तत्त्वविचारार्थाध्यायप्रपूर्त्तिः। ३५७—३६१पृ,।

१०। विद्यावल्लीति दशमस्य। (१) अपरोक्षज्ञानसम्बन्धेनेह सर्व्वमनुष्ठानम्, (२) अपरोक्षज्ञानसम्बन्धादैश्वर्य्येण मृत्यतिक्रमः प्रकृत्यामृतत्वलाभः; (३) साक्षाद्ब्रह्मविद्योपदेशः, (४) स्वदेहस्थब्रह्मोपासनम्, (५) ब्रह्मयोगः, (६) ब्रह्मविद्यायाः श्रेष्ठत्वप्रतिपादनम्, (७) कर्म्मवैलक्षण्येन ब्रह्मविद्यादानम्, (८) अपरोक्षज्ञानोपायः, (९) अनुग्रहेण तत्स्वरूपज्ञानलाभः, (१०) ब्रह्मज्ञानसम्प्रदानविधानम्; (११) संहिताघटितोपासनम्, ज्ञानवितरणसामर्थ्यप्रार्थनम्, व्याहृतिषु ब्रह्म-तदङ्गदेवतानिर्व्वाचनम्, ब्रह्मप्रवेशसोपानपरम्परा तत्स्वरूपैक्यञ्च, सर्व्वैरैकात्म्यतासाधनम्; (१२) कर्त्तव्यानि, अध्ययनसमापनानन्तरं कर्त्तव्यानि; (१३) ब्रह्मविद्यासाधनम्; (१४) उद्गीथोपासनम्; (१५) तदेवोङ्कारमधिकृत्य; (१६) उद्गीथप्रणवयोरैकत्वम्; (१७) अन्नलाभायोद्गीथोपासनम्; (१८) लोभाद्यरावलम्बनेनोपासनम्; (१९।२०) सामोपासनम्, (२१) तत्रोङ्कारस्य प्राधान्यम्, (२२) यज्ञाङ्गभूतसामादिविज्ञानम्, (२३) आदित्योपास्तिश्च गायत्रोरूपेण, (२४) दीर्घायुष्ट्वसाधकं कोषविज्ञानम्, स्वाभाविकक्रियासु यज्ञसाधनम्; (२५) संवर्गविद्या, (२६) यज्ञक्षतप्रतिविधानम्, (२७) प्राणोपासनम्, (२८) वैश्वानरविद्या, (२९) विश्वरूपत्वमश्वमेधस्य, (३०) परात्मोपासनम्, (३१) भोक्तृभोग्यरूपभूतोपास्तिः, (३२) वित्तवर्द्धनोपायः, (३३) प्राणशक्तिवर्द्धननियमः, (३४) ब्रह्मसंस्थतोपायः, (३५) तत्र विशेषोक्तिः, (३६) दमादिसाधनत्रयम्, साधनान्तराणि च; (३७) मन आद्युपाधित्वेनोपासनम्; (३८) उपासनान्तराणि, (३९) वित्तोपार्ज्जनेन महत्त्वलाभायोपासनम्, (४०) पुत्रार्थमनुष्ठानम्, (४१) ध्यानसाधनम्, (४२) प्रार्थनाप्राधान्येन विद्योपसंहारः। ३६२—५२२ पृ,।

तत्त्वविचारार्थाध्यायप्रपूर्त्तिः। ५२२—५३४पृ,।

११। गतिवल्लीत्येकादशस्य। (१) सर्व्वात्मत्वसाधने सद्गतिः तद्विपरीतेऽसद्गतिः; (२) ततः क्षुत्तृड्जराभयशोकातिक्रमः; (३) गतिवैचित्र्यकारणं स्वरूपावस्थानञ्च; (४) ज्ञानरूपोपाधिग्रहणम्, परमपुरुषज्ञानेनाविचलितचित्तत्वेन च परमा गतिः, (५) सुषुम्नाड़ीभ्यः प्राणस्योत्क्रमणं शरीरात् पार्थक्येन ब्रह्मस्वरूपत्वं जीवस्य, (६) पुनरावर्त्त्यपुनरावर्त्तनी गतिः, (७) अरण्यचारिणां भिक्षूणां गतिः, (८) जगज्जीवनियन्तृसान्निध्यानुभवेन ग्रन्थिच्छेदः संशयमोषः, (९) सत्याश्रयणेन लोकजयः, (१०) तेन चाभिलाषावाप्तिः, (११) सकामानां तदर्ज्जितानाञ्च गतिः, (१२) जन्मकारणातिक्रमणं स्वरूपप्रतिष्ठा च, (१३) अभयलाभः, (१४) सर्व्वगतत्वेन रसस्वरूपोपलब्धिः, (१५) ब्रह्मणोपभोगविहृतिः; (१६) उत्क्रमणेऽपि परात्मालिङ्गनत्वम्; (१७) उद्गीथोपासनासामोपा-

---

# वेदान्तसमन्वयः




## प्रथमोऽध्यायः ।

### अथारम्भवल्ली ।

प्रणम्य परमेशानं पराशरसुतं पुनः ।
व्याख्यातुमथ वेदान्तसमन्वयोऽनुभास्यते ॥
सूत्रकारेण वेदान्तसमन्वयोऽतियत्नतः ।
अकारि तस्य यत्तत्त्वं तत् ख्यातुमयमुद्यमः ॥
कुतो वारभ्य वेदान्तो ब्रह्मतत्त्वमुपादिशत् ।
कुतः पुराणैः सङ्गोऽस्य जातस्तच्चिन्त्यतेऽग्रतः ॥
पाश्चात्यान् पण्डितान् नित्यं वेदोद्धारे कृतश्रमान् ।
नमस्कृत्य तथात्मानं सम्भावयामि तत्फलैः ॥

१ । अन्धंतमः प्रविशन्ति ये ऽविद्यामुपासते ।
ततो भूयइव ते तमो य उ विद्यायाꣳ रताः ॥

कुतो वा पुत्रैषणां वित्तैषणां लोकैषणाञ्च परित्यज्य मुनित्वं सम्भवति ? तपोऽपरनाम मननञ्चेदुपनिषदुदये हेतुः, स्यादेवास्यैषणा हि प्रतिकूला । अतः सर्व्वप्रथमं वैदिकक्रियाकलापेषु दोषदर्शनमुपतिष्ठते पश्चात्तस्य परिहारस्य । परिहारोऽपि न सम्भवति सहसैव । दृश्यते च ततो वैदिकदेवेषु वैदिकानुष्ठानेषूपनिषत्समुचितभावानां समावेशः । स तु विषयो द्वितीयवल्ल्याः । अत्र श्रुतयो दोषदर्शिन्यो व्याख्यायन्ते ।

१ । अन्धमिति । ये अविद्यां वैदिकमग्निहोत्रादि कर्म्म

२। अन्यदेवाहुर्विद्ययाऽन्यदेवाहुरविद्यया।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥

३। विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥

उपासते प्रतितिष्ठन्ति, ते अन्धं दर्शनप्रतिरोधि तमः अज्ञानं प्रविशन्ति। ये च पुनः विद्यायां देवाराधनायां रताः ततो भूयः ततोऽपि अधिकतरं तमः प्रविशन्ति; 'पशुरेव स देवानाम्' इति श्रौतन्यायात्।

२। अन्यदिति। विद्यया देवज्ञानेन अन्यत् एव, अविद्यया कर्म्मणा अन्यत् एव फलम्। इति ये नः अस्मभ्यः तत् विचचक्षिरे व्याख्यातवन्तः तेषां धीराणां शुश्रुम श्रुतवन्तः वयं। फलमन्यत्वं तथाहि शतपथब्राह्मणे—"आत्मयाजी श्रेयान् देवयाजी वेत्यात्मयाजीति ह ब्रूयात्। स ह वा आत्मयाजी यो वेद 'इदं मे, अनेन अङ्गं संस्क्रियते, इदं मे, अनेन अङ्गमुपाधीयते।' इति। स यथाहिस्त्वचो निर्म्मुच्यते एवमस्मात् मर्त्यात् शरीरात् पाप्मनो निर्म्मुच्यते, स ऋङ्मयो यजुर्मयः साममयः आहुतिमयः स्वर्गलोकमभि सम्भवति। अथ ह स देवयाजी यो वेद देवान् एव, 'अहमिदं यजे देवान् समर्पयामि' इति। स यथा श्रेयसे पापीयान् बलिं हरेत्, वैश्यो वा राज्ञे बलिं हरेदेवं सः। स [illegible] न तावन्तं लोकं जयति यावन्तमितरः।" इति।

३। विद्यामिति। विद्यां च अविद्यां च तत् उभयं सह एकत्र —'इदं मे, अनेन अङ्गं संस्क्रियते, इदं मे अनेन अङ्गमुपाधीयते' इति—यः वेद, स अविद्यया कर्म्मणा मृत्युं तीर्त्वा विद्यया देवसाहाय्येन अमृतम् अश्नुते प्राप्नोति। "स मृत्युर्देवानब्रवीत्, 'अथ एव सर्व्वे मनुष्या अमृता भविष्यन्ति, अथ को मह्यं भागो भविष्यति'" इति अनात्मयाजित्वेन मृत्योरधीनत्वम्; इदं मे मम कर्म्म अनेन देवेन अङ्गं संस्क्रियते, इदं मे मम कर्म्म अनेन देवेन अङ्गम् उपाधीयते आत्मन उपाधि-

४। अन्धंतमः प्रविशन्ति येऽसम्भूतिमुपासते।
ततो भूयइव ते तमो य उ सम्भूत्याꣳ रताः॥
ईश ९—१२।

५। अविद्यायामन्तरे वर्त्तमाना
स्वयंधीराः पण्डितम्मन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढ़ा
अन्धेनैव नीयमाना यथान्धाः॥
कठ, २वल्ली, ५श्लक्।

६। शौनकोह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः

त्वेन प्रकाशते, उपाचीयते इति पाठे अमृतत्वोपयोग्युपचयं लभते इति ध्यानेन देवमाहात्म्येनामृतत्वलाभः।

४। अन्धमिति। ये असम्भूतिं—सम्भूतिः उत्पत्तिः सा न विद्यते यस्याः सा असम्भूतिः प्रकृतिः—तां ये उपासते, ते अन्धं दर्शनप्रतिरोधि तमः अज्ञानं प्रविशन्ति, ये उ पुनः सम्भूत्याम् ईश्वरस्य ऐश्वर्य्यविशेषे रताः अनुरक्ताः तदाराधनपराः ते ततो भूयः ततोऽपि अधिकतरं तमः प्रविशन्ति, प्रकृत्यपेक्षया पुनरैश्वर्य्यानुरक्तेरधिकबन्धकत्वात्।

५। अविद्ययेति। ये जनाः अविद्यायां वैदिके अग्निहोत्रादौ कर्म्मणि अन्तरे मध्ये घनीभूते इव तमसि वर्त्तमानाः विद्यमानाः सन्तः स्वयं धीराः प्रज्ञावन्तः पण्डिताः शास्त्रकुशलाश्च इति मन्यमानाः, ते मूढ़ाः अन्धेन एव नीयमानाः अन्धाः यथा तथा दन्द्रम्यमाणाः अत्यर्थं कुटिलामनेकरूपां गतिं गच्छन्तः, परियन्ति परिगच्छन्ति परिभ्रमन्ति। दन्द्रम्यमाणा इत्यत्र मुण्डकोपनिषदि जङ्घन्यमाना इति पाठः। जङ्घन्यमानाः अनेकानर्थैः हन्यमानाः भृशं पीड्यमाना इत्यर्थः।

६। शौनकइति। शौनकः शुनकस्यापत्यं महाशालः महा-

पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवतीति।

तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च।

तत्राऽपरा ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते। मु, १।१।३—५।

७। प्लवा ह्येते अदृढ़ा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म्म।
एतच्छ्रेयोयेऽभिनन्दन्ति मूढ़ा
जरामृत्युं ते पुनरेवापि यन्ति ॥मु, १।२।७।

गृहस्थः अङ्गिरसं भरद्वाजशिष्यम् आचार्य्यं विधिवत् यथाशास्त्रम् उपसन्नः उपागतः सन् पप्रच्छ पृष्टवान्। किं पृष्टवान्? भगवो हे भगवन्, कस्मिन् नु विज्ञाते इदं सर्व्वं विज्ञातं भवति? इति। स अङ्गिराः तस्मै शौनकाय ह किल उवाच उक्तवान्। किमुक्तवान्? द्वे विद्ये वेदितव्ये ज्ञातव्ये इति। न पुनरिदं ममैवोक्तिः—यत् ह किल ब्रह्मविदः वदन्ति स्म। के ते? परा परमात्मविद्या च एव, अपरा कर्म्मविद्या च। तत्र ऋग्वेदः, यजुर्व्वेदः, सामवेदः, अथर्व्ववेदः तदङ्गानि च षट्—शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः, ज्योतिषम् इति अपरा। अथ सा परा यया तत् अक्षरं परं ब्रह्म अधिगम्यते विज्ञायते।

७। प्लवा इति। येषु षोड़शर्त्विजः पत्नी यजमानश्च इति अष्टादशसु कर्म्म अवरम् अश्रेष्ठम् आत्मज्ञानविवर्ज्जितत्वात् उक्तं, ते एते यज्ञरूपाः यज्ञनिर्व्वर्त्तकाः अष्टादश हि यस्मात् अदृढ़ाः अस्थिराः, तस्मात् प्लवाः विनाशिनः स्वल्पाश्रयाः। एतत् अवरं कर्म्म श्रेयः इति

८। अविद्यायां बहुधा वर्त्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्म्मिणो न प्रवेदयन्ति रागा-
त्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥

९। इष्टापूर्त्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढ़ाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वे-
मं लोकं हीनतरं चाविशन्ति ॥मु, १।२।९।१०

१०। अधीहि भगव इति होपससाद सनत्कुमारं नारदः। तꣳहोवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्द्धं वक्ष्यामीति ॥१॥

ये अभिनन्दन्ति, ते मूढ़ाः पुनरेवापि भूयोऽपि जरामृत्युं यन्ति प्राप्नुवन्ति।

८। अविद्यायामिति। अविद्यायां वैदिके अग्निहोत्रादौ कर्म्मणि बहुधा बहुप्रकारं वर्त्तमानाः बालाः मन्दबुद्धयः वयं कृतार्थाः कृतकृत्याइति अभिमन्यन्ति अभिमानं कुर्व्वन्ति। यत् यस्मात् रागात् अस्थायिफलेष्वासक्तिवशात् कर्म्मिणः न प्रवेदयन्ति तेषां प्लवत्वं न जानन्ति, तेन हेतुना आतुराः दुःखार्त्ताः सन्तः क्षीणलोकाः च्यवन्ते स्वर्गलोकात् अधोगच्छन्ति।

९। इष्टेति। इष्टापूर्त्तम् इष्टं यागादि श्रौतं पूर्त्तं वापितड़ागादि स्मार्त्तं कर्म्म वरिष्ठं प्रधानमिति मन्यमानाः, प्रमूढ़ाः न अन्यत् श्रेयः वेदयन्ते न जानन्ति। ते नाकस्य पृष्ठे स्वर्गस्य उपरि स्थाने सुकृते भोगायतने अनुभूत्वा कर्म्मफलम् अनुभूय, इमं लोकं पृथिव्यनुरूपं लोकं हीनतरं च हीनतरं वा लोकम् आविशन्ति प्रविशन्ति।

१०। अधीहीति। भगवो हे भगवन्, अधीहि अधीष्व ज्ञापय

स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्व्वेद॰ सामवेद-माथर्व्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्म-विद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या॰ सर्पदेवजन-विद्यामेतद्भगवोऽध्येमि।

सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्, श्रुत॰ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति।

छा, ७।१।१।२—३।

इति नारदः सनत्कुमारम् उपससाद उपजगाम। तं यथाविधि उप-सन्नम् उपगतं नारदं ह किल उवाच स सनत्कुमारः, यत् वेत्थ तेन—इदमहं जाने इति—तत्प्रख्यापनेन मा माम् उपसीद उपगच्छ। ततः ऊर्द्धं ततः विज्ञानात् ऊर्द्धं ते वक्ष्यामि इति। स नारदः ह किल उवाच, भगवो हे भगवन्, ऋग्वेदम् अधीमि स्मरामि, यजुर्व्वेदं, साम-वेदम्, आथर्व्वणं चतुर्थम्, पुराणं पञ्चमं वेदं, वेदानां वेदं पदादि-विभागेन ज्ञानकारणं व्याकरणम्, पित्र्यं श्राद्धकल्पं, राशिं गणितं, दैवम् उत्पातज्ञानं, निधिं महाकालादिनिधिशास्त्रं, वाकोवाक्यं तर्क-शास्त्रम्, एकायनं नीतिशास्त्रं, देवविद्यां निरुक्तं, ब्रह्मविद्याम् ऋगादि-सम्पर्कीयां विद्यां शिक्षाकल्पच्छन्दोरूपां, भूतविद्यां भूततन्त्रं, क्षत्रविद्यां धनुर्व्वेदं, नक्षत्रविद्यां ज्योतिषम्, सर्पदेवजनविद्यां सर्पविद्यां गारुडं देवजनविद्यां गन्धर्व्वविद्यां नृत्यगीतवाद्यशिल्पादिविज्ञानानि, भगवो हे भगवन्, एतत् सर्व्वम् अधीमि स्मरामि। भगवो हे भगवन्, सोऽहं मन्त्रवित् कर्म्मवित् एव अस्मि न आत्मवित्। श्रुतं हि एव मे मया भगवत् सदृशेभ्यः युष्मत्सदृशेभ्यः—आत्मवित् शोकं तरति इति।

**सोऽहम् अनात्मवित्, भगवो हे भगवन्, शोचामि ; तं तादृशशोक-सन्तप्तं मा मां शोकस्य पारं तारयतु अभयं गमयतु इति।**

*
* *

अग्निरिन्द्रः सूर्य इति वैदिकमूलदेवतात्रित्वम्। इन्द्र इत्यत्र वायुर्व्वेति विकल्पः। (१) तत्र अग्नेः सहचर्य्यः—अग्नायी, पृथिवी, इला। अस्य अनन्यदेवतागामि कर्म्म—हविषां वहन, देवानाञ्चावाहनम्। अस्य संस्तविका देवाः—इन्द्रः, सोमः, वरुणः, पर्ज्जन्यः, ऋतवः। संस्तविकाः—तैः सह अग्निः स्तूयते।

(२) इन्द्रस्य पुनः सहचर्य्यः—अदितिः, सरमा, सरस्वती, वाक्, अनुमतिः, राका, सिनीवाली, कुहूः, यमी, उर्व्वशी, पृथिवी, इन्द्राणी, गौरी, गौः, धेनुः, अघ्न्या, पथ्या, स्वस्तिः, उषाः, रोदसी। अस्य कर्म्म—वर्षणादि, वृत्रवधः, या च का च बलकृतिः। अस्य संस्तविका देवाः—अग्निः, सोमः, वरुणः, पूषा, बृहस्पतिः, ब्रह्मणस्पतिः, पर्व्वतः, कुत्सः, विष्णुः, वायुः।

(३) अथ सूर्य्यस्य सहचर्य्यः—उषाः, सूर्य्या, वृषाकपायी, सरण्युः, देवपत्न्यः। अस्य कर्म्म—रसादानं रश्मिभिश्च रसधारणं, यच्च किञ्चित् प्रवह्लितम्। वह्ल—छादने। प्रवह्लनं प्रच्छादनं रश्मिव्याप्त्या प्रच्छादनमस्य कर्म्मेति फलितार्थः। अस्य संस्तविका देवाः—चन्द्रमाः, वायुः, संवत्सरः।

अन्ये देवास्त्रयाणामेषां प्रकाशविशेषाः। ग्रावादिषु चेतनक्रियारोपो रूपकेणेति वैदिकाः। पुरुषविधेन देवान् स्त्रीत्वपुरुषविधेन च। अपुरुषविधानां चितिजलादीनां पुरुषवियहाधिष्ठातृनाश्रित्य स्तुतिरिति सिद्धान्तः। पृथिवी स्त्रीरूपेण भारावतरणाय ब्रह्माणं ययाचे इत्याद्याख्यानमयः। तथाहि निरुक्तम्—"अपुरुषविधानामेव सतां कर्म्मात्मान एते स्युः, यथा यज्ञो यजमानस्य, एष आख्यानसमयः" इति। सतां पृथिव्यादीनां, कर्म्मात्मानः अधिष्ठातारः। देवेभ्य एतेभ्यो यजमानाः पुत्रवित्तपशुधनधान्यादीनयाचन्त, न पुनरात्मवित्तम्, ततो हि नारदः सनत्कुमारमाह—"मन्त्रविदेवास्मि नात्मवित्" इति।

कथं पुनर्वैदिककर्म्मानुष्ठातॄन् वाचलेनानिन्दन्नुपनिषद्दृष्टार इति जिज्ञासाऽनपेत्या। पुत्रवित्तादीनामसकृदनित्यत्वं पश्यन्तस्ते ब्रह्मास्था स्तत एवाभ्युदेति। "स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियंरोत्स्यतीतीश्वरोह तथैव स्यात्" (बृ, १।४।८) इत्युपनिषद्वर्यां वचनस्य सत्यत्वं केन वा तदा नोपालभ्यत। अनित्यं परिमितं यत् किञ्च तत् सर्व्वं न सुखाय प्रत्युत चरमे दुःखायेति तेषां तदन्वेषणे महान् प्रयत्न आसीत् येन च स्यान्न केवलं दुःखनिवृत्तिः किन्तर्हि सुखमात्यन्तिकम्। "येनाहं नामृता स्यां किमहं तेन कुर्य्याम्" इति मैत्रेयीकृतो ध्वनिः तत्पूर्व्वं तेषु सर्व्वतो निरगात्।

"यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तत्संप्रश्नं भुवना यन्त्यन्या॥" (१०म, ८२सू, ३ऋक्।)

इत्यस्य संप्रश्न उपनिषदि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभि

मं विशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" ( तै, उ, ३।१ ) इति स्फुटतरब्रह्मजिज्ञासायां परिणतः। "नासदासीन्नो सदासीत्तदानीम्" (१०म, १२९सू, १ऋक् ) इत्यादि चिन्ता च प्रथमसृष्टकर्म हितायां प्रादुरासीत्। अतो हि यदा [illegible] एकस्य जगत्कारणस्य जिज्ञासा बाधितगतिरासीत्तदैवौपनिषद्ब्रह्मर्षयः "अन्धं तमः प्रविशन्ति" इत्यादि निन्दनेन वैदिक कर्म्माणि वैदिकदेवांश्चाध:कृत्य मननरूपं तप आश्रितवन्तः। "स तपोऽतप्यत स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्। तपसा ब्रह्मविजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत, स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्, विज्ञानं ब्रह्मेति व्यजानात्, आनन्दो ब्रह्मेति व्यजानात्।" (तै ३।१।२।३।४।५।६) इति। "तपो बाह्यान्तःकरणसमाधानं तद्द्वारकत्वात् ब्रह्मप्रतिपत्तेः।

'मनसश्चेन्द्रियाणां चैकाग्र्यं हि परमं तपः।

तज्ज्यायः सर्व्वधर्म्मेभ्यः स धर्म्मः पर उच्यते॥' इति स्मृतेः"

इति श्रीमच्छङ्करः। यज्ञवितानैर्यथा वैदिकः कालः परिलक्षितस्तथा वैदान्तिकस्तपोऽपरनाम्ना मननेन। मननान्मुनिरिति तेषां मुनित्वमरण्ये वासश्चाभूत्। अरण्यवासात् प्रव्रजनाच्च पूर्व्वं गृहे स्थित्वाप्यासन् मननपरास्ते यथा जनकयाज्ञवल्क्यजैवलिप्रभृतिषूपनिषत्सूपलक्ष्यन्ते तत्। कर्म्मसु तत्तद्द्रव्येषु देवादिषु च परमात्मदर्शनेन तन्मननमेव दृढत्वमापदित्युपनिषदेव तत्र प्रमाणम्। ततो वेदाद्वेदान्तेषु प्रवेशः स्वाभाविकगत्यैवाभूदिति सुव्यक्तम्।

# इत्यारम्भवल्ली प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः।

## अथ प्रस्थानवल्ली।

१। हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वम्पूषन्नपावृणु सत्यधर्म्माय दृष्टये॥
२। पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन् समूह।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि
योऽसावसौ पुरुषः सोऽहमस्मि।

अथ खलु वैदिकदेवगणान् तद्विहितकर्म्माणि च तुच्छकबुद्ध्या परिहाय नवीनप्रस्थानमारभमाणैरुपनिषद्दृग्भिरृषिभिः प्रथमन्तावत् तेष्वेव महान् सत्यपुरुष उपालभ्यत, कर्म्मसु लोकेषु चात्मा। अतः कदाचिदावरकत्वेन, कदाचिदत्यन्तभेदेन, कदाचिन्नेदेऽप्यभेदेन, कदाचित् स्वतन्त्रास्वतन्त्रत्वेन, कदाचित्तदभिन्नत्वेन, कदाचिदवयवकल्पनया ताम् पश्यन्तः स्वानुभूतीरुपनिषत्त्वेन ते प्राचकाशन्। चरमे तमेव महान्तं सत्यपुरुषं लीलामयत्वेन सर्व्वत्र विराजमानमवलोक्य प्रस्थानस्यास्य पूर्णतामापीपदंस्ते।

१। प्रथमन्तावदावरकत्वेन हिरण्मयेनेति। हे पूषन् सूर्य्य, हिरण्मयेन पात्रेण ज्योतिर्म्मयेन मण्डलेन सत्यस्य मुखं मुख्यं स्वरूपम् अपिहितम् आच्छादितं त्वया। तत् सत्यं सत्यधर्म्माय सत्यस्योपासनेन तत् सत्यमेव धर्म्मो यस्य तस्मै मह्यं दृष्टये दर्शनाय त्वम् अपावृणु अपावृतम् अनाच्छादितं कुरु।

२। पूषन्निति। हे पूषन्, जगतः पोषणात् पूषा सविता, हे एकर्षे—एक एव ऋषति गच्छतीति एकर्षिः, हे यमः—सर्व्वस्य जगतः संयमनात् यमः, हे सूर्य्य—सु ईरयति रसान् रश्मीन् वा यो जगतः, हे प्राजापत्य—प्रजापतेरीश्वरस्यापत्यम्, रश्मीन् व्यूह विगमय,

३। वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम्।
ओं३ क्रतो स्मर कृतꣳस्मर क्रतो स्मर कृतꣳस्मर॥

४। अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठान्ते नम उक्तिं विधेम॥

ईश १५—१८। बृ, ७।१५।१।

तेजः समूह संक्षिप उपसंहर, यत् ते तव रूपं कल्याणतमं शिवतमं तत् ते तव रूपं पश्यामि। किमिदं रूपं कस्य वा? तदधिष्ठातुरेव तदिति पुरुषविधत्वेन दर्शयति—योऽसौ पुरुषः त्वदधिष्ठाता, सोऽहं तत्स्वरूपोऽस्मि।

३। वायुरिति। प्रयाणकाले वायुः प्राणवायुः तत्स्वरूपत्वेन अमृतं नित्यकालस्थायिनम् अनिलं बाह्यं वायुं प्रतिगच्छतु, अथ इदं शरीरं भस्मान्तं भवतु। "एषा ह वा अस्याहुतिरमुष्मिन् लोके आत्मा भवति। स यएवंविदस्माल्लोकात् प्रैति, अथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयते—अहं वै त इहात्मास्मीति। तदाह्वयति तस्मादाहुतिर्नाम।" (श, ब्रा ११।२।२।६) "सत्यं ब्रह्मेत्युपासीत। अथ खलु क्रतुमयोऽयं पुरुषः। स यावत् क्रतुरयमस्माल्लोकात् प्रैति, एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति।" (श, ब्रा १०।६।३।१) इत्याद्यनुसारेण—ओं सत्यं ब्रह्म, हे क्रतो हे कर्म हे यज्ञ,—यज्ञो वै विष्णुरिति तदधिष्ठात्रा विष्णुनामेदृष्ट्या सम्बोधनं वा—कृतं मयानुष्ठितं कर्म स्मर स्मर—स्वर्गलोके पुनराह्वानाय क्रतो स्मर कृतꣳस्मरेति पुनर्व्वचनमादरार्थम्।

४। अग्ने इति। हे अग्ने, हविषां वाहक, राये धनाय सम्पदे सुपथा शोभनेन मार्गेण देवयानेन अस्मान् नय गमय। हे देव,

५। ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐचन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति।

तद्धैषां विजज्ञौ तेभ्योह प्रादुर्ब्बभूव, तन्न व्यजानन्त किमिदं यचमिति।

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यचमिति तथेति।

तदभ्यद्रवत्। तमभ्यवदत् कोऽसीति? अग्निर्व्वा अहमस्मीत्यब्रवीत् जातवेदा वा अहमस्मीति।

विश्वानि सर्व्वाणि वयुनानि प्रशस्यकर्म्माणि प्रज्ञानानि वा विद्वान् जानन् अस्मत् अस्मत्तः जुहुराणं कुटिलम् एनः पापं युयोधि वियोजय, ते तुभ्यं भूयिष्ठां बहुतमां नमउक्तिं नमस्कारवचनं विधेम कुर्य्याम।

५। अत्यन्तभेदेनेति इन्द्रादिदेवा अधःक्रियन्ते आख्यायिकाच्छलेन ब्रह्मेति। ब्रह्म ह किल देवेभ्यः तेषां गौरवाय विजिग्ये जयं लब्धवत्। तस्य ह किल ब्रह्मणः विजये देवाः अग्न्यादयः अमहीयन्त महिमानं लब्धवन्तः। ते अग्न्यादयः ऐचन्तः ईक्षितवन्तः—अस्माकम् एव अयं विजयः, अस्माकम् एव अयं महिमा इति।

तत् ब्रह्म ह किल एषां देवानां विजज्ञौ ज्ञातवत् मिथ्येक्षणमिति शेषः। तेभ्यः देवेभ्यः ह किल तत् प्रादुर्व्बभूव आत्मानं प्रकाशयामास। ते तत् ब्रह्म न व्यजानन्त—किमिदं यचं पूज्यम् इति।

ते देवाः अग्निम् अब्रुवन् उक्तवन्तः, हे जातवेदः, एतत् अस्मद्गोचरस्थं यचं विजानीहि—किम् एतद् यचम् इति। स आह तथा इति तथास्तु इति।

स तत् यचम् अभ्यद्रवत् अभिगतवान्। तम् अग्निम् अभ्यवदत्

तस्मिंस्त्वयि किं वीर्य्यमिति। अपीदꣳ सर्व्वं दहेयं यदिदं पृथिव्यामिति।

तस्मै तृणं निदधावेतद्दहेति। तदुपप्रेयाय सर्व्वजवेन, तन्न शशाक दग्धुम्। स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति।

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्ष-मिति तथेति।

तदभ्यद्रवत्। तमभ्यवदत् कोऽसीति। वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति।

उक्तवत् तत्—कोऽसीति। अग्निः वा अहम् अस्मि इति, जातवेदाः वा अहम् अस्मि इति अब्रवीत् उक्तवान् सः।

तत् आह—तस्मिन् त्वयि किं वीर्य्यम् इति। स अब्रवीत्—यत् इदं पृथिव्याम्, अपि इदं सर्व्वं दहेयम् इति।

तस्मै अग्नये तृणं निदधौ स्थापितवत् तत्—एतत् तृणं दह इति। स तत् तृणं सर्व्वजवेन सर्व्वोत्साहकृतेन बलेन उपप्रेयाय उपगतवान्, स तत् तृणं दग्धुं न शशाक। स अग्निः ततः यक्षात् एव निववृते प्रतिगतवान्। निवृत्य स आह—न एतत् अशकं विज्ञातुम्—यत् एतत् यक्षं पूज्यम् इति।

अथ अनन्तरं ते देवाः वायुम् अब्रुवन् उक्तवन्तः, हे वायो, एतत् अस्मद्गोचरस्थं यक्षं विजानीहि—किम् एतत् यक्षम् इति। स आह तथा इति तथास्तु इति।

स तत् यक्षम् अभ्यद्रवत् अभिगतवान्। तं वायुम् अभ्यवदत् उक्तवत् तत्—कोऽसीति। वायुः वा अहम् अस्मि, मातरिश्वा वा अहम् अस्मि इति अब्रवीत् उक्तवान् सः।

तस्मिंस्त्वयि किं वीर्य्यमिति। अपीदं सर्व्वमाददीय यदिदं पृथिव्यामिति।

तस्मै तृणं निदधावेतदादत्स्वेति। तदुपप्रेयाय सर्व्वजवेन, तन्न शशाकादातुम्। स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति।

अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति। तथेति। तदभ्यद्रवत् तस्मात्तिरोदधे।

स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ताꣳहोवाच किमेतद्यक्षमिति।

केन ३।१—१२।

तत् आह—तस्मिन् त्वयि किं वीर्य्यम् इति। स अब्रवीत्—यत् इदं पृथिव्याम् अपि इदं सर्व्वम् आददीय, स्थानान्तरं कुर्य्याम्।

तस्मै वायवे तृणं निदधौ स्थापितवत् तत्—एतत् तृणम् आदत्स्व स्थानान्तरं कुरु इति। स तत् तृणं सर्व्वजवेन सर्व्वोत्साहकृतेन बलेन उपप्रेयाय उपगतवान्। स तत् तृणम् आदातुं स्थानान्तरं कर्त्तुं न शशाक। स वायुः ततः यक्षात् एव निववृते प्रतिगतवान्। निवृत्य स आह—न एतत् अशकं विज्ञातुम्—यत् एतत् यक्षं पूज्यम् इति।

अथ अनन्तरं देवाः इन्द्रम् अब्रुवन् उक्तवन्तः—मघवन् इन्द्र, एतत् अस्मद्गोचरस्थं यक्षं विजानीहि। स आह तथा इति तथास्तु इति। स तत् यक्षम् अभ्यद्रवत् अभिगतवान्। तस्मात् समीपगतात् इन्द्रात् तत् यक्षं तिरोदधे अन्तर्हितं बभूव।

स इन्द्रः तस्मिन्नेव आकाशे बहुशोभमानां हैमवतीं हैमकृताभरणवतीं हिमवद्दुहितरं वा उमां विद्याम् आजगाम साक्षात्कृतवान्। तां विद्यां ह किल स उवाच—किम् एतत् यक्षम् इति।

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति।

तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्व्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति।

तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति।

तस्यैष आदेशो यदेतद् विद्युतो व्यद्युतदा इतीति न्यमीमिषदा इति। केन ४।१—४।

सा उमा—एतत् ब्रह्म इति ब्रह्मणः वा एव विजये महीयध्वं महिमानं प्राप्नुथ यूयम् इति ह किल उवाच। ततः तदुमावचनात् ह किल एष इन्द्रः ब्रह्म इति विदाञ्चकार ज्ञातवान्।

यत् यस्मात् ते अग्निः वायुः इन्द्रः हि नेदिष्ठं समीपगतम् एनत् ब्रह्म पस्पर्शुः स्पृष्टवन्तः, एनत् ब्रह्म प्रथमः इन्द्रः ब्रह्म इति विदाञ्चकार ततः ते सर्व्वे विदाञ्चक्रुः। तस्मात् हेतोः वा एव एते देवाः अन्यान् देवान् अतितराम् अतिशेरते इव एव।

स इन्द्रः नेदिष्ठं समीपगतम् एनत् ब्रह्म पस्पर्श स्पृष्टवान् स हि प्रथमः एनत् ब्रह्म इति विदाञ्चकार ज्ञातवान्, तस्मात् वा एव इन्द्रः अन्यान् देवान् अतितराम् अतिशेते इव एव।

तस्य ब्रह्मणः एष आदेशः उपदेशः। कोऽसौ ? विद्युतः सौदामिन्याः यत् एतत् व्यद्युतत् विद्योतनम् आ इति तदिव इति। न्यमीमिषत् आ इति चक्षुषो निमेष इव इति। सकृद्दर्शनदानानन्तरं तिरोभवति ब्रह्मेति प्रदर्शनायोपमाद्वयम्।

६। जानाम्यहं शेवधिरित्यनित्यं
न ह्यध्रुवैः प्राप्यते हि ध्रुवन्तत् ।
ततो मया नाचिकेतश्चितोऽग्नि-
रनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ कठ, २।१० ।

७। न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति ॥ मु, २।२।१० ।
श्वे, ६।१४ ।

८। शं नो मित्रः शं वरुणः शं नो भवत्वर्य्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥
(ऋक् १।९०।९)

६। जानामीति। अहं यमः शेवधिः निधिः इति पार्थिवधनमिति यावत् अनित्यं जानामि। ध्रुवं नित्यं तत् ब्रह्म अध्रुवैः अनित्यैः द्रव्यैः न हि प्राप्यते। ततः मया अनित्यैः द्रव्यैः नाचिकेतः अग्निः चितः निर्व्वर्त्तितः। तेन नित्यं स्वर्गाख्यं याम्यं स्थानं प्राप्तवान् अस्मि।

७। न तत्रेति। तत्र ब्रह्मणि ब्रह्मविषये इति यावत् सूर्य्यः न भाति न प्रकाशवान् भवति—प्रकाशवान् पुनः परप्रकाशको भवति, न ब्रह्मविषये सूर्य्यस्य तादृशत्वमिति भावः; चन्द्रतारकं न भाति न प्रकाशवत् भवति; इमाः विद्युतः न भान्ति प्रकाशवत्यः भवन्ति। कुतः अयं वैदिकैरभ्यर्च्चितः अस्मद्गोचरः अग्निः भास्यति प्रकाशवान् भविष्यतीति शेषः। भान्तं दीप्यमानं तम् एव ईश्वरम् अनु सर्व्वं भाति। कथम्? तस्य भासा इदं सर्व्वं सूर्य्यादिकं विभाति। सुतरां न तेषां ब्रह्मावभासकत्वम्।

८। शमिति। मित्रः नः अस्माकं शं सुखकृत्, वरुणः नः

नमो ब्रह्मणे, नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। तै, १।१।

९। भीषास्माद्वातः पवते भीषोदेति सूर्य्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥
तै, २।८।१।

१०। एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्व्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणि च, वीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम् सर्व्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म। ऐ, ५।३।

अस्माकं शं सुखकृत्, अर्य्यमा सूर्य्यः नः अस्माकं शं सुखकृत्, इन्द्रः नः अस्माकं शं सुखकृत्, उरुक्रमः विस्तीर्णपादः विष्णुः नः अस्माकं शं सुखकृत् भवतु। एवम् ऋचा प्रार्थयित्वा औपनिषदं ज्ञानं समावेशयते—नमः ब्रह्मणे। हे वायो, नमः ते तुभ्यम्। त्वं वायुः एव प्रत्यक्षं ब्रह्म असि, त्वां वायुम् एव प्रत्यक्षं ब्रह्म वदिष्यामि। भेदेऽप्यभेदत्वेन ग्रहणमत्र।

९। भीषेति। अस्मात् ब्रह्मणः भीषा भयेन वातः वैदिकदेवता वायुः पवते, भीषा भयेन सूर्य्यः वैदिकदेवता उदेति, अस्मात् ब्रह्मणः भीषा भयेन वैदिकदेवता अग्निश्च इन्द्रश्च, पञ्चमः मृत्युश्च धावति। अत्यन्तभेदोऽत्र।

१०। स्वतन्त्रास्वतन्त्रत्वेन एषइति। एष ब्रह्मा, एष इन्द्रः, एष प्रजापतिः, एते सर्व्वे देवाः, इमानि च पञ्चमहाभूतानि, पृथिवी, वायुः

११। सर्व्वं खल्विदं ब्रह्म तज्जलानिति, शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्व्वीत।

छा, ३।५।१४।१।

आकाशः आपः ज्योतींषि इति एतानि, इमानिच क्षुद्रमिश्राणि—इव शब्दोऽनर्थकः—क्षुद्रैः मिश्राणि सर्पादीनि, इतराणि च इतराणि च वीजानि कारणानि। कानि तानि? अण्डजानि पक्ष्यादीनि, जारुजानि जरायुजानि मनुष्यादीनि, स्वेदजानि यूकादीनि, उद्भिज्जानि वृक्षादीनि च, अश्वाः, गावः, पुरुषाः मनुष्याः, हस्तिनः, यत् किञ्च इदं प्राणि जङ्गमं पदगामि, पतत्रि आकाशेन पतनशीलं, यत् च स्थावरम् अचलं, सर्व्वं तत् प्रज्ञानेत्रं प्रज्ञा एव नेत्रं नेता यस्य तत्, प्रज्ञाने प्रतिष्ठितं, लोकः प्रज्ञानेत्रः प्रज्ञा एव नेत्रं नेता यस्य सः, प्रज्ञाप्रतिष्ठा आश्रयः सर्व्वस्य जगतः, तस्मात् प्रज्ञानं ब्रह्म—सर्व्वस्य नेतृत्वादाश्रयत्वाच्च।

११। तदभिन्नत्वेन सर्व्वमिति। इदं प्रत्यक्षविषयं सर्व्वं समस्तं खलु ब्रह्म। कथम्? तज्जलान् इति। तज्जं—तस्मात् ब्रह्मणो जातं, तल्लं—तस्मिन् ब्रह्मणि लीयते, तदनम्—तस्मिन् ब्रह्मणि अनिति चेष्टते इति।—अनम् इत्यत्र अन् छान्दसोऽवयवलोपः। शान्तः रागद्वेषादिविरहितः सन् सर्व्वमिदं ब्रह्मत्वेन उपासीत वैदिका यथा देवत्वेन। अथ खलु पुरुषः क्रतुमयः कर्म्ममयः—क्रतुः कर्म्मेति निरुक्तम्, अध्यवसाय इति श्रीमच्छङ्करः। अस्मिन् लोके पुरुषः मानवः यथाक्रतुः यादृशकर्म्मा भवति, तथा इतः अस्मात् लोकात् प्रेत्य भवति। अतएव स पुरुषः क्रतुं कर्म्म कुर्व्वीत। अतएवाह वाजसनेयसंहितोपनिषत्—

"कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे॥" इति।

१२ । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ उरएव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः ।

५।७।१८।२ ।

१२ । अवयवकल्पनया तस्येति ।

वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते ।
वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ॥ (१।५९।१)

इत्याद्यासु वैश्वानरोऽग्निः संस्तुतः । स एवात्रोपनिषदि परमात्मत्वेन गृहीतः । तत्र "मूर्द्धा दिवो नाभिरग्निः पृथिव्याः" इति दिवः मूर्द्धा पृथिव्या नाभिरिति प्रकल्प्य पुनः "अथाभवदरती रोदस्योः" इति द्यावापृथिव्योरधिपतिरिति निर्द्दिष्टः सः । सुतरामत्र तस्यैव द्यौः सूर्य्यो वायुराकाश आपः पृथिव्यवयवत्वेन प्रकल्प्यन्ते । तस्य वा एतस्य आत्मनः परमात्मनः वैश्वानरस्य सुतेजाः द्यौः मूर्द्धा एव ; विश्वरूपः सूर्य्यः चक्षुः, प्राणः वायुः पृथग्वर्त्मात्मा पृथग्वर्त्म यस्य वायोः स पृथग्वर्त्मा स एव आत्मा स्वभावो यस्य स पृथग्वर्त्मात्मा, बहुलः सर्व्वगतत्वात् आकाशः सन्देहः देहस्य मध्यभागः, रयिः आपः—"अद्भ्योऽन्नमन्नाच्च रयिर्धनं तस्मादापो रयिरुक्तास्तासाञ्च मूत्रीभूतानां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तम्" इति वाचस्पतिः—बस्तिः ; पृथिवी पादौ, वेदिः उरः वक्षएव ; बर्हिः कुशः लोमानि, गार्हपत्यः अग्निः हृदयम् ; अन्वाहार्य्यपचनः अन्वाहार्य्याग्निः मनः, आहवनीयः अग्निः आस्यं मुखम् । तथा चान्यत्र—

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा ॥ इति (मु, २।१।४)

श्रुतिरेषा विषयो वेदान्तसूत्राणां चतुर्विंशमारभ्य नवसंख्यकानां प्रथमाध्यायस्य द्वितीयपादस्य परिसमाप्तिः ।

१२। सोऽकामयत मेध्यं म इदꣳस्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत। तꣳ संवत्सरस्य परस्तादात्मन आलभत। पशून् देवताभ्यः प्रत्यौहत्। तस्मात् सर्व्वदैवत्यं प्रोक्षितं प्राजापत्यमालभन्त। एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्क-स्तस्येमे लोका आत्मानः तावेतावर्काश्वमेधौ। सा पुन-रेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युञ्जयति नैनं मृत्यु-राप्नोति, मृत्युरस्यात्मा भवति, एतासां देवतानामेको-भवति। वृ, आ, ३।२।७।

१२। क्रतोराश्वत्वेन परिकल्पनं सोऽकामयतेति। स प्रजापतिः अकामयत। किमकामयत? इदं मे मम शरीरं—यत् प्राणोत्क्रान्ते-पूच्छूनभावं गन्तुमारब्धवत् तत्—मेध्यं यज्ञीयं स्यात्; अनेन शरीरेण आत्मन्वी आत्मवांश्च स्यामिति। यत् यस्मात् तत् शरीरं अश्वत् अश्वयत् उच्छूनभावमगच्छत्, ततः तस्मात् स अश्वः अभवत्। तत् शरीरं मेध्यं यज्ञार्हम् अभूत् इति तत् तस्मात् एव अश्वमेधस्य क्रतोः अश्वमेध-त्वम् अश्वमेधनामलाभः। यः एनम् अश्वम् एवं वेद, एष ह वा निश्चित-मेव अश्वमेधं वेद। स प्रजापतिः तम् अश्वम् अनवरुध्य अवरुद्धमकृत्वा एव अमन्यत अचिन्तयत्। संवत्सरस्य परस्तात् ऊर्द्ध्वम् आत्मने आत्मार्थं तम् अश्वम् आलभत आलब्धं कृतवान्। पशून् अन्यान् ग्राम्यान् आरण्यान् च देवताभ्यः यथादैवतं प्रत्यौहत् प्रतिगमितवान्। यस्मात् एवं तस्मात् याज्ञिकाः इदानीं सर्व्वदैवत्यं प्राजापत्यम् आलभन्ते। अत्र भाष्यकारः—"यस्मादेवं प्रजापतिरमन्यत तस्मादेवमन्योऽप्युक्तेन विधि-नात्मानं पशुमश्वं मेध्यं कल्पयित्वा सर्व्वदैवत्योऽहं प्रोक्ष्यमाणआलभ्यमान-

१४ । अथ यो ह वा अस्मात् लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वा ऽननूक्तो ऽन्यद्वा कर्म्म कृतं यदिह वा अप्यनेवंवित् महत् पुण्यं कर्म्म करोति तद्धास्यां ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते ।
३।४।१५ ।

स्वहं महदेवत्यएव स्याम् । अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एवेति विद्यात् ।" इति । प्रजापतेः शरीरस्याश्वत्वं मेध्यत्वञ्च प्रकल्प्य सम्प्रति दृश्यमानमादित्यमश्वमेधत्वेन परिकल्पयति, साधनभूतस्यास्य च तेनैक्यं साधयति—एष वा अश्वमेधः य एष तपति, तस्य तपतः संवत्सरः आत्मा शरीरम्, अयम् अग्निः अर्कः आदित्यएव, तस्य अर्कस्य इमे लोकाः आत्मानः तौ अग्न्यर्कौ अर्काश्वमेधौ । तौ अग्न्यर्कौ पुनः एका एव देवता भवति । का सा ? मृत्युरेव । यः पुनः मृत्युमेवाश्वमेधं तेन च आत्मनः एकत्वं वेत्ति स पुनः मृत्युम् अपजयति सकृत् मृत्वा पुनर्न मरणाय जायते, न एनं जनं मृत्युः आप्नोति । कथं नाप्नोति ? मृत्युः अस्य एवंविदः जनस्य आत्मा भवति, एतासां देवतानामात्म ऽवयवभूतानाम् एको भवति ।

१४ । लोकस्यात्मत्वेन परिकल्पनम् अथेति । अथ यः कश्चित् ह वै स्वम् आत्मानं लोकम् अदृष्ट्वा अविदित्वा अस्मात् लोकात् प्रैति, अविदितः स एनम् आत्मानं न भुनक्ति पालयति, यथा लोके अननूक्तः अनधीतः वेदो वा, अन्यत् कृतं कृष्यादि कर्म्म वा आत्मानं न शोकमोहादिनिवर्त्तनेन पालयति । अनेवंवित् आत्मानं लोकत्वेनाविद्वान् यदिह वै महत् पुण्यं कर्म्म अपि करोति तत् ह अस्य अन्ततः अन्ते क्षीयते एव । तत् किं कर्त्तव्यम् ? आत्मानम् एव लोकम् उपासीत

१५। अथो अयं वा आत्मा सर्व्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकः; अथ यदनुब्रूते तेन ऋषीणाम्; अथ यत् पितृभ्यो निपृणाति यत् प्रजामिच्छते तेन पितॄणाम्; अथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणां; अथ यत् पशुभ्यस्तृणोदकं विन्दति तेन पशूनां, यदस्य गृहेषु श्वापदा वयांऽस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः। यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवंऽहैवंविदे सर्व्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमांऽसितम्।

३।४।१६।

तद्दृष्ट्या कर्म्म कुर्व्वीत। किमनेन भविष्यति? स यः आत्मानमेव लोकम् उपास्ते न ह अस्य कर्म्म क्षीयते। स यत् यत् कामयते तत् तत् अस्मात् आत्मनः एव हि सृजते उत्पद्यते।

१५। विपरीते देवादिष्वनात्मदृष्ट्या याजनादिभिरात्मनः सर्व्वलोकत्वकल्पनम् अथो इति। अथो अयं वा आत्मा सर्व्वेषां भूतानां लोकः भोग्यः परतन्त्रः। स आत्मा यत् जुहोति, यत् यजते तेन स देवानां लोकः भवति। यत् स अनुब्रूते स्वाध्यायम् अधीते, तेन स ऋषीणां लोकः भवति। अथ स यत् पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि, यत् च प्रजां सन्ततिं कामयते, तेन पितॄणां लोकः भवति। अथ स यत् मनुष्यान् वासयते गृहे भूम्युदकादिदानेन, यत् च एभ्यः अशनं ददाति, तेन मनुष्याणां लोकः भवति। अथ स यत् पशुभ्यः तृणोदकं विन्दति लम्भयति, तेन पशूनां लोकः भवति। यत् अस्य गृहेषु श्वापदाः हिंस्रजन्तवः, वयांसि पक्षिणः आपिपीलिकाभ्यः पिपीलिकाभिः सह उपजीवन्ति कणादिभक्षणेन, तेन स तेषां लोकः। यथा ह वै स्वाय लोकाय स्वकीये देहाय अरिष्टम् अविनाशम् इच्छेत्,

१६। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति, यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः ।५।८।१०।

१७। एष हि देवः प्रदिशोऽनुसर्व्वाः
पूर्व्वो हि जातः स उ गर्भे अन्तः ।

एवं ह एवंविदे सर्व्वभूतानां भोग्योऽहं परतन्त्रोऽहमिति विदुषे सर्व्वाणि भूतानि अरिष्टम् अविनाशम् इच्छन्ति । तत् वा एतत् पञ्चमहायज्ञ-प्रकरणे विदितं कर्त्तव्यतया मीमांसितं विचारितम् ।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः ।
स गृहेऽपि वसन् नित्यं सूनादोषैर्न लिप्यते ॥ (मनु ३य, ७०।७१ श्लो) ।
पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यस्तु वाहयन् ॥ (मनु ३य, ६८ श्लो) ।

सूना—पशुबधस्थानम् ; उपस्करः—कुण्डसंमार्ज्जन्यादिगृहोपकरणम् ; कण्डनी—उलुखलमुषले ; वाहयन्—स्वकार्य्ये योजयन् ।

१६। यजनादीनां साफल्यवैफल्यकारणम्—योवेति। हे गार्गि, यो वा एतत् अक्षरं—यत् क्षीयते न क्षरतीति वाक्षरम्—अविदित्वा अविज्ञाय अस्मिन् लोके बहूनि वर्षाणि जुहोति यजते, तपः तप्यते, तत् अस्य पुंसः अन्तवत् एव भवति । हे गार्गि, यो वा एतत् अक्षरम् अविदित्वा अविज्ञाय अस्मात् लोकात् प्रैति स कृपणः कृपापात्रम् । अथ हे गार्गि, एतत् अक्षरं विदित्वा विज्ञाय अस्मात् लोकात् यः प्रैति स ब्राह्मणः ब्रह्मसम्पन्नः ।

१७। लीलामयत्वेन एषइति । एष देवः हि प्रदिशः प्राच्याद्याः दिशः अनुसर्व्वाः उपदिशश्च ; स हि पूर्व्वः जातः आदिपुरुषरूपेण ;

स विजातः स जनिष्यमाणः
प्रत्यङ् जनांस्तिष्ठति सर्व्वतोमुखः ॥

१८। यो देवोऽग्नौ योऽप्सु
यो विश्वं भुवनमाविवेश।
य ओषधीषु यो वनस्पतिषु
तस्मै देवाय नमोनमः ॥ श्वेत २।१६।१७।

१९। यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः।
हिरण्यगर्भं जनयामासपूर्व्वं
स नो बुद्ध्या शुभया संयुनक्तु ॥

स उ गर्भे अन्तः वर्त्तमानः; स विजातः शिशुः, स जनिष्यमाणः अनन्तोन्मुखः; स जनान् प्रत्यङ् पश्चात् तिष्ठति; स सर्व्वतोमुखः सर्व्वप्राणिगतानि मुखानि अस्य।

१८। लीला तु तेषु तेषु च प्रविश्यैवेति यइति। यः देवः अग्नौ यः अप्सु, यो विश्वं भुवनम् आविवेश प्रविष्टवान्, यः ओषधिषु यः वनस्पतिषु तस्मै देवाय नमः नमः। "यद्यद्रूपं कामयते तत्तद्देवा विशन्ति" इति सायनसम्मतपाठः। दुर्गाचार्य्यसम्मतस्तु "यद्यद्रूपं कामयते तत्तद्देवता भवति।" (नि, १०।१७); टीकाच—"अस्यैतदैश्वर्य्यं देवतायाः, यद्यदिच्छति रूपं तत्तत् करोति।" इति। "अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः॥" (७म, ५५सू, १ऋक्) इति तत्तद्रूपाणि प्रविश्यात्मप्रकाशः। "रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्।" (३म, ५३सू, ८ऋक्) इति स्वेच्छया रूपपरिग्रहः। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" (छा, ६।८।३।२) इत्यनुप्रवेशएव तत्त्वम्।

१९। यइति। यः देवानाम् इन्द्रादीनां प्रभवः सामर्थ्यस्य हेतुः,

२०। या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि॥

२१। यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे।
शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्॥

३।४।५।६।

२२। त्वं स्त्री त्वं पुमानसि
त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चयसि
त्वं जातो भवसि विश्वतोमुखः॥

उद्भवः उत्पत्तेः हेतुः, विश्वाधिपः विश्वस्य पालयिता, महर्षिः सर्व्वज्ञः, रुद्रः "संसाररुगद्रावकत्वात् रुद्रशब्दवाच्यं ब्रह्म" इति श्रीमच्छ्रीकण्ठः—पूर्व्वं सर्गादौ हिरण्यगर्भं जनयामास, स नः अस्मान् शुभया बुद्ध्या संयुनक्तु।

२०। येति। हे रुद्र, या ते तव शिवा मङ्गलमयी, अघोरा अभया, अपापकाशिनी पुण्याभिव्यक्तिकरी तनूः, तया शन्तमया तनुवा तन्वा, हे गिरिशन्त—गिरौ स्थित्वा शं सुखं तनोतीति—नः अस्मान् अभिचाकशीहि अभिपश्य निरीक्षस्व।

२१। यामिति। हे गिरिशन्त, हे गिरित्र—गिरिं त्रायत इति याम् इषुम् अस्तवे क्षेप्तुं हस्ते बिभर्षि, ताम् इषुं शिवां मङ्गलमयीं कुरु, पुरुषं जगत् च मा हिꣳसीः।

२२। त्वमिति। हे देव, त्वं स्त्री, त्वं पुमान् असि, त्वं कुमारः उत वा अपि वा कुमारी, त्वं जीर्णः वृद्धः सन् दण्डेन वञ्चयसि, विश्वतोमुखः त्वं जातः भवसि।

१३। नीलः पतङ्गो हरितो लोहिताक्ष-
स्तडिद्गर्भ ऋतवः समुद्राः।
अनादिमत्त्वं विभुत्वेन वर्त्तसे
यतो जातानि भुवनानि विश्वा ॥४।३।४।

२३। नील इति। त्वं नीलः पतङ्गः भ्रमरः, त्वं लोहिताक्षः हरितः शुकादिः, त्वं तडिद्गर्भः मेघः, त्वम् ऋतवः, त्वं समुद्राः, अनादिमत् आद्यन्तरहितः त्वं विभुत्वेन व्यापकत्वेन वर्त्तसे, यतः त्वत्तः विश्वा विश्वानि सर्व्वाणि भुवनानि जातानि। "लीलां विदधतः स्वैरं देवतिर्य्यङ्नरादिषु" इति पौराणिकाः।

*

* *

यद्यप्युपनिषद्भिर्न दर्शनशास्त्राण्यातन्यन्त, तथापि तेषामुक्तीराश्रित्यैवैतेषामभ्युदय इति तास्वेतेषां मूलभूतानि वाक्यानि दृश्यन्त इति न चित्रम्। कथं दर्शनशास्त्रैरासामीदृगैक्यमिति जिज्ञासायाम्—ऋक्संहितायामपरिस्फुटभावेन प्रविष्टानि मूलतत्त्वानि मननेनाविष्कृतस्वरूपाणि कर्त्तुं दर्शनोचितैर्भावैरासन्नृषयः प्रदीप्तोत्साहा इति वदिष्यामः। कथमपरिस्फुटभावेनेति?

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ (१म, १६४सू, २०ऋक्)

इत्यत्र मननं विना जीवात्मपरमात्मानावृग्विषयतां नाप्नुतः, यतः प्रकृतावग्न्यादित्याद्यर्चोऽस्या विषयौ भवितुमर्हतः। सूक्तेऽस्मिन् म[illegible]। सुतरां जीवात्मपरमात्मपक्षे नियोगः सुकर एवासीत्। निरुक्तपरिशिष्टे वृत्तिकृद्भिरुपेक्षिते चतुर्द्दशाध्यायेऽर्तां व्याख्यातेयमेवम्—"द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्म्मकर्त्तारौ। दुष्कृतं पापं परिसारकमित्याचक्षते, सुपर्णा सयुजा सखायेत्यात्मानं दुरात्मानं परमात्मानं प्रत्युत्तिष्ठति शरीरएव तज्जायते। वृक्षं वृश्च शरीरं वृक्षम्। पक्षौ प्रतिष्ठापयति—तयोरन्यद्भुक्तान्नमनश्नन्नन्यो सरूपतां सलोकतामश्नुते। य एवं विद्वाननश्नन्नन्यो अभिचाकशीतीत्यात्मगतिमाचष्टे।" इति। एवञ्च येषु वैदिकदैवतेषु रथाश्वसारथिप्रहरणभूषणादिसाधनवत्त्वं, भ्रातृभागिनेयपुत्रदारादिनिरतत्त्वं केशश्मश्रुदन्तमांसाद्यनुवाहुग्रीवादिमत्त्वं, क्रोधहिंसातृष्णाहर्षाभिमर्षादिपरवशत्वं, जन्मवृद्धिवयोवस्थादियुक्तत्वं दृश्यते, तेषु पुनः जगत्पतित्वं जगदाधारत्वं, जगदेकमूलत्वं, शास्तृत्वं, नेतृत्वं, सर्व्वज्ञत्वं, सर्व्वशक्तिमत्त्वं, स्वराट्त्वमजेयत्वं, वरदत्वं, पालकत्वं प्रणतवत्सलत्वं किं बहुना सर्व्वविधैश्वर्यगुणवत्त्वं प्रख्यायते। तद्यथा—

वृषणस्ते अभीशवो वृषा कशा हिरण्ययी।

वृषा रथो मघवन् वृषणा हरी वृषा त्वं शतक्रतो ॥ (८म, ३३सू, ११ऋक्)

इत्यादयश्च रथादयः;

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत् सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ (१म, ३२सू, ३ऋक्)
इत्याद्यासु वज्रादयः ;

बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवां यमाविहेहमातरा ॥ (६म, ५९सू, २ऋक्)
इत्याद्यासु भ्रात्रादयः ;

इह त्या सधमाद्या हरी हिरण्यकेश्या ।
वोळ्हामभि प्रयो हितम् ॥ (८म, ३२सू, २९ऋक्)
इत्याद्यासु केशवत्त्वादयः ,

किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।
तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥ (१म, १७०सू, २ऋक्)
इत्याद्यासु क्रोधादिपरवशत्वम् ;

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठाम् ।
तं ते माता परि योषा जनित्री महः पितुर्दम आसिञ्चदग्रे ॥
(३म, ४८सू, २ऋक्)
इत्याद्यासु जन्मादयः ,

यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत् ।
इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं सख्याय हवामहे ॥
(१म, १०१सू, ५ऋक्)
इत्याद्यासु जगत्पतित्वादयः ।

सुतरां सर्व्वान् हेयान् जीवोचितान् धर्म्मानविगणय्य "शं नो मित्रः शं वरुणः" इत्याद्यासूपनिषत्सु तेषामीश्वरोचितकल्याणगुणान् परिगृहीतवन्तः किलोपनिषद्द्रष्टारः । वैदिकदेवानामवरकत्वादिरूपिणीत् पश्यन्तस्ते भिन्नभिन्नदर्शनमार्गानुदपादयन् । प्रथमन्तावत् तेषु कांश्चित् साक्षाद्वेदान्तसमुत्पन्नानेव समासतः संगृह्णीमः श्रीमद्रामानुजाचार्य्यैस्तत्कृतवेदार्थसंग्रहात् :—

"तदेतन्नानाविधानन्तश्रुतिनिकरशिष्टादिपरिगृहीततद्व्याख्यानपरिश्रमादवधारितम्, तथाहि, ... पारमार्थिकस्वाभाविकानेकतत्त्वनियतकर्मविशिष्टौ सृष्टिप्रलयौ ब्रह्मणोऽनेकविधाः श्रुतयो वदन्ति । निरवद्यं निरञ्जनं विज्ञानमानन्दं निर्व्विकारं निष्कलं निष्क्रियं शान्तं निर्गुणमित्यादिकाः, निर्गुणं ज्ञानस्वरूपं ब्रह्मेति काश्चन श्रुतयोऽभिदधति । नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं विजानीयादित्यादिका नानात्वनिषेधवादिन्यः सन्ति काश्चन श्रुतयः । यः सर्व्वज्ञः सर्व्ववित् यस्य ज्ञानमयं तपः, सर्व्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते, सर्व्वे

निमेषा जज्ञिरे विद्युतः पुरुषादधि, अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति सर्व्वस्मिन् जगति हेयतयावगतं सर्व्वगुणं प्रतिषिध्य निरतिशयकल्याण-गुणानन्त्यं सर्व्वज्ञतां सर्व्वशक्तियोगं सर्व्वनामरूपव्याकरणं सर्व्वस्याधारताञ्च काश्चन श्रुतयो ब्रुवन्ति। सर्व्वं खल्विदं ब्रह्म तज्जलानिति, ऐतदात्म्यमिदं सर्व्वं, एकः सन् बहुधा विचार इत्यादिका ब्रह्मसृष्टं जगन्नानाकारं प्रतिपाद्य तदैक्यञ्च प्रतिपादयन्ति। काश्चनः श्रुतयः—पृथगात्मानं प्रेरितारञ्च मत्वा, भोक्ता भोग्यं प्रेरितारञ्च मत्वा, प्रजापतिरकामयत प्रजाः सृजेयेति, पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्, तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतं, सर्व्वस्य वशी सर्व्वस्येशान इत्यादिकाः—ब्रह्मणः सर्व्वस्मादन्यत्वं सर्व्वस्येशितव्यत्वमीश्वरत्वञ्च ब्रह्मणः सर्व्वस्य शेषतां पतित्वं चेश्वरस्य ; काश्चन—अन्तःप्रविष्टः शास्ता जनानां सर्व्वात्मा, एष आत्मान्तर्याम्यमृतः यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजः शरीरमित्यादि, यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरं यस्यात्मा शरीरमिति ब्रह्मव्यतिरिक्तस्य सर्व्वस्य वस्तुनो ब्रह्मणश्च शरीरात्मभावं दर्शयन्ति काश्चनेति।” इति।

अत्रातिप्रसिद्धिहेतोः सृष्टिप्रलयपरश्रुतिवाक्यानां विविधत्वं श्रुतीरनुद्धृत्य तदर्थमात्रेणोक्तम्। विविधत्वन्तु क्वचित्तेजोऽबन्नमात्रसृष्टिः, क्वचित् पञ्चभूतमात्रसृष्टिः, क्वचिन्महदादिसृष्टिरिति। निरवद्यमित्यादिकाभिर्निर्गुणश्रुतीः, नेह नानास्ति किञ्चनेत्यादिकाभिर्भेदनिषेधश्रुतीः, यः सर्व्वज्ञ इत्यादिकाभिः सगुणश्रुतीः, सर्व्वं खल्वित्यादिकाभिरभेदश्रुतीः, पृथगात्मानमित्यादिकाभिर्भेदश्रुतीः, अन्तःप्रविष्ट इत्यादिकाभिः शरीरात्मभावश्रुतीराह। अविरोधमासामेवं स साधयति :—

“नानारूपाणां वाक्यानामविरोधो मुख्यार्थापरित्यागश्च यथा सम्भवति तथैव वर्णनीयं वर्णितञ्च। अविकारश्रुतयः स्वरूपपरिणामपरिहारादेव मुख्यार्थाः, निर्गुणवादाश्च प्राकृतहेयगुणनिषेधपरतया व्यवस्थिताः, नानात्वनिषेधवादाश्च एकस्य ब्रह्मणः शरीरतया प्रकारभूतं सर्व्वं चेतनाचेतनं वस्त्विति सर्व्वस्यात्मतया सर्व्वप्रकारं ब्रह्मैवावस्थितमिति सुरक्षिताः। सर्व्वविलक्षणत्व-पतित्वेश्वरत्व-सर्व्व-कल्याणगुणाकरत्व-सत्यकामत्व-सत्यसङ्कल्पत्वादिवाक्यं तदभ्युपगमादेव सुरक्षितम्। ज्ञानानन्द-मात्रवादि च सर्व्वस्मादन्यस्य सर्व्वकल्याणगुणाश्रयस्य सर्व्वेश्वरस्य सर्व्वशेषिणः सर्व्वाधारस्य सर्व्वोत्पत्तिस्थितिप्रलयहेतुभूतस्य निरवद्यस्य निर्व्विकारस्य सर्व्वात्मभूतस्य परस्य ब्रह्मणः स्वरूपनिरूपक-धर्म्मो मलप्रत्यनीकानन्दरूपज्ञानमेवेति स्वप्रकाशतया स्वरूपमपि ज्ञानमेवेति च प्रतिपादनादनुपालि-तम्। ऐक्यवादाश्च शरीरात्मभावेन सामानाधिकरण्यमुख्यार्थोपपादनादेव सुस्थिताः।

“एवञ्च सत्यभेदो वा भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवति? सर्व्वस्य वेदवेद्यत्वात् सर्व्वं समर्थितम्। सर्व्वशरीरतया सर्व्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः ; एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं नानात्वेनावस्थितमिति भेदाभेदौ ; अचिद्वस्तुनश्चिद्वस्तुनश्चेश्वरस्य च स्वरूपस्वभाववैलक्षण्यादसङ्कराच्च भेदः समर्थितः।” इति।

एवञ्च श्रीमद्रामानुजकृतसमाधानं यद्यपि सर्व्वथा सर्व्वेषामाचार्य्याणामभिमतमिति न दृश्यते, तथाप्यस्यायमेव सुमहान् गुणो यदाकरे प्रदर्शितेष्वेकमात्रपक्षं परिहायान्ये वेदान्तवाक्योत्पन्नाः सर्व्वएव पक्षा अनेन समर्थिताः, केषुचिदपि तेषु चानादरो न तेनोद्भावितः। इह खलु निर्णेतव्यं कस्मिन् वा सर्व्वेषां तेषां सम्मतिरस्ति येन च सर्व्वेषामप्यसमवश्यम्भावि। नित्यापि प्रकृतिर्नित्योऽपि

जीवः परापरब्रह्मप्रकृतितया स्वसत्तां प्रति तत्सत्तामपेक्षते, तन्निरपेक्षौ पुनस्तयोरसत्त्वमुपजायते। न सम्भवत्यत्र कस्याप्यसम्मतिः। यथाह श्रीमच्छङ्करः—"यथैव हीदानीं कार्यं कारणात्मना सत्, एवं प्रागुत्पत्तेरपीति गम्यते। न हीदानीमपीदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति, 'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' इत्यादि श्रवणात्। कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम्।" (वे, सू, २।१।७) इति। तन्मते जीवस्याविद्यानिवृत्तौ ब्रह्मैव स भवतीति यद्यपि दृश्यते, तथापि यावत् तस्य जीवत्वं तावत् "सदात्मनैव सत्यत्वम्" (छा, उ, भा) अस्य तेनाभ्युपगतम्। स्वीकृतं जीवस्यानादित्वञ्च तेन, " 'अनेन जीवेनात्मना' इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन् अनादिः संसार इति दर्शयति। आदिमत्त्वे तु ततः प्रागनवधारितप्राणः, स कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत।" (वे, सू, २।१।३६) इति। श्रीमच्छ्रीकण्ठशिवाचार्य्यणोक्तं "ब्रह्मणापृथक्सिद्धजन्मादिस्थितिप्रवृत्तिकत्वादस्य जगतस्तद्व्यतिरिक्तता नास्ति" (वे, सू, १।२।१) इति। अस्य मते कृत्स्नं जगत् ब्रह्मशक्तिः, न जातु शक्तिशक्तिमतोर्भेदोऽस्ति "न वह्नेर्दाहिकाशक्तिर्व्यतिरिक्ता विभाव्यते" इत्यव्यतिरिक्तताख्यानतः। श्रीमच्छ्रीकण्ठरामानुजयोर्मूलतोमतसाम्यं विस्पष्टम्। शैवधर्मस्य वैष्णवधर्म्मात् प्रागभ्युदय इति प्रथमं तन्मतसन्निवेशः। श्रीमद्रामानुजोऽप्याह, "सर्वस्य ब्रह्मकार्य्यत्वप्रतिपादनेन तदात्मतयैव सत्यत्वं नान्यथा"(वे, सं) इति। "ब्रह्मात्मकतयैव जगत् सत्यं स्वनिष्ठत्वमेवासत्यम्" इति तात्पर्य्यदीपिका। "भेदश्रुत्यविरुद्धौ भेदाभेदौ अभेदश्चास्मदभिमत इत्यभावं भेदपक्षएव" इति तात्पर्य्यदीपिकोक्तिः, ततएव च "श्रीरामानुजीयास्तु शक्तिशक्तिमतोर्भेदमेव वर्णयन्ति" इति श्रीमज्जीवोक्तिर्न पुनर्विरुद्धाति समुद्धृतवाक्येन भेदेऽप्यभेदस्वीकारात् शक्तेश्च स्वरूपभूतत्वप्रतिपादनात्। श्रीमन्मध्वेन पुनरुक्तं "स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा, नैवं ब्रह्मणः किन्तु स्वरूपसामर्थ्यादेव तस्य सृष्टिः" (वे, सू, १।३।१५), "न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेव" (वे, सू, २।१।३१); "प्रकृतिसत्त्वादिप्रदत्तं चाङ्गीकृतम्" (वे, सू, २।२।५) इति। श्रीमन्निम्बार्कीया आहुः, "अचिन्त्यानन्तस्वाभाविकासंख्येयसद्गुणसागरो भगवान् श्रीपुरुषोत्तमएव जगतोऽभिन्ननिमित्तोपादानकारणम्" (वे, सू, १।१।२) इति। "जड़जीवरूपत्वात् सर्वात्मकं ब्रह्मैव" (वे, सू, १।१।३१) इति वल्लभः। श्रीमद्वल्लभेन, यत्तदग्रे "सर्वस्य ब्रह्मत्वं (वे, सू, १।१।१०) प्रदर्शितं, तेनान्यैर्वेदान्तवादिभिः सर्वसत्ताप्रदत्वब्रह्मधर्मकथनेन विरोधः परिहृतः। श्रीमज्जीव आह—"कार्य्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशक्तिः परमपुरुषएव कारणात् कार्य्यस्यानन्यत्वात्" (प, स, स, स,) इति श्रीमज्जीवः। उक्तिरियं श्रीमद्रामानुजीयाया: शरीरस्थाने स्वमतसम्मतशक्तिशब्दसन्निवेशेन साधिता। "स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्मतया निखिलनियमनं तच्छक्ति-तदंश-तद्विभूति-तद्रूप-तच्छरीर-तत्तनुप्रभृतिभिः शब्दैस्तत्सामानाधिकरण्येन च प्रतिपादयन्ति" इति तद्वाक्येन शरीरशब्दस्य शक्तिशब्देन विपरिवर्त्तनं न तदसम्मतमिति बोध्यम्। "कृत्स्नं जगत् तादृग् ब्रह्मोपादानकमतो ब्रह्माभिन्नम्" (वे, सू, २।१।१४) इतिश्रीमद्बलदेवः।

तदेवं ब्रह्मसत्तया जगज्जीवसत्तावत्त्वं भिन्नभिन्नप्रस्थानानामैकत्वमापादयतीति प्रदर्शनं सुकरमेव। नामरूपविभजनात् प्राक् केवलब्रह्मसत्त्वमाश्रित्य तस्य सत्यत्वकथनं न केषाञ्चिदपिमते विरुध्यते, स्वसत्तां प्रति तस्य स्वातन्त्र्यात् सर्वनिरपेक्षकत्वाच्च।

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥

इति श्रुतिवाक्याश्रिता. प्रकृतिं भगवदैश्वर्य्यञ्च केन वोपायेनातिक्रम्य ब्रह्मसाक्षात्कारः सिद्ध्येदित्यनुसन्धानपराः

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्म्माय दृष्टये ॥

इति श्रुतिवाक्योद्बोधिताः प्रकृतिं विभूतिञ्च सत्यस्यावरणत्वेन परित्यज्य ज्ञानयोगात् तत्सत्तां ब्रह्मसत्तायां निरन्वयेन प्रागवस्थतया प्रविलाप्यावरणप्रत्याख्यानेन "एकमेवाद्वितीयं ब्रह्म" "तत् सत्यं स आत्मा तत्त्वमसि" इति सर्व्वनिरपेक्षां ब्रह्मसत्तां ते धारणाविषयीकुर्व्वन्ति ।

"नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथन्तदुपलभ्यते ॥
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ (कठ ६वल्ली, २अ, १२।१३श्लोक् )

इति श्रुत्युक्तदिशा ब्रह्मसाक्षात्कारप्रयत्नो न केषाञ्चिदाचार्य्याणामनभिमतः। सर्व्वावरणमोचनं न जातु निरन्वयं विना सम्भवति, निरन्वये तु ब्रह्मसत्तानिरपेक्षं सर्व्वं तिरोधत्ते तथात्वञ्चास्य "सर्व्वञ्च नामरूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव" ( छा, उ, भा,) इति न्यायेन योगिसन्निधौ प्रतिभाति। "कारणात्मना तु सत्त्वं कार्य्यस्य प्रागुत्पत्तेरविशिष्टम्" इति न्यायात् ब्रह्मणि निमग्नस्य कार्य्यस्य चिन्तापथात् तिरोधानमात्रमेतदिति निरन्वयवादिनोऽपि स्वीकुर्व्वन्ति। जगन्मिथ्यात्वप्रतिपादने यत्नस्तु योगप्रक्रियानुकूल्याय, "आत्मनि चैवं विचित्राश्च हि।२।१।२८।" इत्यत्रत्ययुक्त्या ब्रह्मणो निर्व्विकारत्वसाधनायैव च। वस्तुतस्तु स्वीकृतं तैः, "विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुम्।" (वे, सू, १।२।२१) इति।

ये तु व्याकृतनामरूपं ब्रह्मोपास्यत्वेन गृह्णन्ति ते पुनः स्थूलसूक्ष्मजगज्जीवञ्च तच्छक्तित्वेन तदंशत्वेन तद्विभूतित्वेन, तद्रूपत्वेन तच्छरीरत्वेनाङ्गीकृत्य तदभेदेन पश्यन्ति। अतएव भेदवादोऽभेदवादो भेदाभेदवादश्चाभूदिति। भेदवादे पुनर्जगज्जीवयोरस्वातन्त्र्येऽपि भोक्तृभोग्यप्रेरयितृभेदेन दर्शनम्; अभेदवादे पुनः शक्तिशक्तिमतोरेकत्ववशाज्जगज्जीवञ्च तच्छक्तित्वेनातएव तदभिन्नत्वेनोपलभ्याभेददृष्टिः; भेदाभेदवादे तु शक्त्यालिङ्गितं परं ब्रह्म भेदाभेददृष्ट्याराध्यं; शरीरात्मभावदृष्ट्याराधनन्तु पुनर्भेदाविरोधिना भेदाभेदेनाभेदेन वा इति वेदितव्यम्। एते पुनरन्वयवादिनः।

अस्ति च विरोधो निरन्वयवादिभिरन्वयवादिनां चान्तिराद्वित्येन। किमङ्गो सोऽयमिदानीं मैत्रीभावेन नावसेयः ?

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्म्माय दृष्टये ॥

इत्यत्र येन च सत्यस्य मुखात्स्वरूपस्याच्छादनं प्रोक्तं तेनैव च तदाच्छादनापनोदनमपि सम्भवतीति चेत्, सर्व्वतः समाकृष्टचित्तत्वात् तत्तामात्रे निविष्टमनसामन्तर्वाह्य च यदा तमेव समग्रापूर्ण-

मुपलभ्यन्ते तदा तेषां सन्निधौ "आनन्दरूपममृतं यद्विभाति" इत्युक्तदिशा बाह्यविषयेष्वानन्दविलासत्वे-नाऽन्तः पुनः "प्रतिबोधविदितम्" इत्युक्तदिशा बोधं बोधं प्रति बोधयितृत्वेन तत् सत्तामात्रं सर्व्वकारणं ब्रह्म भवेदुपलब्धिविषयम्। ननु "आनन्दरूपममृतं यद्विभाति" इत्यत्र जगति सौन्दर्य्याकारेण तत् सत्ताया भासमानत्वं, न तु साक्षादानन्दस्य, बोधं बोधं प्रति बोधयितृत्वेनोपलब्धिश्च बोधसापेक्षा, अतो नैवोभयथावरणं सर्व्वथापगतम्? सत्यमेतत्, किन्त्वेवमुपलभ्यमान आनन्दस्य विलासो बोधयिता चावरणोन्मोचनाय स्यात्, ततश्च तस्मिन्नानन्दे बोधयितरि च सर्व्वत्र कार्य्यजातं तज्ज्ञान-वैचित्र्यतया भासमानं स्वच्छत्वमापद्येत भवेच्च चिरानावृतं ब्रह्म नियतदृग्विषयम्। सत्येवम् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति" (तै, उ, ३।६।१) इति कारणभूतेनानन्देन "रसो वै सः" (तै, उ, २।७।२) इति सर्व्वत्र रसस्वरूपस्य प्रकाशात् सर्व्वस्यैकरसत्वमाप्नुयात्; एवञ्च निरन्वयान्वयभेदोऽप्यपास्तः स्यात्।

न पुनर्मन्तव्यमेकेषां विवर्त्तवादोऽपरेषाञ्च परिणामवादः स्यात् परिपन्थी मैत्रीबन्धनस्य। अचिन्त्य-वैचित्र्यशक्तिं विना नैतयोरेकोऽपि किञ्चनान्यदाविष्करोति। एकस्यैन्द्रजालिकदृष्टान्तेनापरस्याकाशादिभ्य आकाशत्वाद्यपरिहारेण शब्दाद्युत्पत्तिदृष्टान्तेन चैकस्मिन् ब्रह्मणि स्वरूपान्यथाभावमन्तरेण विविधाकारा सृष्टिर्भवतीति मन्यमानाः समानतुष्टिमेवानुभवन्ति। आकाशादिभ्यः शब्दाद्युत्पत्तेः परमरहस्यत्वादस्मिन् पक्षे पुनरैन्द्रजालिकत्वस्य सर्व्वथा निरवकाशः। ऐन्द्रजालिकत्वे पुनरिन्द्र-जालघटितमिथ्यात्वमापततीति शङ्का मूलशून्या। अस्मिन् दृष्टान्ते पुनरैन्द्रजालिकस्य सत्यत्वं तच्छक्तेः सत्यत्वं वैचित्र्यप्रदर्शनस्य च तच्छक्तिसम्भूतत्वं को वा निवारयेत। [illegible]यादादि नित्यकालमेतत्प्रदर्शनं प्रदर्शितवैचित्र्यस्यापि सापेक्षसत्यत्वमापतितम्। वस्तुतस्तु प्रतिनियतान्तर्बाह्यप्रतिरोधिनानुभूयमानां शक्तिं विना न किमपि वस्त्वन्तरं प्रत्यक्षगम्यम्। सर्व्वं हि खलु तद्वैचित्र्यमेव। वैचित्र्यं पुनस्तत्संस्थानविशेषमात्रघटितम्। भगवच्छक्तिस्तद्रूपेण विवर्त्तते, स्वरूपाविमर्द्देन परिणमते वेति चेत् कोऽत्र विशेषः। अतएवाहुस्तत्त्वविदः,—

"सर्व्वोर्द्धविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥" इति।

सुतरां वेदान्तवादिनामाचार्य्याणां वितर्कजालं न पुनर्जातु वेदान्तेष्वनास्थामुत्पादयतीत्यलं पल्लवितेन।

## इति प्रस्थानवल्ली द्वितीयोऽध्यायः।

——

# तृतीयोऽध्यायः ।

अथारोहवल्ली ।

१ । प्र ते ब्रवीमि तदु मे विबोध
स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेनं निहितं गुहायाम् ॥
लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्व्वा यथा वा ।
स चापि तत् प्रत्यवदत् यथोक्त-
मथास्य मृत्युः पुनरेवाह तुष्टः ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्म्मकृत् तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमाᳬ शान्तिमत्यन्तमेति ॥

कठ १।१४।१५।१७ ।

प्रस्थानवल्ल्यां वैदिकदेवेषु वैदिकानुष्ठानेषु चोपनिषत्समुचित-भावानां सन्निवेशः संक्षेपेणोक्तः, न पुनस्तत्रारोहक्रमः । अतस्तदभि-ख्यायां तमेव प्रदर्शयितुमुपक्रमते ;—

१ । प्र ते इति । यत् त्वया प्रार्थितं तत् उ पुनः स्वर्ग्यं स्वर्ग-साधनम् अग्निं विजानन् विज्ञातवान् अहं ते तुभ्यं प्रब्रवीमि, हे नचिकेतः, मे मत्तः त्वं विबोध बुध्यस्व । गुहायां विदुषां बुद्धौ निहितं निविष्टम् एनम् अग्निम् अनन्तलोकाप्तिम् अक्षयलोकप्राप्तिसाधनम्,

अथो अपि प्रतिष्ठां भूतात्मकत्वेन जगतः आश्रयं त्वं विद्धि। अत्र वैदिकदेवताग्निर्न केवलमक्षयलोकप्रापकत्वेनोपस्थापितः, किन्तर्हि सर्व्वाश्रयत्वेन। एवमपि न वैदिकादौपनिषदज्ञाने समारोहः, सिद्ध्यति पुनः स "गुहायां निहितम्" इति विशेषणेन। बाह्यतोऽन्तः-प्रवेशो हि तस्याः पन्थाः।

लोकादिमिति। लोकादिं लोकानाम् आदिं लोकसर्ज्जनात् प्राक् प्रादुर्भूतम्, अतएव अक्षयलोकप्राप्तिसाधनं तम् अग्निं तत्स्वरूपकथनेन तस्मै नाचिकेतसे उवाच प्रोक्तवान्। न केवलमग्निं किन्तर्हि याः यत्स्वरूपाः इष्टकाः, यावतीः वा संख्यया, यथा वा येन प्रकारेण वा चेतव्याः, सर्व्वमेतत् प्रोक्तवान्। स नचिकेता अपि मृत्युना यथा उक्तं तथा तत् प्रत्यवदत् प्रत्युच्चारितवान्। तस्य प्रत्युच्चारणेन तुष्टः मृत्युः पुनरेवाह। नाचिकेताग्निविषये तैत्तिरीयब्राह्मणं यथा ;—"अनन्तं ह वा अपारमक्षय्यलोकं जयति योऽग्निं नाचिकेतं चिनुते य उ चैन-मेवं वेद। अथो यथा रथे तिष्ठन् पक्षसी पर्य्यावर्त्तमाने प्रत्यपेक्षते, एवमहोरात्रे प्रत्यपेक्षते। नास्याहोरात्रे लोकमाप्नुतः, योऽग्निं नाचि-केतं चिनुते य उ चैनमेवं वेद।३।११।८।" इति। इष्टकाचयनेन लोकाभिजयो यथा तत्रैव—"यां प्रथमामिष्टकामुपदधाति, इमं तया लोकमभिजयति। अथो या अस्मिंल्लोके देवताः, तासां सायुज्यं समानलोकतामाप्नोति। यां द्वितीयामुपदधाति, अन्तरिक्षलोक-मभिजयति। अथो या अन्तरिक्षलोके देवताः, तासां सायुज्यं समानलोकतामाप्नोति। यां तृतीयामुपदधाति, अमुं तया लोक-मभिजयति। अथो या अमुष्मिंल्लोके देवताः, तासां सायुज्यं समानलोकतामाप्नोति। अथो अमूरितरा अष्टादश। य एवामी उरवश्च वरीयांसश्च लोकाः, तानेव ताभिरभिजयति। कामचारी ह वा अस्मोकेषु च वरीयःसु च लोकेषु भवति, योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद।३।११।१०।" इति। "'लोकोऽसि' इति मन्त्रेणोपहितया प्रथमेष्टकया भूलोकं जित्वा तत्रावस्थितानां देवानां सहवासं समान-

२। सर्व्वे वेदा यत्पदमामनन्ति
तपाꣳसि सर्व्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्॥
एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥
एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥

काठ २।१५—१७; प्र ५, मा, तै १।८; छा, १।३।१।१—१०

लोकस्वामित्वञ्च प्राप्नोति। तथा 'तपोऽसि' 'तेजोऽसि' इत्याभ्यां द्वितीयतृतीयमन्त्राभ्यामुपधेयेनेष्टकाद्वयेनान्तरिक्षद्युलोकजयादिकमवगन्तव्यम्। तथा 'समुद्रोऽसि' इत्यादिभिरवशिष्टैर्मन्त्रैरुपधेया अमू इष्टका अष्टादशसंख्यकाः। अथाभिः सर्व्वाभिरादित्यलोकादर्व्वाञ्चः ऊर्द्ध्वँल्लोकान् पराञ्चः वरीयांसश्च लोकानभिजयति। नाचिकेताग्निं चिन्वानः तदभिज्ञश्च यो विद्यते तस्योभयविद्यस्य पुरुषस्य आदित्यलोकावाक्षु परासु वरीयःसु च लोकेषु स्वेच्छया सञ्चारो भवति।" इति।

त्रिणाचिकेत इति। त्रिभिः पितामाताचार्य्यैः सन्धिं सम्बन्धम् एत्य प्राप्य तेषामनुशासनेन शिष्टः, त्रिणाचिकेतः त्रि-कृत्वो नाचिकेतोऽग्निश्चितो येन सः, त्रिकर्म्मकृत् इज्याध्ययनदानानां कर्त्ता जन्ममृत्यू तरति अतिक्रामति। ब्रह्मजज्ञं ब्रह्मा हिरण्यगर्भस्तस्माज्जातः ब्रह्मजः; ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः सर्व्वज्ञः, तम् ईड्यं स्तुत्यं देवम् अग्निं विदित्वा निचाय्य आत्मभावेन च दृष्ट्वा इमां प्रत्यक्षां शान्तिम् अत्यन्तम् अतिशयेन प्राप्नोति।

२। सर्व्व इति। सर्व्वे वेदाः यत्पदं यस्य पदं स्वरूपं प्राप्त्युपायम् आमनन्ति कीर्त्तयन्ति, सर्व्वाणि च तपांसि यत् वदन्ति प्राप्त्यर्थं

ख्यापयन्ति, यत् इच्छन्तः प्राप्तुमभिलषन्तः ब्रह्मचर्य्यं संयमव्रतं चरन्ति, ते तुभ्यं तत् पदं प्राप्त्युपायं संग्रहेण संक्षेपेण ब्रवीमि कथयामि। किन्तत्? ओम् इत्येतत्। एतत् ओंशब्दवाच्यम् ओंशब्द-प्रतीकञ्च।

एतद्धीति। एतत् हि अक्षरम् ओङ्कारः ब्रह्म अपरं सविशेषं, एतत् एव अक्षरम् ओङ्कारः परं निर्व्विशेषं ब्रह्म। एतत् हि एव अक्षरम् ओङ्कारं ज्ञात्वा यः यत् परम् अपरं वा ब्रह्म इच्छति तत् तस्य भवति।

एतदिति। एतत् श्रेष्ठं प्रशस्यतरं आलम्बनं ब्रह्मप्राप्त्युपायः, एतत् परम् उत्कृष्टम् आलम्बनं ब्रह्मज्ञापकम्, एतत् आलम्बनम् उपायं ज्ञापकञ्च ज्ञात्वा ब्रह्मलोके महीयते सम्पन्नो भवति।

तथाहि प्रश्नोपनिषदि, माण्डुक्ये, तैत्तिरीये, छान्दोग्ये च,—

अथ हैनं शैव्यः सत्यकामः पप्रच्छ—स यो ह वै तत् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति। १।

तस्मै स होवाच—एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः, तस्माद्विद्वानेतेनैवायतनेनैकतर-मन्वेति। २।

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्य-लोकमुपनयन्ते, स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवति। ३।

अथ यदि द्विमात्रेण मनसि सम्पद्यते, सोऽन्तरिक्षं यजुर्भिरुन्नीयते, स सोमलोकम्। स सोम-लोके विभूतिमनुभूय पुनरावर्त्तते। ४।

यः पुनरेतत्त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः। यथा पादोदरस्त्वचा विनिर्म्मुच्यत एवं ह वै स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः। ५।

तिस्रोमात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः॥६॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत् कवयो वेदयन्ते।
तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति॥७॥ प्रश्न ५।

(१) अथ अनन्तरं शैव्यः शिबिपुत्रः सत्यकामः एनं पिप्पलादं पप्रच्छ—हे भगवन्, मनुष्येषु स यः प्रायणान्तं मरणान्तम् तत् अक्षरम्

ओङ्कारम् अभिध्यायीत आभिमुख्येन चिन्तयेत्, स तेन ध्यानेन कतमं लोकं जयतीति।

(२) स पिप्पलादः तस्मै सत्यकामाय उवाच—यदोङ्कारः, हे सत्यकाम, तत् एतत् परञ्च निर्व्विशेषम् अपरञ्च सविशेषं ब्रह्म, तस्मात् विद्वान् तदभिज्ञः एतेनैव आयतनेन ब्रह्मप्राप्तिसाधनेन एकतरं परम् अपरं वा ब्रह्म अन्वेति अनुगच्छति।

(३) ऋग्वेदरूपा ओङ्कारस्य प्रथममात्रा अकारः। स एकमात्राविभागज्ञः यदि एकमात्रम् ओङ्कारम् अभिध्यायीत, स तेनैव संवेदितः सम्बोधितः, तूर्णं शीघ्रम् एव जगत्यां मनुष्यलोके अभिसम्पद्यते सम्पन्नो भवति। तं जनम् ऋचः मनुष्यलोकम् उपनयन्ते उपनिगमयन्ति। स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया च सम्पन्नः महिमानम् ऐश्वर्य्यम् अनुभवन्ति।

(४) यजुर्व्वेदरूपा ओङ्कारस्य द्वितीयामात्रा उकारः। स द्विमात्राविभागज्ञः यदि द्विमात्रेण ओङ्कारमभिध्यायीत, मनसि सोमदैवत्ये सम्पद्यते सम्पन्नो भवति। स यजुर्भिः अन्तरिक्षं उन्नीयते। स सोमलोकं जयति—कतमं लोकं जयतीति प्रश्नसारस्यात्। सोमलोके स विभूतिम् ऐश्वर्य्यम् अनुभूय पुनरावर्त्तते मनुष्यलोकं प्रति।

(५) यः पुनः त्रिमात्रेणैव ओमित्येतेनैव अक्षरेण एतं प्रणवरूपं परं पुरुषम् अभिध्यायीत, स तेजसि तेजोमये सूर्य्ये सम्पन्नः भवति। पादोदरः सर्पः यथा त्वचा निर्म्मोकेण विनिर्मुच्यते, एवं पुनः स पापेन विनिर्म्मुक्तः सामभिः उन्नीयते, स ब्रह्मलोकं जयति। स एतस्मात् जीवघनात् समष्टिजीवरूपात् हिरण्यगर्भात् परात्परं पुरिशयं निखिलशरीरानुप्रविष्टं परमपुरुषम् ईक्षते साक्षात् पश्यति। तदेतौ अस्मिन् यथोक्तार्थप्रकाशकौ श्लोकौ मन्त्रौ स्तः।

(६) ओङ्कारस्य अकारउकारमकाराख्यास्तिस्रो मात्राः प्रयुक्ताः केवलवर्णध्याने कृतप्रयोगाः मृत्युमत्यः मृत्युगोचराः मृत्युमनतिक्रम्य विद्यमानाः। चेत् बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिस्थान-

पुरुषाभिध्यानलक्षणासु क्रियासु ध्यानक्रियासु सम्यक्प्रयुक्तासु तासु अन्योन्यसक्ताः इतरेतरसम्बद्धाः अनविप्रयुक्ताः विशेषेणैवैकविषय एव प्रयुक्ताः भवन्ति, ज्ञः योगी न कम्पते मृत्युभयान्न विचलितो भवति।

(७) ऋग्भिः एतं मनुष्योपलक्षितम्, यजुर्भिः अन्तरिक्षं सोमाधिष्ठितम्, सामभिः यत्तत् ब्रह्मलोकं कवयो मेधाविनः वेदयन्ते, तं त्रिविधं लोकं स विद्वान् ओङ्कारेणैव आयतनेन साधनेन अन्वेति अनुगच्छति। तेनैव ओङ्कारेण यत् शान्तं प्रपञ्चातीतम्, अजरं जरावर्ज्जितम्, अमृतं मृत्युवर्ज्जितं परञ्च ब्रह्म इति तत् अन्वेति प्राप्नोति।

ओमित्येतदक्षरमिदं सर्व्वं तस्योपव्याख्यानं भवति, भूतं भवद्भविष्यदिति सर्व्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव। १।

सर्व्वं ह्येतत् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्। २।

व्याख्यानन्तु पञ्चमवेदान्तवचनसंघातान्ते।

ओमिति ब्रह्म। ओमितीदं सर्व्वम्। ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओँ शोमिति शस्त्राणि शंसन्ति। ओमित्यध्वर्य्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नुवानीति, ब्रह्मैवोपाप्नोति। तै, १।८।

ओमित्येतच्छब्दरूपं ब्रह्म। ओमिति इदं सर्व्वं शब्दरूपेणोङ्कारेण व्याप्तम्। ओमित्येतत् अनुकृतिः, कृतम् उक्तः ओमित्यनुकरोतीत्यन्यः। ह्स्मवै प्रसिद्धिद्योतकाः। अप्यो अपि आ उ। अपिच आश्रावय इत्युक्ते ओङ्कारपूर्व्वकमेव आश्रावयन्ति। ओमिति सामानि गायन्ति सामगाः। शस्त्राणि गीतिरहिता ऋचः। ओं शोमिति शंसन्ति शस्त्रशंसितारः। प्रतिगरं यजुर्व्विशेषम्। ओमिति अध्वर्य्युः प्रतिगरं प्रतिगृणाति होतुः शंसनं प्रति। ओमिति ब्रह्मा प्रसौति प्रेरयति। ओमिति अग्निहोत्रं प्रतिजानाति जुहुधीति। प्रवक्ष्यन् प्रवचनं करिष्यन् अध्येष्यमाणः ब्राह्मणः ओमित्येव आह—ब्रह्म वेदम् उपाप्नुवानि प्राप्नुयां ग्रहिष्यामि इति उपाप्नोत्येव ब्रह्म।

ओमित्येतदक्षरमुद्गीथमुपासीत। ओमिति ह्युद्गायति तस्योपव्याख्यानम्। १।

एषां भूतानां पृथिवी रसः, पृथिव्या आपोरसोऽपामोषधयोरस ओषधीनां पुरुषोरसः, पुरुषस्य वाग्रसो वाचऋग्रस ऋचः साम रसः, साम्न उद्गीथो रसः । २ ।

स एष रसानां रसतमः परमः परार्द्ध्योऽष्टमोयदुद्गीथः । ३ ।

कतमा कतमर्क्, कतमत् कतमत् साम, कतमः कतम उद्गीथ इति विमृष्टं भवति ।४ ।

वागेवर्क्, प्राणः सामोमित्येतदक्षरमुद्गीथः, तद्वा एतन्मिथुनं यद्वाक् च प्राणश्चर्क् च साम च ।५।

तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते, यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् । ६ ।

आपयिता ह वै कामानां भवति यएतदेवं विद्वानक्षरमुद्गीथमुपास्ते । ७ ।

तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाह एष एव समृद्धिर्यदनुज्ञा । समर्द्धयिता ह वै कामानां भवति यएतदेवं विद्वानक्षरमुद्गीथमुपास्ते । ८ ।

तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन । ९ ।

तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति । १० ।

छा १।१।१।१—१० ।

(१) उद्गात्रा गेयः साम्नो द्वितीयोभाग उद्गीथः । तथाहि—

प्रस्तावस्तत उद्गीथः प्रतिहार उपद्रवः ।
निधनं पञ्चेत्याहुर्हिङ्कारः प्रणवस्तथा ॥ इति ।

सर्व्वेषां वेदानामोङ्कारपूर्व्वकत्वात् प्रणवएव प्रथमावयवः । तमेवोङ्कारमुद्गीथवाच्यत्वेन गृहीत्वोपासनं विदधाति ओमिति । ओमित्येतत् अक्षरं वर्णम् उद्गीथम् उपासीत—"कर्म्माङ्गावयवभूते ओङ्कारे परमात्मप्रतीके दृढ़ामैकान्तलक्षणां मतिं सन्तनुयात् ।" कथमोङ्कारस्योद्गीथवाच्यत्वम् ? ओमिति उद्गायति ओमिति आरभ्य यस्मात् उद्गायति । तस्य अक्षरस्य उपव्याख्यानम्—'एतदुपासनम् एवंविभूति एवंफलमित्यादि कथनम्' ।

(२) एषां स्थिरजङ्गमानां भूतानां पृथिवी रसः जन्मस्थितिलयहेतुः ; पृथिव्याः आपः रसः—तासु ओता प्रोता च सा तिष्ठतीति कारणात् ; अपाम् ओषधयो रसः—अप्परिणामत्वादोषधीनाम् ; ओषधीनां पुरुषः रसः—अन्नपरिणामत्वात् पुरुषस्य ; पुरुषस्य वाक् रसः,—

तस्मिंस्तस्याः सारभूतत्वात्; वाचः ऋक् सारतरा; ऋचः साम रसः सारतरम्; साम्नः उद्गीथः रसः सारतरः।

(३) स एष उद्गीथाख्यः ओङ्कारः रसानां रसतमः, परमः श्रेष्ठः, परार्द्ध्यः—अर्द्धं स्थानम्—परं स्थानमर्हतीति परार्द्ध्यः परमात्मस्थानार्हः। यदुद्गीथः य उद्गीथः पृथिव्यादिरससंख्यायाम् अष्टमः।

(४) आरोपबहुत्वविवक्षया डतमः। कतमा कतमेति वीप्सा आदरार्था। कतमा ऋक्, कतमत् साम, कतम उद्गीथः इति विमृष्टं भवति विमर्शः कृतो भवति।

(५) विमर्शो यथा—वाक् एव ऋक्, प्राणः साम, ओमित्येतत् अक्षरम् उद्गीथः। यत् वाक् च प्राणश्च ऋक् च साम च तदेतत् मिथुनम्। वाचा ऋचः प्राणेन साम्नः एकत्वं विधाय मिथुनत्वं परिकल्पितम्।

(६) वाङ्मयो हि ओङ्कारः, स च प्राणनिष्पाद्यः, उद्गीथो हि सामावयवः। अतस्तयोर्वाङ्मयत्वप्राणनिष्पाद्यत्वयोर्मिथुनत्वमुद्गीथवाच्य ओङ्कारे तत्संसर्ज्जनञ्च वर्णयति तदिति। तत् एतत् मिथुनम् ओमिति एतस्मिन् अक्षरे संसृज्यते संसृष्टं विद्यते। एवं संसृष्टे ओङ्कारस्य सर्व्वकामावाप्तिगुणत्वम्। तत्र दृष्टान्तः—यदा हि मिथुनौ स्त्रीपुमांसौ समागच्छतः सङ्गतौ भवतः, तदा तौ अन्योन्यस्य कामम् आपयतः प्रापयतः।

(७) फलमाह—यत् एतत् एवं विद्वान् अक्षरम् उद्गीथम् उपास्ते, स वै कामानाम् आपयिता प्रापयिता भवति यजमानस्य।

(८) तत् वा एतत् अनुज्ञाक्षरम्? कथम्? यत् किञ्च धनं ज्ञानं वा अनुजानाति धनी ज्ञानी वा, ओमित्येव तत्रानुमतिं कुर्व्वन् तदाह। यदनुज्ञा या अनुज्ञा, एषा उ एव समृद्धिः समृद्धिं प्रति तस्याः कारणत्वात्। य एतदेवं विद्वान् अक्षरम् उद्गीथम् उपास्ते, स हि कामानां समर्द्धयिता समृद्धिसाधकः भवति यजमानस्य।

(९) तेन अक्षरेण इयं त्रयी विद्या वैदिककर्म्म वर्त्तते प्रवर्त्तते।

३ । यः पूर्व्वं तपसो जातमद्भ्यः पूर्व्वमजायत ।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत ॥
एतद्वैतत् ।
या प्राणेन सम्भवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ॥
एतद्वैतत् ।
अरण्योर्निहितो जातवेदा गर्भइव सुभृतो गर्भिणीभिः ।
दिवे दिवे ईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥
एतद्वैतत् ।
यतश्चोदेति सूर्य्यो ऽस्तं यत्र च गच्छति ।
तं देवाः सर्व्वेऽर्पितास्तदु नात्येति कश्चन ॥
कठ ४।६—९ । एतद्वैतत् ।

कथम् ? ओमिति आश्रावयति, ओमिति शंसति, ओमिति उद्गायति । कथमेवं कर्म्म प्रवर्त्तते ? तस्य अक्षरस्य अपचित्यै पूजार्थम्—"परमात्म-प्रतीकं हि तत्, तदपचितिः परमात्मनएव सा । 'स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति स्मृतेः ।" केनोपकरणेन वा सोपचिति-र्निर्व्वर्त्यते ? महिम्ना रसेन च अक्षरस्य । महिम्ना महत्त्वेन ऋत्विग्-यजमानादिप्राणैः, रसेन व्रीहियवादिरसनिर्वृत्तेन हविषा ।

(१०) वर्णितगुणकमोङ्कारं यो जानाति यो वा न जानाति, तावुभौ तेनैव कर्म्म कुरुतः, तत्कुतो विशेषस्तदाह तेनेति । एतदेवं वेद यश्च न वेद उभौ तेन अक्षरेण कर्म्म कुरुतः । नाना तु विद्या उपासनं च, अविद्या कर्म्म च । यदेव विद्यया उपासनविज्ञानेन, श्रद्धया, उपनिषदा योगेन करोति, तदेव वीर्य्यवत्तरं सपदिफलप्रदं भवति ; इति अक्षाद्वेतोः खलु एतस्य अक्षरस्य उपव्याख्यानम् उपासा-विभूति-फलविवृतिः भवति ।

३ । ओङ्कारे ब्रह्मदर्शनमभिधाय समष्टिजीवादिषु तद्दर्शनमभि-

दधाति यदिति। अद्भ्यः अप्सहितेभ्योभूतेभ्यः, अन्यथा "आपो ह वा इदमग्रे सलिलमेवास। ता अकामयत कथं नु प्रजायेमहीति ता अश्राम्यंस्तास्तपोऽतप्यन्त, तासु तपस्तप्यमानासु हिरण्मयाण्डं संबभूव। ......ततः संवत्सरे पुरुषः समभवत् स प्रजापतिः (४।११।१।२)" इति शतपथब्राह्मणोक्त्या विरुध्येत। पूर्व्वं प्रथमं तपसः स्रष्टुरभ्युखचिच्छक्तेः जातं, भूतेभिः भूतैः सह गुहां सर्व्वभूतहृदयं प्रविश्य तिष्ठन्तं समष्टि-जीवं यः मुमुक्षुः व्यपश्यत प्रत्यक्षं कृतवान् स एतत् वै तत् ब्रह्म इति पश्यति।

येति। अदितिर्देवमातेति प्रसिद्धिः। 'अदितिरदीना देवमाता' ( ४।४।१ ) इति निरुक्तम्। ऋक्संहितायां दशममण्डले एवमेव दृश्यते,

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः॥ इति। १०म, ७२ सू, ५ ऋक्।
ब्रह्मणस्पतिरेता सं कर्म्मार इवाधमत्।
देवानां पूर्व्व्ये युगेऽसतः सदजायत॥ ( २ ऋक् )

इत्येषा ऋग् दर्शयति स्रष्टुरभ्युखचिच्छक्तिः क्रियाशक्तिरूपेणाभिव्यक्ता-ऽविद्यमानाद्विद्यमानं जगदुपादानमुदपादयत्। न तदासीत् देवाना-मुत्पत्तिः। यदा पुनरदितेर्देवानामुत्पत्तिरभवत्, तदा सर्व्वं सलिले-नापूर्णमासीत्,

यद्देवा अदः सलिले सु संरब्धा अतिष्ठत।
अत्रा वो नृत्यतामिव तीव्रोरेणुरपायत॥ इति। ( ६ऋक् )

अष्टौ पुत्रा अदितेरादित्यनाम्ना प्रसिद्धाः। कुत्र च द्वादश इति। ते पुनर्द्वादश मासाः, यथा शतपथब्राह्मणे—"कतमे आदित्या इति। द्वादश मासाः संवत्सरस्य एते आदित्याः" इति (११।६।३।८) इति। दृश्यते च पञ्चममण्डले ऋगेषा—

हिरण्यरूपमुषसोव्युष्टावयःस्थूणमुदिता सूर्य्यस्य।
आरोहथो वरुण मित्र गर्भमतश्चक्षाथे अदितिं दितिं च॥ इति।
( ५म, ६२सू, ८ ऋक् )

सूर्य्योदये रथोपरिस्थोवरुणो मित्रश्चादितिं दितिञ्च पश्यतीत्युक्तिः

समष्टिजगद्व्यष्टिजगद्दर्शनं द्योतते। मूलमस्य श्रुतान्तस्योपलभ्यते छान्दोग्ये—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करोमीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्।" इत्यत्र। जीवो हि परा प्रकृतिः समष्टिजीवः, अपरा प्रकृतिः समष्टिजगत्, तस्या एव वैदिकयभिख्याऽदितिरिति सरलसिद्धान्तः। अतएव हि सिद्धाति,

> अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
> विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥
>
> (१म, ८९सू, १० ऋक्) इति।

जगद्रूपायां वैदिक्यामदित्यां ब्रह्मदर्शनमभिदधाति। प्राणेन प्राणधारणकर्त्रा समष्टिजीवेन सह देवतामयी या अदितिः सम्भवति प्रादुर्भवति, या भूतेभिः भूतैः व्यजायत अभिव्यक्ता अभवत्, तां गुहां सर्व्वभूतहृदयं प्रविश्य तिष्ठन्तीं यः मुमुक्षुः पश्यति, स एतत् वै तत् ब्रह्म इति पश्यति।

अरण्योरिति। अग्नौ ब्रह्मदर्शनमभिदधाति। गर्भिणीभिः सुभृतः सम्यग् भृतः परिपोषितः गर्भः इव जातवेदाः अग्निः अरण्योः उत्तराधरारण्योः निहितः स्थितः, स अग्निः दिवे दिवे अहन्यहनि जागृवद्भिः जागरणशीलैः हविष्मद्भिः आज्यादिमद्भिः मनुष्येभिः मनुष्यैः ईड्यः स्तुत्यः। सोऽयमग्निरेव एतत् वै तत् ब्रह्म इति जागरणशीलैर्योगिभिरीक्ष्यते।

यतइति। यतः सूर्य्यः उदेति, यत्र अस्तं गच्छति तं समष्टिजीवम्—अग्न्यादयः अधिदैवतं, रागादयश्चाध्यात्मं—सर्व्वे देवाः अर्पिताः संप्रवेशिताः, सुतरां स समष्टिजीवएव तत् ब्रह्म, तत् ब्रह्म कश्चन न अत्येति न अतिक्रम्य गच्छति, न तदन्यत्वं भजति। एतत् वै तत् ब्रह्म। सूर्य्यस्योदयास्तमयौ जीवदृष्टिमवलम्ब्य, अन्यथाऽनुदयास्तमय एव स निरन्तरमाकाशमार्गे विद्यमानत्वात्।

४। हंसः शुचिषद्वसुरन्तरिक्ष-
सद्धोता वेदिषदतिथिर्दुरोणसद्।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत्॥
कठ ५।२ (४म, ४०सू, ५ऋक्)

५। यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति, ताः पुनरुदयतः प्रचरन्त्येवं ह वै तत् सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते।

४। चतुर्थमण्डलस्थचत्वारिंशत्सूक्तस्यास्याः पञ्चम्या ऋचः सूर्यो देवता। अतएव भाष्यकारोऽप्याह "यदाप्यादित्यएव मन्त्रेणोच्यते तदाप्यात्मस्वरूपत्वमादित्यस्याङ्गीकृतत्वाद्ब्राह्मणोव्याख्यानेऽप्यविरोधः।" इति। तन्मते पूर्ववत् सूर्य्यस्याप्रधानत्वं वर्णितं तदत्र सूर्य्ये ब्रह्मदर्शनमभिधीयतइत्यायाति। ऋतस्यैवात्र प्राधान्यदर्शनात् तस्मिन् ब्रह्मदर्शनमिति वयमनुभवामः। हंसइति। हंसः सूर्य्यः शुचिषद् द्युषद्, वसुः वायुः अन्तरिक्षसद्, होता अग्निः वेदिषद्, अतिथिः दुरोणसद् गृहसद्। ऋतं सत्यं नृषद्, वरसद् देवसद्, ऋतसद् यज्ञसद्, व्योमसद्, अब्जाः शङ्खशुक्त्यादयः, गोजाः व्रीहियवादयः, ऋतजाः यज्ञाङ्गादयः, अद्रिजाः नद्यादयः। अतस्तत् ऋतम् एव बृहत् ब्रह्म।

५। अथ पुनर्वेदान्तिकारोहक्रमो मुख्यतः पदर्श्यते यथेति। हे गार्ग्य, यथा अस्तं गच्छतः अर्कस्य सूर्य्यस्य सर्वाः मरीचयः रश्मयः एतस्मिन् तेजोमण्डले सूर्य्ये एकीभवन्ति विवेकानर्हरूपेण तिष्ठन्ति, पुनः उदयतः पुनरुद्गच्छतः तस्य ताः प्रचरन्ति विकीर्य्यन्ते, एवं ह वै

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति, गार्हपत्यो ह वा एषो ऽपानो व्यानो ऽन्वाहार्य्यपचनो यद्गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणः।

यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स समानः। मनो वाव यजमान इष्टफलमेवोदानं स एनं यजमानमहरहर्ब्रह्म गमयति।

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च

तत् सर्व्वं विषयेन्द्रियजातं परे प्रकृष्टे देवे द्योतनवति मनसि एकीभवति विवेकानर्हरूपेण तिष्ठति। तेन तर्हि तस्मिन् स्वापकाले पुरुषो न शृणोति, न पश्यति, न जिघ्रति, न रसयते, न स्पृशते, न अभिवदते, न आदत्ते, न आनन्दयते, न विसृजति, न इयायते न विचरते, स स्वपिति निद्रां याति इति आचक्षते कथयन्ति लोकाः।

एतस्मिन् पुरे देहे प्राणाग्नयः प्राणादि-पञ्चवायवः अग्नय इव अग्नयः जाग्रति। के ते? एष अपानः ह वै गार्हपत्यः, एष व्यानः अन्वाहार्य्यपचनः दक्षिणाग्निः—हृदयाद्दक्षिणसुषिरद्वारेण निर्गमात् दक्षिणदिक्साम्यवशात् व्यानदक्षिणाग्न्योः साम्यम्। प्रणयनात्—प्रणीयते ऽस्मादिति प्रणयनं—यस्मात् गार्हपत्यात् आहवनीयः प्रणीयते तस्मात् प्राणः आहवनीयः—स्वापकाले अपानस्यान्तःप्रवेशे तस्मात् प्राणस्य मुखनासिकाभ्यां सञ्चरणात्।

यत् यस्मात् एतौ उच्छ्वासनिश्वासौ आहुती इव समं नयति साम्यावस्थायां स्थापयति इति अतः समानः होता आहुत्योर्नेतृत्वात्। मनः ह वै एव यजमानः। उदानः एव इष्टफलम्। कथम्? स एनं यजमानम् अहरहः प्रतिदिनं सुषुप्तिकाले ब्रह्म गमयति प्रापयति।

अत्र इन्द्रियाद्युपरमे प्राणादिवायुजाग्रदवस्थायाम् एष देवः मनः

प्रत्यनुभूतं पुनः प्रत्यनुभवति, दृष्टादृष्टं च श्रुताश्रुतं चानुभूतं चाननुभूतं च सर्व्वं पश्यति सर्व्वः पश्यति।

स यदा तेजसाऽभिभूतो भवति, अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत् सुखं भवति।

स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठते, एवं ह वै तत् सर्व्वं पर आत्मनि सम्प्रतिष्ठते।

पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च

—"कतर एष देवः स्वप्नान् पश्यति?" इति प्रश्नस्य प्रतिवचनत्वादेष देव इति—महिमानम् अनेकात्मभावगमनरूपां विभूतिं स्वप्ने अनुभवति। कथम्? यत् पूर्व्वं दृष्टं, तत् वर्त्तमाने दृष्टम् इव अनुपश्यति, पूर्व्वं श्रुतम् अर्थं वर्त्तमाने श्रुतम् एव इव अनुशृणोति। देशदिगन्तरैः देशान्तरैः दिगन्तरैश्च प्रत्यनुभूतम् अर्थं पुनः पुनः प्रत्यनुभवति। सर्व्वः अनेकात्मभावगतः मनोदेवः दृष्टं च अदृष्टं च श्रुतं च अश्रुतं च, अनुभूतं च अननुभूतं च सत् च असत् च सर्व्वं पश्यति।

स मनोदेवः यदा तेजसा चित्तासम्भूतेन विज्ञानेन अभिभूतः अवरुद्धवासनः भवति, तदा एष देवः अत्र निरुद्धवासनावस्थायां स्वप्नान् न पश्यति। अथ एतस्मिन् शरीरे एतत् सर्व्वतोव्याप्तं विज्ञानं सुखं भवति सुखाकारेण परिणमते।

एवं सुषुप्तौ किं भवति? हे सोम्य गार्ग्य, वयांसि पक्षिणः यथा वासः वासार्थं वृक्षं सम्प्रतिष्ठन्ते गच्छन्ति, एवं ह वै तत् वक्ष्यमाणं सर्व्वं परे आत्मनि परात्मनि संप्रतिष्ठते गच्छति।

किन्तत् सर्व्वम्? पृथिवी च पृथिवीमात्रा च, आपश्च आपोमात्रा

रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चादातव्यञ्चोपस्थञ्चानन्दयितव्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च।

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि सम्प्रतिष्ठते।

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्व्वज्ञः सर्व्वो भवति तदेष श्लोकः।

विज्ञानात्मा सह देवैश्च सर्व्वैः
प्राणाभूतानि सम्प्रतिष्ठन्ति यत्र।

च, तेजश्च तेजोमात्रा च, वायुश्च वायुमात्रा च, आकाशश्च आकाशमात्रा च, चक्षुश्च द्रष्टव्यञ्च, श्रोत्रञ्च श्रोतव्यञ्च, घ्राणञ्च घ्रातव्यञ्च, रसश्च रसयितव्यञ्च, त्वक् च स्पर्शयितव्यञ्च, वाक् च वक्तव्यञ्च, हस्तौ च आदातव्यञ्च, उपस्थश्च आनन्दयितव्यञ्च, पायुश्च विसर्ज्जयितव्यञ्च, पादौ च गन्तव्यञ्च, मनश्च मन्तव्यञ्च, बुद्धिश्च बोद्धव्यञ्च, अहङ्कारश्च अहङ्कर्त्तव्यञ्च, चित्तञ्च चेतयितव्यं च, तेजश्च विद्योतयितव्यञ्च, प्राणश्च विधारयितव्यञ्च।

एष विज्ञानात्मा ज्ञातृस्वभावः पुरुषः जीवः हि द्रष्टा, स्प्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्त्ता, स विज्ञानात्मापुरुषः सुषुप्तौ अक्षरे अप्रच्युतस्वभावे परे आत्मनि परात्मनि संप्रतिष्ठते।

स यः ह वै, हे गार्ग्य, तत् अच्छायं तमोवर्ज्जितम्, अशरीरम्, अलोहितं लोहितादिसर्व्वगुणविरहितम्, अतएव शुभ्रं विशुद्धम् अक्षरं प्रतिपद्यते, यस्तु वेदयते वेत्ति तत्, स सर्व्वज्ञः सर्व्वविधज्ञानसम्पन्नः सर्व्वः अखण्डो भवति, तेनाक्षरेणैकत्ववशात्।

सर्व्वैः देवैः इन्द्रादिभिः सह विज्ञानात्मा जीवः प्राणाः भूतानि च

तदक्षरं वेदयते यस्तु सोम्य
स सर्व्वज्ञः सर्व्वमेवाविवेशेति ॥

प्रश्न ४।२—११ । छा, ८।१०।१०—१२।१ ।

वृ-आ, ४।१।१—२० ; ६।३।१—३८, माण्डू १—१२ ।

यत्र तिष्ठन्ति, हे सोम्य गार्ग्य, यस्तु तां अक्षरं वेदयते वेत्ति, स सर्व्वज्ञः सर्व्वविधज्ञानसम्पन्नः सर्व्वम् एव आविवेश, तेनाक्षरेणैक्यात् ।

तथाहि छान्दोग्ये वृहदारण्यके माण्डूक्ये च ;—

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स अप्राप्यैव देवानेतद्भयं ददर्श, तद्यद्यपीदं शरीरमन्धं भवत्यनन्धः स भवति, यदि स्राममस्रामः । न वैषोऽस्य दोषेण दुष्यति । १ ।

न वधेनास्य हन्यते, नास्य स्राम्येण स्रामो. घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामि । २ ।

स समित्पाणिः पुनरेयाय । तं ह प्रजापतिरुवाच, मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति । स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति । ३ ।

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाचैतत्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतानि वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास । तस्मै होवाच ।४।

तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज ।

स हाप्राप्यैव देवानेतद्भयं ददर्श, नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति, नाहमत्र भोग्यं पश्यामीति । १ ।

स समित्पाणिः पुनरेयाय । तं ह प्रजापतिरुवाच, मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति । सहोवाच नाह खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति, नाहमत्र भोग्यं पश्यामीति । २ ।

एवमेवैष मघवन्निति होवाच एतन्त्वेव ते भूयो ऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्चवर्षाणीति । स हापराणि पञ्चवर्षाण्युवास तान्येकशतं सम्पेदुः । एतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास । तस्मै होवाच । ३ ।

मघवन् मर्त्त्यं वा इदं शरीरमात्तं मृत्युना, तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः । १ ।

(१) य एष स्वप्ने महीयमानः स्वप्नदृष्टैः विविधभोग्यविषयैः पूज्यमानः चरति, एष आत्मा इति ; एतत् अमृतम् अभयम् एतद् ब्रह्म इति ह पुनः प्रजापतिः उवाच। स इन्द्रः पुनः शान्तहृदयः प्रवव्राज प्रजापतिसमीपात् निर्गतवान्। स पुनः देवान् अप्राप्य एव देवलोकम् अगत्वा एव एतत् भयं ददर्श। किन्तत् भयम् ? तत् इदं शरीरं यद्यपि अन्धं भवति, स स्वयमात्मा अनन्धः भवति ; यदि शरीरं स्रामं शिङ्घाणकादिस्रावि भवति, स सप्नात्मा अस्रामः शिङ्घाणकाद्यस्रावी भवति। न वा एष स्वप्नात्मा अस्य शरीरस्य दोषेण दुष्यति दुष्टो भवति।

(२) अस्य शरीरस्य वधेन न स हन्यते, अस्य शरीरस्य स्राम्येण न स स्राम्यो भवति, किन्तर्हि एनं स्वप्नात्मानं स्वप्ने घ्नन्ति एव इव केचन, विच्छादयन्ति विद्रावयन्ति इव, पुत्रादिमरणनिमित्तम् अप्रियवेत्ता इव भवति, अपि तज्जन्यं रोदिति इव। न अहम् अत्र स्वप्नात्मनि भोग्यं फलं पश्यामि।

(३) स इन्द्रः समित्पाणिः पुनः एयाय उपजगाम। प्रजापतिः तम् इन्द्रम् उवाच—यत् यस्मात् शान्तहृदयः सन् प्राव्राजीः इतः अगमः, तत् किम् इच्छन् पुनः आगमः आगतवान्। स इन्द्रः पुनः उवाच, हे भगवः, तत् इदं शरीरं यद्यदपि इत्यादि पूर्व्ववत्।

(४) अस्य वधेन इत्यादिपूर्व्ववत्। स प्रजापतिः उवाच, हे मघवन् एष स्वप्नात्मा एवम् एव। एतम् आत्मवस्तु भूयः पुनरपि ते अनुव्याख्यास्यामि। अपराणि द्वात्रिंशतानि वर्षाणि वस ब्रह्मचर्य्यम्। स इन्द्रः पुनः द्वात्रिंशतं वर्षाणि उवास। तस्मै इन्द्राय प्रजापतिः पुनः उवाच।

(१) तत् एतत् प्रसिद्धः आत्मा यत्र यस्मिन् काले सुप्तः समस्तः अखण्डतां प्राप्तः सम्प्रसन्नः सम्यक् प्रसादापन्नः स्वप्नं न जानाति सम्यक् सुषुप्तोभवति एष आत्मा इति एतत् अमृतम् अभयम् एतत् ब्रह्म इति पुनः प्रजापतिः उवाच। स इन्द्रः पुनः शान्तहृदयः प्रवव्राज। स

इन्द्रः पुनः देवान् अप्राप्य एव एतद् भयं ददर्श। किमत् ? नाह नैव खलु अयं सुषुप्तात्मा सम्प्रति 'अयमहमस्मि' इति एवं न आत्मानं जानाति, नो न एव इमानि भूतानि। अतः विनाशम् एव प्राप्तः अपीतः अतिगतः विनष्ट इव भवति। अहं न अत्र भोग्यं फलं पश्यामि इति।

(२) स समित्पाणिः इत्यादि पूर्व्ववत्।

(३) एवमेवैष······एतस्मात् आत्मनः अन्यत्र अन्यविषये नो एव नैव अनुव्याख्यास्यामि······इत्यादि पूर्व्ववत्। तानि वर्षाणि एकशतं सम्पेदुः सम्पन्नानि बभूवुः। एकशतं वर्षाणि पुनः मघवान् इन्द्रः प्रजापतौ ब्रह्मचर्य्यम् उवास इति यत् लोके शिष्टाः आहुः तदेतत्। तस्मै इन्द्राय पुनः प्रजापतिः उवाच।

(४) हे मघवन्, इदं शरीरं मर्त्त्यं मरणधर्म्म। कथम् ? अमृतस्य अशरीरस्य आत्मनः अधिष्ठानं तत् शरीरं मृत्युना आत्तं ग्रस्तम्। सशरीरः एव प्रियाप्रियाभ्याम् आत्तः ग्रस्तः। न वै सशरीरस्य सतः विद्यमानस्य प्रियाप्रिययोः अपहतिः विनाशः तिरोधानम् अस्ति। अशरीरं सन्तं पुनः न प्रियाप्रिये स्पृशतः। देहाभिमानं परिहाय आत्मस्वरूपेणावस्थानं प्रियाप्रियत्वातीतत्वं साधयतीत्यभिप्रायः।

दृप्तबालाकिर्हानूचानो गार्ग्य आस। सहोवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति। स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति।

स होवाच गार्ग्यो यएवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रु-र्मा मैतस्मिन् संवदिष्ठाः, अतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजेति वा अहमेतमुपास इति। स यएतमेवमुपास्तेऽतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजा भवति। २।

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा बृहन् पाण्डरवासाः सोमो राजेति वा अहमेवमुपास इति। स य एवमेव-मुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते। ३।

स होवाच गार्ग्यो यएवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रु-र्मा मैतस्मिन् संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति। स य एतमेवमुपास्ते तेजस्वीह भवति तेजस्विनी हास्य प्रजा भवति। ४।

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा

मैतस्मिन् संवदिष्ठाः पूर्णमप्रवर्त्तीति वा अहमेतमुपास इति। स य एतमेवमुपास्ते पूर्य्यते प्रजया पशुभिर्नास्यास्माल्लोकात् प्रजोद्वर्त्तते। ५।

स होवाच गार्ग्यो य एवायं वायौ पुरुषएतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा-मैतस्मिन् संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति। स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी। ६।

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा-मैतस्मिन् संवदिष्ठाविषासहिरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति। ७।

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः प्रतिरूपइति वा अहमेतमुपास इति। स य एतमेवमुपास्ते प्रतिरूपं हैवैन-मुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते। ८।

स होवाच गार्ग्यो यएवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वांस्तानतिरोचते। ९।

स होवाच गार्ग्यो यएवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति। स होवाचाजात-शत्रुर्मा मैतस्मिन् संवदिष्ठा असुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्वं हैवास्मिं-ल्लोक आयुरेति नैनं पुराकालात् प्राणो जहाति। १०।

स होवाच गार्ग्यो यएवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति। स यएतमेवमुपास्ते द्वितीयवान् ह भवति, नास्माद्गणश्छिद्यते। ११।

स होवाच गार्ग्यो यएवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रु-र्मा मैतस्मिन् संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्वं हैवास्मिं-ल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति। १२।

स होवाच गार्ग्यो यएवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति। स य एतमेवमुपास्ते आत्मन्वीह भवत्यात्मन्विनीहास्य प्रजा भवति। स ह तुष्णीमास गार्ग्यः। १३।

स होवाचाजातशत्रुरेतावन्नु इत्येतावद्धीति, नैतावता विदितं भवतीति। स होवाच गार्ग्य उप त्वायानीति। १४।

स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद् ब्राह्मणः क्षत्रियमुपेयात् ब्रह्म मे वक्ष्यतीति। व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ। तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति, स नोत्तस्थौ तं पाणिना पेषं बोधयाञ्चकार, स होत्तस्थौ। १५।

स होवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद्यएष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुतएतदागा-दिति। तदु ह न मेने गार्ग्यः। १६।

स होवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद्यएष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय यएषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीतएव प्राणो भवति गृहीता वाक् गृहीतञ्चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः। १७।

स यत्रैतत् स्वप्न्या चरति ते हास्य लोकास्तदुतेव महाराजोभवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति। स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्ततैवमेवैष एतत् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते। १८।

अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते, ताभिः प्रत्यवसृप्य पुरीतति शेते। स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत, एवमेवैष एतच्छेते। १९।

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गाव्युच्चरन्त्येवमेवास्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत् सत्यस्य सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यम्। २०।

(१) ह ऐतिह्ये। दृप्तबालाकिः दृप्तः असम्यग्ब्रह्मवित्त्वात् गर्व्वितः स चासौ बालाकिश्चेति बलाकाया अपत्यं बालाकिः अनूचानः वाग्मी गार्ग्यः गोत्रतः आस बभूव। स गार्ग्यः काश्यं काशीराजम् अजातशत्रुं गत्वा उवाच ब्रह्म ते ब्रवाणि कथयानि इति। स अजातशत्रुः पुनः उवाच—एतस्यां वाचि 'ब्रह्म ते ब्रवाणि' इति प्रतिज्ञामात्रे सहस्रं गोसहस्रं दद्म। कथम्? जनकः दाता जनकः श्रोता इति वै प्रसिद्ध्या जनाः ब्रह्मश्रवणकथनग्रहणाकाङ्क्षिणः धावन्ति मां प्राप्नुवन्ति इति।

(२) स गार्ग्यः उवाच—यएव असौ आदित्ये चक्षुषि पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे भावये इति। स अजातशत्रुः पुनः उवाच—मा मा इति हस्तेन निवारयन्—एतस्मिन् ब्रह्मणि मा संवदिष्ठाः संवादं मा कार्षीः। कथम्? अयं पुरुषः अतिष्ठाः सर्व्वाणि भूतानि अतिक्रम्य तिष्ठतीति अतिष्ठाः राजा वैराजपुरुषः, सर्व्वेषां भूतानां मूर्द्धा शिरः इति गुणविशिष्टम् अहं वा एतं वैराजपुरुषम् उपासे भावये इति। किमस्या उपासनायाः फलम्? स यः एतं विराजपुरुषम् एवं प्रोक्तगुणविशिष्टत्वेन उपास्ते भावयति स अतिष्ठाः

सर्व्वाणि भूतानि अतिक्रम्य तिष्ठन् सर्व्वेषां भूतानां मूर्द्धा राजा भवति।

(३) स गार्ग्यः पुनरुवाच—यएव असौ चन्द्रे मनसि पुरुषः एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? वृहन्—भानुमण्डलतो चन्द्रमण्डलं द्विगुणमिति प्रसिद्धा—महान्, पाण्डरवासाः—'आपो वासः प्राणस्य' इति श्रुत्या अप्शरीरत्वात्—शुक्लवासाः, सोमः—सोमलतात्मकः—राजा इति गुणविशिष्टम् अहं वा एतम् उपासे इति। स य एतम् एवम् उपास्ते तस्य अहरहः प्रतिदिनं प्रकृतियागे सुतः सोमः प्रसुतः, विकृतियागे अस्य अन्नं न क्षीयते न क्षयं प्राप्नोति।

(४) स गार्ग्यः पुनः उवाच—य एव असौ विद्युति त्वचि पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? सर्व्वतोव्याप्ततेजस्त्वात् तेजस्वी इति गुणविशिष्टम् अहं वा एतं पुरुषम् उपासे इति। स य एतम् एवं सर्व्वतोव्याप्तसमष्टिविद्युद्रूपेण उपास्ते स पुनः तेजस्वी भवति, अस्य प्रजा सन्ततिश्च तेजस्विनी भवति।

(५) स गार्ग्यः पुनः उवाच—यएव अयम् आकाशे हृदि पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? पूर्णम् अप्रवर्त्ति अप्रवर्त्तकम् अक्रियावत् वा इति विशेषणद्वयविशिष्टम् अहं वा एतं पुरुषम् उपासे। स य एतम् एवं पूर्णत्वेन अक्रियावत्त्वेन उपास्ते स पूर्णत्वविशेषणफलरूपं प्रजया पशुभिः पूर्य्यते, अक्रियावत्त्वविशेषणफलरूपम् अस्मात् लोकात् अस्य प्रजा सन्ततिः न उद्वर्त्तते न उच्छिद्यते।

(६) स गार्ग्यः पुनः उवाच—यएव अयं वायौ प्राणे हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः

उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः । कथम् ? इन्द्रः परमेश्वरः वैकुण्ठः अप्रसह्यः, अपराजिता सेना इति विशेषणत्रयविशिष्टम् अहं वा एतं पुरुषम् उपासे इति । य एतं पुरुषम् एवं विशेषणत्रयविशिष्टसमष्टिवायुरूपेण उपास्ते स जिष्णुः जयशीलः अपराजिष्णुः अपराजितस्वभावः, अन्यतस्त्यजायी अन्यतस्त्यानाम् अन्यतो मातृतो जातानां सपत्नानां जायी जयनशीलः भवति । विशेषणत्रयस्य फलत्रयमिदम् ।

(७) स गार्ग्यः पुनः उवाच—यएव अयम् अग्नौ वाचि हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति । स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः । कथम् ? विषासहिः यत् किञ्च विष्यते क्षिप्यते तत् सर्व्वं भस्मीकरणेन सहते इति विषासहिः मर्षयिता इति विशेषणविशिष्टम्, अहं वा एतं पुरुषम् उपासे इति । स यएतम् एवं विषासहिगुणविशिष्टमग्न्यग्निरूपेण उपास्ते स विषासहिः मर्षयिता भवति, अस्य प्रजा च विषासहिः मर्षयित्री भवति ।

(८) स गार्ग्यः पुनः उवाच—य एव अयम् अप्सु रेतसि हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति । स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः । कथम् ? प्रतिरूपः अनुरूपः अनुकूलः इति विशेषण विशिष्टम् अहं वा एतं पुरुषम् उपासे इति । स य एवं पुरुषम् एतं प्रतिरूपत्वेन उपास्ते एनम् उपासकं प्रतिरूपम् एव उपगच्छति प्राप्नोति न अप्रतिरूपम्, अस्य अस्मात् उपासकात् प्रतिरूपो जायते पुत्र इति शेषः ।

(९) स गार्ग्यः पुनः उवाच—यएव अयम् आदर्शे खड्गादौ हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति । स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः कथम् ? रोचिष्णुः दीप्तिस्वभाव इति विशेषणविशिष्टम् अहं वा एतं पुरुषम् उपासे इति । स य एतं पुरुषम् एवं रोचिष्णुत्वेन उपास्ते, स पुनः रोचिष्णुः भवति,

अस्य प्रजा रोचिष्णुः भवति। यैः स संनिगच्छति सङ्गं करोति, सर्व्वान् तान् अतिरोचते अतिक्रम्य रोचते दीप्तिमान् भवति"।

(१०) स गार्ग्यः पुनः उवाच—यन्तं गच्छन्तम् अनु पश्चात् पृष्ठतः य एव अयं शब्दः उदेति, एतं शब्दम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? असुः प्राणहेतुः इति गुणविशिष्टम् अहं वा एतं शब्दब्रह्म उपासे इति। स य एतम् एवम् असुत्वेन उपास्ते, अस्मिन् लोके स सर्व्वम् आयुः एति प्राप्नोति, न एनम् उपासितारं कालात् पुरा पूर्व्वं प्राणः जहाति त्यजति।

(११) स गार्ग्यः पुनः उवाच—यएव अयं दिक्षु कर्णयोः हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? द्वितीयः साधुभृत्यपरिवृतः, अनपगः अवियुक्तः इति विशेषणद्वयविशिष्टम् अहं वा एतं पुरुषम् उपासे इति। स यएतं पुरुषम् एवं द्वितीयवत्त्वानपगतत्वविशेषणयुक्तत्वेन उपास्ते, स द्वितीयवान् भवति, न अस्मात् उपासितुः गणः छिद्यते विच्छिन्नो भवति।

(१२) स गार्ग्यः पुनः उवाच—यएव अयं छन्दोमयः पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? मृत्युः इति अहं वा एतं पुरुषम् उपासे इति। स य एतं पुरुषम् एवं मृत्युत्वेन उपास्ते अस्मिन् लोके पुनः सर्व्वम् आयुः एति प्राप्नोति, कालात् पुरा पूर्व्वं एनम् उपासकं मृत्युः न आगच्छति।

(१३) स गार्ग्यः पुनः उवाच—यएव अयम् आत्मनि जीवे बुद्धौ हृदि च पुरुषः, एतं पुरुषम् एव अहं ब्रह्म उपासे इति। स अजातशत्रुः पुनः उवाच—मा मा एतस्मिन् ब्रह्मणि संवदिष्ठाः। कथम्? आत्मन्वी आत्मवान् स्ववशः इति गुणविशिष्टम् अहं वा एतम् पुरुषम् उपासे इति। स य एतं पुरुषम् एवम् आत्मवत्त्वेन

उपास्ते स आत्मन्वी आत्मवान् भवति, अस्य प्रजा सन्ततिश्च आत्मन्विनी आत्मवती भवति। स गार्ग्यः पुनः तूष्णीम् आस, अप्रतिभासमानोत्तरस्तूष्णीमवाक्शिरा आस।

(१४) स अजातशत्रुः पुनः उवाच—एतावत् नु ? इति। स गार्ग्यः आह—एतावत् हि इति। अजातशत्रुः पुनः आह—न एतावता विदितं भवति ब्रह्म इति। स पुनः गार्ग्यः उवाच—उप त्वा अयानि, त्वाम् उपगच्छामि शिष्यत्वेन।

(१५) स अजातशत्रुः पुनः उवाच—प्रतिलोमं विपरीतम् एव तत्, यत् ब्राह्मणः 'ब्रह्म मे वक्ष्यति' इति क्षत्रियम् उपेयात् शिष्यत्वेन उपागच्छेत्। त्वा त्वां विज्ञापयिष्यामि एव ब्रह्म। तं गार्ग्यं पाणौ आदाय गृहीत्वा उत्तस्थौ स अजातशत्रुः। तौ पुनः गार्ग्याजातशत्रू सुप्तं निद्रितं पुरुषम् आजग्मतुः, बृहन्, पाण्डारवासः, सोम, राजन् इति एतैः नामभिः तं सुप्तं पुरुषम् आमन्त्रयाञ्चक्रे। एवमामन्त्र्यमाणोऽपि स सुप्तः पुरुषः न उत्तस्थौ न उत्थितवान्, तत्तन्नामभिराहुतोऽपि यत्र प्रबुद्धः, ततएव सिद्धं गार्ग्याभिप्रेतः पुरुषो नासाविति।

(१६) स अजातशत्रुः पुनः उवाच—यत्र यस्मिन् काले एष पुरुषः एतत् स्वपनं यथा भवति तथा सुप्तः अभूत्, स एष विज्ञानमयः पुरुषः। स एष विज्ञानमयः पुरुषः तदा स्वापकाले क्व अभूत् ? कुतः आगात् आगतवान्, एतत् उभयं वद इति शेषः। तत् उभयं पुनः गार्ग्यः न मेने ज्ञातवान्।

(१७) स पुनः अजातशत्रुः उवाच—यत्र यस्मिन् काले एष पुरुषः एतत् स्वपनं यथा भवति तथा सुप्तः अभूत्, य एष विज्ञानमयः पुरुषः, स तत् तदा स्वापकाले एषां प्राणानां वागादीन्द्रियाणां विज्ञानं विशेषज्ञानं विज्ञानेन अन्तःकरणेन आदाय अन्तर्गृहीत्वा य एष अन्तर्हृदये आकाशः तस्मिन् शेते। यदा तानि इन्द्रियाणि गृह्णाति, अथ तदा पुनः एतत्पुरुषः एष पुरुषः स्वपिति इति नाम प्रसिद्धः। तत्

तस्मिन् काले गृहीतएव प्राणः घ्राणः, गृहीता वाक्, गृहीतं चक्षुः, गृहीतं श्रोत्रं, गृहीतं मनः भवति।

(१८) स विज्ञानमयः पुरुषः यत्र यस्मिन् काले एतत् जागरणं यथा स्यात् तथा स्वप्न्या स्वप्नवृत्त्या चरति, तत् तदा अस्य पुरुषस्य पुनः ते लोकाः भवन्ति। के ते? महाराज इव उत अपि भवति, महाब्राह्मण इव उत अपि भवति, उच्चावचम्—उच्चं देवतादि, अवचं तिर्य्यगादि—इव उत अपि निगच्छति विचरति। स महाराजः यथा जानपदान् भृत्यान् अन्यांश्च गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्तेत विचरेत्, एवम् एव एष विज्ञानमयः पुरुषः प्राणान् इन्द्रियाणि गृहीत्वा एतत् जागरणं यथा स्यात् तथा स्वे शरीरे यथाकामं परिवर्त्तते विचरति।

(१९) अथ यदा स सुषुप्तः भवति, यदा न कस्यचन न किञ्चन वेद, तदा हितफलप्राप्तिनिमित्तत्वात् हिताः नाम द्वासप्ततिसहस्राणि नाड्यः हृदयात् पुरीततं हृदयवेष्टनं—"तदेतस्मिञ्छरीरे" इति श्रवणात् कृत्स्नदेहम् अभिप्रतिष्ठन्ते व्याप्नुवन्ति, ताभिः नाडीभिः प्रत्यवसृप्य व्यावर्त्त्य पुरीतति कृत्स्नदेहे शेते। स यथा कुमारः अत्यन्तबालः वा, महाराजः सम्राट् वा, महाब्राह्मणः विद्याविनयसम्पन्नः वा आनन्दस्य अतिघ्नीम् अत्यन्तदुःखविनाशावस्थां गत्वा प्राप्य शयीत, एवमेव एष एतत् शयनं यथा भवति तथा शेते।

(२०) "क्वैष तदाभूत्" इत्यस्योत्तरं दत्त्वा "कुत आगात्" इत्यस्योत्तरं ददाति। "विज्ञानात्मा पुरुषः स परे अक्षरे सम्प्रतिष्ठते" इति तस्मिन् संप्रतिष्ठा तु नित्यकालिकीत्यभिप्रेत्य प्राणादीनां ततो निःसृतिमभिदधाति न तु विज्ञानात्मनः। कथम्? "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रौतन्यायात् सुषुप्तेरुत्थाने पुनर्विज्ञानात्मत्वेन प्रकाशः प्राणादियोगेनेति तेषामेव बहिर्निःसृतिः तस्य च परस्यां देवतायां स्थितिरिति सिद्ध्यति यतः। यथा स लोके प्रसिद्धः ऊर्णनाभः लूताकीटः तन्तुना उच्चरेत् उद्गच्छेत्, यथा

अग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्ति उद्गच्छन्ति, तथा अस्मात् आत्मनः—विज्ञानात्मनः परिष्वक्तस्य परिष्वङ्क्तुः—सर्व्वे प्राणाः वागादयः, सर्व्वे देवाः, सर्व्वाणि भूतानि व्युच्चरन्ति उद्गच्छन्ति, तस्य आत्मनः उपनिषत् अभिधायकः शब्दः—सत्यस्य सत्यम् इति। सत्यस्येति निगमयति—प्राणाः पुनः सत्यम्, सत्यमिति निगमयति—तेषां प्राणानाम् एष सत्यम्। तत् सत्त्वसापेक्षं तेषां सत्त्वमिति सत्यस्य सत्यमित्यभिख्या।

जनकं ह वैदेहं याज्ञवल्क्यो जगाम, स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समुदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ, तं सम्राडेव पूर्व्वं पप्रच्छ। १।

याज्ञवल्क्य किंज्योतिरयं पुरुष इति। आदित्यज्योतिः सम्राडिति होवाचादित्येनैव ज्योतिषास्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेव तद्याज्ञवल्क्य। २।

अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य। ३।

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य। ४।

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य। ५।

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म्म कुरुते विपल्येतीति। ६।

कतम आत्मेति, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः। स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव। स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्योरूपाणि। ७।

स वायं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति। ८।

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीयं स्वप्नस्थानं। तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च। अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति। स यत्र प्रस्वपित्यस्य लोकस्य सर्व्वावतो मात्रामादाय स्वयं विहत्य स्वयं निर्म्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति। ९।

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते, न तत्रानन्दा मुदः

प्रमुदो भवन्त्यथानन्दा मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ता । १० ।

तदेते श्लोका भवन्ति । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानं हिरण्मयः पुरुष एकहंसः । ११ ।

प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः । १२ ।

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ।

आराममस्य पश्यन्ति न तं पश्यति कश्चनेति । तन्नायतं बोधयेदित्याहुः । दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षाय ब्रूहीति । १४ ।

स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव । स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति । १५ ।

स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव । स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य, सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति । १६ ।

स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव । १७ ।

तद्यथा महामत्स्य उभे कूले ऽनुसञ्चरति पूर्व्वञ्चापरञ्चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च । १८ ।

तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति । १९ ।

ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति । यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्व्वोऽस्मीति मन्यते सोऽस्य परमो लोकः । २० ।

तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपम् । तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् । २१ ।

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः। अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्व्वाञ्छोकान् हृदयस्य भवति। २२।

यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्। २३।

यद्वै तन्न जिघ्रति जिघ्रन् वै तन्न जिघ्रति। न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत्। २४।

यद्वै तन्न रसयते रसयन् वै तन्न रसयते। न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत्। २५।

यद्वै तन्न वदति वदन् वै तन्न वदति। न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत्। २६।

यद्वै तन्न शृणोति शृण्वन् वै तन्न शृणोति। न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात्।

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते। न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत। २८।

यद्वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति। न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत्। २९।

यद्वै तन्न विजानाति विजानन् वै तन्न विजानाति। न हि विज्ञातुर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्। ३०।

यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात्। ३१।

सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। ३२।

स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्व्वैर्मानुष्यैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्व्वलोक आनन्दोऽथ ये शतं गन्धर्व्वलोक आनन्दाः स एकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवत्वमभिसम्पद्यन्ते। अथ ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्दः। एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्द्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्व्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति। ३३।

स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव। ३४।

तद्यथा नः सुसमाहितमुत्सर्ज्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ़मुत्सर्ज्जन्याति, यत्रैतदूर्द्धोच्छ्वासी भवति। ३५।

स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव। ३६।

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं सर्व्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति। ३७।

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्व्वे प्राणा अभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति। ३८।

(१) याज्ञवल्क्यः वैदेहं विदेहपतिं जनकं जगाम। स याज्ञवल्क्यः मिने चिन्तितवान् न वदिष्ये किञ्चिदपि राज्ञे मौनस्त्विहासीति यावत्। कथन्तत्सङ्कल्पस्यान्यथाऽभवत् तदभिदधाति—यत् यस्मात्—अथ ह किल पूर्व्वं वैदेहः विदेहपतिः जनकश्च याज्ञवल्क्यश्च अग्निहोत्रम् अग्निहोत्रविषयं समुदाते समूदतुः अग्निहोत्रविषये संवादं चक्रतुः, तस्मै जनकाय पुनः याज्ञवल्क्यः वरं ददौ। स जनकः पुनः कामप्रश्नं यथेच्छप्रश्नम् एव तं याज्ञवल्क्यं वव्रे याचितवान्। स अस्मै जनकाय तं वरं ददौ—तस्मात् सम्राड् एव पूर्व्वं पप्रच्छ।

(२) हे याज्ञवल्क्य, अयं पुरुषः किंज्योतिः?—किमस्य ज्योतिर्येन स व्यवहरति। हे सम्राड्, पुरुषः आदित्यज्योतिः, इति स याज्ञवल्क्यः उवाच। कथम्? आदित्येन एव ज्योतिषा [illegible] आस्ते, उपविशति, पल्ययते पर्य्येति, कर्म्म कुरुते, विपल्येति विपर्य्येति प्रत्यागच्छति इति। स जनक आह—हे याज्ञवल्क्य, एवम् एव एतत्।

(३) हे याज्ञवल्क्य, आदित्ये अस्तमिते अयं पुरुषः किंज्योतिः एव इति? चन्द्रमाः अस्य ज्योतिः भवति इति। कथम्? चन्द्रमसा एव ज्योतिषा अयम् आस्ते, पल्ययते, कर्म्म कुरुते, विपल्येति इति। हे याज्ञवल्क्य, एवम् एव एतत्।

(४) हे याज्ञवल्क्य, आदित्ये अस्तमिते, चन्द्रमसि अस्तमिते अयं पुरुषः किंज्योतिः एव इति ? अग्निः एव अस्य ज्योतिः भवति इति। कथम् ? अग्निना एव ज्योतिषा अयम् आस्ते, पल्ययते, कर्म्म कुरुते, विपल्येति इति। हे याज्ञवल्क्य, एवम् एव एतत्।

(५) हे याज्ञवल्क्य, आदित्ये अस्तमिते, चन्द्रमसि अस्तमिते, अग्नौ शान्ते, अयं पुरुषः किंज्योतिः एव इति ? वाक् एव अस्य ज्योतिः भवति इति। वाचा एव ज्योतिषा अयम् आस्ते, पल्ययते, कर्म्म कुरुते, विपल्येति इति। यस्मात् वाग् ज्योतिः, तस्मात् तयैव, हे सम्राट्, पुरुषो व्यवहरति। कथम् ? अपि यत्र स्वः पाणिः न ज्ञायते अन्धकारवशात्, अथ तस्मिन् काले यत्र वाक् उच्चरयति उच्चरति श्वादिभ्यः, तत्र एव उपन्येति उपनीतो भवति इति। हे याज्ञवल्क्य, एवम् एव एतत्।

(६) हे याज्ञवल्क्य, आदित्ये अस्तमिते, चन्द्रमसि अस्तमिते, अग्नौ शान्ते, वाचि शान्तायां, अयं पुरुषः किंज्योतिः एव इति ? आत्मा एव अस्य ज्योतिः भवति इति। आत्मना एव ज्योतिषा अयम् आस्ते, पल्ययते, कर्म्म कुरुते, विपल्येति इति।

(७) कतमः आत्मा इति ? प्रश्नः। प्राणेषु वागादिषु, हृदि अन्तःकरणे, यः अयं विज्ञानमयः अन्तर्ज्योतिः बुद्धेरवभासकः पुरुषः, स समानः बुद्धेः सदृशः सन् ध्यायति इव चिन्तयति इव, लेलायति इव अत्यर्थं चलति इव उभौ लोकौ इहपरलोकौ अनुसञ्चरति। स हि स्वप्नः स्वप्नात्मकः भूत्वा इमं लोकं जागरितव्यवहारलक्षणं, मृत्योः—मृत्युः अशनायालक्षणवान् बुद्ध्यवस्थः हिरण्यगर्भः तस्य—रूपाणि कार्य्यकरणसंघातानि अतिक्रामति।

(८) स वा अयं पुरुषः जायमानः शरीरम् अभिसम्पद्यमानः शरीरे आत्मभावमापद्यमानः पाप्मभिः कलुषसाधकैः कार्य्यकरणैः संसृज्यते संयुज्यते। स म्रियमाणः उत्क्रामन् शरीरात् ऊर्द्धं गच्छन् पाप्मनः कार्य्यकरणलक्षणान् विजहाति परित्यजति तैः वियुज्यते।

जन्मना कार्य्यकरणोपादानं मृत्युना तत्परित्यागञ्च प्रतिपद्य आसंसार-मोक्षात् इहलोकपरलोकौ स सञ्चरतीति फलितार्थः ।

(९) तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः । के ते? इदं—शरीरेन्द्रियविषयज्ञानविशिष्टं वर्त्तमानं च, परलोकस्थानञ्च—शरीरादिवियोगोत्तरकालानुभाव्यं लोकान्तरञ्च ; सन्ध्यम्—इहलोकपर-लोकयोर्यः सन्धिः, तस्मिन् भवं सन्ध्यं तृतीयं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन् इदञ्च परलोकञ्च एते उभे स्थाने स पश्यति । कथं पश्यति? अयं पुरुषः परलोकस्थाने यथाक्रमः—आक्रमत्यनेनेति आक्रमः साधनम्—स्वकर्म्मविद्यानुसारतः यादृशपरलोकप्रतिपत्ति-साधनयुक्तः भवति तम् आक्रमं साधनम् आक्रम्य आश्रित्य उभयान् पाप्मनः दुःखानि आनन्दान् च पश्यति अनुभवति । स पुरुषः यत्र यदा प्रस्वपिति प्रकर्षेण स्वापम् अनुभवति, तदा सर्व्वावतः सर्व्वान् अनुभूतविषयान् अवति रक्षति इति सर्व्वावान् तस्य सर्व्वावतः अस्य लोकस्य मात्राम् अवयवम् अपादाय आच्छिद्य गृहीत्वा स्वयम् आत्मना विहत्य आत्मानं बोधशून्यं कृत्वा, स्वयम् आत्मना निर्म्माय वासनामय-देहं विरच्य स्वेन आत्मीयेन भासा गृहीतमात्राजनितया दीप्त्या स्वेन आत्मीयेन ज्योतिषा अन्तःकरणवृत्तिप्रकाशेन प्रस्वपिति । अत्र अयं पुरुषः स्वयंज्योतिः बाह्यविषयेन्द्रियसंसर्गविरहितत्त्वात् स्वयंप्रकाशः भवति ।

(१०) अस्य स्वयंज्योतिषः पुरुषस्य निर्म्माणं वर्णयति नेति । तत्र स्वप्ने न रथाः, न रथयोगाः रथे योजयन्ते इति रथयोगाः अश्वा-दयः, न पन्थानः मार्गाः भवन्ति, अथ च स हि कर्त्ता सन्, वासना-मयान् रथान्, रथयोगान् पथः सृजते निर्मिमीते, न तत्र आनन्दाः सामान्यसुखानि, मुदः इष्टलाभजनिताः, प्रमुदः ताएव अतिशयिताः भवन्ति, आनन्दान् मुदः प्रमुदा सृजते, न तत्र वेशान्ताः पल्वलाः, पुष्करिण्यः तड़ागाः, स्रवन्त्यः नद्यः भवन्ति अथच वेशान्तान् पुष्करिणीः नदीः सृजते ।

तत् एतस्मिन्नर्थे एते श्लोका मन्त्रा भवन्ति,—

(११) हिरण्मयः हिरण्मयस्येव ज्योतिःस्वभावः, एकहंसः एको जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहंसः पुरुषः स्वप्नेन निद्रया शारीरं शरीरम् अभिहत्य निश्चेष्टं संपाद्य स्वयम् असुप्तः अलुप्तदृगादिशक्तिः सुप्तान् वासनाकारेणोद्भूतान् सर्व्वान् भावान् अभिचाकशीति अवभासयति ; पुनः शुक्रं शुद्धं विषयेन्द्रियबोधम् आदाय गृहीत्वा स्थानं जागरितस्थानम् एति आगच्छति ।

(१२) स हिरण्मयः एकहंसः पुरुषः अवरं निन्दनीयं कुलायं नीड़ं शरीरं प्राणेन प्राणवृत्त्या रक्षन् पालयन् अमृतः अमरणधर्म्मा कुलायात् शरीरात् बहिः चरित्वा विचर्य्य यत्र कामः वासना तत्र अमृतः सन् कामं स्वाभिलाषम् ईयते प्राप्नोति ।

(१३) स्वप्नान्ते स्वप्नस्थाने उच्चावचम् उत्कृष्टापकृष्टं भावम् ईयमानः प्राप्नुवन् देवः द्योतनवान् पुरुषः बहूनि असंख्येयानि रूपाणि वासनोद्भूतानि कुरुते निर्व्वर्त्तयति । उत अपिच स्त्रीभिः सह मोदमानइव जक्षत् हसन् इव, उत अपिच भयानि सिंहव्याघ्रादीनि पश्यन् इव भवति । जनाः अस्य पुरुषस्य आरामं वासनामयम् आक्रीड़ं पश्यन्ति, न तं पुरुषं कश्चन पश्यति । स्वप्नानुभूतविषयान् सर्व्वे पश्यन्ति किन्तु न तं चिदात्मानं कोऽपि साक्षादनुभवतीति चित्रम् ।

(१४) तं सुप्तं पुरुषम् आयतं सहसा न बोधयेत् इति आहुः भिषजः । कथम् ? यम् इन्द्रियद्वारदेशं तदा एष न प्रतिपद्यते, तत् इन्द्रियद्वारम् अस्मै देहाय दुर्भिषज्यम् आन्ध्यबाधिर्य्यादिना दुश्चिकित्स्यं भवति । अथ अपि खलु अन्ये आहुः—अस्य पुरुषस्य एष स्वप्नः एव जागरितदेश इति । कथम् ? यानि हि एव जाग्रत् पश्यति, सुप्तः तानि पश्यति इति । अतो न जागरितदेशात् स्वप्नदेशो भिन्न इति भावः । एवं सति पुरुषस्य स्वयंज्योतिष्ट्वं न सिध्यति ; तत्सिद्धये पुनरेतन्मतनिरसनायाह—अत्र उपरतेन्द्रियके स्वप्ने अयं पुरुषः स्वयंज्योतिः सर्व्वनिरपेक्षप्रकाशस्वरूपो भवति । सोऽहं भगवः

एवं बोधित: भगवते तुभ्यं याज्ञवल्क्याय सहस्रं ददामि, विमोक्षाय मुक्तये अत: अर्द्धं ब्रूहि त्वम् इति।

(१५) स वा एष स्वप्नस्थ: पुरुष: रत्वा रतिमनुभूय, चरित्वा विहृत्य पापञ्च पुण्यञ्च दृष्ट्वा न पुन: क्वलैतयो: सम्प्रसादे सुषुप्तौ सम्यक् प्रसन्नतावस्थायां स्थित्वा पुन: प्रतिन्यायं—नि आय: न्याय: यतो गमनं तत्प्रति पुनरागमनं—यथागतं, प्रतियोनि यथास्थानं स्वप्नाय एव स्वप्नस्थानाय एव आद्रवति आयाति। स तत्र स्वप्नस्थाने यत्किञ्चित् पश्यति पापपुण्यादिकं तेन अनन्वागत: अननुबद्ध: असम्बद्ध: भवति, सुतराम् अयं पुरुष: हि असङ्ग: इति। हे याज्ञवल्क्य, एवम् एव एतत्। सोऽहं भगवते सहस्रं ददामि, विमोक्षाय अत ऊर्द्धं ब्रूहि इति।

(१६) स वा एष पुरुष: सम्प्रसादात् प्रत्यागत: एतस्मिन् स्वप्ने रत्वा चरित्वा पापञ्च पुण्यञ्च दृष्ट्वा प्रतिन्यायं यथागतं प्रतियोनि यथा-स्थानं बुद्धान्ताय एव जागरितस्थानाय एव आद्रवति आयाति। स तत्र स्वप्नस्थाने यत्किञ्चित् पश्यति तेन अनन्वागत: असम्बद्ध: भवति जागरितस्थाने, सुतराम् अयं पुरुष: हि असङ्ग: इति—"यदि स्वप्ने सङ्गवान् स्यात् कामी, ततस्तत्सङ्गजैर्दोषैर्बुद्धान्ताय प्रत्यागतो लिप्येत" इति। हे याज्ञवल्क्य, एवमेव एतत्। सोऽहं भगवते सहस्रं ददामि, विमोक्षाय अत ऊर्द्धं ब्रूहि इति।

(१७) स वा एष पुरुष: एतस्मिन् बुद्धान्ते जागरितस्थानाय रत्वा चरित्वा पापञ्च पुण्यञ्च दृष्ट्वा एव पुन: प्रतिन्यायं यथागतं प्रतियोनि यथास्थानम् स्वप्नान्ताय एव स्वप्नस्थानाय एव आद्रवति आयाति।

(१८) तत् तत्र स्वप्नान्ते बुद्धान्ते दृष्टान्त:—यथा महामत्स्य:—महान् अतएव स्रोतसाऽप्रतिहतगति:—मत्स्य: पूर्वञ्च अपरञ्च उभे नद्या: कूले अनुसञ्चरति,-एवमेव अयं पुरुष: स्वप्नान्तञ्च बुद्धान्तञ्च एतौ अन्तौ अनुसञ्चरति।

(१९) तद् तत्र बुद्धान्तस्वप्नान्तयोरन्ते सुषुप्तौ दृष्टान्त:—यथा

अस्मिन् आकाशे श्येनः वा महाकायः मन्दवेगः, सुपर्णः वा वेगवान् अल्पकायः पक्षी विपरिपत्य नाना परिपतनं गमनं कृत्वा श्रान्तः सन् पक्षौ संहृत्य सङ्कुच्य, सल्लयाय एव नीड़ाय एव ध्रियते गमनाध्यवसायवान् भवति। एवम् एव अयं पुरुषः एतस्मै अन्ताय सुषुप्तये धावति, यत्र सुषुप्तौ सुप्तः न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति।

(२०) अस्य पुरुषस्य एताः हितफलप्राप्तिनिमित्तत्वात् हिताः नाम नाड्यः सहस्रधा भिन्नं केशः यथा तावता अणिम्ना अणुत्वेन तिष्ठन्ति, ताः शुक्लस्य नीलस्य पिङ्गलस्य लोहितस्य रसस्य शुक्लत्वादिरसविशेषैः पूर्णाः,—अथ एवं सति—कृत्स्नदेहशायिनः नाड़ीगतरसोपाधिसंसर्गवशादिति यावत्—यत्र यस्मिन् काले एवं सूक्ष्मदेहाभिमानिनं पुरुषं केचन घ्नन्ति इव, केचन जिनन्ति वशीकुर्व्वन्ति इव, हस्ती एनं विच्छाययति विद्रावयति इव, गर्त्तं पतति। किं बहुना जाग्रत् यदेव भयं पश्यति, तत् अत्र स्वप्ने अविद्यया प्रोद्भूतवासनया मन्यते, अथ यत्र यस्मिन् काले देवः इव राजा इव अहम् एव इदं सर्व्वं सुतरां सर्व्वोऽस्मि इति मन्यते स अस्य परमः लोकः।

(२१) "सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति" इति तत् वा एतत् अस्य पुरुषस्य अतिच्छन्दाः कामनातीतम् अपहतपाप्मा विनष्टपापम् अभयं रूपम्। तत् तत्र सुषुप्तौ दृष्टान्तः—*यथा* प्रियया स्त्रिया सम्परिष्वक्तः आलिङ्गितः न बाह्यं किंचन वेद [illegible] न आन्तरं किंचन, एवम् एव अयं पुरुषः शारीरः आत्मा प्राज्ञेन आत्मना परात्मना सम्परिष्वक्तः आलिङ्गितः न बाह्यं किंचन वेद न आन्तरं किंचन। तत् एतत् आन्तरबाह्यबोधराहित्यं वा अस्य पुरुषस्य आप्तकामं प्राप्ताभिलाषम् आत्मकामम् अनन्यकामम् अकामम् सर्व्वकामनाशून्यं शोकान्तरम् अपगतशोकं रूपम्।

(२२) अत्र सुषुप्तौ पिता अपिता, माता अमाता भवति, लोकाः अलोकाः, देवाः अदेवाः, वेदाः अवेदाः भवन्ति। अत्र सुषुप्तौ स्तेनः चौरः अस्तेनः अचौरः, भ्रूणहा अभ्रूणहा, चाण्डालः शूद्रेण ब्राह्मण्या-

सुत्पन्न: अचाण्डाल:, पौल्कस: शूद्रेण क्षत्रियायामुत्पन्न: अपौल्कस:, श्रमण: परिव्राट् अश्रमण:, तापस: वानप्रस्थ: अतापस: भवति, पुण्येन अनन्वागतम् असम्बद्धं पापेन अनन्वागतम् असम्बद्धं रूपं भवत्यस्य। तदा हि हृदयस्य सर्व्वान् शोकान् तीर्ण: अतीत: भवति स पुरुष:।

(२३) सुषुप्तौ न विनाशी जड़त्वं वा भवति तद्दर्शयितुमाह—तत् तत्र सुषुप्तौ यत् वै एव न पश्यति पश्यन् वै एव तत् न पश्यति—परात्मालिङ्गनेन विमुग्ध: पश्यन्नेव न पश्यतीति फलितार्थ:। तत्र कारणञ्च दर्शयति—अविनाशित्वात् न हि द्रष्टु: दृष्टे: विपरिलोप: विद्यते। यद्येवं कथं न पश्यति?—तत् तत्र सुषुप्तौ न द्वितीयम् अस्ति यत् तत: द्रष्टु: अन्यत् विभक्तं पश्येत्। आत्मन: परात्मना परिष्वङ्गात् तेनैक्यमभवत् सुषुप्तावस्थायां, सर्व्वञ्च तदा तद्दृष्टितोऽपसृतम्।

(२४) तत् तत्र सुषुप्तौ यत् एव न जिघ्रति, जिघ्रन् एव न जिघ्रति, अविनाशित्वात् न हि घ्रातु: घ्राते: घ्राणशक्ते: विपरिलोप: विद्यते। न तु तत्र द्वितीयम् अस्ति यत् तत: द्रष्टु: अन्यत् विभक्तं जिघ्रेत्।

(२५) तत् यत् एव न रसयते इत्यादि पूर्व्ववत्।

(२६) तत्र यत् एव न वदति इत्यादि पूर्व्ववत्।

(२७) तत्र यत् एव न शृणोति इत्यादि पूर्व्ववत्।

(२८) तत्र यत् एव न मनुते इत्यादि पूर्व्ववत्।

(२९) तत्र यत् एव न स्पृशति इत्यादि पूर्व्ववत्।

(३०) तत्र यत् एव न विजानाति इत्यादि पूर्व्ववत्।

(३१) यत्र यस्मिन् जागरिते स्वप्ने च अन्यत् इव स्यात् विषय-विषयिभेदेन, तत्र जागरिते स्वप्ने च अन्य: विषयी अन्यत् विषयं पश्येत्। अन्य: अन्यत् जिघ्रेत्, अन्य: अन्यत् रसयेत्, अन्य: अन्यत् वदेत्, अन्य: अन्यत् शृणुयात्, अन्य: अन्यत् मन्वीत, अन्य: अन्यत् स्पृशेत्, अन्य: अन्यत् विजानीयात्।

(३२) सुषुप्तौ सलिले सलिलमिव एक: द्रष्टा द्वैतविरहित:

भवति। हे सम्राट्, एष ब्रह्मलोकः ब्रह्म एव लोकः तस्मिन्नभिन्नाकारेण स्थितिः इति एनं जनकं याज्ञवल्क्यः अनुशशास अनुशिष्टवान् उपदिष्टवान्। परात्मना परिष्वक्तस्य अस्य पुरुषस्य एषा परमा गतिः, अस्य पुरुषस्य एषा परमसम्पत्, अस्य पुरुषस्य एष परमः लोकः, अस्य पुरुषस्य एष परमः आनन्दः। अन्यान्यभूतानि इतरप्राणिनः एतस्य एव आनन्दस्य मात्रां कलाम् उपजीवन्ति उपजीविकात्वेन उपभुञ्जते।

(३३) आनन्दमात्राप्रदर्शनेन परमानन्दमभिगमयितुमाह स इति। मनुष्याणां मध्ये स यः कश्चित् राद्धः संसिद्धः अविकलः, समृद्धः निखिलभोगोपकरणसम्पन्नः, अन्येषां जनानाम् अधिपतिः, सर्व्वैः मानुष्यैः मनुष्योचितैः भोगैः सम्पन्नतमः स मनुष्याणां परमः आनन्दः—आनन्दानन्दिनोरभेदनिर्द्देशात्। अथ मनुष्याणां ये शतम् आनन्दाः, स जितलोकानां पितॄणाम् एकः आनन्दः। अथ जितलोकानां पितॄणां ये शतम् आनन्दाः गन्धर्व्वलोके स एकः आनन्दः। अथ गन्धर्व्वलोके ये शतम् आनन्दाः स तेषां कर्म्मदेवानाम् एकः आनन्दः ये कर्म्मणा देवत्वम् अभिसम्पद्यन्ते प्राप्नुवन्ति। अथ कर्म्मदेवानां ये शतम् आनन्दाः स आजानदेवानां जन्मत एव ये देवाः तेषाम् एकः आनन्दः। यश्च श्रोत्रियः अधीतवेदः अवृजिनः पापरहितः अकामहतः वीततृष्णः तस्य आजानदेवैः समानः आनन्दः। अथ आजानदेवानां ये शतम् आनन्दाः प्रजापतिलोके विराड्देहे स एकः आनन्दः, यश्च श्रोत्रियः अवृजिनः अकामहतः तस्य तत्समः आनन्दः। अथ प्रजापतिलोके ये शतम् आनन्दाः ब्रह्मलोके हिरण्यगर्भात्मनि स एकः आनन्दः, यश्च श्रोत्रियः अवृजिनः अकामहतः तस्य तत्समः आनन्दः। अथ समष्टिजीवेन सम्यग्विलक्षणेन प्रत्यक्षीकृतः एष एव परमः निरतिशयः आनन्दः। हे सम्राट्, एष ब्रह्मलोकः इति याज्ञवल्क्यः उवाच। एष एवार्थस्तैत्तिरीये किञ्चिद्विशेषेण तद्यथा;—

सैषानन्दस्य मीमांसा भवति। युवा स्यात् साधुयुवाध्यायिकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्व्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। १।

ते ये शतं मानुषा आनन्दाः; स एको मनुष्यगन्धर्व्वाणामानन्दः; श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्व्वाणामानन्दाः, स एको देवगन्धर्व्वाणामानन्दः; श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्व्वाणामानन्दाः, स एकः पितृणां चिरलोकलोकानामानन्दः; श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितृणां चिरलोकलोकानामानन्दाः स एक आजानजानां देवानामानन्दाः; श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्म्मदेवानामानन्दः, ये कर्म्मणा देवानपियन्ति; श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्म्मदेवानामानन्दाः, स एको देवानामानन्दः, श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः, स एक इन्द्रस्यानन्दः, श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः, स एको बृहस्पतेरानन्दः; श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः, स एकः प्रजापतेरानन्दः; श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य। स यश्चायं पुरुषे यश्चासावादित्ये स एकः।

सोऽहं भगवते सहस्रं ददामि विमोक्षाय एव अतऊर्द्धं ब्रूहि इति। अत्र वाक्ये पुनः याज्ञवल्क्यः बिभयाञ्चकार भीतवान्। कथम्? सर्व्वेभ्यः प्रश्ननिर्णयावसानेभ्यः उत् ऊर्द्धं मेधावी राजा मा माम् अरौत्सीत् अवरुद्धं कृतवान्। सर्व्वं मदीयं विज्ञानं कामप्रश्नच्छलेनोपादित्सतीति भयकारणम्।

(३४) स वा एष पुरुषः एतस्मिन् स्वप्नान्ते स्वप्नस्थाने रत्वा चरित्वा पुण्यञ्च पापञ्च दृष्ट्वा एव पुनः प्रतिन्यायं यथागतं प्रतियोनि यथास्थानं बुद्धान्ताय जागरितस्थानाय एव आद्रवति आयाति।

(३५) तत् तत्र स्वप्नान्तबुद्धान्तयोरेवं विचरणकाले सुसमाहितं सुष्ठु भृशं समाहितं भाराक्रान्तम् अनः शकटं यथा उत्सर्ज्जत् शब्दं कुर्व्वत् यायात् एवम् एव अयं शारीरः आत्मा प्राज्ञेन परेण आत्मना अन्वारूढ़म् आलिङ्गनेनाक्रान्तो यथा स्यात् तथा उत्सर्ज्जत् शब्दविशेषकरणपूर्व्वकं याति। यत्र एतत् भवति तत्र पुरुषः ऊर्द्धोच्छासी भवति।

(३६) सोऽयं देही यत्र यस्मिन् काले अणिमानम् अणोर्भावं कार्श्यं न्येति निगच्छति, जरया उपतपता रोगेण वा अणिमानं कार्श्यं निगच्छति; तत् तत्र यथा आम्रं वा उदुम्बरं वा, पिप्पलं वा बन्धनात्

वृन्तात् प्रमुच्यते स्खलितं भवति, एवमेव अयं पुरुषः एभ्यः अङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं यथागतं प्रतियोनि यथास्थानं प्राणाय एव प्राणस्य भोगशेषसिद्धयर्थम् एव आद्रवति आयाति।

(३७) तत् तत्र यथा आयान्तम् आगच्छन्तं राजानम् उग्राः जातिविशेषाः, प्रत्येनसः तस्करादिदण्डनादौ नियुक्ताः सूतग्रामण्यः सूताः वर्णसङ्करजातिविशेषाः ग्रामण्यः ग्रामनेतारः च अन्नैः पानैः आवसथैः प्रासादादिभिः निष्पन्नैरेव—अयं राजा आयाति अयं राजा आगच्छति—इति प्रतिकल्पयन्ते प्रतीक्षन्ते, एवम् एव एवंविदं स्वकर्म्मफलस्य सर्व्वाणि भूतानि—इदं ब्रह्म कर्त्तृभोक्तृ आयाति इदं ब्रह्म आगच्छति इति—प्रतिकल्पयन्ते प्रतीक्षन्ते।

(३८) तत् तत्र यथा प्रयियासन्तं प्रयातुमिच्छन्तं राजानम् उग्राः प्रत्येनसः सूताः ग्रामण्यः च अभिसमायन्ति तमभिमुखा आयान्ति; एवमेव इमम् आत्मानम् अन्तकाले मरणकाले सर्व्वे प्राणाः अभिसमायन्ति तमभिमुखाः आयान्ति, यत्र एतत्—परमात्मनालिङ्गनाक्रान्तं शब्दविशेषकरणपूर्व्वकं गमनं—भवति, अत्र पुरुषः ऊर्द्ध्वोच्छ्वासी भवति।

ओमित्येतदक्षरमिदं सर्व्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्व्वमोङ्कार एव च। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव। १।

सर्व्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म, सोऽयमात्मा चतुष्पात्। २।

जागरितस्थानो वहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः। ३।

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। ४।

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। ५।

एष सर्व्वेश्वर एष सर्व्वज्ञ एषोऽन्तर्याम्येष योनिः सर्व्वस्य प्रभवाप्ययौ हि भूतानाम्। ६।

नान्तःप्रज्ञं न वहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। ७।

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्राः। मात्राश्च पादा अकार उकारो मकार इति। ८।

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वा। आप्नोति ह वै सर्व्वान् कामानादिश्च भवति य एवं वेद। ९।

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वा उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद। १०।

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा। मिनोति ह वा इदं सर्व्वमपीतिश्च भवति य एवं वेद। ११।

अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद। १२।

(१) ओम् इति एतत् अक्षरम् इदं सर्व्वम्। तस्य ओङ्कारस्य उप समीपे अनन्तरं व्याख्यानं प्रस्तुतं वेदितव्यम्। यत् भूतम् अतीतम्, भवत् वर्त्तमानं, भविष्यत् भावि इति तत् सर्व्वम् ओङ्कारः एव। यत् च अन्यत् त्रिकालातीतं कालापरिच्छेद्यम् अव्याकृतादि तत् अपि ओङ्कार एव।

(२) सर्व्वं यदुक्तमोङ्कारमात्रमिति सर्व्वं हि एतत् परोक्षतः ब्रह्म, अपरोक्षतः अयम् आत्मा ब्रह्म। सोऽयम् आत्मा चतुष्पात्।

(३) आत्मनश्चतुष्पात्त्वं विवृणोति—जागरितस्थानः जागरितं स्थानम् अस्येति जागरितस्थानः बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञः बाह्यविषयमात्रज्ञानवान्, सप्ताङ्गः—"तस्य ह वा एतस्यात्मनो वैश्वानरस्य" (२।१८)* इत्यनुसारतः द्यु-सूर्य्य वाय्वाकाश-जल-पृथिव्याहवनीयाख्यानि सप्ताङ्गानि यस्य; एकोनविंशतिमुखः—पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्म्मेन्द्रियाणि, पञ्च प्राणाः, मनोबुद्धिरहङ्कारश्चित्तमिति एकोनविंशतिमुखानीव मुखानि यस्य, स्थूलभुक् यथोक्तोपायैः स्थूलविषयभोक्ता वैश्वानरः—विश्वरूपः—प्रथमः पादः।

(४) स्वप्नस्थानः स्वप्नः स्थानमस्य स्वप्नस्थानः अन्तःप्रज्ञः अन्तःकरणस्थवासनामयविषये प्रज्ञा यस्य स अन्तःप्रज्ञः वासनामयविषयज्ञानवान्, सप्ताङ्गः—द्युप्रभृतीनां वासनाकारेण स्थितत्वात्; एकोनविंशतिमुखः—इन्द्रियादीनां सूक्ष्मज्ञानाकारेण भासमानत्वात्; प्रविविक्तभुक्—प्रविविक्तः सूक्ष्मविषयः—सूक्ष्मविषयभोक्ता तैजसः—तेजः

* ग्रन्थस्यास्याध्यायः पृष्ठञ्च। एवं सर्व्वत्र।

केवलप्रकाशस्वरूपा विषयशून्या प्रज्ञा तस्यां विषयित्वेन भवतीति तैजसः द्वितीयः पादः।

(५) यत्र यस्मिन् काले सुप्तः कञ्चन कामम् अभिलषितविषयं न कामयते अभिलषति, कञ्चन स्वप्नं न पश्यति, तत् सुषुप्तम्; सुषुप्तस्थानः—सुषुप्तं स्थानं यस्य स सुषुप्तस्थानः; एकीभूतः—जागरिते स्वप्ने च अनुभूतं विषयजातं एकीभूतं यस्मिन्; प्रज्ञानघनः—तस्य विषयजातस्य प्रज्ञानानि घनानि अविभज्यमानानि यस्य स प्रज्ञानघनएव आनन्दमयः, हि यस्मात् आनन्दभुक् आनन्दभोक्ता, चेतोमुखः—चेतः बोधएव मुखम् आनन्दभोगद्वारं यस्य स प्राज्ञः—सर्व्वविषयज्ञः—तृतीयः पादः।

(६) एष स्वरूपावस्थः जीवचैतन्यमात्मन्यन्तर्भूयविद्यमानः सर्व्वेश्वरः, एष सर्व्वज्ञः, एष अन्तर्यामी सर्व्वभूतनियन्ता, एष सर्व्वस्य योनिः प्रसविता। कथम्? हि यस्मात् भूतानां प्रभवाप्ययौ उत्पत्तिनिरधौ एष एव।

(७) न अन्तःप्रज्ञं—तैजसप्रतिषेधः, न वहिःप्रज्ञं—विश्वप्रतिषेधः, न उभयतः प्रज्ञं—जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः, न प्रज्ञानघनं—सुषुप्तावस्थाप्रतिषेधः, न प्रज्ञं—युगपत्सर्व्वविषयज्ञातृत्वप्रतिषेधः, न अप्रज्ञम्—अचैतन्यप्रतिषेधः; अदृष्टं दृगविषयम्; अतः अव्यवहार्य्यं व्यवहारायोग्यम्, अग्राह्यं कर्म्मेन्द्रियाविषयम्, अलक्षणं लिङ्गवत्तारहितम्; अतः अचिन्त्यं चिन्ताया अविषयम्, चिन्ताया अविषयत्वादेव अव्यपदेश्यं शब्दैरवाच्यम्, यद्येवमवस्तुत्वमेवायाति, न—एकात्मप्रत्ययसारं जाग्रदादिस्थानेषु एकोऽयमात्मेति यः प्रत्ययः तत् सारं प्रमाणं यस्य तत्; प्रपञ्चोपशमं—प्रपञ्चानां रूपरसादिविषयाणाम् उपशमो निवृत्तिः यस्मिन् तत्; अतएव शान्तम् अविक्रियं, शिवं मङ्गलम्, अद्वैतं द्वैतविरहितं, चतुर्थं तुरीयं मन्यन्ते पण्डिताः। स विज्ञेयः विशेषेण ज्ञातव्यः। शिवस्वरूपत्वेन ब्रह्मणि परापरप्रकृतिस्वीकारः सम्भवति।

(८) सोऽयम् आत्मा अध्यक्षरम् अक्षरम् अधिकृत्य वर्ण्यमानः

६। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा, इदं पुच्छं प्रतिष्ठा, तदप्येष श्लोको भवति ।१।२।४ ।

ओङ्कारः, अधिमात्रं मात्रात्रयमधिकृत्य वर्ण्यमानः, पादाः आत्मनः पादाः तएव मात्राः ओङ्कारस्य। मात्राः पादाश्च—अकारः, उकारः, मकार इति।

(९) जागरितस्थानः वैश्वानरः अकारः प्रथममात्रा, आप्तेः—सर्व्ववाग्व्याप्तत्वात्, आदिमत्त्वात्—वर्णानां प्रथमत्वात् वा। फलमाह—य एवं वेद विश्वाकाराभेदं वेत्ति स वै सर्व्वान् कामान् आप्नोति लभते आदिश्च भवति।

(१०) स्वप्नस्थानः तैजसः, स उकारः द्वितीया मात्रा, उत्कर्षात् अकारादुत्कृष्टत्वात्, उभयत्वात्—विश्वप्राज्ञयोर्मध्यवर्त्तित्वात् वा। फलमाह—य एवं वेद तैजसोकाराभेदं वेत्ति, स वै विज्ञानसन्ततिं विज्ञानप्रवाहम् उत्कर्षति वर्द्धयति, समानः शत्रुमित्रयोः तुल्यः प्रियः अद्वेष्यो भवति, अस्य कुले अब्रह्मवित् न भवति।

(११) सुषुप्तस्थानः प्राज्ञः मकारः तृतीया मात्रा; मितेः—अकारोकारौ मकारे प्रविश्य निर्गच्छत इव सुषुप्तौ वैश्वानरतैजसयोः प्राज्ञे प्रवेशेन, जागरितावस्थायां तयोस्तस्मात् निर्गमेन च परिमितत्वात्, अपीतेः—तयोस्तस्मिन्नेकीभूतत्वात् वा। फलमाह—य एवं वेद प्रवेशनिर्गमौ एकीभवनञ्च वेत्ति, स इदं सर्व्वं मिनोति ज्ञानविषयं करोति, अपीतिश्च भवति परमात्मनैकीभवति।

(१२) अमात्रः मात्राशून्यः चतुर्थः, अव्यवहार्य्यः, प्रपञ्चोपशमः, शिवः अद्वैतः। एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपादः आत्मा एव। य एवं वेद ओङ्कारात्मनोरभेदं वेत्ति, स आत्मना आत्मानं परमात्मानं संविशति, तस्मिन् प्रविष्टो नित्यं तिष्ठति।

६। एवं जाग्रदाद्यवस्थातः अन्नमयादिकोशक्रममभिधायादितस्तं-

अन्नाद्वै प्रजाः प्रजायन्ते याः काश्च पृथिवीं श्रिताः।
अथोऽन्नेनैव जीवन्ति अथैनदपियन्त्यन्ततः।
अन्नꣳहि भूतानां ज्येष्ठम् तस्मात् सर्व्वौषधमुच्यते॥
सर्व्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते।
अन्नꣳहि भूतानां ज्येष्ठं तस्मात् सर्व्वौषधमुच्यते॥
अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते।
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते॥ इति।

वक्तुमुपक्रमते। सवेति। "अन्नाद्रेतः रेतसः पुरुषः" इति श्रोतोः स वा एष पुरुषः शरीरी अन्नरसमयः अन्नोत्पन्नोपादानत्वात् अन्नरसविकारः—अन्नरसप्रचुर इति आमन्मध्वः। प्रचुर इत्युक्ते लवमात्रस्याप्यन्यस्य तत्र प्रवेश इति चेत्, न, प्राचुर्य्ये स्यादितरस्य प्रवेश इति न नियमः। तस्य पुरुषस्य इदं दृश्यमानम् एव शिरः—प्राणमयादिषु यथारोपसिद्धं न तथात्रेति प्रदर्शनायेदमः प्रयोगः—अयं दृश्यमानः दक्षिणः पक्षः बाहुः, अयम् उत्तरः पक्षः दक्षिणेतरो बाहुः। अयम् आत्मा देहमध्यभागः। इदं दृश्यमानं नाभेरधस्ताद्यदङ्गं तत् पुच्छम् —"पुच्छमेव पुच्छम् अधोलम्बनसामर्थ्यात् यथा गोः पुच्छम्।" प्रतिष्ठा प्रतितिष्ठत्यनेनेति प्रतिष्ठा आधारः। पक्षपुच्छशब्दप्रयोगात् पक्षिरूपपरिकल्पनमत्र। दृश्यते च मिताक्षरायां ब्रह्मसूत्रविवृतौ—"पक्षिणो हि पुच्छभागमाधारीकृत्य चेष्टन्ते इति पक्षिणां पुच्छं प्रतिष्ठा। अतएव तैत्तिरेयिणः समामनन्ति 'तस्मात् सर्व्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति' इति प्रतिष्ठा हि पुच्छम्।"इति। तत् तस्मिन्नर्थेऽपि एष श्लोकः मन्त्रः भवति।

अन्नादिति। याः काश्च अविशिष्टाः प्रजाः पृथिवीं श्रिताः आश्रिताः, ताः सर्व्वाः अन्नात् एव प्रजायन्ते। अथो अपि जाताः अन्नेनैव जीवन्ति, अथ अपि अन्ततः जीवनान्ते एनत् अन्नम् अपियन्ति

तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः। तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।२।१—३।

प्रतिगच्छन्ति प्रलीयन्ते। अन्नं हि भूतानां ज्येष्ठं प्रथमजम्—इतरेषां भूतानां कारणत्वात् तस्य (३।३७)। तस्मात् अन्नं सर्व्वौषधं सर्व्वेषां प्राणिनाम् औषधं देहदाहप्रशमम् उच्यते। ये अन्नं ब्रह्म यथोक्तम् उपासते ते सर्व्वम् एव अन्नम् आप्नुवन्ति। अन्नं हि भूतानां ज्येष्ठं तस्मात् अन्नं सर्व्वौषधम् उच्यते। भूतानि अन्नात् जायन्ते, जातानि अन्नेन वर्द्धन्ते वृद्धिम् आप्नुवन्ति। भूतैः अद्यते, स्वयं तत् भूतानि अत्ति च, तस्मात् तत् अन्नम् उच्यते। इति—प्रथमकोशपरिसमाप्त्यर्थः।

तस्मादिति। तस्मात् वै एतस्मात् अन्नरसमयात् अन्यः व्यतिरिक्तः अन्तरः अभ्यन्तरः तदन्तर्व्वर्त्ती आत्मा प्राणमयः वायुमयः। तेन प्राणमयेनात्मना एष अन्नमयः आत्मा पूर्णः, स वा एष प्राणमयः आत्मा पुरुषविधएव। तस्य अन्नमयस्य पुरुषविधताम् अनु अयं प्राणमयः पुरुषविधः—मूषानिषिक्तप्रतिमावत् न स्वतएव। तस्य प्राणमयस्य प्राणः एव शिरः, व्यानः दक्षिणः पक्षः, अपानः उत्तरः पक्षः, आकाशः आकाशस्थवृत्तिविशेषः समानः आत्मा मध्यभागः—"मध्यं ह्येषामङ्गानामात्मा" इति प्रसिद्धत्वात्; पृथिवी पुच्छं प्रतिष्ठा तस्याः प्राणधारयित्रीत्वात्। "सैषा पुरुषस्यापानमवष्टभ्य" इति श्रुत्यन्तरम्, अन्यथा "उदानवृत्त्या ऊर्द्ध्वगमनं गुरुत्वाच्च पतनं वा स्याच्छरीरस्य" इति। तत् तस्मिन्नेव अर्थे प्राणमयात्मविषये एव श्लोको मन्त्रो भवति।

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।
प्राणो हि भूतानामायुः तस्मात् सर्व्वायुषमुच्यते ।
सर्व्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते ।
प्राणो हि भूतानामायुः तस्मात् सर्व्वायुषमुच्यते । इति ।

तस्यैष एव शारीर आत्मा, यः पूर्व्वस्य ।

तस्माद्वा एतस्मात् प्राणमयात् अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधाताम् अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्व्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति । ३ । १ । २ ।

प्राणमिति । देवाः इन्द्रियाणि ये च मनुष्याः पशवः ते प्राणं वाह्यात्मानं प्राणनशक्तिमन्तम् अनुप्राणन्ति प्राणनक्रियया क्रियावन्तो भवन्ति । प्राणो हि भूतानां प्राणिनाम् आयुः जीवनम् । तस्मात् स सर्व्वायुषं सर्व्वेषाम् आयुः सर्व्वायुः—सर्व्वायुरेव सर्व्वायुषम् इति उच्यते । ये प्राणं ब्रह्म उपासते ते सर्व्वम् एव आयुः शतवर्षात्मकं यन्ति प्राप्नुवन्ति प्राणोहि भूतानाम् आयुः तस्मात् स सर्व्वायुषम् उच्यते । इति—द्वितीयकोशपरिसमाप्त्यर्थः ।

पूर्व्वस्य अन्नमयस्य य आत्मा एष एव तस्य प्राणमयस्य शारीरः शरीरसम्बन्धी आत्मा । उभयोः कोशयोरात्मा एक एव ।

तस्मादिति । तस्मात् वै एतस्मात् प्राणमयात् अन्यः व्यतिरिक्तः अन्तरः अभ्यन्तरः तदन्तर्व्वर्त्ती आत्मा मनोमयः । तेन मनोमयेन आत्मना एष प्राणमयः आत्मा पूर्णः । स वा एष मनोमयः आत्मा पुरुषविधः एव । तस्य प्राणमयस्य पुरुषविधताम् अनु अयं मनोमयः पुरुषविधः । तस्य मनोमयस्य यजुः एव शिरः, ऋक् दक्षिणः पक्षः,

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचनेति ॥
तस्यैष एव शारीर आत्मा, यः पूर्व्वस्य ।

तस्माद्वा एतस्मात् मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः, स वा एष पुरुषविधएव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ।४।१।२।

साम उत्तरः पक्षः, आदेशः ब्राह्मणग्रन्थः आत्मा मध्यभागः, अथर्व्वाङ्गिरसः अथर्व्वणाङ्गिरसा दृष्टा मन्त्रा ब्राह्मणञ्च पुच्छं प्रतिष्ठा—शान्ति-पौष्टिकादिप्रतिष्ठाहेतुकर्म्मप्रधानत्वात्। मनोवृत्तित्वेन मन्त्राणामावृत्ति-र्घटते। अतो मनोमये तेषां शिरस्त्वादितया समावेशः। तत् तस्मिन्नेव अर्थे मनोमयात्मविषये एष श्लोकः मन्त्रः भवति।

यत इति। वाचः वाङ्मयवेदाः अप्राप्य स्वविषयं कर्त्तुमसमर्थाः मनसा तत्विष्पादकेन सह यतो वाङ्मनोविशिष्टात् मनोमयात् निव-र्त्तन्ते, तस्य मनोमयस्य ब्रह्मणः तदुपासनफलभूतम् आनन्दं संस्पर्शजन्य-सुखम् विद्वान् अनुभवविषयं कुर्व्वन् जनः कदाचन न बिभेति न संसारभयेनाकुलो भवति। इति—तृतीयकोशपरिसमाप्त्यर्थः।

पूर्व्वस्य प्राणमयस्य यः आत्मा एष एव तस्य मनोमयस्य शारीरः शरीरसम्बन्धी आत्मा।

तस्मादिति। तस्मात् वै एतस्मात् मनोमयात् अन्यः अतिरिक्तः अन्तरः अभ्यन्तरः तदन्तर्व्वर्त्ती आत्मा विज्ञानमयः—विज्ञानं बुद्धिरिति निरन्वयवादिनः, जीव इत्यन्वयवादिनः। जीवपक्षे विज्ञानमयः विज्ञान-प्रचुरः। तेन विज्ञानमयेन एष मनोमयः पूर्णः। स वा एष विज्ञान-

विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च।
विज्ञानं देवाः सर्व्वे ब्रह्म ज्येष्ठमुपासते।
विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति।
शरीरे पाप्मनो हित्वा सर्व्वान् कामान् समश्नुत इति।
तस्यैष एव शारीर आत्मा, यः पूर्व्वस्य।
तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा-

मयः पुरुषविधः एव। तस्य मनोमयस्य पुरुषविधताम् अनु अयं विज्ञानमयः पुरुषविधः। तस्य विज्ञानमयस्य श्रद्धा एव शिरः, ऋतं मानसार्थस्य निश्चयः दक्षिणः पक्षः, सत्यं वाह्यार्थस्य निश्चयः उत्तरः पक्ष, योगः समाधानम् आत्मा मध्यभागः, महः महत्त्वं पुच्छं प्रतिष्ठा। बुद्धिपक्षे महत्त्वस्य सर्व्वबुद्धिविज्ञानकारणत्वात्, जीवपक्षे—"अस्य महिमानमेति वीतशोकः" इति महती महीयसी जीवे महत्त्वसंक्रमणात् तदेव तस्य प्रतिष्ठाहेतुः। तत् तस्मिन्नपि अर्थे विज्ञानमयात्मविषये, एष श्लोकः मन्त्रः भवति।

विज्ञानमिति। विज्ञानं विज्ञानवान्, पक्षान्तरे जीवः यज्ञं तनुते तनोति, अपि च कर्म्माणि तनुते। सर्व्वे देवाः ज्येष्ठं प्रथमजं—निरन्वयपक्षे—सर्व्ववृत्तीनां बुद्धिपूर्व्वकत्वात्, अन्वयपक्षे—समष्टिजीवस्य प्रथमजत्वात्—विज्ञानं ब्रह्म उपासते। विज्ञानं ब्रह्म चेत् यदि वेद जानाति, तस्मात् ब्रह्मणः चेत् न प्रमाद्यति न च्युतो भवति, पाप्मनः शरीरप्रभवान् हित्वा तैर्व्वसङ्गी भूत्वा सर्व्वान् कामान् समश्नुते सम्यक् भुङ्क्ते। इति—चतुर्थकोशपरिसमाप्त्यर्थः।

पूर्व्वस्य मनोमयस्य य आत्मा, एष एव तस्य विज्ञानमयस्य शारीरः शरीरसम्बन्धी आत्मा। अन्नमयादिषु सर्व्वेषु नियन्तृतयात्मशब्दप्रयोगादत्रापि तथा।

तस्मादिति। तस्मात् वै एतस्मात् विज्ञानमयात् अन्यः व्यतिरिक्तः

नन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।५।१।२।

असन्नेव भवति असद्‌ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति।
तस्यैष एव शारीर आत्मा यः पूर्व्वस्य।

तै, उ, ६।१। मु २।२।७।

अन्तरः अभ्यन्तरः तदन्तर्व्वर्त्ती आनन्दमयः—निरन्वयपक्षे जीवः, अन्वयपक्षे—आनन्दप्रचुरः ब्रह्म। तेन आनन्दमयेन एष विज्ञानमयः पूर्णः। स वा एष आनन्दमयः पुरुषविधः एव। तस्य विज्ञानमयस्य पुरुषविधताम् अनु अयं पुरुषविधः। तस्य आनन्दमयस्य इष्टपुत्रादि-दर्शनजं प्रियम् एव शिरः। मोदः—प्रियलाभनिमित्तो हर्षः—दक्षिणः पक्षः, प्रमोदः—प्रकृष्ट हर्षः—उत्तरः पक्षः, आनन्दः-सुख-सामान्यम्-आत्मा मध्यभागः, ब्रह्म पुच्छं प्रतिष्ठा। निरन्वयपक्षे—"ब्रह्म परमेव यत् प्रकृतं सत्यज्ञानानन्दलक्षणं, यस्य च प्रतिपत्त्यर्थं पञ्चान्नादि-मयाः कोशा उपन्यस्ताः, यच्च तेभ्योऽभ्यन्तरः, येन च ते सर्व्वे आत्मवन्तः तत् ब्रह्म पुच्छं प्रतिष्ठा" इति। अन्वयपक्षे—प्रियादय आनन्दस्य प्रकाशविशेषास्तद्विभूतित्वेन न ततोभिन्नाः, अवयावयविभावोऽप्येकार्थ-परत्वान्न दोषावहः। तदभिन्नतासिद्धिलक्षणत्वेऽप्यन्नमयादिषु यथा पृथिव्यादीनामानन्दमये ब्रह्मणस्तथैव भेदेनोपन्यासः।

तत् एतस्मिन् अपि अर्थे एष श्लोकः मन्त्रः भवति।

असन्निति। ब्रह्म असत् इति चेत् कोऽपि वेद, स असन् एव भवति। ब्रह्म अस्ति इति चेत् कोऽपि वेद, ततः तस्मात् अस्तित्व-

वेदनात् पक्षिना: एनं जनं सन्तं विदुः। इति। आनन्दमयमवयुक्तस्य ब्रह्मणो भावाभाववेदनेन गुणदोषकथनात् ब्रह्मण एवात्र सम्प्रधानत्वमिति निरन्वयपक्षः। ब्रह्म पुच्छमिति वाक्ये आनन्दशब्दायोगात्, ब्रह्म पुच्छं प्रतिष्ठाभ्यासात् इत्येवं सूत्राकरणात् सूत्रितत्वेनाभ्यस्तत्वेन चानन्दशब्दस्यैव सूत्रकृदभिमतत्वाच्च ब्रह्मानन्दमय इत्यन्वयपक्षः।

पूर्व्वस्य विज्ञानमयस्य यः आत्मा, तस्य आनन्दमयस्य एष एव शारीर आत्मा। शरीरसम्बन्धित्वाज्जीवएवेति निरन्वयपक्षः। तस्माद्वा आनन्दमयादन्योऽन्तर आत्मा इत्यकथनादनन्यात्मत्वप्रदर्शनार्थमत्र शारीर आत्मेति निर्वचनं, पृथिव्यादिसर्व्वशरीरसम्बन्धित्वात् शारीर इति विशेषणञ्चेत्यन्वयपक्षः।

मिताक्षरायां ब्रह्मसूत्रविवृतौ तच्छब्देन ब्रह्म, एतदिदंशब्देनान्नमयादीन् परामृश्य यद्व्याख्यानं दृश्यते तस्मिन् मतद्वयसामञ्जस्यवीजमस्तीति समन्वयप्रदर्शिकायामध्यायप्रवृत्तौ प्रदर्श्यते। एषास्या व्याख्यानशैली—"तेनोपक्रान्तगतेन ईशचैतन्येन एष आनन्दमयः पूर्णः निश्चितं तद्व्यतिरिक्त इति यावत्। स वा निश्चयेन ईशचैताभिन्न एष जीवः। तस्य पुरुषविधताम् ईशचैतन्यपुरुषविधताम् अनुसृत्य अयं जीवः। तस्यैशचैतन्यस्य" इति। तन्मते जीवब्रह्मवेशेऽपि पक्षित्वकल्पनमत्र (२।१।१२—१८)*।

मुण्डकोपनिषदि च,—

यः सर्व्वज्ञः सर्व्वविद् यस्यैष महिमा भुवि
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः।
मनोमयः प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं सन्निधाय
तद्विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद्विभाति॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपक्रम्य यथा देहादिषु ब्रह्मदर्शनमभिहितं, तथा "यः सर्व्वज्ञः" इति। तत्रानन्तत्वमत्र "यस्यैष महिमा

* वेदान्तसूत्रस्याध्यायपादसूत्रसंख्याः। एवमन्यत्र।

७। अथ य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व्व एव सुवर्णः।

तस्य यथा कप्यासपुण्डरीकमेवमक्षिणी तस्योदिति नाम, स सर्व्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेद।

तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवो-द्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोका-स्तेषां चेष्टे देवकामानाम्। छा, १।३।६।६—८।

भुवि" इति कथनेन भूमत्वम्। तत्र "निहितं गुहायां परमे व्योमन्" अत्र "ब्रह्मपुरे व्योम्नि प्रतिष्ठितः" इति। "मनोमयः" "प्राणशरीरनेता" "अन्ने प्रतिष्ठितः" "हृदयं संनिधाय" "आनन्दरूपम्" इत्यादिभिः साम्यमुन्नेयम्। यद्दति। आत्मा सर्व्वज्ञः सर्व्ववित्, यस्य एष महिमा विभूतिः भुवि लोके विराजते, एष आत्मा दिव्ये द्योतनवति ब्रह्मपुरे मनसि प्रतिष्ठितः; मनोमयः मनउपाधित्वात्, प्राणशरीरनेता प्राणस्य शरीरस्य नेता नियन्ता—अन्नमयादिष्वात्मशब्दस्य नियन्तृत्वेन प्रयोगात्; अन्ने पिण्डरूपान्ने, हृदयं बुद्धिं संनिधाय समवस्थाप्य तत् आत्मतत्त्वं धीराः विज्ञानेन विशिष्टज्ञानेन परिपश्यन्ति उपलभन्ते, यत् आत्मतत्त्वम् आनन्दरूपम् सर्व्वानर्थदुःखप्रयासहीनम् अमृतं सर्व्वविकारविमुक्तं विभाति प्रकाशते। एवमनुभवसिद्धत्वमस्य दर्शयति।

माण्डूक्योपनिषदव्यवहितपूर्व्वमुद्धृता सर्व्ववेदान्तसिद्धान्तसमुद्घाटन-कुञ्चिकाऽत्र पुनरुदाहर्त्तव्या। विशेषनियोगोऽस्या अध्यायप्रपूर्त्तौ वक्ष्यते।

७। वैदिकरीत्या सर्व्वेश्वरमाधिदैविकोपास्यत्वं वर्णयति अथेति। अथ य एष अन्तरादित्ये आदित्यस्य मध्ये हिरण्मयः हिरण्मयइव

८। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम।

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्य-कामानाश्चेति तस्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः। छा, १।३।८।५।६।

हिरण्मयः हिरण्यश्मश्रुः, हिरण्यकेशः आप्रणखात् प्रणखो नखाग्रं नखाग्रेण सह सर्व्वएव सुवर्णः भारूपः (६) पुरुषः—पुरिशयनात् पूरयति वा स्वेनात्मना जगत् इति पुरुषः—दृश्यते समाहितचेतोभिः, तस्य यथा कप्यासं—कपियेन आस्ते उपविशति—कपिपृष्ठान्तभागइव लोहितं यत् पुण्डरीकं पद्मं तत् एवं तत् इव अक्षिणी नेत्रे, तस्य उत् इति नाम सर्व्वपापेभ्यः पृथगभूतत्वात्। स एष देवः सर्व्वेभ्यः पाप्मभ्यः उदितः उद्गतः। य एवम् ईदृग्गुणसम्पन्नं तं देवं वेद स—ह वै निर्द्धारणे—सर्व्वेभ्यः पाप्मभ्यः पापेभ्यः उदेति उद्गच्छति (७)। तस्य ऋक् च साम च गेष्णौ पर्व्वणी; तस्मात् उन्नामत्वादृक्सामगेष्णत्वात्—उद्गीथः। हि यस्मात् एतस्य उन्नाम्नः गाता, तस्मात्तु एव तद्वेतोरेव उद्गाता। ये च अमुष्मात् आदित्यात् पराञ्चः ऊर्द्ध्वा लोकाः तेषां देवकामानां देवानां तल्लोकाधिष्ठातॄणां कामानां काम्यफलविशेषाणां स एष ईष्टे ताम् नियच्छति। अपहतपाप्मत्वम्, ऋक्सामाद्यात्मकतया सर्व्वकारणत्वं सर्व्वात्मकत्वं, सर्व्वगानगेयत्वं, निरङ्कुशं लोककामेशितृत्व-ञ्चास्य परमेश्वरत्वं दर्शयति (१।१।२०)।

८। अथेति। अथ य एष अन्तरक्षिणि अक्ष्णः मध्ये पुरुषः दृश्यते, सा एव ऋक्, तत् साम, तत् उक्थम्—अप्रगीतमन्त्रसाध्यं स्तोत्रम्, प्रगीतमन्त्रसाध्यं शस्त्रम्,—अप्रगीतमन्त्रसाध्यमुक्थमिति स्तोत्रभेदः—तत् यजुः, तत् ब्रह्म त्रयो वेदाः; तस्य एतस्य चाक्षुष-पुरुषस्य तत् एव रूपं, यत् अमुष्य आदित्यपुरुषस्य—हिरण्मय इत्यादि

९। अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्।

स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो-हास्य भवति परोवरीयसोह लोकान् जयति य एतदेवं विद्वान् परोवरीयाꣳसमुद्गीथमुपास्ते । छ, १।३।९।१।२ ।

—रूपम्, यौ अमुष्य आदित्यपुरुषस्य गेष्णौ तौ एतस्यापि गेष्णौ, यत् अमुष्य उत् इति उद्गीथ इति—नाम, तत् एतस्य नाम। ये च एतस्मात् चाक्षुषपुरुषात् अर्व्वाञ्चः अर्व्वाग्गताः लोकाः—'आदित्यश्चक्षु-र्भूत्वाक्षिणी प्राविशत्' इति श्रवणात् आदित्यादधस्था लोकाः—तेषां मनुष्यकामानां मनुष्याणां तल्लोकाधिष्ठातॄणां कामानां काम्यमानफल-विशेषाणाम् स एष ईष्टे तान् नियच्छति। तत् तस्मात् ये इमे वीणायां गायन्ति गायकाः ते एतम् एव एतं चाक्षुषपुरुषम् एव गायन्ति। तत् तस्मात् धनसनयः धनलाभयुक्ताः भवन्ति। पूर्व्वोक्त-मपहतपाप्मत्वादिकमस्य परमेश्वरत्वं दर्शयति। (१।१।२०)। पूर्व्वे-ष्वाधिदैविकयचाध्यात्मिकीति भेदः।

९। अस्येति। शिलकः शालावत्यः, चैकितायनश्च दाल्भ्यः ब्राह्मणौ प्रवाहणो जैवलिश्च क्षत्रियउद्गीथे कुशलाः संवादं चक्रुः। तत्र शालावत्यस्य प्रश्नोत्तरे जैवलेरुक्तिरियम्। अस्य लोकस्य कागतिः इति शालावत्यप्रश्नोत्तरे जैवलिरुवाच—आकाशः इति। कथम्? सर्व्वाणि ह वै इमानि भूतानि स्थावरजङ्गमानि आकाशात् एव समुत्-पद्यन्ते, आकाशं प्रति अस्तं यन्ति अस्तं गच्छन्ति, आकाशः हि एव एभ्यः भूतेभ्यः ज्यायान्, आकाशः परायणं प्रतिष्ठा। स एष आकाशः परः वरीयान् उद्गीथः, स एष अनन्तः—"परत्वगुणात उत्कृष्टत्वम्,

१०। प्राण इति होवाच सर्व्वाणि ह वा इमाणि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता। छा, १।३।११।५।

११। गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्व्वं भूतं गायति च त्रायते च।

वरीयस्त्वं कालतो वस्तुतश्चापरिच्छिन्नत्वम्, अनन्तत्वं देशतोऽपरिच्छिन्नत्वम्"—इति ब्रह्मामृतवर्षिणी। यः एतत् एवं विद्वान् परोवरीयांसम् परमात्मभूतम् उद्गीथम् उपास्ते, अस्य विदुषः परोवरीयः परं परं विशिष्टतरं जीवनं भवति, परोवरीयसः उत्तरोत्तरविशिष्टतरान् लोकान् च जयति। उत्पत्तिलयस्थितिहेतुत्वं, ज्यायस्त्वं, सर्व्वोत्कृष्टत्वं, वरीयस्त्वम्, अनन्तत्वञ्चात्र दर्शयत्याकाशस्य परमेश्वरत्वम्। (१।१।२२)।

१०। ऋषिश्चाक्रायणो धनार्थं यज्ञप्रवृत्तं कञ्चिद्राजानं गत्वा प्रस्ताविध्येयदेवताविषयेऽनभिज्ञतायां महदनिष्टं भवेदितिभीतिमुदपादयत्। ततः प्रस्तोता भीतः सन् तमपृच्छत्—कतमा सा देवतेति। तदुत्तरे स पुनरुवाच—प्राणः इति। कथम्? सर्व्वाणि ह वै इमानि भूतानि प्राणम् एव अभिसंविशन्ति तस्मिन् लीनानि भवन्ति, प्राणम् अभिलक्ष्यीकृत्य उज्जिहते उद्गच्छन्ति जन्मकाले, सा एषा देवता प्रस्तावं साम्नः प्रथमभागम् अनु आयत्ता अनुगता निर्द्दिष्टा। उत्पत्तिलयश्रवणात् प्राणोऽत्र ब्रह्मैव। (१।१।२३)।

११। अथ गायत्रीमुखेन ब्रह्मोच्यते गायत्रीति। इदं सर्व्वं भूतं प्राणिजातं यत् इदं किञ्च स्थावरं जङ्गमं तत् सर्व्वं गायत्री वै एव। वाक् वै गायत्री, वाक् वा इदं सर्व्वं भूतं गायति—असौ गौः असौ अश्वः इति—शब्दयति च, त्रायते च—अमुष्मान्माभैषीः किं ते भयमुत्थितम् इत्यादि—रक्षति च।

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याᳪ हीदᳪ सर्व्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते।**

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते।**

**यद्वैतत् पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः-पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते।**

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम्।**

या वै सा सर्व्वभूतलक्षणा गायत्री, इयं वाव सा या इयं पृथिवी। कथं पुनरियं गायत्रीत्युच्यते? अस्यां पृथिव्यां हि इदं सर्व्वं भूतं प्रतिष्ठितम्, एतां पृथिवीम् एव न अतिशीयते न अतिवर्त्तते।

या वै सा गायत्री, इयं वाव सा इदम्। किन्तत्? अस्मिन् पुरुषे कार्य्यकारणसंघाते यत् इदं शरीरम्, अस्मिन् हि इमे प्राणाः भूतशब्दवाच्याः प्रतिष्ठिताः, एतत् शरीरम् एव प्राणाः न अतिशीयन्ते न अतिवर्त्तन्ते।

सा एषा गायत्री चतुष्पदा षड्क्षरैः पादगणनया पादचतुष्टययुक्ता, षड्विधा वाग्-भूत पृथिवी-शरीर-हृदय-प्राणरूपा। तदेतत् अस्मिनर्थे ऋचा मन्त्रेण अभ्यनूक्तम् प्रकाशितम्;—

चतुष्पदा षड्विधा गायत्रीति यावान् ब्रह्मणो विकारो व्याख्यातः, अस्य गायत्र्याख्यास्य ब्रह्मणः तावान् महिमा विभूतिविस्तारः, ततो ब्रह्मणोविकारात् सत्यरूपोऽविकारः पुरुषः ज्यायान् महत्तरः। सर्व्वाणि भूतानि तेजोवन्नादीनि अस्य पुरुषस्य पादः; त्रिपात्—त्रयः पादाः अस्य सोऽयं त्रिपात्—अमृतं पुरुषाख्यं दिवि—समस्तस्य गायत्र्यात्मनो द्योतनवति स्वात्मनि—स्थितमितिशेषः।

तावानस्य महिमा ततो ज्यायाꣳश्च पुरुषः पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवीति।

यद्वैतद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः।

अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः।

अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्त्ति पूर्णामप्रवर्त्तिनीꣳ श्रियं लभते य एवं वेद।

छा, ३।१२।१—६।

यत् वा एतत् त्रिपादमृतं ब्रह्म इति—गायत्रीमुखेनोक्तम्—इदं वाव तत्, तत् इदम् एव। किन्तत्? पुरुषात् बहिर्द्धा बहिः यः अयं सम्मुखस्थः आकाशः खण्डभूताकाशः, पुरुषात् बहिर्धा बहिः यः स दूरस्थः अखण्डभूताकाशः; अयं वाव स आकाशः यः अयं सम्मुखस्थः अन्तः पुरुषे शरीरे आकाशः खण्डाकाशः, य एव स दूरस्थः अन्तःपुरुषे शरीरे अखण्डाकाशः;

अयं वाव स आकाशः यः अयम् अन्तर्हृदये हृत्पुण्डरीके आकाशः; तत् एतत् गायत्र्युपाधिकं हार्द्दाकाशाख्यं ब्रह्म पूर्णं सर्व्वगतम् अप्रवर्त्ति न कुतश्चित् प्रवर्त्तितुं शीलमस्य—क्रियानधीनम् अनुच्छित्तिधर्म्मकं। य एवं पूर्णमप्रवर्त्तीति वेद स पूर्णाम् अप्रवर्त्तिनीम् अनुच्छेदात्मिकां श्रियं विभूतिं लभते। अन्तर्बहिर्द्धेति भेदेन त्रिधाकाशः। तत्र दृष्ट्यन्तर्व्वर्त्तिदृष्ट्यतीतत्वेन खण्डाखण्डभेदो बोध्यः। बहिराकाशो जागरितस्थानम्, अन्तराकाशः स्वप्नस्थानम्, हृत्स्थाकाशः सुषुप्तिस्थानम्। बहिराकाशे दृष्ट्यन्तर्व्वर्त्तित्वमस्य बाह्येन्द्रियविषयम्, दृष्ट्यतीतत्वन्त्वन्यथाचिन्तनासामर्थ्यात् मानसग्राह्यं, ताभ्यामेव चाखण्डत्वमस्य। अन्तः पुनः स्वप्नगोचराकाशो द्विर्वदेवेति निर्व्विवादम्। हृदयान्तर्व्वर्त्ती-

१२। अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्व्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिः।

यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति, तस्यैषा श्रुतिर्यत्रैतत् कर्णावपिगृह्य निनदमिव नदथुरि-

काशः सुषुप्तौ अखण्डचिदाकाशः, सुतरां न तत्र खण्डाखण्डभेदग्रहणम्। सर्व्वात्मकत्वेन भूतादिपादत्वेन पूर्णत्वेनापरिच्छेद्यत्वेन उपास्यत्वेन च ब्रह्मज्ञापनात् गायत्त्र्युपाधिकब्रह्मोपास्तिविषयमिदं ज्ञेयम्। (१।१। २५—२७)।

१२। गायत्त्र्युपाधिब्रह्मोपास्त्यनन्तरं तदनुरूपोपास्त्यन्तरमाह अथेति। न हि पुनः कोऽपि प्राणकर्म्माणि स्वायत्तान्यकुर्व्वन् ब्रह्मसाक्षात्कारकृतकृत्यो भवेत्; अतो हृदयस्य पञ्चच्छिद्राणि स्वर्गलोकप्राप्तिद्वारभूतानि प्राणक्रियास्थानानि चक्षुःश्रोत्रवाङ्मनोनभोरूपान्यादित्यचन्द्रमोऽग्निपर्ज्जन्यवायुदेवतानि द्वारपालत्वेन गृहीतानि। अतएवाह भाष्यकारः—"स य एतान्······उपासनया वशीकरोति स राजपालानिवोपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते······राजानमिव हार्द्दं ब्रह्म" इति। तदेवोच्यते—अथ यत् अन्तः अमुष्मात् दिवः द्युलोकात् परः परस्तात् ज्योतिः दीप्यते, तत् इदं वाव एव विश्वतः पृष्ठेषु—'विश्वस्मात् प्राणिवर्गादुपरि' इति ब्रह्मामृतवर्षिणी—सर्व्वस्मात् पृष्ठेषु—'सर्व्वस्मात् भूतादिलोकात् सर्व्वसंसारमण्डलादुपरि' इति ब्रह्मामृतवर्षिणी—दीप्यत इति शेषः। तत् यत् अस्मिन् अन्तःपुरुषे शरीरे ज्योतिः—जाठरे ज्योतिषि अध्यस्तम्—तस्य ज्योतिषः एषा दृष्टिः दर्शनोपायः।

कैषा? यत्र यस्मिन् काले एतत् उष्णानुभवनं यथा स्यात् तथा अस्मिन् शरीरे संस्पर्शेन उष्णिमानं जानाति अनुभवति। तस्य ज्योतिष

वाग्नेरिव ज्वलत उपशृणोति, तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ।

छा, ३।५।१३।७।८ ।

१३ । मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मञ्चाधिदैवतञ्च ।

एषा श्रुतिः अवणोपायः । कैषा ? यत्र यस्मिन् काले एतत् निनदानुभवनं यथा स्यात् तथा कर्णौ अपिगृह्य अपिधाय निनदम् इव रथघोषम् इव ज्वलतः अग्नेः नदथुः निनादः इव उपशृणोति । तत् एतत् ज्योतिः दृष्टं च श्रुतं च इति उपासीत । किमस्या उपासनायाः फलम् ? यएवं यथोक्तौ गुणौ वेद—द्विरभ्यास आदरार्थः—स चक्षुष्यः दर्शनीयः श्रुतः विश्रुतः च भवति ॥

'यदतः परो दिवो ज्योतिः' इत्यत्र यच्छब्देन पूर्व्ववाक्यगतद्युसम्बन्धिब्रह्मपरामर्शात्—"पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि" इति पादसम्बन्धोऽत्रोपतिष्ठते तेन च ज्योतिरत्र चतुष्पाद् ब्रह्मैव । (१।१।२४) ।

१३ । "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा" (३।५।१४।२) इत्यत्र मनोमय आकाशात्मेत्यसमस्तब्रह्मदृष्टिरुक्ता, इह तु मनआकाशयोः समस्तब्रह्मदृष्टिविधानार्थ आरम्भो मनोब्रह्मेति । अध्यात्मशब्दः करणपरः, अधिदैवशब्दः करणाधिष्ठातृदेवपरः, अधिभूतशब्दो विषयपर इति भेदो बोध्यः । मनुतेऽनेनेति मनः अन्तःकरणं तत् ब्रह्म इति उपासीत । मनसि ब्रह्मदृष्टिरिति अध्यात्मम् । अथ आकाशः ब्रह्म इति अधिदैवतम् । उभयम् अध्यात्मं च अधिदैवतं च उभयम् आदिष्टम् उपदिष्टं भवति । मनसा सूक्ष्मेण ह्युपलभ्यते ब्रह्म, अतस्तदाविर्भूतत्वेन ब्रह्मदर्शनं योग्यमेव । आकाशः सर्व्वगतः सूक्ष्मो निरुपाधिकः, अतो हि तस्मिन् ब्रह्मदर्शनम् ।

तदेतच्चतुष्पाद् ब्रह्म—वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादइत्यध्यात्मम्, अथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतञ्च।

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च, भाति च तपति च कीर्त्त्या यशसा ब्रह्मवर्च्चसेन य एवं वेद।

प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च, भाति च तपति च कीर्त्त्या यशसा ब्रह्मवर्च्चसेन य एवं वेद।

तत् एतत् मनआख्यं ब्रह्म चतुष्पात्—वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पादः इति अध्यात्मं करणपरत्वात्। प्राणोऽत्र घ्राणः। अथ अनन्तरम् अधिदैवतं चतुष्पाद्—अग्निः पादः, वायुः पादः, आदित्यः पादः, दिशः पादः। इति अध्यात्मं च अधिदैवं च उभयम् एव आदिष्टम् उपदिष्टं भवति।

वागेव मनसः ब्रह्मणः चतुर्थपादः, सोऽग्निना अधिदैवतेन ज्योतिषा —भासाकारत्वात्—भाति च दीप्यते, तपति च सन्तापं चौष्ण्यं करोति। य एवं वेद स कीर्त्त्या यशसा ब्रह्मवर्च्चसेन वेदाध्ययनजनित-गुणोत्कर्षप्रभावेन भाति च तपति च। वाचैव मनसो वाक्याकारेण बहिरभिव्यक्तिरतस्तस्याः प्राधान्यात् चतुर्थपादत्वम्। "तैलघृताद्याग्नेयाशनेनेद्धा वाक् भाति च तपति च वदनायोत्साहवती" इति भाष्य-कारः। तेजोऽधिष्ठानेन वाचि ब्रह्माविर्भावोऽनुभूयतेऽतोऽग्निनाधि-दैवतेनेत्युक्तिरिति सरलसिद्धान्तः।

प्राणः एव घ्राणः एव ब्रह्मणः चतुर्थः पादः, स वायुना ज्योतिषा गन्धात्मना भाति च तपति इत्यादि पूर्व्ववत्।

चक्षुरेव ब्रह्मणश्चतुर्थः पादः, स आदित्येन ज्योतिषा भाति च तपति च, भाति च तपति च कीर्त्त्या यशसा ब्रह्मवर्च्चसेन य एवं वेद।

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च, भाति च तपति च कीर्त्त्या यशसा ब्रह्मवर्च्चसेन य एवं वेद य एवं वेद। छा, ३।५।१८।१—६।

१४। ब्रह्मणश्च ते पादं ब्रवाणीति, ब्रवीतु मे भगवानिति। तस्मै होवाच प्राची दिक्कला, प्रतीची दिक्कला, दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान् नाम।

चक्षुः एव ब्रह्मणः चतुर्थः पादः, स आदित्येन ज्योतिषा रूपग्रहणाय भाति च तपति इत्यादि पूर्व्ववत्।

श्रोत्रम् एवः ब्रह्मणः चतुर्थपादः स दिग्भिः ज्योतिषा शब्दग्रहणाय भाति च तपति न इत्यादि पूर्व्ववत्।

विद्याफलं सर्व्वत्र समानं, ब्रह्मसम्पत्तिरदृष्टं फलम्। यएवं वेद इति द्विरुक्तिर्दर्शनसमाप्त्यर्था। (४।१।५)। मनआदिषु ब्रह्मदृष्टिः, न तु ब्रह्मणि मन आदिदृष्टिः, राजपुरुषे राजदृष्टिर्न तु राज्ञि राजपुरुषदृष्टिः। उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिकन्यायः।

१४। दुर्व्वलानां गवां चत्वारि शतानि सहस्रेणापूर्य्य प्रत्यावर्त्तितव्यमित्याचार्य्येणादिष्टं ब्रह्मचारिणं सत्यकामं जावालं सहस्रसंख्याप्रपूर्त्तिकालएव ऋषभादयो ब्रह्मोपदिदिशुः। तत्र प्रथममाचार्य्यकुलप्रापणायोत्सुकस्यर्षभस्योपदेशः। वायुदेवताप्रवेशाद्बलीवर्द्दो मनुष्यप्रतिवचनदानभवदिति भाष्यकारः। स पुनराह—ब्रह्मणः च ते तुभ्यं पादं ब्रवाणि इति। सत्यकामः प्रतिवचनं ददौ—भगवान् मे मह्यं ब्रवीतु इति। तस्मै सत्यकामाय पुनः स उवाच—प्राची दिक्कला

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति, प्रकाशवतोह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ।

ब्रह्मणः ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान् नाम ।

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवति, अनन्तवतोह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ।

ब्रह्मणः पादस्य चतुर्थोभागः, एवं प्राची दिक्कला, दक्षिणा दिक्कला उदीची दिक्कला । हे सोम्य, एष वै प्रकाशवान् नाम ब्रह्मणः चतुष्कलः—चतस्रः कला अवयवा यस्य सोऽयं चतुष्कलः—पादः ।

स य एतम् एवं विद्वान् प्रकाशवान् इति गुणेन ब्रह्मणः चतुष्कलं पादम् उपास्ते, स अस्मिन् लोके प्रकाशवान् प्रख्यातः भवति । मृते पुनः प्रकाशवतः लोकान् जयति प्राप्नोति य एतम् एवं विद्वान् प्रकाशवानिति चतुष्कलं ब्रह्मणः पादम् उपास्ते । अग्निः ते पादं वक्ता इत्युक्त्वा ऋषभ उपरराम ।

परेद्युर्गोभिराचार्य्यकुलाभिमुखं प्रस्थितं सायमग्निचरणप्रवृत्तं तमग्निरुवाच—हे सोम्य, ते तुभ्यं ब्रह्मणः पादं ब्रवाणि इति । स प्रत्युवाच —भगवान् ब्रवीतु मे मह्यम् इति । तस्मै सत्यकामाय स पुनरुवाच— पृथिवी कला, अन्तरिक्षं कला, द्यौः कला, समुद्रः कला । हे सोम्य, एष वै अनन्तवान् नाम ब्रह्मणः चतुष्कलः पादः ।

स य एतम् एवं विद्वान् अनन्तवान् इति अनन्तत्वेन गुणेन ब्रह्मणः

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति, 'तस्मै होवाचाग्निः कला सूर्य्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम।

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति, ज्योतिष्मतोह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोज्योतिष्मानित्युपास्ते।

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवा-

चतुष्कलं पादम् उपास्ते, स अस्मिन् लोके अनन्तवान् अविच्छिन्नसन्तानः भवति। मृते पुनः अनन्तवतः अक्षयान् लोकान् जयति, य एतम् एवं विद्वान् अनन्तवानिति ब्रह्मणः चतुष्कलं पादम् उपास्ते। हंसस्ते पादं वक्तेत्युक्त्वाग्निरुपरराम। हंस आदित्यः।

पूर्ब्बवत् सायमग्निचरणप्रवृत्तं तं हंसउवाच—हे सोम्य, ते तुभ्यं ब्रह्मणः पादं ब्रवाणि इति। स प्रत्युवाच—भगवान् मे मह्यं ब्रवीतु इति। तस्मै सत्यकामाय स उवाच—अग्निः कला, सूर्य्यः कला, चन्द्रः कलाः, विद्युत् कला। हे सोम्य, एष वै ज्योतिष्मान् नाम ब्रह्मणः चतुष्कलः पादः।

स य एतम् एवं विद्वान् ज्योतिष्मान् इति गुणेन चतुष्कलं पादम् उपास्ते स अस्मिन् लोके ज्योतिष्मान् दीप्तियुक्तः भवति। मृते पुनः ज्योतिष्मतः लोकान् जयति, य एतम् एवं विद्वान् ज्योतिष्मानिति ब्रह्मणः चतुष्कलं पादम् उपास्ते। मद्गुः ते पादं वक्तेत्युक्त्वा हंस उपरराम। मद्गुर्जलचरपक्षिविशेषः "स चाप्सु सम्बन्धात् प्राणः" इति भाष्यकारः।

पूर्ब्बवत् सायमग्निचरणप्रवृत्तं तं मद्गुरुवाच—हे सोम्य, ते तुभ्यं

निति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम।

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते आयतनवानस्मिँल्लोके भवति, आयतनवतोह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते। छा उ, ४।६।५।२—८।

बृ, आ ६।१।१—७।

ब्रह्मणः पादं ब्रवाणि इति। स प्रत्युवाच—भगवान् मे मह्यं ब्रवीतु इति। तस्मै सत्यकामाय स उवाच—प्राणः कला, चक्षुः कला, श्रोत्रं कला, मनः कला। एष वै आयतनवान्—सर्व्वेषां भोगानाम् आयतनं मनः तत् यस्मिन् विद्यते स आयतनवान् अवकाशवान् वा—नाम ब्रह्मणः चतुष्कलः पादः।

स य एतम् एवं विद्वान् आयतनवान् इति गुणेन ब्रह्मणः चतुष्कलं पादम् उपास्ते, स अस्मिन् लोके आयतनवान् आश्रयवान् भवति। मृते पुनः आयतनवतः सावकाशान् लोकान् जयति, य एतम् एवं विद्वान् आयतनवान् इति गुणेन ब्रह्मणः चतुष्कलं पादम् उपास्ते।

यत्ते कश्चिदब्रवीत् तच्छृणवामेति। अब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात् तथा तच्छैलिनोऽब्रवीद् वाग्वै ब्रह्मेत्यवदतो हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य।

वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत। का प्रज्ञता याज्ञवल्क्य। वागेव सम्राडिति होवाच। वाचा वै सम्राड् बन्धुः प्रज्ञायत ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि वाचैव सम्राड् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म। नैनं वाग् जहाति सर्व्वाण्येनं भूतान्यभिक्षरन्ति देवोभूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्य-

षभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। २।

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति। अब्रवीन्म उदङ्कः शौल्वायनः प्राणो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात् तथा तच्छौल्वायनोऽब्रवीत् प्राणो वै ब्रह्मेत्यप्राणतो हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत। का प्रियता याज्ञवल्क्य। प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म। नैनं प्राणो जहाति सर्व्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। ३।

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति। अब्रवीन्मे वर्कुर्वार्ष्णश्चक्षुर्व्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात् तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मे ऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत। का सत्यता याज्ञवल्क्य। चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति। स आहाद्राक्षमिति। तत् सत्यं भवति, चक्षुर्वै सम्राट् परमं ब्रह्म। नैनं चक्षुर्जहाति सर्व्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति, य एवं विद्वानेतदुपास्ते। हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। ४।

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति। अब्रवीन्मे गर्द्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात् तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मे ऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत। काऽनन्तता याज्ञवल्क्य? दिश एव सम्राडिति होवाच, तस्माद्वै सम्राडपि यां काञ्च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो, दिशो वै सम्राट् श्रोत्रं श्रोत्रं वै सम्राट् परमं ब्रह्म। नैनं श्रोत्रं जहाति सर्व्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। ५।

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति। अब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात् तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत। का आनन्दता याज्ञवल्क्य। मन एव सम्राडिति होवाच, मनसा वै सम्राट् स्त्रियमभिहार्य्यते तस्यां

प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म। नैनं मनो जहाति सर्व्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। ६।

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति। अब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किं स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत। का स्थितता याज्ञवल्क्य। हृदयमेव सम्राडिति होवाच, हृदयं वै सम्राट् सर्व्वेषां भूतानामायतनं हृदयं वै सर्व्वेषां भूतानां प्रतिष्ठा, हृदये ह्येव सम्राट् सर्व्वाणि भूतानि प्रतिष्ठितानि भवन्ति, हृदयं वै सम्राट् परमं ब्रह्म। नैनं हृदयं जहाति, सर्व्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति। ७।

पशुप्रश्नोभयप्रार्थितया प्रश्नानुत्थाप्य प्रश्नोत्तरानन्तरं जनको याज्ञवल्क्याय पशून् दातुमुदयच्छत, स तु न तान् स्वीकृतवानिति तयोः संवादः।

(२) प्रथमं याज्ञवल्क्य आह—यत् एव ते तुभ्यं कश्चित् आचार्य्यः अब्रवीत् तत् शृणवाम इति। जनक आह—जित्वा नामतः शिलिनस्यापत्यं शैलिनिः आचार्य्यः मे मह्यं वाक् एव ब्रह्म इति अब्रवीत्। मातृमान् पितृमान् आचार्य्यवान्—मातृतः पितृत आचार्य्यतोऽनुशासनलाभाच्छुद्धबुद्धिः—आचार्य्यः यथा ब्रूयात्, तथा तच्छैलिनः स शैलिनः वाग् एव ब्रह्म इति; अवदतः मूकस्य किं स्यात्—इहार्थममुत्रार्थम्—इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं शरीरं प्रतिष्ठाम् आश्रयं च तु किम् ते तुभ्यं अब्रवीत्। जनकः प्रत्यवोचत्—न मे मह्यम् अब्रवीत् इति। याज्ञवल्क्य आह—एतत् —त्रिभिः पादैः शून्यम्—एकपाद् ब्रह्म इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्यः, स त्वं विशेषज्ञानवान् नः अस्मभ्यः ब्रूहि। स चाह—वाग्देवस्य ब्रह्मणः वाग् एव वागिन्द्रियमेव आयतनं शरीरम्, आकाशः अव्याकृताख्यः—उत्पत्तिस्थितिलयकालेषु—प्रतिष्ठा आश्रयः, उपनिषत् प्रज्ञा इति—वागिति पूर्व्वोक्तेनैकपादेन प्रज्ञेति चतुर्थपादः;

एवमन्यत—एनत् एतत् ब्रह्म उपासीत। जनकोऽजिज्ञासत—हे याज्ञवल्क्य, का प्रज्ञता ? हे सम्राट्, वाग् एव—न वाचो व्यतिरिक्ता इति। स पुनः उवाच—कथम् ? हे सम्राट्, वाचा एव—अस्माकं बन्धुरित्युक्ते—बन्धुः प्रज्ञायते, तथा ऋग्वेदः, यजुर्व्वेदः, सामवेदः, अथर्व्वाङ्गिरसः, इतिहासः, पुराणविद्या, उपनिषदः, श्लोकाः, सूत्राणि, अनुव्याख्यानानि, व्याख्यानानि ; इष्टं यागनिमित्तं, हुतं होमनिमित्तं, आशितं अन्नदाननिमित्तं, पायितं पानदाननिमित्तं—धर्म्मजातम् ; अयं च लोकः, परः च लोकः सर्व्वाणि च भूतानि, हे सम्राट्, वाचा एव प्रज्ञायन्ते, अतः, हे सम्राट्, वाक् एव परमं ब्रह्म। य एवं विद्वान् एतत् ब्रह्म उपास्ते, तम् एनं न वाक् जहाति, सर्व्वाणि भूतानि एनं स्रक्चन्दनवस्त्रालङ्कारा‌द्युपहारार्पणेन अभिरक्षन्ति, स्वयं देवः भूत्वा पुनः शरीरपातोत्तरकालं देवान् अप्येति अपिगच्छति। वैदेहो जनकः पुनरुवाच—हस्त्यृषभं हस्तितुल्यः ऋषभः यस्मिन् तत् हस्त्यृषभं सहस्रं ददामि इति। स याज्ञवल्क्यः पुनरुवाच—अननुशिष्य शिष्यं कृतार्थमकृत्वा—शिष्यात् धनम्—न हरेत न गृह्णीत इति मे मम पिता अमन्यत। ममापि तदभिमतम्।

(३) याज्ञवल्क्य आह—यत् एव ते कश्चित् अब्रवीत्, तत् शृणवाम इति। जनक आह—उदङ्कः नामतः शुल्वस्यापत्यं शौल्वायनः मे प्राण एव ब्रह्म इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं प्रतिष्ठां तु ते अब्रवीत्। जनकः प्रत्यवोचत्—न मे अब्रवीत् इति। याज्ञवल्क्य आह,—हे सम्राट्, एतत् एकपाद् इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्य—स त्वं पुनः नो ब्रूहि। स चाह प्राणदेवस्य वायुदेवस्य प्राणएव प्राणेन्द्रियम् एव आयतनम्, आकाशः प्रतिष्ठा, उपनिषत्—प्रियम् इति एतत् उपासीत। जनकोऽजिज्ञासत—हे याज्ञवल्क्य, का प्रियता ? स पुनः उवाच—हे सम्राट्, प्राणः एव इति। कथम् ? हे सम्राट्, प्राणस्य एव कामाय अर्थाय अयाज्यं पतितादिकं याजयति, अप्रतिगृह्यस्यापि उग्रादेः प्रतिगृह्णाति, यां

दिशम् एति गच्छति तत्र दिशि वधाशङ्कं वधनिमित्त आशङ्का वधाशङ्का सा एव विद्यते यस्मिन् कर्म्मणि तद्यथा तथा भवति—चौरादिभिर्वधभयं यत्र विद्यते तत्रापि प्राणतर्पणाय गच्छतीतिभावः—हे सम्राट्, एतत् सर्व्वं प्राणस्य एव कामाय, सुतरां प्राणस्य प्रियत्वम्। अतः हे सम्राट्, प्राणः एव परमं ब्रह्म। य एवं विद्वान् एतत् उपास्ते, तम् एनं प्राणो न जहाति, सर्व्वाणि भूतानि एनम् अभिरक्षन्ति, देवः भूत्वा देवान् अप्येति। वैदेहः जनकः पुनरुवाच—हस्त्यृषभं सहस्रं ददामि इति। स याज्ञवल्क्यः पुनरुवाच—अननुशिष्य धनं न हरेत इति पिता मे अमन्यत।

(४) याज्ञवल्क्य आह—यत् एव ते कश्चित् अब्रवीत् तत् शृणवाम इति। जनक आह—वर्कुः नामतः वृष्णस्यापत्यं वार्ष्णः मे चक्षुः ब्रह्म इति अब्रवीत्। मातृमान् पितृमान् आचार्य्यवान् यथा ब्रूयात् तथा तद्वार्ष्णः चक्षुः एव ब्रह्म इति, अपश्यतो हि किं स्यात् इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं प्रतिष्ठां तु ते अब्रवीत्? जनकः प्रत्यवोचत् न मे अब्रवीत् इति। याज्ञवल्क्य आह—हे सम्राट्, एतत् एकपाद् इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्य, स त्वं नः ब्रूहि। स चाह—चक्षुर्देवस्य आदित्यस्य चक्षुः एव चक्षुरिन्द्रियम् एव आयतनम्, आकाशः प्रतिष्ठा, उपनिषत्—सत्यम् इति एतत् उपासीत। जनकोऽजिज्ञासत—हे याज्ञवल्क्य, का सत्यता? स पुनरुवाच—हे सम्राट्, चक्षुः एव इति। कथम्? हे सम्राट्, चक्षुषा एव पश्यन्तं जनम् आहुः अपरे—अद्राक्षीः इति, स द्रष्टा आह—अद्राक्षम् इति, तत् दृष्टवस्तु सत्यं भवति। अतः हे सम्राट्, चक्षुः एव परमं ब्रह्म। य एवं विद्वान् एतत् उपास्ते तम् एनं चक्षुः न जहाति, सर्व्वाणि भूतानि एनम् अभिरक्षन्ति, देवः भूत्वा देवान् अप्येति। वैदेहः जनकः पुनरुवाच—हस्त्यृषभं सहस्रं ददामि इति। स याज्ञवल्क्यः पुनरुवाच—अननुशिष्य धनं न हरेत इति पिता मेऽमन्यत।

(५) याज्ञवल्क्य आह—यत् एव ते कश्चित् अब्रवीत् तत् शृणवाम इति। जनक आह—गर्द्दभीविपीतः नामतः भारद्वाजः गोत्रतः श्रोत्रम् एव ब्रह्म इति मे अब्रवीत्। मातृमान् पितृमान् आचार्य्यवान् यथा ब्रूयात् तथा तद्भारद्वाजः श्रोत्रम् एव ब्रह्म इति, अशृण्वतः हि किं स्यात् इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं प्रतिष्ठां तु ते अब्रवीत्? जनकः प्रत्यवोचत्—न मे अब्रवीत् इति। याज्ञवल्क्य आह—हे सम्राट्, एतत् एकपाद् इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्य, स त्वं पुनः नः ब्रूहि। स चाह —श्रोत्रस्य दिग्देवस्य श्रोत्रम् एव श्रोत्रेन्द्रियमेव आयतनम्, आकाशः प्रतिष्ठा, उपनिषत्—अनन्त इति एतत् उपासीत। जनकोऽजिज्ञासत —हे याज्ञवल्क्य, का अनन्तता? स पुनरुवाच—हे सम्राट्, दिशः एव इति। कथम्? तस्मात् आनन्त्यात् एव सम्राड् अपि यां काञ्चित् अपि दिशं गच्छति, अस्याः दिशः नैव अन्तं गच्छति, हि यस्मात् दिशः अनन्ताः। हे सम्राट्, दिशः एव श्रोत्रम्, श्रोत्रम् एव, हे सम्राट्, परमं ब्रह्म। य एवं विद्वान् एतत् उपास्ते, तम् एनं न श्रोत्रं जहाति, सर्व्वाणि भूतानि एनं रक्षन्ति, देवः भूत्वा देवान् अप्येति। वैदेहः जनकः पुनरुवाच—हस्त्यृभं सहस्रं ददामि इति। स याज्ञवल्क्यः पुनरुवाच—अननुशिष्य धनं न हरेत इति पिता मे अमन्यत।

(६) याज्ञवल्क्य आह—यत् एव ते कश्चित् अब्रवीत् तत् शृणवाम इति। जनकः आह—सत्यकामः नामतः जवालायाः अपत्यं जावालः मनः एव ब्रह्म इति मे अब्रवीत्। मातृमान् पितृमान् आचार्य्यवान् यथा ब्रूयात् तथा तज्जावालः मनः एव ब्रह्म इति अमनसः हि किं स्यात् इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं प्रतिष्ठां तु ते अब्रवीत्? जनकः प्रत्यवचोत्—न मे अब्रवीत् इति। याज्ञवल्क्य आह—हे सम्राट्, एतत् एकपाद् इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्य, स त्वं पुनः न ब्रूहि। स चाह—

मनोदेवस्य चन्द्रमसः मनः अन्तःकरणम् एव आयतनम्, आकाशः प्रतिष्ठा, उपनिषत्—आनन्दः इति एतत् उपासीत। जनकोऽजिज्ञासत—हे याज्ञवल्क्य, का आनन्दता? स पुनः उवाच—हे सम्राट्, मनः एव इति। कथम्? हे सम्राट्, मनसा एव स्त्रियम् अभिहर्य्यते प्रार्थयते, तस्यां स्त्रियां प्रतिरूपः पुत्रः जायते, स पुत्रः आनन्दः आनन्द-हेतुः। अतः हे सम्राट्, मनः एव परमं ब्रह्म। य एवं विद्वान् एतत् उपास्ते, तम् एनं न मनो जहाति, सर्व्वाणि भूतानि एनम् अभिरक्षन्ति, देवः भूत्वा देवान् अप्येति। वैदेहः जनक उवाच—हस्त्यृषभं सहस्रं ददामि इति। स याज्ञवल्क्यः पुनरुवाच—अननुशिष्य न धनं हरेत इति पिता मे अमन्यत।

(७) याज्ञवल्क्य आह—यत् एव ते कश्चित् अब्रवीत् तत् शृणवाम इति। जनक आह—विदग्धः नामतः शकलस्यापत्यं शाकल्यः हृदयम् एव ब्रह्म इति अब्रवीत्। मातृमान् पितृमान् आचार्य्यवान् यथा ब्रूयात् तथा तच्छाकल्यः हृदयम् एव ब्रह्म इति, अहृदयस्य किं स्यात् इति अब्रवीत्। याज्ञवल्क्योऽजिज्ञासत—तस्य ब्रह्मणः आयतनं प्रतिष्ठां तु ते अब्रवीत्? जनकः प्रत्यवोचत्—न मे अब्रवीत् इति। याज्ञवल्क्य आह—हे सम्राट्, एतत् एकपाद् इति। जनकः प्रत्युक्तवान्—हे याज्ञवल्क्य, स त्वं पुनः नः ब्रूहि। स चाह—हे सम्राट्, हृदयम् एव आयतनम्, आकाशः प्रतिष्ठाः, उपनिषत्—स्थितिः इति एतत् उपासीत। जनकोऽजिज्ञासत—हे याज्ञवल्क्य, का स्थितता? स पुनरुवाच—हे सम्राट्, हृदयम् एव इति। कथम्? हे सम्राट्, हृदयम् एव सर्व्वेषां भूतानाम् आयतनम्—नाम-रूपकर्म्मात्मकानां तेषां तदाश्रयत्वात्, हि यस्मात् हे सम्राट्, हृदये एव सर्व्वाणि भूतानि प्रतिष्ठितानि भवन्ति, हे सम्राट्, हृदयम् एव परमं ब्रह्म। य एवं विद्वान् एतत् उपास्ते, तम् एनं न हृदयं जहाति। सर्व्वाणि भूतानि एनम् अभिरक्षन्ति, देवः भूत्वा देवान् अप्येति। वैदेहः जनकः पुनरुवाच—हस्त्यृषभं सहस्रं ते ददामि

१५। [ तस्मै होचुः ] प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति। स होवाच विजानाम्यहं यत् प्राणोब्रह्म कञ्च तु खञ्च न विजानामीति। ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशञ्चोचुः।

छा, ४।१०।५। वृ, आ ७।१।१।

इति। स पुनरुवाच----अननुशिष्य न धनं हरेत इति पिता मे अमन्यत।

१५। उपकोसलमग्निपरिचर्य्यानिरतमाचार्य्यः सत्यकामो जाबालो न समावर्त्तयत्। स त्वाचार्य्ये प्रवसिते क्लिष्टमना आहारं नाभ्यनन्दत्। तत्परिचर्य्याजातस्नेहा अग्नयस्तस्मा आहुः----प्राणः ब्रह्म कं ब्रह्म खं ब्रह्म इति। स उपकोसलः पुनरुवाच----प्राणः ब्रह्म इति यत् तत् अहं विजानामि, कं च खं च न विजानामि इति। ते पुनरूचुः----यत् एव कं तत् एव खम्, यत् एव खं तत् एव कम् इति। कं सुखं खम् आकाशम्। कखयोरितरेतरविशेषणविशेष्यत्वं दर्शयति, न खलु कं तुच्छक्षणस्थायि-विषयसुखम् तस्याकाशस्वरूपत्वेनानन्त्यात्, न पुनः खमपि भौतिकाकाशं तस्मिन् सुखस्वरूपत्वस्यासम्भवादिति। अस्मै उपकोसलाय प्राणं च पुनः तदाकाशं सुखगुणविशिष्टम् आकाशं ते ऊचुः। (१।२।१५)

अत्र कमिति विशेषणत्वेन खमुक्तं बृहदारण्यके तु ओमिति प्रणवसमानाधिकरण्येन। तद्यथा :----

ओं३ खं ब्रह्म। खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम्।

ॐ शब्दः खम् आकाशरूपं ब्रह्म। खम् आकाशं पुराणं चिरन्तनं शाश्वतं परमात्माकाशमित्यर्थः। चिरन्तनाकाशस्य चक्षुराद्यविषयत्वात् कौरव्यायणीपुत्रः ॐखमिति मन्त्रे वायुरं वायुमत् खं भौतिकम् आकाशम् आह स्म। यत् वेदितव्यं तत् एनेन ओङ्कारेण वेद जानाति

१६। य एषोऽच्चिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति।

एतं संयद्वाम इत्याचक्षत एतं हि सर्व्वाणि वामान्यभि संयन्ति सर्व्वाण्येनं वामान्यभि संयन्ति य एवं वेद।

एष उ एव वामनीरेष हि सर्व्वाणि वामानि नयति सर्व्वाणि वामानि नयति य एवं वेद।

साधकः। अतः ओङ्कारोऽयं वेदः ऋग्यजुःसामादिभेदभिन्नः इति ब्राह्मणाः विदुः। पुराणे खे निरुपाधिकं, वायुमति तु सोपाधिकं ब्रह्मेति तत्त्वविदः।

१६। प्रत्यावृत्त आचार्य्यस्तमुपकोसलं ब्रह्मविस्त्वलक्षणसम्पन्नमनुपदिष्टतत्त्वमन्वशात् यएष इति। अच्चिणि अक्षिस्थाने य एष पुरुषः दृष्टुरुपलक्षितद्रष्टा दृश्यते विवेकिभिः एष आत्मा इति आचार्य्यः पुनरुवाच। एतत् आत्मतत्त्वम् अमृतम् अभयम् एतत् ब्रह्म इति। अक्षिस्थानस्य निर्लेपतां प्रदर्श्य तदधिष्ठातुरात्मनोऽपापविद्धत्वं ख्यापयति----यद्यपि तत् तत्र अस्मिन् अक्षिस्थाने सर्पिः वा उदकं वा जनाः सिञ्चन्ति, वर्त्मनी एव नेत्रच्छदौ एव तत् गच्छति प्राप्नोति न चक्षुषा सम्बध्यते।

एतं पुरुषं संयद्वामः इति आचक्षते। कथम्? हि यस्मात् एतं पुरुषं सर्व्वाणि वामानि शोभनानि अभिसंयन्ति अभिसंगच्छन्ति इत्यतः संयद्वामः। य एवं वेद तम् एनं सर्व्वाणि वामानि शोभनानि अभिसंयन्ति प्राप्नुवन्ति।

एष उ एव वामनीः, हि यस्मात् एष सर्व्वाणि वामानि शोभनानि पुण्यकर्म्मफलानि नयति प्रापयति प्राणिभ्यः। वामानि नयतीति

एष उ एव भामनीरेष हि सर्व्वेषु लोकेषु भाति सर्व्वेषु लोकेषु भाति य एवं वेद। छा, ४।६।१५।१—४। ८।१०।७।४।

१७। तᳫं होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत्।

नाम वा ऋग्वेदो यजुर्व्वेदः सामवेद आथर्व्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्देवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या चत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति।

वामनीः सर्व्वशुभप्रापक इत्यर्थः। य एवं वेद तं सर्व्वाणि वामानि नयति।

*एष उ एव भामनीः, हि यस्मात् सर्व्वेषु लोकेषु भाति। भामान् नयतीति भामनीः सर्व्वप्रकाशक इत्यर्थः। य एवं वेद स सर्व्वेषु लोकेषु भाति।* आत्मत्वामृतत्वाभयत्वापहतपाप्मत्वसंयद्वामत्वादिगुणनिमित्तमच्याधारः पुरुषः परमात्मैव। (१।२।१३)

इन्द्रविरोचनौ प्रजापतिः ;—

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति। अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति। एष उ एवैषु सर्व्वेष्वेतेषु परिख्यायत इति होवाच।

अक्षिणि य एष पुरुषः द्रष्टा दृश्यते एष आत्मा इति उवाच। तौ शिष्यौ पुनः पृच्छतः----अथ योऽयं, हे भगवन्, अप्सु परिख्यायते आत्मनः प्रतिबिम्बाकारः, यश्च अयम् आदर्शे, कतमः एष इति? प्रजापतिरुवाच- --एषु सर्व्वेषु एतेषु एष उ एव परिख्यायते। सर्व्वान्तरात्मत्वान्न मृषावादित्वं प्रजापतेरिति भाष्यकारः।

१७। नाम्नारभ्यात्मपर्य्यन्तमारोहक्रमेण ब्रह्मोपदिश्यते तमिति।

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति यो नाम ब्रह्मेत्युपास्ते। अस्ति भगवो नाम्नो भूय इति। नाम्नो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

वाग्वाव नाम्नो भूयसी, वाग्वा ऋग्वेदं विज्ञापयति यजुर्व्वेदꣳ सामवेदमाथर्व्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुं चाकाशञ्चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्म्मं चाधर्म्मञ्च

तं नारदं सनत्कुमारः पुनः उवाच—यत् एव किञ्च एतत् अध्यगीष्ठाः नाम एव एतत्। नाम ऋग्वेद इत्यादि व्याख्यातम् (११६)। नाम एव एतत्। नाम ब्रह्मबुद्ध्या उपास्व इति।

स यः नाम ब्रह्म इति उपास्ते, नाम्नः यावत् गतं गतिः, तत्र तावत् अस्य यथा राज्ञः तथा कामचारः यथेष्टगतिः भवति। यो नाम ब्रह्म इत्युपास्ते इति पुनरुक्तिरुपसंहारार्था। नारद आह—हे भगवन्, किम् अस्ति नाम्नः भूयः अधिकतरम्? इति। सनत्कुमार आह—नाम्नः पुनः निश्चितं भूयः अस्ति इति। एवमुक्तो नारद आह—तत् मे मह्यं भगवान् ब्रवीतु इति।

वागिति। वाक् पुनः निश्चितं नाम्नः भूयसी अधिकतरा—वर्णो हि नाम, तदभिव्यञ्जकत्वात् वाचो भूयस्त्वम्। कथम्? वाक् एव ऋग्वेदं विज्ञापयति, यजुर्व्वेदम्, सामवेदं, चतुर्थम् आथर्व्वणं, पञ्चमम् इतिहासपुराणम्, वेदानां वेदं—व्याख्यातमन्यत्र (११६), पित्र्यं, राशिं, दैवं, निधिं, वाकोवाक्यम्, एकायनं, देवविद्यां, ब्रह्मविद्यां, भूतविद्यां,

सत्यं चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च यद्वै वाङ्नाभविष्यन्न धर्म्मो नाधर्म्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत् सर्व्वं विज्ञापयति वाचमुपास्स्वेति।

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथा कामचारो भवति यो वाचं ब्रह्मेत्युपास्ते। अस्ति भगवो वाचो भूय इति। वाचो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

मनोवाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनु-

क्षत्रविद्यां, नक्षत्रविद्यां, सर्पदेवजनविद्यां, दिवञ्च, पृथिवीं च, वायुं च, आकाशं च, आपः च, तेजः च, देवान् च, मनुष्यान् च, पशून् च, वयांसि पक्षिणः च, तृणवनस्पतीन्, श्वापदानि आकीटपतङ्ग पिपीलकम्, धर्म्मं च, अधर्म्मं च, सत्यं च, अनृतं च, साधु असाधु च, हृदयज्ञं हृदयप्रियं च, अहृदयज्ञं तद्विपरीतं च ज्ञापयतीति शेषः। यत् यदि पुनः वाङ् न अभविष्यत् न धर्म्मः न अधर्म्मः, न सत्यं न अनृतं, न साधु न असाधु, न हृदयज्ञः न अहृदयज्ञः व्यज्ञापयिष्यत् विज्ञातम् अभविष्यत्। वाक् एव एतत् सर्व्वं विज्ञापयति वाचम् उपास्स्व इति।

स यः वाचं ब्रह्म इति उपास्ते यावत् वाचः गतं गतिः, तत्र तावत् यथा राज्ञः तथा अस्य कामचारः यथेष्टगतिः भवति। यो वाचं ब्रह्म इति उपास्ते इति उपसंहारः। नारदः—हे भगवन्, अस्ति किं वाचः भूयः? इति। सनत्कुमारः—वाचः पुनः निश्चितं भूयः अधिकतरम् अस्ति इति। नारदः—भगवान् मे मह्यं तत् ब्रवीतु इति।

मन इति। मनः पुनः निश्चितं वाचः भूयः अधिकतरम्। कथम्? यथा एव द्वे आमलके फले, द्वे वा कोले बदरफले, द्वौ वा

भवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्म्माणि कुर्व्वीयेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयत्यथेच्छत इमंच लोकममुंचेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्वेति।

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथा कामचारो भवति यो मनो ब्रह्मेत्युपास्ते अस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

संकल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्म्माणि।

अक्षौ विभीतकफले मुष्टिः अनुभवति, एवं वाचं च नाम च द्वे मनः अनुभवति—युगपदुभयव्यापकत्वादधिकतरमिति फलितार्थः। यदा स पुरुषः मनस्यति विवक्षाबुद्धिं करोति, मन्त्रान् अधीयीय इति विवक्षां कृत्वा अथ अनन्तरम् अधीते; कर्म्माणि कुर्व्वीय इति चिकीर्षां कृत्वा अथ कुरुते, पुत्रान् च पशून् च इच्छेय इति प्राप्तीच्छां कृत्वा अथ इच्छते, इमं च लोकम् अमुं च लोकम् इच्छेय इति तत्प्राप्त्युपायानुष्ठानेन अथ इच्छते। सुतरां मनः हि आत्मा, मनः हि लोकः, मनः हि ब्रह्म। मनः ब्रह्मबुद्ध्या उपास्व इति।

स यः मनः ब्रह्म इति उपास्ते, यावत् मनसः गतं तत्र तावत् यथा राज्ञः तथा कामाचारः भवति। यः मनः ब्रह्म इति उपास्ते इति उपसंहारः। नारदः—हे भगवन्, अस्ति मनसः भूयः? इति। सनत्कुमारः—मनसः पुनः भूयः अस्ति इति। नारदः—भगवान् तत् ब्रवीतु इति।

सङ्कल्प इति। सङ्कल्पः पुनः निश्चितं मनसः भूयान्। कथम्?

तानि ह वैतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समकॢपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तामापश्च तेजश्च तेषाꣳ संकॢप्त्यै वर्षꣳ सङ्कल्पते वर्षस्य संकॢप्त्या अन्नꣳ सङ्कल्पतेऽन्नस्य संकॢप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाꣳ संकॢप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणाꣳ संकॢप्त्यै कर्म्माणि सङ्कल्पन्ते कर्म्मणाꣳ संकॢप्त्यै लोकः सङ्कल्पते लोकस्य संकॢप्त्यै सर्व्वꣳ सङ्कल्पते स एष संकल्पः संकल्पमुपास्वेति।

यदा एव सङ्कल्पयते कर्त्तव्यादिविषयान् विभजते, अथ तदा मनस्यति, अथ वाचम् ईरयति प्रेरयति, तां वाचं च उ पुनः नाम्नि नामावलम्बनेन ईरयति, नाम्नि मन्त्राः शब्दविशेषाः एकं भवन्ति एकीभवन्ति सामान्ये विशेषस्यान्तर्भावात्, मन्त्रेषु कर्म्माणि एकं भवन्ति मन्त्रसाध्यकर्म्मत्वात्।

तानि पुनः एतानि मनआदीनि सङ्कल्पैकायनानि सङ्कल्पः एकम् अयनं लयस्थानं येषां तानि, सङ्कल्पात्मकानि सङ्कल्पोत्पन्नानि, सङ्कल्पे प्रतिष्ठितानि, द्यावापृथिव्यौ समकॢपताम् सङ्कल्पं कृतवत्यौ इव निश्चले लक्ष्येते। वायुः च आकाशं च समकल्पेताम् सङ्कल्पं कृतवन्तौ इव— अविचलितं वायुं चिरस्थिरमाकाशमुपलक्ष्योक्तमेवम्। आपः च तेजः चः समकल्पन्तां स्वेन रूपेण निश्चलानि लक्ष्यन्ते। तेषां द्यावापृथिव्यादीनां संकॢप्त्यै सङ्कल्पनिमित्तं वर्षं वृष्टिः सङ्कल्पते समर्थं भवति। वर्षस्य संकॢप्त्यै सङ्कल्पनिमित्तम् अन्नं सङ्कल्पते समर्थं भवति, अन्नस्य संकॢप्त्यै सङ्कल्पनिमित्तं प्राणाः सङ्कल्पन्ते समर्थाः भवन्ति, प्राणानां संकॢप्त्यै मन्त्राः सङ्कल्पन्ते आत्मप्रकाशसमर्थाः भवन्ति, मन्त्राणां संकॢप्त्यै कर्म्माणि सङ्कल्पन्ते फलवन्ति भवन्ति, कर्म्मणां संकॢप्त्यै लोकः सङ्कल्पते तत्तत्-

स यः सङ्कल्पं ब्रह्मेत्युपास्ते संक्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत् सङ्कल्पस्य गतं तत्रास्य यथा कामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्ते। अस्ति भगवः सङ्कल्पाद्भूय इति। संकल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्म्माणि।

कर्म्मोचिताधिष्ठानभवनसमर्थः भवति। लोकस्य संक्लृप्तं सर्व्वं जगत् सङ्कल्पते स्वस्वरूपप्रकाशसमर्थं भवति। अतएव स एष सङ्कल्पः भूयान् इति शेषः। सङ्कल्पं ब्रह्मबुद्ध्या उपास्व इति।

स यः सङ्कल्पं ब्रह्म इति उपास्ते स उपासकः संक्लृप्तान् धात्रा सङ्कल्पितान् ध्रुवान् नित्यान् प्रतिष्ठितान् उपकरणसम्पन्नान् अव्यथमानान् त्रासरहितान् लोकान् ध्रुवः चिरजीवी प्रतिष्ठितः सर्व्वोपकरणसम्पन्नः अव्यथमानः त्रासरहितः सन् अभिसिद्ध्यति अभिप्राप्नोति। यावत् सङ्कल्पस्य गतं, तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। यः सङ्कल्पं ब्रह्म इति उपास्ते इत्युपसंहारः। नारदः—भगवन्, अस्ति सङ्कल्पात् भूयः? इति। सनत्कुमारः—सङ्कल्पात् पुनः भूयः अस्ति इति। नारदः—भगवान् तत् मे ब्रवीतु इति।

चित्तमिति। चित्तं पुनः निश्चितं सङ्कल्पात् भूयः। कथम्? यदा चेतयते इदमेवं प्राप्तमिति पूर्व्वापरानुसन्धानं करोति, अथ तदा सङ्कल्पयते अनेनेदं कर्त्तव्यमिति सङ्कल्पः जायते, सङ्कल्पानन्तरं मनस्यति, तदनन्तरं वाचम् ईरयति, नाम्नि तां वाचम् उ पुनः ईरयति, नाम्नि मन्त्राः एकं भवन्ति, मन्त्रेषु कर्म्माणि एकं भवन्ति।

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वायं विद्वान्नेत्थमचित्तः स्यादिति। अथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति।

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तवान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति, यावच्चित्तस्य गतं तत्रास्य यथा कामचारो भवति यश्चित्तं ब्रह्मेत्युपास्ते । अस्ति भगवश्चित्ताद्भूय इति। चित्ताद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

तानि पुनः एतानि सङ्कल्पादीनि चित्तैकायनानि चित्ताश्रयाणि चित्तात्मानि चित्तोत्पन्नानि चित्ते प्रतिष्ठितानि चित्तस्थितानि, तस्मात् कारणात् यद्यपि बहुवित् शास्त्रज्ञः अचित्तः प्राप्तादिचेतयितृत्वसामर्थ्य-विरहितो भवति, न अयं जनः अस्ति इति एव विद्यमानोऽपि अविद्यमान इव एनं बहुविदं लौकिकाः आहुः, यत् अयं वेद न तत् अस्ति, यदि वा अयं विद्वान् स्यात्, न अयं अचित्तः स्यात् इति कथयन्ति। अथ यदि अल्पवित् अल्पशास्त्रज्ञः चित्तवान् भवति तस्मै तदुक्तार्थग्रहणाय एव उत अपि शुश्रूषन्ते श्रोतुमिच्छन्ति जनाः। हि अतएव चित्तम् एषां सङ्कल्पादीनाम् एकायनं। चित्तम् आत्मा, चित्तं प्रतिष्ठा, चित्तं ब्रह्मबुद्ध्या उपास्स्व इति।

स यः चित्तं ब्रह्म इति उपास्ते, चित्तवान् स ध्रुवान् प्रतिष्ठितान् अव्यथमानान् लोकान् ध्रुवः प्रतिष्ठितः अव्यथमानः सन् अभिसिद्ध्यति अभिप्राप्नोति, यावत् चित्तस्य गतं तत्र तावत् अस्य यथा राज्ञः तथा

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायतीवापो ध्यायन्तीव पर्व्वता ध्यायन्तीव देवमनुष्याः तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांऽशा इवैव ते भवन्ति, अथ येऽल्पाः कलहिनः पिशुना उपवादिनस्ते, अथ ये प्रभवो ध्यानापादांऽशा इवैव ते भवन्ति ध्यानमुपास्स्वेति।

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथा कामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते। अस्ति भगवो ध्यानाद्भूय इति। ध्यानाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

कामचारः भवति। यः चित्तं ब्रह्म इति उपास्ते इत्युपसंहारः। नारदः—भगवन्, अस्ति चित्तात् भूय ? इति। सनत्कुमारः—चित्तात् पुनः भूयः अस्ति इति। नारदः—भगवान् तत् मे ब्रवीतु इति।

ध्यानमिति। ध्यानं पुनः चित्तात् भूयः। कथम् ? निश्चलत्वमुपलभ्योक्तं—पृथिवी ध्यायति इव, अन्तरिक्षं ध्यायति इव, द्यौः ध्यायति इव, आपः ध्यायन्ति इव, पर्व्वताः ध्यायन्ति इव, देवमनुष्याः ध्यायन्ति इव। यस्मादेवं गुणविशिष्टं ध्यानं तस्मात् एव इह मनुष्याणां ये महत्तां महत्त्वं प्राप्नुवन्ति, ते ध्यानापादांशाः ध्यानस्य आपादः फललाभः तस्य अंशाः कलाः इव ध्यानफललाभकलावन्तः इव भवन्ति, महत्त्ववशात् निश्चला इव ते भवन्ति। अथ ये प्रभवः महत्त्वं प्राप्ताः ते ध्यानापादांशाः इव भवन्ति। अतः ध्यानं ब्रह्मबुद्ध्या उपास्स्व।

स यः ध्यानं ब्रह्म इति उपास्ते, यावत् ध्यानस्य गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। यः ध्यानं ब्रह्म इति

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्व्वेदं सामवेदमाथर्व्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवांश्च मनुष्यांश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्म्मञ्चाधर्म्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति।

*स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति, यावद्विज्ञानस्य गतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्ते। अस्ति भगवो विज्ञानाद्भूय इति। विज्ञानाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।*

उपास्ते इति उपसंहारः। नारदः—भगवन्, अस्ति ध्यानात् भूयः? इति। सनत्कुमारः—ध्यानात् पुनः भूयः अस्ति इति। नारदः—भगवान् तत् मे ब्रवीतु इति।

विज्ञानमिति। विज्ञानं पुनः ध्यानात् भूयः। कथम्? विज्ञानेन वा ऋग्वेदं विजानाति यजुर्व्वेदमित्यादि पूर्व्ववत्। विज्ञानेनैव विजानाति, अतः विज्ञानं ब्रह्मदृष्ट्या उपास्व इति। विज्ञानाधिगतविषयमवलम्ब्य ध्यानमतो विज्ञानस्य ततोऽधिकतरत्वम्।

स यः विज्ञानं ब्रह्म इति उपास्ते, स पुनः विज्ञानवतः शास्त्रीयज्ञानयुक्तान् ज्ञानवतः शास्त्रातिरिक्तज्ञानयुक्तान् लोकान् अभिसिद्ध्यति

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवता-मेको बलवानाकम्पयते स यदा बली भवति, अथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युप-सीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्व्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बल-मुपास्स्वेति ।

*प्राप्नोति । यावत् विज्ञानस्य गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति । यो विज्ञानं ब्रह्म इति उपास्ते इति उपसंहारः ।* नारदः—भगवन्, अस्ति विज्ञानाद्भूयः ? इति । सनत्कुमारः—विज्ञानात् पुनः भूयः अस्ति इति । नारदः—भगवान् यत् मे ब्रवीतु इति ।

बलमिति । बलं पुनः विज्ञानात् भूयः । कथम् ? अपि पुनः एकः बलवान् यथा हस्ती विज्ञानवतां शतम् आकम्पयते । स पुरुषः यदा बली भवति अथ तदा उत्थाता उत्थानस्य कर्त्ता भवति, उत्तिष्ठन् परिचरिता आचार्य्यसेवी भवति, परिचरन् उपसत्ता समीपगः अन्त-रङ्गः प्रियः भवति आचार्य्यस्य, उपसीदन् समीपं गच्छन् द्रष्टा तदभि-प्रायदर्शी भवति, श्रोता तदुक्तस्य यथावद्ग्राही भवति, मन्ता तदुक्त-मननशीलः भवति, बोद्धा मननेन तदुक्तपरिबोधवान् भवति, एवमेवेद-मिति बोधानन्तरम् कर्त्ता तदनुष्ठाता भवति, अनुष्ठानानन्तरं विज्ञाता अनुष्ठानफलस्य अनुभविता भवति, अपिच पुनः बलेन पृथिवी तिष्ठति, बलेन अन्तरिक्षं, बलेन द्यौः तिष्ठति, बलेन पर्व्वताः, बलेन देवमनुष्याः, बलेन पशवः च, वयांसि च, तृणवनस्पतयः, आकीटपतङ्गपिपीलकं

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथा कामचारो भवति यो बलं ब्रह्मेत्युपास्ते । अस्ति भगवो बलाद्भूय इति । बलाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्त्ताऽविज्ञाता भवति, अथान्नस्याऽऽये द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ।

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथा कामचारो

श्वापदानि तिष्ठन्ति, बलेन लोक: तिष्ठति, अत: बलं ब्रह्मबुद्ध्या उपास्स्व इति ।

स य: बलं ब्रह्म इति उपास्ते यावत् बलस्य गतं तावत् अस्य यथा राज्ञ: तथा कामचार: भवति । य: बलं ब्रह्म इति उपास्ते इति उपसंहार: । नारद:—भगवन्, अस्ति बलात् भूय: ? इति । सनत्कुमार:—बलात् पुन: भूय: अस्ति इति । नारद:—भगवान् तत् मे ब्रवीतु इति ।

अन्नमिति । अन्नं पुन: बलात् भूय: । कथम् ? यस्मात् बलकारणम् अन्नं तस्मात् यदि दशरात्री: न अश्नीयात्, यदि च पुन: अमृत्वा जीवेत् अथ पुन: अद्रष्टा, अश्रोता, अमन्ता, अबोद्धा, अकर्त्ता, अविज्ञाता भवति, अथ अन्नाशनानन्तरम् अन्नस्य आये प्राप्तौ द्रष्टा भवति, श्रोता भवति, बोद्धा भवति, कर्त्ता भवति, विज्ञाता भवति । अत: अन्नं ब्रह्मबुद्ध्या उपास्स्व इति ।

स य: अन्नं ब्रह्म इति उपास्ते, स पुन: अन्नवत: पानवत: लोकान्

भवति योऽन्नं ब्रह्मेत्युपास्ते। अस्ति भगवोऽन्नाद्भूय इति। अन्नाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

आपो वा अन्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति, अथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्त्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्व्वता यद्देवमनुष्या यत् पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्त्ता अप उपास्स्वेति।

स योऽपो ब्रह्मेत्युपास्ते आप्नोति सर्व्वान् कामाꣳ

अभिसिञ्चति प्राप्नोति। अन्नस्य यावत् गतं तत्र तावत् यथा राज्ञः तथा कामचारः भवति। यः अन्नं ब्रह्म इति उपास्ते इति उपसंहारः। नारदः—भगवन्, अस्ति अन्नात् भूयः? इति। सनत्कुमारः—अन्नात् पुनः भूयः अस्ति इति। नारदः—तत् मे भगवान् ब्रवीतु इति।

आप इति। आपः पुनः अन्नात् भूयः। कथम्? यस्मात् अन्न-योनय आपस्तस्मात् यदा न सुवृष्टिः भवति तदा अन्नं कनीयः अल्पं भविष्यति इति हेतोः प्राणाः व्याधीयन्ते विशेषेण आधीयन्ते दुःखिनः भवन्ति। अथ पुनः यदा सुवृष्टिः भवति, अन्नं बहु भविष्यति इति हेतोः प्राणाः आनन्दिनः सुखिनः भवन्ति। अपामभावात् मूर्त्तत्वावस्था—इमाः आपः एव मूर्त्ताः मूर्त्तिमत्यः। या इयं पृथिवी, यत् अन्त-रिक्षं, यद्द्यौः या द्यौः, यत्पर्व्वताः ये पर्व्वताः, यद्देवमनुष्याः ये देव-मनुष्याः यत्पशवः ये पशवः, वयांसि च, तृणवनस्पतयः, आकीटपतङ्ग-पिपीलकं श्वापदानि, इमा आपः एव मूर्त्ताः। अतः अपः ब्रह्मबुद्ध्या उपास्स्व इति।

स यः अपः ब्रह्म इति उपास्ते स पुनः सर्व्वान् कामान् आप्नोति

स्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथा कामचारो भवति योऽपो ब्रह्मेत्युपास्ते। अस्ति भगवोऽद्भ्यो भूय इति। अद्भ्यो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति। तेजएव तत् पूर्व्वं दर्शयित्वाऽथापः सृजते तदेतदूर्द्धाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति। तेज एव तत् पूर्व्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति।

तृप्तिमान् भवति, यावत् अपां गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। यः अपः ब्रह्म इति उपास्ते इति उपसंहारः। नारदः—भगवन्, अस्ति अद्भ्यः भूयः ? इति। सनत्कुमारः—अद्भ्यः पुनः भूयः अस्ति इति। नारदः—तत् मे भगवान् ब्रवीतु इति।

तेज इति। तेजः पुनः अद्भ्यः भूयः। कथम् ? तत् वा एतत् तेजः वायुम् उपगृह्य अवष्टभ्य आकाशं यदा अभितपति अभि व्याप्य तपति उष्णं करोति, तदा आहुः लौकिकाः—निशोचति वायुः स्तब्धः तिष्ठति, नितपति देहसन्तापं जनयति, अतः वर्षिष्यति वारिवर्षणं भविष्यति इति वै प्रसिद्धम्। तेजः एव पूर्व्वं तत् वारिवर्षणलक्षणं दर्शयित्वा अथ अनन्तरम् अपः सृजते। तत् एतत् तेज एव ऊर्द्धाभिः च ऊर्द्धगाभिः च तिरश्चीभिः च तिर्य्यग्गताभिः च विद्युद्भिः आह्रादाः महाह्रादाः स्तनयनशब्दाः चरन्ति, तस्मात् जनाः आहुः विद्योतते विद्युत्प्रकाशो भवति स्तनयति निर्घोषयति अतः वर्षिष्यति वारिवर्षणं भविष्यति इति वै। तेज एव पूर्व्वं तत् दर्शयित्वा अथ अपः सृजते। अतः तेजः ब्रह्मबुद्ध्या उपास्व इति।

स यस्तेजोब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत्तेजसो गतं तत्रास्य यथा कामचारो भवति यस्तेजोब्रह्मेत्युपास्ते । अस्ति भगवत्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।

आकाशो वाव तेजसोभूयानाकाशे वै सूर्य्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्वेति ।

स य आकाशं ब्रह्मेत्युपास्ते आकाशवतो वै स

स यः तेजः ब्रह्म इति उपास्ते, स पुनः तेजस्वी सन् तेजस्वतः भास्वतः प्रकाशवतः अपहततमस्कान् लोकान् अभिसिद्ध्यति प्राप्नोति, यावत् तेजसः गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति । यः तेजः ब्रह्म इति उपास्ते इति उपसंहारः । नारदः—भगवन्, अस्ति तेजसः भूयः ? इति । सनत्कुमारः—तेजसः पुनः भूयः अस्ति इति । नारदः—तत् मे भगवान् ब्रवीतु इति ।

आकाश इति । आकाशः पुनः तेजसः भूयान् । कथम् ? आकाशे पुनः उभौ सूर्य्याचन्द्रमसौ तेजोरूपौ, विद्युत् नक्षत्राणि अग्निः तेजोरूपाणि—यत्र यस्मान्सर्व्वेर्त्ति तदल्पं भूय इतरत् । किञ्च आकाशेन आह्वयति, आहूतश्चेतरः—आकाशेन शृणोति, उक्तञ्च शब्दमन्यः—आकाशेन प्रतिशृणोति, आकाशे रमते—हर्षकारणे ह्युपस्थिते, आकाशे न रमते—विषादकारणे ह्युपस्थिते, आकाशे जायते, आकाशम् अभिजायते अभिलक्ष्य जायते । अतः आकाशं ब्रह्मबुद्ध्या उपास्व इति ।

स यः आकाशं ब्रह्म इति उपास्ते, स वै आकाशवतः विस्तार-

लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिध्यति, यावदाकाशस्य गतं तत्रास्य यथा कामचारो भवति य आकाशं ब्रह्मेत्युपास्ते। अस्ति भगव आकाशाद्भूय इति। आकाशाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

स्मरो वाव आकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशून् स्मरमुपास्स्वेति।

स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य

युक्तान्, प्रकाशवतः, असम्बाधान् अन्योन्यपीड़ारहितान्, उरुगायवतः विकीर्णगतीन् विस्तीर्णप्रचारान् लोकान् अभिसिध्यति प्राप्नोति। यावत् आकाशस्य गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। यः आकाशं ब्रह्म इति उपास्ते इति उपसंहारः। नारदः —भगवन्, अस्ति आकाशात् भूयः ? इति। सनत्कुमारः—आकाशात् पुनः भूयः अस्ति इति। नारदः—तत् मे भगवान् ब्रवीतु इति।

स्मर इति। स्मरः स्मरणं पुनः आकाशात् भूयः भूयान्। तस्मात् आकाशाद्भूयस्त्वात् यद्यपि न स्मरन्तः बहवः आसीरन्, न एव ते कञ्चन शृणुयुः, न मन्वीरन्, न विजानीरन्। यदा पुनः ते स्मरेयुः, अथ तदा ते शृणुयुः, अथ मन्वीरन्, अथ विजानीरन्, स्मरेण स्मरणेन वै पुत्रान् विजानाति स्मरेण स्मरणेन पशून्। अतः स्मरं स्मरणं ब्रह्मबुद्ध्या उपास्स्व इति।

स यः स्मरं ब्रह्म इति उपास्ते, यावत् स्मरस्य गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। य स्मरं ब्रह्म इति उपास्ते

यथा कामचारो भवति यः स्मरं ब्रह्मेत्युपास्ते। अस्ति भगवः स्मराद्भूय इति। स्मराद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्म्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमञ्च लोकममुञ्चेच्छत आशामुपास्वेति।

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्व्वे कामाः समृद्ध्यन्त्यमोघा ह्यस्याऽऽशिषो भवन्ति, यावदाशाया गतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्ते। अस्ति भगव आशाया भूय इति। आशाया वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति।

इति उपसंहारः। नारदः—भगवन्, अस्ति स्मरात् भूयः? इति। सनत्कुमारः—स्मरात् पुनः भूयः अस्ति इति। नारदः—तत् मे भगवान् ब्रवीतु इति।

आशेति। आशा पुनः स्मरात् भूयसी। कथम्? आशेद्धः आशया वर्द्धितः पुनः स्मरः स्मरणं मन्त्रान् अधीते, कर्म्माणि कुरुते, पशून् च इच्छते, इयं च लोकम्, अमुं च लोकम् इच्छते। अतः आशां ब्रह्मबुद्ध्या उपास्व इति।

स यः आशां ब्रह्म इति उपास्ते, आशया अस्य सर्व्वे कामाः समृद्ध्यन्ति, अमोघाः पुनः अस्य आशिषः भवन्ति, यावत् आशायाः गतं तत्र तावत् अस्य यथा राज्ञः तथा कामचारः भवति। यः आशां ब्रह्म इति उपास्ते इति उपसंहारः। नारदः—भगवन्, अस्ति आशायाः भूयः? इति। सनत्कुमारः—आशायाः पुनः भूयः अस्ति इति। नारदः—तत् मे भगवान् ब्रवीतु इति।

प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्व्वं समर्पितम्। प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणोह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः।

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्य्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक् त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्य्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति।

प्राणइति। प्राणः पुनः आशायाः भूयान्। कथम्? यथा वै लोके रथचक्रस्य अराः रथनाभौ समर्पिताः सम्प्रोताः सम्प्रवेशिताः, एवम् अस्मिन् प्राणे सर्व्वं समर्पितम्, प्राणः प्राणेन स्वशक्त्या एव याति, प्राणः प्राणं स्वशक्तिम् एव ददाति—यद्ददाति तत् स्वात्मभूतम्; प्राणः प्राणाय स्वात्मभूताय एव ददाति—यस्मै ददाति स तु स्वात्मभूतएव। प्राणः एव पिता, प्राणः माता, प्राणः भ्राता, प्राणः स्वसा, प्राणः आचार्य्यः, प्राणः ब्राह्मणः।

स यदि पितरं वा, मातरं वा, भ्रातरं वा, स्वसारं वा, आचार्य्यं वा, ब्राह्मणं वा प्रति किञ्चित् भृशम् इव तदननुरूपं त्वङ्कारादिवचनम् आह, धिक् त्वाम् अस्तु इति एव एनं त्वङ्कारादिप्रयोगशीलम् आहुः विवेकिनः। धिक्कृत्य किंवदन्ति तदाह—पितृहा वै निश्चितं त्वम् असि, मातृहा वै त्वम् असि, भ्रातृहा वै त्वम् असि, स्वसृहा वै त्वम् असि, आचार्य्यहा वै त्वम् असि, ब्राह्मणहा वै त्वम् असि इति।

**अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्य्यहासीति न ब्राह्मणहासीति।**

**प्राणो ह्येवैतानि सर्व्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति, तञ्चेद्‌ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत।**

**एष तु अतिवदति यः सत्येनातिवदति। सोऽहं भगवः सत्येनातिवदानीति। सत्यन्त्वेव विजिज्ञासितव्यमिति। सत्यं भगवो विजिज्ञास इति।**

अथ यदि एनान् पित्रादीन् उत्क्रान्तप्राणान् मृतान् शूलेन समासं समस्य राशिं कृत्वा व्यतिषं खण्डशः कृत्वा दहेत्, न एव एनं ब्रूयुः, पितृहा असि इति, न एव एनं ब्रूयुः मातृहा असि इति, न एव एनं ब्रूयुः भ्रातृहा असि इति, न एव एनं ब्रूयुः स्वसृहा असि इति, न एव एनं ब्रूयुः आचार्य्यहा असि इति, न एव एनं ब्रूयुः ब्राह्मणहा असि इति।

प्राणः हि एव एतानि सर्व्वाणि भवति। स वा एष प्राणात्मवादी एवं पश्यन्, एवं मन्वानः एवं विजानन् अतिवादी नामाद्याशान्तमतीत्य वदनशीलः भवति। तं प्राणात्मवादिनं चेत् ब्रूयुः जनाः—अतिवादी असि इति, स ब्रूयात्—अतिवाद्यस्मीति। न अपह्नुवीत न अपलपेत्।

प्राणात्मवादिन तुष्यन्तं नारदमाह सनत्कुमारः—एष तु अतिवदति यः सत्येन अतिवदति—परमार्थसत्यमधिकृत्यातिवदति। एतच्छ्रुत्वा नारद आह—हे भगवन्, सोऽहं नारदः सत्येन अतिवदानि इति। सनत्कुमार आह—सत्यं तु एव विजिज्ञासितव्यम् इति। नारदः—हे भगवन्, सत्यं विजिज्ञासे विशेषेण ज्ञातुमिच्छामि।

यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति। विज्ञानन्त्वेव विजिज्ञासितव्यमिति । विज्ञानं भगवो विजिज्ञास इति ।

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ।

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ।

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ।

आह च सनत्कुमारः—यदा वै विजानाति—इदं परमार्थतः सत्यमिति विशेषेण ज्ञानं लभते, अथ तदा सत्यं तदिति वदति । सुतरां न अविजानन् सत्यं वदति, विजानन् एव सत्यं वदति । अतः विज्ञानं तु विजिज्ञासितव्यम् इति । नारद आह—हे भगवन्, विज्ञानं विजिज्ञासे इति ।

सनत्कुमारः—यदा वै मनुते मननविषयं करोति, अथ तदा विजानाति, न अमत्वा विजानाति, मत्वा एव विजानाति, अतः मतिः मननं तु एव विजिज्ञासितव्या इति । नारदः—हे भगवन्, मतिं विजिज्ञासे इति ।

सनत्कुमारः—यदा वै श्रद्दधाति, अथ तदा मनुते । न अश्रद्दधत् मनुते श्रद्दधत् एव मनुते । श्रद्धा तु एव विजिज्ञासितव्या इति । हे भगवन्, श्रद्धां विजिज्ञासे इति ।

सनत्कुमारः—यदा वै निस्तिष्ठति निरन्तरं तिष्ठति—जिज्ञासुः

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति। कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति।

यदाः वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति। सुखं त्वेव विजिज्ञासितव्यमिति। सुखं भगवो विजिज्ञास इति।

यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवो विजिज्ञास इति।

सदाचार्य्यसन्निधौ, अथ तदा श्रद्दधाति, न अनिस्तिष्ठन् श्रद्दधाति, निस्तिष्ठन् एव श्रद्दधाति, अत: निष्ठा तु एव विजिज्ञासितव्या इति। नारद:—हे भगवन्, निष्ठां विजिज्ञासे इति।

सनत्कुमार:—यदा वै करोति इन्द्रियसंयमादिकमनुतिष्ठति, अथ तदा निस्तिष्ठति। न अकृत्वा निस्तिष्ठति, कृत्वा एव निस्तिष्ठति। अत: कृति: एव विजिज्ञासितव्या इति। नारद:—हे भगवन्, कृतिं विजिज्ञासे इति।

सनत्कुमार:—यदा वै सुखं लभते, अथ तदा करोति, न असुखं लब्ध्वा करोति, सुखम् एव लब्ध्वा करोति। अत: सुखं तु एव विजिज्ञासितव्यम् इति। नारद:—हे भगवन्, सुखं विजिज्ञासे इति।

सनत्कुमार:—यो वै भूमा—निरतिशयं बहु बाहुल्यात् न्यूनताशून्यं—तत् सुखम्, अल्पे—अल्पस्य अधिकतृष्णाहेतुत्वात्—न सुखम् अस्ति। भूमा एव सुखम्, भूमा तु एव विजिज्ञासितव्य: इति। नारद:—हे भगवन्, भूमानं विजिज्ञासे इति।

यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं । यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्त्यꣳ स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि यदि वा न महिम्नीति ।

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्य्यं चेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ।

स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्व्वमिति । अथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्व्वमिति ।

भूमानं विवृणोति सनत्कुमारः—यत्र यस्मिन् भूम्नि तत्त्वे न अन्यत् पश्यति निरवकाशत्वात्, न अन्यत् शृणोति, न अन्यत् विजानाति, स भूमा, अथ यत्र अन्यत् पश्यति सावकाशत्वात्, अन्यत् शृणोति, अन्यत् विजानाति तत् अल्पम् । यो वै भूमा तत् अमृतम् ; अथ यत् अल्पं तत् मर्त्त्यम् । नारदः—हे भगवन्, स भूमा कस्मिन् प्रतिष्ठितः ? इति । स्वे महिम्नि माहात्म्ये प्रभावे स्वरूपे प्रतिष्ठितः महिम्नः स्वात्मानतिरिक्तत्वात् ; यदि वा स्वात्मातिरिक्तं मन्यसे—न महिम्नि इति । "सत्त्वेव सोम्येदमग्रमासीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति" इति एकस्य तस्य बहुभवनमेव भूमत्वम् । बहुभवनन्तु स्वमाहात्म्यनिष्ठमिति तस्मिन् तस्य प्रतिष्ठाऽऽत्मप्रकाश इति तत्त्वम् । बहुधाप्रकाशमाने चैकस्मिन् यदा मग्नचित्तो भवति, तदैकाकारत्वात् तत्सन्निधौ नान्यत् किञ्चन दर्शनश्रवणादिविषयं भवति ।

अथात आत्मादेश एव, आत्मैवाधस्तादात्मोपरिष्टा-दात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्व्वमिति। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड़ आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्व्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति, तेषां सर्व्वेषु लोकेष्वकामचारो भवति।

*स्वरूपे भासमाने तद्विभूतौ यदा चित्तं विचरति, तदा तत्सम्बन्धिन्यन्यस्मिन्* चित्तप्रवेशस्यावकाशत्वात् द्रष्टाद्यतिरिक्तं दृश्यादिविषयं भवति। पूर्व्वत्र स्वे महिम्नि परत्र न स्वे महिम्नीति ज्ञेयम्।

"स्वे महिम्नि यदि वा न महिम्नि" इति विवृणोति।—इहलोके गोअश्वं महिमा ऐश्वर्य्यम् इति आचक्षते, हस्तिहिरण्यं दासभार्य्यं क्षेत्राणि आयतनानि महिमसंज्ञकानि, तैरेव देवदत्तो लोके प्रतिष्ठामाप्नोति, न अहम् एवं महिमा इति ब्रवीमि, किन्त्वेवं ब्रवीमि इति पुनः उवाच सनत्कुमारः। किन्तत् कथं वा? अन्यो हि देवदत्तः अन्यस्मिन् स्वातिरिक्तविषये प्रतिष्ठित इति। भूमा तु स्वस्वरूपे प्रतिष्ठित इति स्वे महिम्नीत्यस्य भावः।

कथं मान्यत्र तस्य प्रतिष्ठेति व्याचक्षते—स भूमा एव अधस्तात्, स उपरिष्टात्, स पश्चात्, स पुरस्तात्, स दक्षिणतः, स उत्तरतः, स एव इदं सर्व्वम्। अतो न क्वचित् प्रतिष्ठितः। अथाऽतो भूमोपदेशानन्तरम् अहङ्कारोपदेशः एव। अहम् एव अधस्तात्, अहम् उपरिष्टात्, अहं पश्चात्, अहं पुरस्तात्, अहं दक्षिणतः अहम् उत्तरतः, अहम् एव इदं सर्व्वम्।

नाहं पुनर्देहादिसंघात इत्यात्मोपदेशः। अथातः आत्मादेशः

**तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतोबलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्म्माण्यात्मतए-वेदꣳ सर्व्वमिति।**

एव। आत्मा एव अधस्तात्, आत्मा उपरिष्टात्, आत्मा पश्चात्, आत्मा पुरस्तात्, आत्मा दक्षिणतः, आत्मा उत्तरतः, आत्मा एव इदं सर्व्वम् इति। स वा एष विद्वान् एवं पश्यन्, एवं मन्वानः, एवं विजानन्, आत्मरतिः आत्मनि रतिः रमणं यस्य, आत्मक्रीड़ः आत्मनि क्रीड़ा यस्य, आत्ममिथुनः—मिथुनं द्वन्द्वजनितसुखम्—आत्मनि एव तत् यस्य—अन्यनिरपेक्षसुख इति भावः, आत्मानन्दः आत्मनि आनन्दः यस्य—विषयनिरपेक्षसुख इति यावत्। सुतरां स स्वराट् स्वात्मनि विराजमानः। तस्य सर्व्वेषु लोकेषु कामचारः अव्याहतगतिः भवति। अथ ये अतः अन्यथा उक्तादर्शनात् विपरीतं विदुः, ते अन्यराजानः—अन्ये राजानः एषाम्—अन्यपरतन्त्राः, सुतरां क्षय्यलोकाः विनाशि-लोकगाः भवन्ति, तेषां सर्व्वेषु लोकेषु अकामचारः व्याहतगतिः भवति।

पूर्व्वोक्तं सर्व्वमात्मन्यन्तर्भावयति ;—एवं पश्यतः एवं मन्वानस्य, एवं विजानतः तस्य पुनः एतस्य विदुषः आत्मतः प्राणः, आत्मतः आशा, आत्मतः स्मरः, आत्मतः आकाशः, आत्मतः तेजः, आत्मतः आपः, आत्मतः आविर्भावतिरोभावौ—अप्सम्भवात् मूर्त्तामूर्त्तयोः, आत्मतः अन्नम्, आत्मतः बलम्, आत्मतः विज्ञानम्, आत्मतः ध्यानम्, आत्मतः चित्तम्, आत्मतः सङ्कल्पः, आत्मतः मनः, आत्मतः वाक्,

तदेष श्लोको—न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्व्वᳫं ह पश्यः पश्यति सर्व्वमाप्नोति सर्व्वशः ॥ इति । स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतञ्च दश चैकश्च सहस्राणि च विंशतिः । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्व्वग्रन्थीनां विप्रमोक्षः । तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारस्तᳫं स्कन्द इत्याचक्षते तᳫं स्कन्दइत्याचक्षते ।

छा, ७।२६।१—२६ ।

आत्मतः नाम, आत्मतः मन्त्राः ऋगाद्याः, आत्मतः कर्म्माणि, आत्मतः इदं सर्व्वम् इति ।

तत् एतस्मिन्नर्थे एष श्लोको भवति;—पश्यः तथोक्तदर्शी न मृत्युं, न रोगं, न उत दुःखतां दुःखभावं च पश्यति । स पुनः सर्व्वं पश्यति, सर्व्वशः सर्व्वम् आप्नोति । स विद्वान् प्राक् सृष्टिप्रभेदात् एकधा भवति, एकधा सन् पुनः त्रिधा भवति तेजोबन्नैः, पञ्चधा भवति शब्दादिभिः, सप्तधा भवति धातुभिः, नवधा च एव भवति इन्द्रियगोलकैः, पुनः च एकादश इन्द्रियैः, शतंच दश च एकः च इन्द्रियवृत्तिभिः, विंशतिः सहस्राणि च वासनाभिः, एवमनन्तभेदप्रकारः भवति । विना हि सत्त्वशुद्धिं न वस्तुसाक्षात्कारो भवति, अतस्तमाह—आहारशुद्धौ आह्रियते इत्याहारः शब्दादिविषयविज्ञानं तस्य शुद्धिः रागद्वेषमोहदोषैरसंसृष्टिः अनिषिद्धभोजनं वा तस्यां सत्यां सत्त्वशुद्धिः चित्तशुद्धिः, सत्त्वशुद्धौ ध्रुवा निश्चला अविच्छिन्ना स्मृतिः वस्तूपलब्धिः, स्मृतिलम्भे लब्धायां स्मृतौ सर्व्वग्रन्थीनां निखिलवासनानां विप्रमोक्षः विमोचनम् । मृदितकषायाय मृदितः क्षालितः विनाशितः कषायः रागद्वेषादिरञ्जनं यस्य तस्मै नारदाय भगवान् सनत्कुमारः तमसः

१८। अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति।

तञ्चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किन्तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति।

ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्य्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्व्वं तदस्मिन् समाहितमिति।

अज्ञानतायाः पारं दर्शयति। तं सनत्कुमारं स्कन्दइति आचक्षते तद्विदः। द्विवचनमध्यायपरिसमाप्त्यर्थम्।

१८। भूमोपदेशानन्तरं स्वदेहे ब्रह्मदर्शनाय हृद्यधिष्ठितं ब्रह्मोपदिश्यते। अथ आरम्भार्थकः। अस्मिन्—प्रत्यक्षे—ब्रह्मपुरे शरीरे यत् इदम्—अतिप्रसिद्धं—दहरम् अल्पं सूक्ष्मं पुण्डरीकसदृशं वेश्म—वेश्म इव वेश्म द्वारपालादिमत्त्वात्—ब्रह्मोपलब्धिस्थानम्; अस्मिन् हृदयपुण्डरीके वेश्मनि दहरः अल्पः अन्तराकाशः—आकाशाख्यं ब्रह्म। तस्मिन् हृत्पुण्डरीके यत् अन्तः तत् आकाशाख्यं ब्रह्म अन्वेष्टव्यम्। तत् एव विजिज्ञासितव्यं विशेषेण जिज्ञासितव्यं साक्षात्-करणीयम् इति।

तम् आचार्य्यं चेत् यदि ब्रूयुः शिष्याः—अस्मिन् ब्रह्मपुरे यत् इदं दहरं पुण्डरीकं वेश्म, अस्मिन् दहरः अन्तराकाशः, अत्र वेश्मनि किं तत् विद्यते यत् अन्वेष्टव्यं, यत् एव विजिज्ञासितव्यम् इति।

ब्रूयात् शिष्यानाचार्य्यः—यावान् वा अयम् आकाशः भौतिकाकाशः

तञ्चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्व्वꣳ समाहितꣳ सर्व्वाणि च भूतानि सर्व्वे च कामा यदैनज्जरावाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ।

स ब्रूयात् नास्य जरयैतज्जीर्य्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ।

तावान् एषः अन्तर्हृदय आकाशः, अस्मिन् आकाशे उभे द्यावापृथिवी अन्तः एव समाहिते सम्यक् आहिते स्थिते, उभौ अग्निः च वायुः च, उभौ सूर्य्याचन्द्रमसौ स्थितौ, विद्युन्नक्षत्राणि स्थितानि, अस्य देहवतः यत् च इह अस्ति यत् च इह नास्ति सर्व्वं तत् अस्मिन् समाहितम् स्थितम् इति ।

तम् आचार्य्यं चेत् ब्रूयुः शिष्याः—चेत् इदं सर्व्वम् अस्मिन् ब्रह्मपुरे समाहितं, सर्व्वाणि भूतानि सर्व्वे च कामाः समाहिताः, यदा एतत् ब्रह्मपुराख्यं शरीरं जरा अवाप्नोति अधिकरोति, इदं सर्व्वं किं प्रध्वंसते विनष्टं भवति, अथवा किं ततः अन्यत् अवशिष्यते अवतिष्ठते इति ।

स आचार्य्यो ब्रूयात् तान्—अस्य शरीरस्य जरया एतत् अन्तराकाशाख्यं ब्रह्म न जीर्य्यति, अस्य शरीरस्य वधेन न हन्यते, एवेत् ब्रह्मपुरं ब्रह्मोपलक्षितं ब्रह्मएव पुरं सत्यं—ब्रह्मसम्बन्धवशात् । यदाऽस्य ब्रह्मपुरत्वं तदा ब्रह्मण एव प्राधान्यात्—अस्मिन् ब्रह्मणि हृदाकाशाख्ये कामाः सर्व्वे समाहिताः स्थिताः । नैतत् केवलं परोक्षमपरोक्षमपीत्याह—एष आत्मा अपहतपाप्मा पापमालिन्यरहितः, विजरः विगतजरः, विमृत्युः विगतमृत्युः, विशोकः विगतशोकः, विजिघत्सः

तद्यथेह कर्म्मजितो लोकः क्षीयत एवमेवामुत्र पुण्य-जितो लोकः क्षीयते। तद्य इहात्मानमननुविद्य व्रजन्त्येतां‌श्च सत्यान् कामां‌स्तेषां सर्व्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्व्वेषु लोकेषु कामचारो भवति।

छा, उ, ८।१०।१।१—६।

विगताशनेच्छः, अपिपासः अपानेच्छः, सत्यकामः—सत्या अवितथाः कामा यस्य सोऽयम्; सत्यसङ्कल्पः—सत्या अवितथाः सङ्कल्पा यस्य सोऽयम्। आत्मविज्ञानाभावे दोषमाह—यथा हि एव इहलोके प्रजाः यथानुशासनं स्वामिन आज्ञामनतिक्रम्य अन्वाविशन्ति भोगमुपलभन्ते, यं यम् अन्तं प्रत्यन्तं यं जनपदं यं चेत्रभागम् अभि लक्षीकृत्य कामाः अर्थिन्यः भवन्ति तं तम् एव उपजीवन्ति।

तत् तस्मात् यथा इहलोके कर्म्मजितः स्वामिसेवादिभिः कर्म्मभिः जितः आयत्तीकृतः लोकः पराधीनोपभोगः क्षीयते, एवम् एव अमुत्र परलोके पुण्यजितः अग्निहोत्रादिपुण्यकर्म्मभिः जितः लोकः क्षीयते क्षयं प्राप्नोति। तत् तस्मात् ये इहलोके आत्मानं पूर्व्वोक्तलक्षणम्, एतान् सत्यान् सत्यसङ्कल्पकार्य्यान् स्वात्मस्थान् कामान् च सत्यसम्भूतान् —सत्यकामादिगुणान् वा अननुविद्य अज्ञात्वा व्रजन्ति देहात् प्रयन्ति, तेषां सर्व्वेषु लोकेषु अकामचारः अयथेष्टगतिः भवति। यथोक्तात्म-विज्ञानफलमाह—अथ पुनः ये इहलोके आत्मानम् एतान् सत्यान् कामान् च अनुविद्य ज्ञात्वा व्रजन्ति देहात् प्रयन्ति तेषां सर्व्वेषु लोकेषु कामचारः यथेष्टगतिः भवति।

दहराकाशस्य परमेश्वरत्वसाधनविषये निम्बार्कीया आहुः— "उपास्यतया समीपस्थ ब्रह्मणः पुरत्वेनोपासकशरीरं, तन्मध्ये तदवयव-भूतं पुण्डरीकाकारमल्पपरिमाणं हृदयञ्च ब्रह्मणो वेश्मत्वेन निर्द्दिश्य, तन्मध्यं परमात्मानं सूक्ष्मतया ध्येयं दहराकाशशब्देनोक्ता। तदन्तर्व्वर्त्तिन-

१८। आकाशो वै नाम नामरूपयोर्निर्व्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कꣳ श्वेतं लिन्दु माभिगां लिन्दु माभिगाम्।

छा, उ, ८।१०।१४।१।

आपहतपाप्मत्वादिकल्याणगुणगणं ध्येयतयोपदिशति श्रुतिः। कथमेवमवगम्यत इति चेत्,—'यावान् वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति दहराकाशस्य वियदुपमत्वमुक्त्वा 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्यादिना सर्व्वजगदाधारतया निर्द्दिष्टस्य तस्यैव 'यच्चास्येहास्ति यच्च नास्ति सर्व्वं तदस्मिन् समाहितम्' इति अस्मिन्नित्यनेन परामर्शात् तस्यैव 'नास्य जरयैव जीर्य्यति' इत्यादिना देहधर्म्मैरलिप्तत्वम्, 'एतत् सत्यं ब्रह्मपुरम्' इत्यनेन निखिलविश्वाधारत्वं 'अस्मिन् कामाः समाहिताः' इति कामशब्दितकल्याणगुणाधारत्वं चाभिधाय 'एष आत्माऽपहतपाप्मा' इत्यादिना दहराकाशस्यैवात्मत्वं काम्यभूतकल्याणगुणवत्त्वादि स्फुटीकृत्य तं तद्गुणांश्चाविदुषामन्तवत्फलप्राप्तिमसत्यसङ्कल्पत्वं चोक्त्वा 'अथ इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति वाक्यशेषस्तमेव दहराकाशशब्दनिर्द्दिष्टमात्मानं तद्गुणांश्च विदुषां तत्प्रसादात् सत्यसङ्कल्पतां च दर्शयति" इति। (१।३।१४)।

१८। दहराकाशस्य प्रकृतोपयोगप्रदर्शनायाकाशस्य ब्रह्मत्वमाह आकाश इति। आकाशो वै नाम श्रुतिषु प्रसिद्धः नामरूपयोः निर्व्वहिता निर्व्वोढ़ा व्याकर्त्ता। ते नामरूपे यदन्तरा यस्य मध्ये स्वयाकारेण वर्त्तेते, तत् ब्रह्म, तत् अमृतं, स आत्मा। एतज्ज्ञानवानहं प्रजापतेः सभां वेश्म प्रपद्ये गच्छेयम्। गच्छन् ब्राह्मणानां यशः ब्रह्मलोकगमन-

२०। द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्त्यञ्चामृतञ्च स्थितं च यच्च सच्च त्यच्च।

तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्त्यमेतत् स्थितमेतत् सत् तस्यैतस्य मूर्त्तस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः।

रूपां कीर्त्तिं, तथा राज्ञां क्षत्रियाणां यशः, तथा विशां वैश्यानां यशः अहं अनुप्रापत्सि प्राप्तुमिच्छामि। स पुनः अहं द्विजातीनां यशसां यशः कैवल्यप्राप्तिरूपं प्रापत्सि प्राप्तुमिच्छामि। कथमेतत् प्रार्थनम्? वर्णतः श्वेतम् अदत्कं दन्तरहितं अथच अदत्कं भक्षयितृ तेजोबलादिहरं श्वेतं लिन्दु जन्मस्थानं मा अभिगाम् मा अभिगाम् मा अभिगच्छेयम् मा अभिगच्छेयम्। द्विरुक्तिरत्यन्तानर्थहेतुत्वप्रदर्शनार्था। (१।३।१७)।

२०। सर्व्वोपनिषत्प्रसिद्धमधिदैवताध्यात्मभेदेन ब्रह्मदर्शनतत्त्वमारोहक्रमेण दर्शयन्तो रूपात् स्वरूपग्रहणस्य पारमार्थिकत्वं ख्यापयति द्वे इति। ब्रह्मणः द्वे एव—रूप्यतेऽनेनेति रूपं—ब्रह्मनिरूपणोपायभूते रूपे—मूर्त्तं च एव अमूर्त्तं च। मूर्त्तामूर्त्तयोरसाधारणधर्म्माः—मूर्त्तं मर्त्त्यम्, अमूर्त्तम् अमृतं तद्विपरीतम्, मूर्त्तं स्थितं परिच्छिन्नम् अव्यापि, अमूर्त्तं यत् अपरिच्छिन्नं व्यापि, मूर्त्तं सत् प्रत्यक्षेणोपलभ्यम् अन्येभ्यो विशिष्यमाणमसाधारणधर्म्मवत्। अमूर्त्तं त्यत्—चक्षुरादेरविषयम्।

यत् वायोः च अन्तरिक्षात् च अन्यत्—तेजोबन्नम्—तत् एतत् मूर्त्तम्, एतत् मर्त्त्यं, एतत् स्थितम्, एतत् सत्। तस्य एतस्य मूर्त्तस्य, एतस्य मर्त्त्यस्य, एतस्य स्थितस्य, एतस्य सतः, एष रसः सारः यः एष सविता तपति। हि यस्मात् एष सतः भूतत्रयस्य रसः।

अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत् तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम्।

अध्यात्ममिदमेव मूर्त्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाशएतन्मर्त्यमेतत् स्थितमेतत् सत् तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतएषरसो यच्चक्षुः सतो ह्येष रसः।

अथामूर्त्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यत् तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैषरसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्य ह्येष रसः।

अथ वायुः च अन्तरिक्षं च अमूर्त्तम्, एतत् अमृतम्, एतत् यत्, एतत् त्यत्। तस्य एतस्य अमूर्त्तस्य, एतस्य अमृतस्य, एतस्य यतः, एतस्य त्यस्य एष रसः सारः य एष एतस्मिन् मण्डले पुरुषः हिरण्यगर्भः, हि यस्मात् त्यस्य चक्षुरादेरविषयस्य भूतद्वयस्य एष रसः। इति अधिदैवतम्।

अथ अध्यात्मम्। प्राणात् वायोः च अन्तरात्मन् अन्तरात्मनि यः च आकाशः अन्तरिक्षं, तस्मात् च अन्यत् यत् तत् इदं भूतत्रयम् एव मूर्त्तम्। एतत् भूतत्रयं मर्त्यम्, एतत् स्थितम्, एतत् सत्। तस्य एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सतः, एष रसः सारः यत् चक्षुः। हि यस्मात् एष सतः भूतत्रयस्य रसः।

अथ अमूर्त्तम्। प्राणः वायुः च यः च अयम् अन्तरात्मन् अन्तरात्मनि आकाशः अन्तरिक्षम्, एतत् अमृतम्, एतत् यत्, एतत् त्यत्।

तस्य हैतस्य पुरुषस्य रूपम्। यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकम्; यथा सकृद्विद्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति। न ह्येतस्मादिति नेत्यन्यत् परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्। वृ, आ, ४।३।१—६।

तस्य एतस्य अमूर्त्तस्य, एतस्य अमृतस्य, एतस्य यतः, एतस्य त्यस्य एष रसः सारः, यः अयं दक्षिणेऽक्षन् दक्षिणे अक्षि पुरुषः जीवः। हि यस्मात् त्यस्य चक्षुरादेरविषयस्य भूतद्वयस्य एष रसः।

एवं मूर्त्तामूर्त्तयोरध्यात्माधिदैवतयोर्विभागं व्याख्याय पुरुषस्य रूप मभिदधाति तस्येति। तस्य ह एतस्य पुरुषस्य रूपं—वासनामयं—यथा लोके माहारजनं महारजनं—हरिद्रा—तेन—रक्तं माहारजनं वासः वस्त्रम्, यथा पाण्ड्वाविकं पाण्डुरम् ऊर्णादिकं, यथा इन्द्रगोपः अत्यन्तरक्तकीटविशेषः, यथा अग्न्यर्चिः, यथा पुण्डरीकं पद्मं, यथा सकृद्विद्युत्तं सकृद्विद्योतनम्—तथा। सकृद्विद्युत्ता इव ह अस्य श्रीः भवति यः एवं वेद। "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति श्रौतन्यायेन भोक्ता जीवः भोग्यं इतरत् ब्रह्मत्वेन व्याख्याय मूर्त्तामूर्त्तरूपानपेक्ष स्वरूपतः तन्निर्व्वक्तुमाह—अथ अनन्तरम् अतः प्रकृतमूर्त्तामूर्त्तरूपाभ्यां ब्रह्मणः न इति न इति, न एतावत्त्वं न एतावत्त्वम्—नेति नेतीत्यत्र इतिशब्दः समाप्तौ; भाष्यकारमतं नेति नेतीति द्वौ प्रतिषेधौ द्वे अपि मूर्त्तामूर्त्ते, अथवा भूतघटितं मूर्त्तामूर्त्तं वासनाघटितं रूपञ्च प्रतिषेधतः, नेतिनेतीति वीप्सायां यत् किञ्च ब्रह्मणि कल्पितं सर्व्वस्य तस्य प्रतिषेधः—आदेशः निर्द्देशः। कथम्? भूयो वदति श्रुतिः—न हि एतस्मात् प्रकृतात् इति न इति। अस्त्येव प्रकृतादन्यदिति स्फुटं ब्रवीति—अन्यत् परं

२१। इयं पृथिवी सर्व्वेषां भूतानां मध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व्वम्।

श्रेष्ठं पारमार्थिकम् अस्ति। किन्तत्? अथ सत्यस्य सत्यम् इति नामधेयम्। सत्यस्य सत्यमिति नामधेयं विवृणोति—प्राणाः प्राणवन्तः जीवाः—तदुपलक्षिताचेतनजातञ्चेति निम्बार्कीयाः—सत्यम्, तेषां प्राणानाम् एष परमात्मा सत्यम् (३।२।२२)।

मूर्त्तामूर्त्तयोर्ब्रह्मदर्शनं न त्वपरोक्षं ताभ्यां व्यवहितत्वात्; सत्यमिति सर्व्वनिरपेक्षसत्तोपलब्धावपरोक्षं तत्। अभेदोऽयमाचार्य्याणां मतभेदमुन्नावयति। स तु विचार्य्योऽध्यायप्रपूर्त्तौ।

२१। परस्परोपकारित्वेन पृथिव्यादीनां सम्बन्धं तेषु चात्मनोऽन्तर्यामिणः शारीरस्य च स्थितिं प्रदर्श्य ब्रह्मणि च तयोस्तेषाञ्चैकत्वमाचिपति इयमिति। इयं पृथिवी सर्व्वेषां भूतानां मधु उपकारित्वेन मधु इव मधु—प्रियत्वादुपकारिणः। अस्यै पृथिव्यै सर्व्वाणि भूतानि मधु—उपकारित्वात्। एवं परस्परोपकारित्वं प्रदर्श्य तदन्तर्व्वर्त्तिनोरन्तर्यामिशारीरयोस्तथात्वं स्थापयति—अस्यां पृथिव्यां यः च अयं तेजोमयः प्रकाशमयः अमृतमयः अमरणधर्म्मा पुरुषः अन्तर्यामी, यः च अयम् अध्यात्मम् आत्मानमधिकृत्य शारीरः शरीरसम्पर्की शरीराभिमानी तेजोमयः अमृतमयः पुरुषः जीवः—अनयोः परस्परमधुत्वं चकारात्; तेन चैकत्वमाह्यास्य—यः अयम् आत्मा जीवः, अयं जीवः-एव स अन्तर्यामी। नियन्तृनियम्ययोरेकरसत्वे यदा भेदापगमो भवति तदा—इदम् अमृतम् इदं ब्रह्म, इदं सर्व्वम्—अव्याकृतावस्थायां यथा तथा ब्रह्मणि स्थितिरिति निर्गलितोऽर्थः।

इमा आपः सर्व्वेषां भूतानां मध्वासामपाꣳ सर्व्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

अयमग्निः सर्व्वेषां भूतानां मध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

अयं वायुः सर्व्वेषां भूतानां मध्वस्य वायोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चाय मध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

इमाः आपः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। पूर्व्वव पृथिवी, सर्व्वाणि भूतानि, पृथिव्यधिष्ठितः पुरुषः, शारीरश्चेति चतुष्टयमेकं मधु, अत्र "आपो रेतो भूत्वा शिश्नं प्रविशन्" इति श्रुत्यन्तरात् न तु शारीरः किन्तर्हि रैतसः पुरुषो जीव इति विशेषः, अन्यत् सर्व्वं समानम्।

अयमग्निः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। "अग्निर्व्वाग्भूत्वा मुखं प्राविशत्" इति श्रुत्यन्तरात् वाङ्मयः पुरुषो जीव इति विशेषः।

अयं वायु सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। "वायुः प्राणो भूत्वा नासिके प्राविशत्" इति श्रुत्यन्तरात् प्राणोपाधिकः पुरुषो जीव इति विशेषः।

अयमादित्यः सर्व्वेषां भूतानां मध्वस्यादित्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ।

इमा दिशः सर्व्वेषां भूतानां मध्वासां दिशाꣳ सर्व्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ।

अयं चन्द्रः सर्व्वेषां भूतानां मध्वस्य चन्द्रस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम् ।

अयम् आदित्यः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत् । "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति श्रुत्यन्तरात् चाक्षुषः पुरुषो जीव इति विशेषः ।

इमाः दिशः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत् । "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" इति श्रुत्यन्तरात् श्रौतः प्रातिश्रुत्कः—प्रतिश्रुत्का श्रवणवेला तत्र भवः प्रातिश्रुत्कः—पुरुषो जीव इति विशेषः ।

अयं चन्द्रः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत् । "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" इति श्रुत्यन्तरात् मानसः पुरुषो जीव इति विशेषः ।

इयं विद्युत् सर्व्वेषां भूतानां मध्वस्यै विद्युते सर्व्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

अयꣳ स्तनयित्नुः सर्व्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्व्वाणि भूतानि मधु यश्चायमस्मिꣳस्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

अयमाकाशः सर्व्वेषां भूतानां मध्वस्याकाशस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चाय मध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

इयं विद्युत् सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। विद्युत तेजः त्वक्। तेजसि भवः तैजसः। तैजसः पुरुषो जीव इति विशेषः।

अयं स्तनयित्नुः मेघः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। शब्दे भवः शाब्दः, स्वरे भवः सौवरः। शाब्दः सौवरः पुरुषो जीव इति विशेषः। सामान्यतः शब्दमुक्ता निषादादिध्वनिविशेषप्रदर्शनाय स्वरोल्लेखः।

अयम् आकाशः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। हृद्याकाशः हृदयाकाशोपाधिकः पुरुषो जीव इति विशेषः।

अयं धर्म्मः सर्व्वेषां भूतानां मध्वस्य धर्म्मस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन् धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्म्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

इदꣳ सत्यꣳ सर्व्वेषां भूतानां मध्वस्य सत्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

इदं मानुषꣳ सर्व्वेषां भूतानां मध्वस्यात्मनः सर्व्वाणि

अयं धर्म्मः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। पृथिव्यादिषु परिलक्षितः शास्त्राचारलक्षणश्च धर्म्मः पर्य्यवेक्षणेनाचरणेन च प्रत्यक्ष इति अयं धर्म्म इति निर्द्देशः। पृथिव्यादीनां धर्म्मानुसारतो नियमनं नियन्ता; अतो धर्म्मे तस्य प्रतिष्ठा। शास्त्राचारानुसरणेन विशिष्टत्वं जीवस्येति धर्म्मे भवो जीवो धार्म्म इति निर्द्देशः।

इदं सत्यं सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। "सत्येन वायुरावाति" इति श्रुत्यन्तरं पृथिव्यादिषु प्रकाशमानं सत्यं—सतो यत् समुत्पन्नं तद्भावेन, तत् सत्यं—तत्तद्विशेषप्रकृतिः तया तेषां नियमनं भवतीति दर्शयति। तत्तद्विशेषप्रकृतौ सत्ये नियन्तुः प्रतिष्ठा। तद्भवो जीव इति सात्यः पुरुषो जीवः। पृथिव्यादीनां धर्म्मो द्विविधः, तत्तन्निष्ठं सत्यस्वलक्षणमिति द्वयोर्विशेषः। एकस्य सत्यस्य विविधोपाधियोगाद्विविधाकारेण प्रकाशो धर्म्म इति तद्विदः।

इदं मानुषं मनुष्यत्वं—सर्व्वजात्युपलक्षणं मानुषग्रहणमिति भाष्य-

भूतानि मधु यश्चायमस्मिन् मानुषे तेजमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

अयमात्मा सर्व्वेषां भूतानां मध्वस्यात्मनः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्व्वम्।

स वा अयमात्मा सर्व्वेषां भूतानामधिपतिः सर्व्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ चारा सर्व्वे समर्पिता एवमेवास्मिन्नात्मनि सर्व्वाणि भूतानि सर्व्वे देवाः सर्व्वे लोकाः सर्व्वे प्राणाः सर्व्वएत आत्मानः समर्पिताः।

तदभिप्रायः—सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्। मनुष्यसम्भूतो जीवः मानुषः। अतः मानुषः पुरुषो जीव इति निर्द्देशः।

अयम् आत्मा जीवः सर्व्वेषां भूतानां मधु इत्यादि पूर्व्ववत्।

"अयमेव स योऽयमात्मा" इति नियम्यनियन्त्रोरेकत्वे परमात्मा साक्षादुपलभ्यते, तस्य परमात्मनोभूतैर्जीवैश्च सम्बन्धं दर्शयति स वेति। स वा जगज्जीवाधिष्ठाता अयम् आत्मा परमात्मा सर्व्वेषां भूतानाम् अधिपतिः, सर्व्वेषां भूतानां राजा। तत् यथा रथनाभौ च रथनेमौ च सर्व्वे अराः समर्पिताः सम्बद्धाः, एवम् एव अस्मिन् आत्मनि परमात्मनि सर्व्वाणि भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि, सर्व्वे देवाः अग्न्यादयः, सर्व्वे लोकाः भुवादयः, सर्व्वे प्राणाः वागादयः, सर्व्वे एते आत्मानः जीवाः समर्पिताः सम्बद्धाः।

इदं वै तन्मधु दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्—"तद्वां नरा सनये दꣳस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ्ह यन्मध्वाथर्व्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाच॥" (१ म, ११६ सू, १२ऋक्) इति।

इदं वै तन्मधु दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्—"आथर्व्वणायाश्विना दधीचेऽश्व्याꣳ

सोमयागारम्भात् प्रागनुष्ठितो यज्ञविशेषः प्रवर्ग्यः। तत्प्रकरणे प्रवर्ग्यकर्म्माङ्गभूततया न तु रहस्यभूतात्मज्ञानतया प्रयुक्तं मधुशब्दमन्त्रात्मज्ञानरूपेण गृह्णन्तो तस्य च दुर्ल्लभत्वं वैदिकाख्यायिकया विवृणोति इदं वा इति। इदं वै तत् मधु यत् दध्यङ् आथर्व्वणः अश्विभ्याम् उवाच। ऋषिः तत् एतत् कर्म्म पश्यन् उपलभमानः अवोचत् उक्तवान्—हे नरा नराकारौ अश्विनौ, सनये लाभाय ब्रह्मविद्याप्राप्तये तत् च उग्रं क्रूरं वां युवयोः दंसः कर्म्म—ब्राह्मणाश्वयोः शिरश्छेदनरूपम्—तन्यतुः मेघः वृष्टिं न इव आविष्कृणोमि प्रकटं करोमि। किन्तत् कर्म्म? ह इति ईम् इति अनर्थकौ निपातौ। दध्यङ् आथर्व्वणः अश्वस्य शीर्ष्णा शिरसा वां युवाभ्यां यत् मधु आत्मज्ञानलक्षणं तत् उवाच। अश्विभ्यामर्थितआथर्व्वण उवाच—"इन्द्रेण वा उक्तोऽस्मि 'एतच्चेदन्यस्मा अनुब्रूयास्ततएव ते शिरश्छिन्द्यामिति'" इति। ततस्तौ तस्य शिरश्छित्वा तस्मिन्नश्वशिरो योजयन्तौ तदन्यत्र निदधतुः। तेन चाश्वशिरसा स ताभ्यामात्मज्ञानलक्षणं मधूपदिष्टवान्। यथोक्तमिन्द्रस्तदश्वशिरश्चिच्छेद। तौ पुनस्तस्य स्वशिरस्तस्मिन् युयोजतुरित्याख्यायिका।

इदं वै तन्मधु इत्यादि पूर्व्ववत्। हे अश्विनौ, दधीचे आथर्व्वणाय अश्व्यम् अश्वसम्बन्धि शिरः प्रत्यैरयतं प्रत्यर्पितवन्तौ। स ऋतायन्—

शिरः प्रत्यैरयतम्। स वां मधु प्रावोचदृतायन् त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम्॥" (१म, ११६सू, २२ ऋक्) इति।

इदं वै तन्मधु दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्—"पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः पक्षीभूत्वा पुरः पुरुष आविशदिति। स वा अयं पुरुषः सर्व्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्॥"

इदं वै तन्मधु दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्—"रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं

वक्ष्यामीति वाक्यम् ऋतं सत्यं कुर्व्वन्—यत् त्वाष्ट्रं—"यज्ञस्य शिरोऽच्छिद्यत, ते देवावश्विनावब्रुवन्—भिषजौ स्थ इदं यज्ञस्य शिरः प्रतिधत्तम्" इति यज्ञस्य शिरश्छेदनप्रतिसन्धानादिविषयं दर्शनं, सायनेन तु त्वष्ट्रा इन्द्रेण प्रदत्तमिति—मधु तत् वां युवाभ्यां प्रावोचत्। न केवलं त्वाष्ट्रं मधु किन्तर्हि—हे दस्रौ परबलक्षयितारौ, यत् कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धि तत् अपि वां युवाभ्यां प्रावोचत्। सायनस्तु 'अपिकक्ष्यमिति' अविभागेन गृहीत्वा व्याख्यातवान्—"छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन पुनः सन्धानभूतं प्रवर्ग्यविद्याख्यं रहस्यम्" इति।

इदं वै तन्मधु इत्यादि पूर्व्ववत्। द्विपदः पुरः पुराणि मनुष्यशरीराणि—चक्रे, चतुष्पदः पुरः पुराणि—पशुशरीराणि—चक्रे। पुरः पुरस्तात् स ईश्वरः पक्षी—सूक्ष्मशरीरपुरुषः—भूत्वा पुरः शरीराणि आविशत् इति स वै अयं पुरुषः सर्व्वासु पूर्षु शरीरेषु पुरिशयः। न अनेन पुरुषेण किञ्चन अनावृतम् अनाच्छादितम्, न अनेन पुरुषेण किञ्चन असंवृतम् अव्याप्तम् अस्ति।

इदं वै तन्मधु इत्यादि पूर्व्ववत्। इन्द्रः परमेश्वरः मायाभिः

प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥" (६अ, ४७सू, १८ऋक्) इत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्व्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूरित्यनुशासनम्। वृ, आ, ४।५।१—१९।

७२। अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्य्या गन्धर्व्वगृहीता। तमपृच्छाम कोऽसीति। सोऽब्रवीत् कबन्ध आथर्व्वण इति। सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च—वेत्थ नु त्वं काप्य

प्रज्ञाभिः रूपं रूपं—रूपं प्रति रूपं प्रति—प्रत्यगात्मतया प्रतिरूपः तत्तद्रूपानुरूपो बभूव। कथं तथाऽभवत्—अस्य इन्द्रस्य तत् प्रसिद्धं रूपं प्रतिचक्षणाय प्रतिख्यापनाय आत्मप्रकाशाय पुरुरूपः बहुरूपः ईयते गम्यते। हि यस्मात् युक्ताः रथे योजिताः अश्वाइव हरयः हरणात् इन्द्रियाणि शता शतानि दश च भवन्ति प्राणिभेदबाहुल्यात्। एवं बाहुल्येऽपि अयं वै परमेश्वरः हरयः, अयं वै दश च सहस्राणि च, बहूनि च, अनन्तानि च। एवं बहुविधप्रकाशत्वेऽप्येकत्वं ख्यापयति—तत् एतत् ब्रह्म अपूर्व्वं—पूर्व्वं कारणं तत्र विद्यतेऽस्य—स्वयम्भू, अनपरम्—अपरं कार्य्यं तत्र विद्यतेऽस्य—अकार्य्यात्मकम्, अनन्तरं व्यवधानशून्यम्, अबाह्यं बाह्यशून्यम्, अयम् आत्मा परमात्मा ब्रह्म सर्व्वानुभूः सर्व्वानुभवकर्त्ता इति अनुशासनं सर्व्ववेदान्तोपदेशः।

२२। जनको बहुदक्षिणं यज्ञमयजत्; तत्र कुरुपाञ्चालानां ब्राह्मणाः समवेताः। समवेतेषु को वा ब्रह्मिष्ठ इति जिज्ञासया स सुवर्णमण्डितशृङ्गाणां गवां सहस्रं तेषु ब्रह्मिष्ठेनोदजनाय स्थापया-

तत् सूत्रं येनायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्तीति। सोऽब्रवीत् पतञ्चलः काप्यो नाहं तद् भगवन् वेदेति। सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च—वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकं सर्व्वाणि च भूतानि योऽन्तरो यमयतीति। सोऽब्रवीत् पतञ्चलः काप्यो नाहं तं भगवन् वेदेति। सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च यो वै तत् काप्य सूत्रं विद्यात् तञ्चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स आत्मवित् स सर्व्वविदिति तेभ्योऽब्रवीत् तदहं वेद। तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वांस्तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति। वेद वा अहं गौतम तत् सूत्रं तञ्चान्तर्यामिणमिति। यो वा इदं कश्चिद्ब्रूयात् वेद वेदेति यथा वेत्थ तथा ब्रूहीति।

मास। याज्ञवल्क्यः स्वशिष्यं तदुदजनायाज्ञापयामास। ततः समवेता ब्राह्मणाः क्रुद्धास्तं प्रश्नैराक्रमिषुः। होताश्वलः, जारत्कारव आर्त्तभागः, भुज्युर्लाह्यायनिः, उषस्तश्चाक्रायणः, कहोलः, कौषीतकेयः, गार्गी वाचक्नवी च स्वस्वप्रश्नोत्तरलाभेनोपरताः। तत उद्दालक आरुणिस्तं प्रप्रच्छ अथेति। अथ अनन्तरम् एनं याज्ञवल्क्यम् अरुणस्यापत्यम् आरुणिः नामतः उद्दालकः पप्रच्छ पृष्टवान्। हे याज्ञवल्क्य, इति सम्बोध्य उद्दालक उवाच—मद्रेषु देशेषु काप्यस्य कपिगोत्रस्य पतञ्चलस्य गृहेषु यज्ञं यज्ञशास्त्रम् अधीयानाः वयम् अवसाम उषितवन्तः। तस्य पतञ्चलस्य भार्य्या गन्धर्व्वगृहीता आसीत्। तं गन्धर्व्वं वयम् अपृच्छाम—कोऽसि? इति। स

स होवाच वायुर्वै गौतम तत् सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि

गन्धर्व्वः अब्रवीत्—आथर्व्वणः अथर्व्वणोऽपत्यं नामतः कबन्धः इति। स गन्धर्व्वः काप्यं पतञ्चलं याज्ञिकान् यज्ञशास्त्राध्ययनरतान् तच्छिष्यान् च अब्रवीत् प्राधान्येन गुरुमेव सम्बोध्य—हे काप्य, येन सूत्रेण अयं च लोकः परः च लोकः सर्व्वाणि च भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि सन्दृब्धानि स्रगिव सूत्रेण संग्रथितानि भवन्ति, त्वं नु तत् सूत्रं वेत्थ जानासि? इति। स काप्यः पतञ्चलः अब्रवीत्—हे भगवन्, तत् सूत्रम् अहं न वेद इति। स गन्धर्व्वः पतञ्चलं काप्यं याज्ञिकान् च पुनः अब्रवीत्—हे काप्य, इदं च लोकं परं च लोकं सर्व्वाणि च भूतानि यः अन्तरः अभ्यन्तरः सन् यमयति नियमयति, त्वं नु तम् अन्तर्यामिणं वेत्थ जानासि? इति। स काप्यः पतञ्चलः अब्रवीत्—हे भगवन्, तम् अन्तर्यामिणम् अहं न वेद इति। स गन्धर्व्वः तं काप्यं पतञ्चलं याज्ञिकान् च अब्रवीत्—हे काप्य, यः वै तत् सूत्रं तं च अन्तर्यामिणं विद्यात् विजानीयात् इति एवम्प्रकारेण तेन गन्धर्व्वेणोक्तेन स ब्रह्मवित्, स लोकवित्, स देववित्, स वेदवित्, स भूतवित्, स आत्मवित्, स सर्व्ववित् इति। तेभ्यः पतञ्चलयाज्ञिकेभ्यः यत् स गन्धर्व्वः अब्रवीत् तत् अहम् उद्दालकः वेद। हे याज्ञवल्क्य, त्वं चेत् तत् सूत्रं तं च अन्तर्यामिणम् अविद्वान् अविदित्वा ब्रह्मगवीः ब्रह्मविदां स्वभूताः गाः उदजसे उन्नयसि उत्कालयसि स्वगृहं प्रति, ते तव मूर्द्धा शिरः मच्छापात् विपतिष्यति इति। याज्ञवल्क्य आह—हे गौतम गोत्रतः अहं वै तत् सूत्रं तं च अन्तर्यामिणं वेद जानामि इति। उद्दालक आह—यः कश्चित्—प्राकृतो जनः—वेद वेद जानामि जानामि इति इदं ब्रूयात्, यथा त्वं वेत्थ तथा ब्रूहि इति।

स याज्ञवल्क्यः उवाच—हे गौतम, वायुः वै तत् सूत्रम्। हे गौतम, वायुना वै सूत्रेण अयं च लोकः परः च लोकः सर्व्वाणि च

सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ।

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।

भूतानि सन्दृब्धानि संग्रथितानि भवन्ति, तस्मात् वै, हे गौतम, प्रेतं प्राणवायुपरित्यक्तं पुरुषम् आहुः लौकिकाः—अस्य अङ्गानि व्यस्रꣳसिषत विस्रस्तानि विश्लिष्टानि—सूत्ररहितस्रगिव इति । कथम् ? हि यस्मात्, हे गौतम, वायुना सूत्रेण सर्व्वाणि सन्दृब्धानि संग्रथितानि भवन्ति इति । गौतम आह—हे याज्ञवल्क्य, एवम् एव एतत्, अन्तर्यामिणं ब्रूहि इति ।

यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरः अभ्यन्तरः—अतदाकारः तदतीतः, यं पृथिवी न वेद न जानाति, पृथिवी यस्य शरीरम्—तदधिष्ठाय तत्प्रकृत्यनुसारतस्तन्नियमनात्, यः अन्तरः अभ्यन्तरः अतदाकारः तदतीतः सन् पृथिवीं यमयति नियमयति, एष ते तव—मम च सर्व्वभूतानां च—आत्मा अन्तर्यामी अमृतः सर्व्वविकारातीतः ।

यः अप्सु तिष्ठन् अद्भ्यः अन्तरः यम् आपो न विदुः न जानन्ति इत्यादि पूर्व्ववत् ।

यः अग्नौ तिष्ठन् अग्नेः अन्तरः इत्यादि पूर्व्ववत् ।

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

यो दिवि तिष्ठन् दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यश्चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।

यः अन्तरिक्षे तिष्ठन् अन्तरिक्षात् अन्तरः इत्यादि पूर्व्ववत्।

यः वायौ तिष्ठन् वायोः अन्तरः इत्यादि पूर्व्ववत्।

यः दिवि तिष्ठन् दिवः अन्तरः इत्यादि पूर्व्ववत्।

यः आदित्ये तिष्ठन् आदित्यात् अन्तरः इत्यादि पूर्व्ववत्।

यः दिक्षु तिष्ठन् दिग्भ्यः अन्तरः यं दिशः न विदुः न जानन्ति इत्यादि पूर्व्ववत्।

यः चन्द्रतारके तिष्ठन् चन्द्रतारकात् अन्तरः इत्यादि पूर्व्ववत्।

य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशोन वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्यामग्मृतः।

यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्यामग्मृतः।

यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्यामग्मृतः। इत्यधिदैवतम्।

अथाधिभूतम्। यः सर्व्वेषु भूतेषु तिष्ठन् सर्व्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्यामग्मृतः। इत्यधिभूतम्।

अथाध्यात्मम्। यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्यामग्मृतः।

यः आकाशे तिष्ठन् आकाशात् अन्तरः इत्यादि पूर्व्ववत्।

यः तमसि तिष्ठन् तमसः अन्तरः इत्यादि पूर्व्ववत्।

यः तेजसि तिष्ठन् तेजसः अन्तरः इत्यादि पूर्व्ववत्। इति अधिदैवतम्।

अथाधिभूतम्—यः सर्व्वेषु भूतेषु तिष्ठन् सर्व्वेभ्यः भूतेभ्यः अन्तरः यं सर्व्वाणि भूतानि न विदुः न जानन्ति इत्यादि पूर्व्ववत्।

अथाध्यात्मम्—यः प्राणे तिष्ठन् प्राणात् अन्तरः इत्यादि पूर्व्ववत्।

यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यस्त्वचि तिष्ठंस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्यामामृतः।

यः वाचि तिष्ठन् वाचः अन्तरः इत्यादि पूर्व्ववत्।
यः चक्षुषि तिष्ठन् चक्षुषः अन्तरः इत्यादि पूर्व्ववत्।
यः श्रोत्रे तिष्ठन् श्रोत्रात् अन्तरः इत्यादि पूर्व्ववत्।
यः मनसि तिष्ठन् मनसः अन्तरः इत्यादि पूर्व्ववत्।
यः त्वचि तिष्ठन् त्वचः अन्तरः इत्यादि पूर्व्ववत्।
यः विज्ञाने जीवे बुद्धौ वा तिष्ठन् विज्ञानात् जीवात् बुद्धेर्वा अन्तरः

योरेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः। अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतोमन्ताऽविज्ञातो विज्ञाता, नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्त्तम्। ततोहोद्दालक आरुणिरुपरराम। बृह ५।७।१—२३।

२३। जनकोऽवैदेहः कूर्च्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्य, अनु मा शाधीति। स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा

इत्यादि पूर्व्ववत्। अयं काण्वपाठः। माध्यन्दिनीये पाठे "यो रेतसि तिष्ठन्" इत्याद्यान्ते "य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इति।

यः रेतसि तिष्ठन् रेतसः अन्तरः इत्यादि पूर्व्ववत्। अदृष्टः अन्यैः अयम् अन्तर्यामी द्रष्टा, अश्रुतः अन्यैः अयं श्रोता, अमतः अन्यैः अयं मन्ता, अविज्ञातः अन्यैः अयं विज्ञाता, अतः अन्तर्यामिणः अन्यः द्रष्टा न अस्ति, अतः अन्यः न श्रोता अस्ति, अतः अन्यः न मन्ता अस्ति, अतः अन्यः न विज्ञाता अस्ति। एष आत्मा ते तव—मम च सर्व्वभूतानाञ्च—अन्तर्यामी अमृतः। अतः अन्तर्यामिणः अन्यत् आर्त्तं विनाशि—तदधिष्ठानसत्तत्वात् तस्य। ततः उद्दालकः आरुणिः उपरराम विरतो बभूव—सम्यगुत्तरश्रवणेन।

२३। अथारोहक्रमेण तुरीयं ब्रह्म प्रतिपादयते जनक इति। वैदेहः विदेहाधिपतिः जनकः कूर्च्चात् आसनविशेषात् उप समीपम् अवसर्पन् भूसंस्पृष्टकायेन गच्छन्—पादयोर्निपतन् इत्यर्थः—उवाच—

समादद्दीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति। नाहं तद्भगवन् वेद यत्र गमिष्यामीति। अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति। ब्रवीतु भगवानिति।

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः। तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।

हे याज्ञवल्क्य, ते तुभ्यं नमः अस्तु। मा मां अनुशाधि उपदिश इति। स याज्ञवल्क्यः पुनः उवाच—हे सम्राट्, महान्तं दीर्घम् अध्वानं पन्थानम् एष्यन् गमिष्यन् स्थलेन रथं वा जलेन नावं वा समाददीत, एवम् एव एताभिः उपनिषद्भिः समाहितात्मा युक्तात्मा असि, न केवलमुपनिषदालोचनेन युक्तात्मा किन्तर्हि एवं वृन्दारकः पूज्यः आढ्यः सम्पन्नः सन् अधीतवेदः उक्तोपनिषत्कः आचार्य्यमुखाल्लब्धवेदोपनिषद्विज्ञानः इतः अस्मात् देहात् विमुच्यमानः क्व कुत्र गमिष्यसि? इति। जनक आह—हे भगवन्, न अहं तत् वेद जानामि यत्र गमिष्यामि इति। याज्ञवल्क्य आह—अथ यद्येवं यत्र गमिष्यसि अहं ते तुभ्यं वक्ष्यामि इति। जनक आह—भगवान् ब्रवीतु इति।

यः अयं दक्षिणे अक्षन् अक्षिणि पुरुषः—विश्वः—एष वै इन्धः नाम दीप्तिमत्वात्। तम् एतं सन्तं विद्यमानम् इन्धम् इन्द्र इति परोक्षेण आचक्षते। कथं दीप्तिमत्वात् प्रत्यक्षमपि तं परोक्षेण आचक्षते? हि यस्मात् देवाः परोक्षप्रियाः इव प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति ते। जागरितावस्थायामादित्यालोकेन सर्वं दर्शनपथमतं भवति अतस्तदधिष्ठातुरिन्ध इति नाम विश्वस्य।

अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट् तयो-रेष सꣳस्तवो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत् प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयो रेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ता-हारतर इवैव भवत्यस्माच्छारीरादात्मनः ।

विश्वानन्तरं तैजसं वक्तुमुपक्रमते—अथ वामे अक्षिणि एतत् विश्वाख्यं पुरुषरूपम् । अस्य एषा पत्नी विराट् अन्नं भोग्यत्वात् । तयोः इन्द्राण्याः इन्द्रस्य च एष संस्तवः स्तवप्रदेशः । कः सः ? य एष अन्तर्हृदये आकाशः । अथ एनयोः इन्द्राण्याः इन्द्रस्य च एतत् अन्नं भोज्यं स्थितिहेतुः । किन्तत् ? यः एष अन्तर्हृदये लोहितपिण्डः लोहित एव पिण्डाकारापन्नः । अथ एनयोः एतत् प्रावरणम् आच्छा-दनवस्त्रम् ? किन्तत् ? यत् एतत् अन्तर्हृदये जालकम् इव—अनेक-नाड़ीछिद्रबहुलत्वात् । अथ एनयोः एषा सृतिः मार्गः सञ्चरणी सञ्चरणसाधनभूता—स्वप्नाज्जागरितदेशागमनमार्गः । का सा ? या एषा हृदयात् ऊर्ध्वा ऊर्ध्वाभिमुखा सती नाड़ी उच्चरति ऊर्ध्वं प्रसरति । तया अन्यासाञ्च सम्बन्धं दर्शयति—यथा केशः सहस्रधा भिन्नः एवम् अस्य देहस्य हिताः नाम नाड्यः (३।५०[५५]) अन्तर्हृदये प्रतिष्ठिताः भवन्ति । ताभिः किं भवति ? एताभिः नाड़ीभिः एव आस्रवत् गच्छत् एतत् अन्नं शोणितरूपम् आस्रवति इतस्ततो देहे गच्छति । तस्मात् अस्मात् शारीरात् वैश्वानरात् आत्मनः एष तैजसः आत्मा प्रविविक्ताहारतरः—प्रविविक्तः सूक्ष्मविषयः स एव आहारः यस्य (३।६८[६९]) तरपा तु—स्थूलविषयभोक्तुर्विश्वस्यापि भोक्तृस्य स्थूल-

तस्य प्राची दिक् प्राञ्चः प्राणाः दक्षिणा दिग् दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्द्ध्वा दिगूर्द्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्व्वा दिशः सर्व्वे प्राणाः स एष नेति नेत्यात्माऽगृह्योन हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहोऽभयन्त्वा गच्छताद् याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मी३ति।

बृ, आ, ६।२।१—४।

विषयस्य रसशोणितरूपसूक्ष्मपरिणामादनन्तरं पोषकत्वं भवति, अतस्तत्सूक्ष्मत्वमपेक्ष्य सूक्ष्मतरत्वकथनम्—इव एव भवति।

विश्वस्तु अक्षिगतात्मा, तैजसस्तु हृद्गतात्मा, प्राज्ञस्तु प्राणगतात्मा प्राणेन सहैकीभूततयावस्थानादिति प्राणत्वेनाये प्राज्ञमुक्त्वा तुरीयं ब्रह्माभिदधाति तस्येति। तस्य विश्वतैजसप्राज्ञानन्तरं प्राणात्मानमापन्नस्य विदुषः प्राची दिक्—प्राञ्चः प्राणाः, दक्षिणा दिक्—दक्षिणे प्राणाः, प्रतीची दिक्—प्रत्यञ्चः प्राणाः, उदीची दिक्—उदञ्चः प्राणाः, सर्व्वाः दिशः सर्व्वे प्राणाः। एवं विद्वान् सर्व्वात्मकं प्राणमात्मत्वेनोपगतो भवति। तदनन्तरं स एष सर्व्वात्मा न इति न इति न एतावान् न एतावान् भवति, किन्तर्हि आत्मा तुरीयः तदतीतः, एवं लक्षणसम्पन्नः—अगृह्यः, हि अतएव विश्वादिवत् न केनाप्युपाधिना गृह्यते; अशीर्य्यः, हि अतएव न केनापि शीर्य्यते; असङ्गः, हि अतएव न केनापि सज्यते; असितः बन्धनरहितः, हि अतएव न केनापि व्यथते, न रिष्यति विनश्यति। 'यत्र गमिष्यसि तत्ते वक्ष्यामि' इति प्रतिज्ञां

संस्मृत्य—याज्ञवल्क्यः उवाच—हे जनक, अभयं जन्ममरणादिनिमित्त-भयशून्यत्वं प्राप्तः असि इति। स जनकः वैदेहः उवाच—हे भगवन् याज्ञवल्क्य, यः त्वं नः अस्मभ्यः अभयं वेदयसे प्रापयसि तं त्वाम् अभयं गच्छतात् गच्छतु। ते तुभ्यं नमः अस्तु, इमे विदेहा अयम् अहम् अस्मि तवेति शेषः।

*
* *

१। वैदिकदेवताभ्यः सोपानपरम्परया ब्रह्माध्यारोहणमध्यायोऽयं बिभर्ति वेदान्तवचनैः। तत्र वचनसंघाते प्रथमे वैदिकयज्ञसाधनाग्निमुपस्थाप्य तस्मिन् ब्रह्मदर्शनं प्रतिपादयति। तमग्निं सर्व्वाश्रयत्वेन विदुषां बुद्धौ निहितत्वेन शान्तिप्रदत्वेन मुक्तिदत्वेन चोद्दीपयन्तो भौतिकाग्नितः विविनक्ति। यदि न पुनर्वेदे तद्भावेन तस्य ग्रहणमासीत्, कथमत्र सहसा तादृक्त्वारोपस्तस्मिन् सम्भवेदिति संशयोऽपनोदनीयोऽत्र समुद्धृताभिरृग्भिः कतिपयाभिः।

वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता॥

(६म, ७सू, ७ऋक्)

व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः।
वि चर्मणीव धिषणे अवर्त्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यम्॥

(ऋक् ६म, ८सू, ३ऋक्)

अत्राग्नेर्वैश्वानरस्य निखिलजीवानां मित्रभूतत्वेन, रक्षितृत्वेन, अद्भुतत्वेन, भुवननिर्म्मायक-स्तम्भक-विस्तारकत्वेन तमोनिरासकज्योतिःसर्ज्जकत्वेन समस्तवीर्य्याधाराजेयत्वेन च सर्व्वाश्रयत्वं अभिव्यक्तम्। एवञ्च "द्यां दाधार पृथिवीम्" "तस्तम्भ द्यां मन्त्रेभिः सत्यैः" "प्रिया पदानि पश्वो नि पाहि" (ऋक् १म, ६७सू, ३ऋक्); "पुरुवार पुष्टिः" "स्वर्वित्" "विश्वगोपा" "जनिता रोदस्योः" (ऋक् १म, ९६सू, ४ऋक्; "स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः" (ऋक् १०म, ८८सू, ४ऋक्) इत्यादीनि विशेषणानि तदेव द्रढयति।

ध्रुवं ज्योतिर्निहितं दृशये कं मनोजविष्ठं पतयत् स्वन्तः।
विश्वेदेवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु॥
वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्।
वि मे मनश्चरति दूर आधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये॥

(ऋक् ६म, ९सू, ५।६ ऋक्)

अथ सुखप्रदर्शनाय जीवेष्वन्तर्निहितज्योतिः बुद्ध्वैव तज्ज्योतिःसाम्यत्वमग्नेर्बुद्धौ निहितत्व-मुद्भावयतः।

त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवे दिवे।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये॥
(ऋक् १म, ३१सू, ७ऋक्)

अग्निर्नेता भगइव क्षितीनां दैवीनां देवऋतुपा ऋतावा।
स वृत्रहासनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणन्तम्॥
(ऋक् ३म, २०सू, ४ऋक्)

"दृशा अक्षरममृतस्य नाभिम्" (ऋक्, ३म, १७सू, ४ऋक्); "तव क्रतुभिरमृतत्वमायन्" (ऋक् ६म, ७सू, ४ऋक्); "ईशे ह्यग्निरमृतस्य भूरेः" (ऋक् ७म, ४सू, ६ऋक्) इत्यादिभिश्च शान्तिप्रदत्वं मुक्तिदत्वञ्च।

यत् पुनः—न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति॥ (कठ ५।१५)
इत्याद्या; तत्त्वैश्वर्य्यामात्रतं ब्रह्म कथयत्यारूढावस्थागम्यम्।

२। द्वितीये पुनरोङ्कारस्य सर्व्वेषां वेदानामोङ्कारपूर्व्वकत्वात् ब्रह्माभिधेयत्वेन तस्मिन् ब्रह्मदर्शनमभिदधाति। ऋगादिभेदैरोङ्कारस्य स्वरे भेदः। स तु ऋग्वेदे स्वरितोदात्त एकाक्षरः, यजुर्व्वेदे त्रैस्वर्य्योदात्तः, सामवेदे दीर्घोदात्त एकाक्षरः, अथर्व्ववेदे संक्षिप्तोदात्त एकाक्षरः। न पुनः प्रणवविषयकं स्तोत्रमृक्संहितायां दृश्यते। "प्रसमीमना वां वयो गात्" (ऋक् ७म, ६९सू, ४ऋक्) इत्यत्र 'ओमना' इति पदं निरुक्तव्याख्याता अवनशब्दस्याकारवकारयोरोकारमकारत्वेन विवर्त्तनानन्तरं विभक्तियोगेन साधितम्। समानन्यायेन 'ओम्' इति पदं अवति क्विबन्तादवतेः सिद्ध्यति। शाब्दिकास्त्ववतेर्मनिना 'ओमन्' मना च 'ओम्' इति पदद्वयं साधयन्ति। "विश्वेभिर्गन्त्वोमभिर्हुवानः" (ऋक् ५म, ४३सू, १२ऋक्) इत्यत्र 'ओमन्' इति पदस्य अवतेर्मनिना साधनमेववरं तथा च मना 'ओम्' इति पदस्य। औणादिकमन्प्रत्यये परे अवतेर्वकाराकारयोरूठौ (पा, ६।४।२०); तयोः सवर्णदीर्घत्वेन गुणत्वेन (पा, ७।३।८४) प्रत्ययटिलोपेन च (औण १।१४९) अवतीत्योमिति सिद्ध्यति, मान्तत्वादव्ययम् (पा, १।१।३९)। योऽसौ रक्षति सोऽयम् 'ओम्' इति तदुच्चारणपूर्व्वकमेव सर्व्वत्र वेदवाक्योच्चारणम्, "ओमित्युद्गृणाना:" "ओमित्यनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति" इत्यादौ सम्मतावपि तदर्थमेवेति तत्त्वम्। एवमेवानुमतौ। कोऽसौ रक्षति तद्व्याकरणार्थं स्थानिवद्भावेन अ-उ-म् इति विभागेन यथाक्रमं विश्वतैजसप्राज्ञद्योतकेन सोपाधिकब्रह्मवाचकतया वेदान्ते तस्योपव्याख्यानम्। वैदिककर्म्मप्रवर्त्तकस्य हैरण्यगर्भात् परमपुरुषप्रापकस्य ओङ्कारस्यैते तिस्रो मात्राः ऋग्यजुःसामरूपा मनुष्यलोकसोमलोकब्रह्मलोकसाधनाः। वेदान्तात् पुनर्योगसूत्रे "तस्य वाचकः प्रणवः" (१।२७) इत्योङ्कारस्य ब्रह्मवाचकत्वं स्थितस्य तस्य सङ्केतमात्रत्वेन। एवमस्य प्रतीकतया तस्मिन् ब्रह्मदर्शनाय सर्व्वत्र ग्रहणमिति फलितार्थः। स्वयं श्रुतिरेवास्यालम्बनत्वं कथयति ब्रह्मज्ञापकत्वेन ब्रह्मप्राप्त्युपायत्वेन च।

३।४। तृतीये चतुर्थे च पुनः समष्टिजीवे समष्टिजगत्युद्गाते च ब्रह्मदर्शनमभिदधाति। यत्तत्रोक्तं तदतिरिक्तं नालम्।

५। पञ्चमे वेदान्तिकारीहकमः स्फुटतरं प्रतिभात्यतोऽस्यानतिविस्तीर्णमुपव्याख्यानं युक्तमिति तत् प्रस्तूयते। जाग्रत् स्वप्नः सुषुप्तिरिति तिसृष्ववस्थास्वेकात्मानुसन्धानमात्मतत्त्वमुद्भावयन्ती वेदान्ते तस्य प्राधान्यम्। तत एव ह्यस्य वेदात् भेद इति तदुपवर्णनं प्रायः सर्व्वेषु वेदान्तेषु क्वचित् जाग्रदवस्थां क्वचित् स्वप्नावस्थां क्वचित् सुषुप्त्यवस्थां प्रधानीकृत्योपलभ्यते। जाग्रदवस्थायां वहिर्जगत्सम्बन्धवशात् तस्मिन्, स्वप्नावस्थायां मानसविषयसम्बन्धवशात् तत्र, सुषुप्तौ पुनरानन्दानुभूतौ तस्यास्त्वेकात्मप्रत्ययानुगतं ब्रह्मानुसन्धानम्। न पुनर्वक्तव्यं सुषुप्तौ सर्व्वविज्ञानविलोपे कथमानन्दानुभूतिरिति सुखमहमस्वाप्समिति सुप्तोत्थितस्योक्तिरविच्छेदसुखानुभवमेव व्यनक्ति। स्वापेन शरीरस्य सुस्थतायां तत्सुखमेव तदानीं सुप्तोत्थितेनानुभूयते न पुनरविच्छेदसुखमिति सुप्तस्यात्मनोऽनुभूतिविलोपोऽनादरणीयो घोरनिद्राभिभूतस्य पूर्व्वस्मृतमुहूर्त्तादौ जागरणदर्शनात्। सुखानुभवोऽयं जीवस्येति वहिर्जगति मानसविषये च यथा तथात्र जीवे ब्रह्मदर्शनमिति भेदं सर्व्वातीतब्रह्मघटितमित्यवस्थात्रयातीतं यत् तत्तुरीयत्वेनाख्यायते। तुरीयमव्यवहार्य्यमिति विशेषणेन सर्व्वातीतत्वमस्य सम्बन्धाविषयत्वेन ज्ञायत इति निर्द्देशस्तु लौकिकः; तत्त्वन्वसाकल्यहरणायोग्यतास्य तादृग्विशेषणविशेष्यत्वे हेतुः। ऋणदानाद्यष्टादशविवादमूलकव्यवहारशब्दः कात्यायनेनैवं निरुच्यते—

> वि नानार्थेऽव सन्देहे हारो हरणमुच्यते।
> नानासन्देहहरणाद्व्यवहार इति स्मृतः॥ इति।

कोऽयं सन्देहस्तन्निर्णयार्थं स एवाह—

> प्रयत्नसाध्ये विच्छिन्ने धर्म्माख्ये न्यायविस्तरे।
> साध्यमूलस्तु यो वादो व्यवहारः स उच्यते॥ इति।

प्रयत्नसाध्ये कष्टसाध्ये, विच्छिन्ने प्रमाणाज्ञानतात्पर्य्यानवधारणादिना दुर्ज्ञेये विलुप्तप्राये वा, धर्म्माख्ये धर्म्मप्रतिपादके, न्यायविस्तरे इदं युक्तमिदं अयुक्तमिति प्रतिपत्तिपुरःसरे निर्णये साध्यमूलः ऋणदानादिविषयको यो विवादः स व्यवहारः। अव ईषत् असाकल्ये। यथासाकल्यवशान्न वस्तु परिस्फुटं, तत्र येन तदसाकल्यापनयनेन तत् परिस्फुटत्वमापद्यते स व्यवहार इति कात्यायननिरुक्तेरायाति।

> अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
> परं भावमजानन्तो ममाव्ययमनुत्तमम्॥ (गी ७।२४।

इति परे ब्रह्मणि व्यवहारो न युज्यते पूर्णत्वादखण्डत्वादसाकल्यशून्यत्वात्। तत एवाव्यवहार्य्यमिति तस्य विशेषणम्। विश्वन्तु व्यवहार्य्यं व्यावहारिकमिति वा ऽव्यक्तत्वादपूर्णत्वादसकलत्वात्। तत्त्वसाकल्यनिबन्धना व्यवहारापरनाम-क्रमिकव्यक्तिमपेक्षते। जीवोऽपि "ज्ञाज्ञौ द्वावजावीशनीशौ" (श्वे, १।९) इति ज्ञानशक्त्यभिव्यक्त्यपेक्षी, अतो न स सम्यग्व्यवहाराविषयः। एवं विश्वस्य व्यवहारिकत्वे सिद्धे न तस्य मिथ्यात्वमुपतिष्ठते नामरूपात्मकत्वात्तस्य। "ते यदन्तरा तद्ब्रह्म" (८।१४) इति नामरूपे ब्रह्मणि विद्यमाने ततोऽभिव्यक्तिमापद्येते व्याकरणेन। मिताक्षरब्रह्मसूत्रविवृतिकारेण यत् व्यावहारिकधर्म्मादिकमादाय जीवेशव्यवहारादिकं सर्व्वं समर्थितं तदेवं

सिद्ध्यति न पुनर्मिथ्यात्वेन। ब्रह्माव्यवहार्य्यं विश्वन्तु व्यवहार्य्यमिति पारमार्थिकव्यावहारिकभेदः श्रीमच्छङ्करोणोत्थापितो विवर्त्ताभावीनत्वेन विवर्त्ताधीनत्वेन च न कमपि विरोधमुद्भावयति वेदान्त-सिद्धत्वात्। अतएव हि "एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः" ( वेद २।१।११ भा ) इति श्रीमच्छङ्करनिरुक्तिः सर्व्वेषां वादिनामादरणीया। ब्रह्माव्यवहार्य्यमपि शिवत्वेनात्मानं व्यवहारे नामरूपाभिव्यक्तौ सर्व्वत्र साक्षात्कारविषयीकरोतीति—

"पिताहमस्य जगतो माता धाता पितामहः" ( गी ९।१७ )

इत्यादि सम्बन्धस्तस्मिन् सम्भवति।

"एकात्मप्रत्ययसारम्" इति विशेषणन्तु विश्वे मनोराज्ये चानन्दानुभूतौ तदतीतभूमौ चैकस्य तस्य विद्यमानतां व्यनक्ति। एकस्यात्मनो विश्वादिभेदेन चतुष्पात्त्वं वर्णितम्। सुतरां विश्वादौ स एक एवात्मा। तत्र तत्र सोऽयं विश्वाद्यसाकल्यहरणेन प्रकाशमानो व्यवहर्त्ता व्यवहार्य्यैश्च सम्बद्ध उपलभ्यते। तन्निरपेक्षो योऽयमात्मा कथं सोऽदृष्टोऽव्यग्राह्योऽव्यलक्षणोऽप्यचिन्त्योऽपि वस्तुत्वेनावधार्य्य इति संशयनिरसनाय व्यवहर्त्तृव्यवहार्य्याश्लौकिकभिन्नत्वप्रत्ययमेव प्रमाणत्वेन गृह्णाति श्रुतिः। न केनापि व्यवहर्त्तृव्यवहार्य्ययोरस्वातन्त्र्यं बुद्धिगोचरीकर्त्तुं शक्यम्। व्यवहर्त्ता यद्यद्व्यवहरति तत्तत् तस्मादन्यदेव अन्यथा तेन तस्य व्यवहारो न जातु सिद्ध्यति। वृक्षच्छेदने न केवलं कुठारं किन्तर्हि करादिकं सर्व्वं छेत्ता व्यवहरति, स च पुनस्तेभ्यः स्वतन्त्र इति सर्व्वेषां प्रत्ययः। जगदिदमसकलम्। नियतं तत्साकल्यापादनेनास्य परस्यात्मनो व्यवहर्तृत्वम्। विविधमसाकल्यं हरतीति व्यवहर्त्ता। असौ विश्वादिष्वात्मा व्यवहर्त्ता तेभ्यः स्वतन्त्र इति प्रत्यक्षं प्रमीयते। इदं स्वातन्त्र्यमेव तस्य शान्तत्व-प्रपञ्चातीतत्व-तुरीयत्वसाधने हेतुः। साक्षात्-कारविषयत्वमस्य शिवत्वेनेति पूर्व्वमेवोक्तम्। अद्वैतत्वन्त्वस्यात्मन्यखण्डत्वेन ज्ञानज्ञेयज्ञातृत्वादिभेद-विरहितत्वात्।

अस्मिन्नात्मनि तुरीये विज्ञानात्मा पुरुषो जीवः सम्प्रतिष्ठते, "पृथिवी पृथिवीमात्रा च" इत्यादिना सर्व्वं भूतभौतिकञ्च। अयं जीवः परा, इदञ्च सर्व्वमपरा प्रकृतिः, स तु परमात्मा पुनः कृत्स्नस्य प्रभवप्रलयस्थानं, ततो न किञ्चिदन्यदस्ति। तद्यथा ;—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्य्यते जगत्॥
एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।
मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव॥" इति ( गी ७।४—७ )

परात्मनानुव्यक्ता परा प्रकृतिरन्तर्व्याप्यवेदनाशून्यानन्दभुक्त्वेन तस्मिंस्तावदभिन्नतया तिष्ठति यावन्न तां चेतनाभिमुखीं करोति सः। चेतनाभिमुख्यं मननमुपतिष्ठते, तन्मननं मन इति संज्ञां लभते ; तेन चात्मभूतसूक्ष्मेन्द्रियनिबद्धेन वासनामयविषयजातं सूक्ष्माकारेणोपलभ्यते। एतन्मनस्तु

—"परे देवे मनस्येकीभवति" "अत्रैष देवः स्वप्ने महिमानमनुभवति" इति स्वप्नदर्शनावीचत स्वयं श्रुतिः। "ताः पुनरुदयतः प्रचरन्ति" इति श्रौतन्यायान्मनसः प्रबोधे त्वपरायाः प्रकृतेरभिमुखगत्या तत्सम्पर्कात् पृथिव्यादिभूतभौतिकानि सर्व्वाणि विषयजातानि तद्ग्राहकाणि च प्राणमनोबुद्ध्यहङ्कारचित्तेन्द्रियाण्युद्भूयन्ते।

परात्मा प्राज्ञोऽन्तःप्रज्ञोबहिःप्रज्ञश्चेत्येकस्यैवात्मनो निरुपाधितद्रूपख्यापनोपायभूतोपाधियोगाद्भिन्नसंज्ञकइति वेदान्तमतम्; अन्यथा "एकात्मप्रत्ययसारम्" इति न सिद्ध्यति। परात्मनस्तुरीयस्य प्रज्ञत्वनिषेधेन सर्व्वज्ञातृत्वनिषेधादोच्छितत्वनिषेधे सिद्धे, न तस्य जीवेनात्मना सृष्टिकर्त्तृत्वमपि सिद्ध्यति। एवं तस्मिन् सर्व्वविलयेऽपि न ततस्तत्प्रवरणमिति न स पुनर्विश्वयोनिर्भवितुमर्हति। यद्यप्येष एवात्र सिद्धान्तः स्यात्, तदा सर्व्ववेदान्तोपरोधः प्रसज्येत। पराज्जीवे ज्ञानसंक्रमणात् ज्ञातृत्वं जीवस्य न पुनः परस्य युगपत्-पूर्व्वापरनिखिलज्ञाननिधानत्वादिति कृतान्तेन विरोधपरिहारो भवति। कथम्? ज्ञातृत्वं ज्ञेयाज्ज्ञातुर्भिन्नत्वं विना न सिद्ध्यति, तच्च परे न सम्भवति परिच्छेद्यत्वापातात्तेन तन्निरपेक्षज्ञेयसत्त्वाभावाच्च। न हि मननं विना ज्ञातृत्वं सम्भवति; मननञ्चाप्रतीतविषयप्रतीतये नियुङ्क्ते ज्ञाता, एतद्धि ज्ञानस्यापूर्णत्वं दर्शयति, न तस्य प्रवेशः परे तस्मिन्। न यदि ज्ञातृत्वं "सोऽकामयत बहुस्यां प्रजायेयेति, स तपोऽतप्यत, तपस्तप्त्वा इदं सर्व्वमसृजत यदिदं किञ्च" (तै २।६); "तदात्मानं स्वयमकुरुत" (तै २।७) इति साधननिरपेक्षसर्व्वजनकर्त्तृत्वमपि न सम्भवति। न केवलं ज्ञातृत्वे किन्तर्हि शक्तिमत्त्वेऽपि दोषः। कथम्? यन्नाभूत्तदकरोदिति क्रियातो निवृत्तिं प्रवृत्तिञ्च दर्शयति। क्रियाशक्तेरागमापगमावनित्यतां तस्याः ख्यापयतः। सा पुनः पूर्णस्य तस्य न स्वरूपशक्तिः, किन्तर्हि तटस्था "'देवात्मशक्तिम्' (श्वे १।३) देवतात्मना ईश्वररूपेणावस्थितां शक्तिम्" इति व्याख्यानान्मायोपाधिरूपत्वात्। मायास्वीकारात् ब्रह्मणः प्रथमनीश्वररूपमितिवदता स्वयं ब्रह्मणोऽनीश्वरत्वमुपस्थाप्यते, तेन च तस्य कारणत्वं व्याहन्यते। सर्व्वस्मिन् वेदान्ते ब्रह्मणएव कारणत्वं गीयते, सुतरामनीश्वरत्वं ख्यापयतापि तस्य सर्व्वकारणत्वं स्वीकृतम्, अन्यथा वेदान्तकृतान्तविरोधी प्रधानकारणवादः प्रसज्येत। एवं ब्रह्मणः सर्व्वकारणत्वे न कस्यापि वेदान्तवादिनोऽसम्मतिरितीदमेवाश्रित्य सिद्धान्तः सर्व्वसामञ्जस्यं सम्पादयतीति तमेवाश्रयामः। "कार्य्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म। तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्य्यस्यावगम्यते" (वे, सू २।१।१४ भा) इति श्रीमच्छङ्करोक्तिर्वेदान्तवादिषु न कमपि विरोधमुद्भावयति। एकन्तु कारणं ब्रह्म, तदन्यत् सर्व्वं कार्य्यम्। कार्य्यं व्यावहारिकं व्यवहारोत्पन्नम्। कस्य व्यवहारः? कारणस्यैकस्य ब्रह्मणएव। अतएव व्यवहर्त्तृत्वं तस्य सिद्ध्यति। एवं व्यवहर्त्तृत्वे सिद्धे तस्मिन्नव्याकृतभावेनावस्थितयोर्नामरूपयोर्व्याकरणमेव व्यवहारः, व्याकर्त्तृत्वेन च व्यवहर्त्तृत्वं तस्य। शक्तिर्न स्वरूपशक्तिः किन्तर्हि तटस्थेति सिद्धान्तः ब्रह्मणः कारणत्वस्वीकारे न न्याय्योपेत इति "नान्या नाप्यसती वा" (वे, सू, २।१।१८ भा) इति। "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वे, ६।८) इति ज्ञानञ्चान्तरङ्गं शक्तिञ्च तयोरैकत्वेन चिच्छक्तिरेवेयमिति न कोऽपि दोषः। शक्तेरागमापगमचिन्ता भ्रान्तिविजृम्भिता। तिरोधाविष्कारौ पुनस्तस्या न जात्वसत्त्वं प्रतिपादयेते। "बहु स्याम्" इति शक्त्याविष्कारः, तत्पूर्व्वं "ते यदन्तरा तद्ब्रह्म" इति तत्तिरोध इति तत्त्वविदः। अयं शक्ति-

विक्षेपोपसंहारवाद इति निम्बार्कीयाः। प्रकृतेरनन्तायाः सम्यगाविष्कारो न जातु सम्भवत्यतोऽस्या निरोधोऽपि परात्मनि विद्यतएव। अस्या निरोधांशेऽव्यक्तत्वमाविष्कारांशे व्यक्तत्वमिति नियत-मव्यक्ताद्यक्तिरूपाश्चष्टिस्त्रिषु कालेष्वपि कार्य्यरूपायाः सृष्टेः सत्त्वञ्चेति।

मायास्वीकाराद्ब्रह्मणः प्रथममीश्वररूपमित्यस्य तत्त्वाविष्करणेन व्याज्ञातत्वादिदोषपरिहारः। युगपत्-पूर्व्वापरनिखिलज्ञाननिधानं परं ब्रह्म ज्ञातज्ञानज्ञेयभेदशून्यमिति निर्देशे व्याकृताव्याकृतत्वं नामरूपयोः शक्त्याविष्कारनिरोधौ च न तस्मिन् किन्तर्हि जीवबुद्धावित्यायाति। ज्ञानवत्ताकारेण तस्मिन् विद्यमानस्यास्य तस्या प्रोज्ञावनं हि सृष्टिरतस्तदादौ परस्य जीवानुप्रवेशं वर्णयन्ति श्रुतयः। ब्रह्मणः सर्व्वशक्तिज्ञानसम्पन्नत्वेऽपि जीवं विना केन वा तदुपलभ्येतेति तस्येश्वरत्वं तदनुप्रवेशएव तद्बुद्धिगोचरो भवतीति वदति श्रुतिः—"एष सर्व्वेश्वर एष सर्व्वज्ञएषोऽन्तर्याम्येष योनिः सर्व्वस्य प्रभवाप्ययौ हि भूतानाम्" इति। परात्मपारिच्छन्नेषान्तर्वाच्यवेदनाशून्योऽयं जीवः प्रबोधे सर्व्वेश्वर-त्वादिकमनुभवत्यस्य प्रियत्वेनेति, तथोपन्यासः। सर्व्वेषामीश्वरत्वेऽपि सर्व्वज्ञानाधारत्वेऽपि सर्व्वेषां नियन्तृत्वेऽपि सर्व्वेषां कारणत्वेऽपि सर्व्वेषां प्रभवाप्ययस्थानत्वेऽपि तत्तन्नाम्ना व्याहरणं जीवेनेति न तुरीये किन्तर्हि जीवपरिच्छिन्नरि प्राज्ञे तत्तद्विशेषणानामुल्लेखः। न खलु परब्रह्मण्यविद्यमानानां सर्व्वेश्वरत्वादीनां जीवबुद्धावाकस्मिकी स्फूर्त्तिरिति वक्तुं शक्यम्, तत्स्फूर्त्तेः कारणान्वेषणे सर्व्वकारणे परब्रह्मण्येव तस्य विश्रान्तेः। अतएव "सर्व्वानुभूः" (२।५।१९) इति विशेषणं निरुपाधिकेऽपि वृहदारण्यके। सर्व्वेश्वरत्वादिकं मायिकमित्युक्ते स परात्मैव मायी, सा माया तदनन्या तत्-प्रकृतिस्तत्प्रज्ञा तच्छक्तिरिति ब्रह्मस्वरूपएव तस्याः प्रवेशं को निवारयेत। अतएव हि वृहदा-रण्यके—"रूपं रूपं प्रतिरूपोबभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश" (ऋक् ६म, ४७सू, १८ ऋक्) इत्युद्धृताया ऋचो व्याख्यानावसरे "मायाभिः प्रज्ञाभिः" इति वैदिकमायाशब्दस्य निरुक्तोक्तं प्रज्ञात्यर्थं भाष्यकार आदृतवान्। ऋगीयं यदुक्तमुपरिष्टात् तत्सर्व्वमनुगृह्णाति। रूप्यते शब्द्यतेऽनेनेति रूपम्। "सत्यं ज्ञानमनन्तम्" इत्यादिशब्दैः प्रख्यातं यत् तद्रूपम्। तस्य सत्यादिशब्दैः प्रसिद्धस्य रूपस्य प्रतिचक्षणाय प्रतिख्यापनाय जीवबुद्धिगोचरीकरणाय इन्द्रः परमैश्वर्य्ययुक्तः परात्मा रूपं रूपं शब्दविषयभूतं विषयं प्रति विषयं प्रति प्रतिरूपो—"ब्रह्मस्वभावो हि प्रपञ्चः" इति न्यायात्—यो यो विषयः सत्यादिषु यत् यत् रूपं प्रकटयति तत्तद्रूपो बभूव। एवं प्रतिरूपभवनेन स मायाभिः प्रज्ञाभिः विचित्रज्ञानकौशलैः पुरुरूपः एकः सन् बहुरूपः ईयते गम्यते—"बहुस्याम्" इति प्रतिज्ञानुसारेणैकमेवाद्वयं ज्ञानवस्तु विषयं प्रति विषयं प्रति भिन्नरूपेण प्रतीयते। चरमपादस्य ऋक्संहितासङ्गतव्याख्यानवारणाय वेदान्त आह—"अयं वै हरयः अयं वै दश च सहस्राणि च बहूनि चानन्तानि च" इति। हरयः इन्द्रियाणि तेषां विषयाश्चन्द्रार्कानिलादयश्च अयं परात्मा, तेषां तत्स्वरूपप्रभवत्वात् तद्व्यतिरेकेण तेषामसत्त्वात्। दश च सहस्राणि च बहूनि च अनन्तानि च विषयाणामसंख्येयत्वात्। "यदि हि नामरूपे न व्याक्रियेते तदास्यात्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत" इत्यनेनेममेवार्थं भाष्यकारोऽभिप्रैति। प्रततोऽवतपने यथा तपतीति तथा युगपत्-पूर्व्वापरनिखिल-ज्ञाननिधाने परात्मनि "स वेत्ति वेद्यं" (श्वे, ३।१९) "स तपस्तप्त्वा इदं सर्व्वमसृजत्" इत्यादि-लङादिप्रयोगस्तात्कालिकजीवानुभूतिमपेक्ष्येति सर्व्वं निरवद्यम्।

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा. ६।८।१।४) इति सर्व्वकारणं ब्रह्मैव सत्यं सर्व्वं विकारजातमनृतमिति सिद्धे "ते यदन्तरा तद्ब्रह्म" (१।१९) इति नामरूपयोस्तस्मिन् नित्यस्थितिर्व्याहन्यते। "मृत्तिकेत्येव सत्यम्" इति निवचनेन तदन्यत्सर्व्वविकारोऽनृत इति सिद्धान्तं "सर्व्वञ्च नामरूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव" इति श्रीमच्छङ्करोक्तिः परिशोध्य सर्व्वेषां वादिनां मतसामञ्जस्यं विदधातीति वितर्केणालम्। ब्रह्मणि नित्यस्थितयोर्नामरूपयोस्तेजोबन्नत्वेन स्थूलत्वमेव श्रुतिरनुमोदते न पुनः सूक्ष्मत्वमिति न भ्रमितव्यम्। तेजोबन्नसर्ज्जनकथनात्, "पृथिवी च पृथिवीमात्रा च" इत्यादि कथनाच्च तयोर्ज्ञानमात्राकारत्वमेव साधयति सा, सुतरां परात्मैव तन्मूलप्रकृतिस्तयोर्निस्तद्बीजमिति (१।४।२३—२७) वेदान्तकृत्सान्तः। विश्वे विराजमानः परात्मा प्रथमतस्तयोर्योगेनैव बुद्धिविषयीभवतीति तदात्मा स प्रथते जीवसन्निधौ। न खलु स्थूलेन्द्रियजातं मनो विना स्वविषयान् ग्रहीतुं शक्नोति, अतः स्थूलजगन्निरपेक्षमाणसव्यापारः स्वप्नएव मनसः साक्षात्प्रमाणमिति तस्मिन् ज्ञानमात्रप्रतिभाननिमित्तं तैजसनाम्ना परात्मा ख्यायते। स्वप्नोऽयं जीवसृष्टिरथवा ब्रह्मसृष्टिरित्यत्र (३।२।१—६) मतभेदोऽकिञ्चित्करः। दृष्टानुभूतविषयाणां स्वप्नाकारेणोपस्थितिः केवलजीवकर्त्तृकेण चेत् सर्व्वकारणस्य कारणत्वं व्याहन्येत। अतएव श्रीमच्छङ्करोऽप्याह—"न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्व्वेश्वरत्वात् सर्व्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः। पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गोवियदादिसर्गवदित्येतावत् प्रतिपाद्यते।" (३।२।४ भा) इति। तुरीयस्य प्राज्ञस्य च तत्त्वमेवमुक्तं गीतायाम्;—

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः।
यः सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति॥ (गी, ८।२०)

इति प्रकृतेर्जगदभिव्यक्तावपि तदतीतत्वेनाव्यक्तं ज्ञानाद्यविषयं नित्यमविनाशि सत्तामात्रं तुरीयं परतत्त्वमवतिष्ठते, अन्यथा जगदभिव्यक्तौ तस्य निःशेषता, जीववत् जगच्छरीरे बद्धत्वं, बद्धत्वे पुनस्तन्नियन्तृत्वे तत्क्रमिकाभिव्यक्तौ चासामर्थ्यञ्च तस्मिन् प्रसज्यते। अतएवाह ऋक्—"पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि।" (१०म, ९०सू, ३ ऋक्) इति।

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम॥ (गी ८।२२)

इति योऽसौ सर्व्वमात्मन्यन्तर्भूय परिव्याप्य च विद्यमानः सोऽयं परमपुरुषः प्राज्ञ इत्याख्यायते। परात्मनः सर्व्वातीतत्वं सर्व्वञ्चात्मन्यन्तर्भूय व्याप्य च स्थितिमत्त्वं युगपदेव तस्मिन् विद्यतइति पक्षमेकं परिहाय पक्षान्तरमाश्रित्य वादिनां विवादोऽपारमार्थिकः। एकस्य परात्मनः जगति जीवे च तदतीतत्वेन च स्थितौ नामभेदेन ग्रहणं जीवबुद्ध्यनुग्रहार्थं दर्शनकाले व्यवहितताव्यवहितत्वज्ञापनार्थञ्च, न तु तस्मिन् कोऽपि पारमार्थिको व्यावहारिको वा भेदोऽस्ति (३।२।११—२१)। बुद्धिभेदेन दर्शनतारतम्यं गीतायामुक्तम्। तद्यथा,

सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्॥

यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम्॥ (गी, १८।२०—२२) इति।

"एकात्मप्रत्ययसारम्" इत्यनुरूपं यज्ज्ञानं जगति जीवे तदतीतभूमौ चैकमेव परात्मानं पश्यति, तत् सात्त्विकम्, यत् पुनर्विश्वतैजसादिभेदस्य परात्मनि तात्त्विकबुद्ध्या तद्भेदेन तं पश्यति तद्राजसम्; यत्तु मृच्छिलाखण्डादावीश्वरबुद्ध्या तदन्यच्च न तं पश्यति, तदतिरिक्तं जगज्जीवञ्च तदधिष्ठानवर्ज्जितत्वेनावमन्यते, तत् तामसमिति विवेकः। आत्मेति शिव इति प्रपञ्चातीत-प्रज्ञानघनकल्याणघनरूपस्य बुद्धिगोचरीकरणोपायभूतत्वेन परापरप्रकृतिसम्भूतं जगज्जीवञ्चा-गृहीत्वा परात्मन्युपहितानुपहितादिभेदबुद्धिर्यैरनुमन्यते तस्मिन् भेदस्याविद्याकृतत्वं मन्यमानैः, तैरजोगुणप्रेरणया लौकिकसिद्धान्तएव तात्त्विकत्वेनोपस्थाप्यते; यतो न जातु परात्मन्यविद्या-संस्पर्शः सम्भवति रजस्तमोऽनुविद्धे जीवएव तस्याः प्रादुर्भावात्। सेयमेकस्मिंस्तस्मिन्नखण्डे भेदबुद्धिं जनयति। न वयं भेदस्याविद्याकृतत्वं किन्तर्हि मायाकृतत्वमनुमोदयाम इति चेन्न, माया प्रज्ञा वा न हि मिथ्याभूतस्य जनयित्री स्वस्वरूपविच्युतिप्रसक्तेः। अतः प्रज्ञारूपमायाविरोधिन्यविद्यैव सेति वक्तुं युक्तम्। चेदेवं कथं "सत्यञ्चानृतञ्च सत्यमभवत्" (तै २।६) इति। "असद्वा इदमग्र आसीत् ततो वै सदजायत" (तै २।७) इत्यत्रास्य तत्त्वमन्वेषणीयम्। अनृतमसदभावात्मक-मसाकल्यमव्यक्तम्। ततः सतो भावात्मकस्य स्वरूपानुप्रवेशस्यागमो व्यवहर्त्तुर्व्यवहारात्। यद्येवं न स्यात्, भवेद्व्यवहर्त्तुर्व्यवहारविच्छेदः। यथा शाण्डिल्यसूत्रभाष्ये श्रीमत्स्वप्नेश्वर आह— "नापि भगवान् बादरायणः क्वचिदपि सूत्रे संसारस्याज्ञानकल्पितत्वमुक्तवान् प्रत्युत स्वप्नसृष्टिनिरा-करणेन जाग्रत्सृष्टेः सत्यत्वम्" इति, तथेदमपि वक्तुं शक्यं यत्, न स क्वचिदपि सूत्रे परात्मन्युप हितानुपहितत्वादिभेदमुदजूघुषत्। अखण्डे खण्डबुद्धेर्जनयित्री सैषाविद्या तत्त्वज्ञानेन बाध्येति तत्त्वजिज्ञासा तदुपायभूतवेदान्तपर्य्यालोचना च।

सर्व्वातीते तुरीये परात्मनि आत्मेति शिव इति विशेषणद्वयं जीवानुभूतिगोचरं तं करोतीति प्रज्ञानघनरूपत्वं कल्याणघनरूपत्वं न केनापि वादिनाऽनादरणीया। अनयोर्न हि सत्वाख्याकेः संवादो यथा सत्तामात्रेण वस्तुज्ञानापेक्षया तन्मूलस्वरूपज्ञानस्य वैशेष्यं दर्शयति तथा वेदान्तेषु सर्व्वत्रेति न चित्रम्। न हि जातु वस्तुसत्ता तत्स्वरूपमन्तरेण बुद्धौ प्रतिभातीति सर्व्वजनानुभवः केनापि तर्केणापसारणीयः। शक्तिर्व्वा चैतन्यं वा शिवापरनामानन्दो वा नियतं सत्तासाहचर्य्यं भजतइति सच्चिदानन्दं ब्रह्मेति सर्व्वेषां वादिनामैक्यभूमिः। सत्यैक्ये वितण्डा दृष्टिकालुष्यं व्यनक्तीति विद्वद्भिः सर्व्वथा सा परिहार्य्या। नैतानि विशेषणानि किन्तर्हि स्वरूपाणीति सूक्ष्मविचार एकेषा-मागन्तुकत्वादस्थायित्वमपरेषां वस्तुगतत्वात् स्थायित्वं पारमार्थिकत्वं दर्शयतीति नातिगम्भीरः, अतो द्विविधं हि विशेषणं वस्तुगतमागन्तुकञ्चेति भेदसाधने न कापि बाधा। वस्तुगतं वस्तुस्वभावक विशेषणं हि स्वरूपम्, आगन्तुकन्त्वन्यथा विपरिवर्त्तनसहत्वात्। न हि सादृश्यं वैसादृश्यञ्च विना वस्तुपार्थक्यज्ञानं जातु सम्भवति। तत्तु वस्तुगतैरागन्तुकैश्च विशेषणैः सिद्ध्यति। आधुनिकैः प्रमाणितं शुक्लत्वादीनामागन्तुकत्वं शक्तेरेव वस्तुत्वञ्चेति सिद्धान्ते सर्व्वथा शुक्लत्वादीनामपार-मार्थिकत्वं न भवति, यतः स्वतोऽनृतत्वेऽपि शक्त्यात्मना तु तेषां सत्यत्वं न केनापि वादिनापनेतुं शक्यम्। यदि हि न शक्तौ वैचित्र्यं स्यादन्यत्र तत् संक्रामणं कुतो वा सम्भवेत्। शक्ति-

चिच्छक्तिरिति पूर्व्वमेव प्रतिपादितम्, सा परात्मनोऽनन्या नासतीत्यप्युक्तम्। शक्तिवैचित्र्याणि जगति प्रकाश्यमानानि तत्तद्विशेषणत्वेन परिगृह्यन्तानि। शक्तिरेव सती तद्वैचित्र्यसम्भूतानि विशेषणान्यसन्तीति वक्तुं न युक्तम्। प्रज्ञानघनाव्यक्तरूपप्रख्यापनार्थं यदि नामरूपव्याकरणं, तदात्मशक्तिवैचित्र्यख्यापनार्थं शुक्लादीनां पदार्थेषु संक्रामणमिति कोऽत्र दोषः। नामरूपव्याकरणमेव वैचित्र्यख्यापनमित्युक्तेः शुक्लादीनि रूपाणि तत्तद्वाचकानि नामानि च तत्तत्पदार्था इति सिध्यति। न वयं तत्र श्रौतसिद्धान्ते विवदामः प्रज्ञानघनाच्छक्तेरनन्यत्वात्; विषयवैशद्याय नामरूपव्याकरणवैचित्र्यख्यापनयोः प्रतियोगितया ख्यापनमात्रमस्माकमभिप्रेतम्। एवं सविशेषनिर्व्विशेषवादिनां विवादोऽप्यपास्तः। यतः परात्मनि स्वगतभेदसाधकविशेषत्वविरहेऽपि स्वात्मशक्तिसम्भूतजगज्जीवयोः भेदसाधकविशेषत्वमस्त्येव। व्यावहारिकन्तदिति न तस्य पारमार्थिकत्वहानिस्ततएव व्यवहारप्रवृत्तेर्व्यवहारस्य च नित्यप्रवृत्तत्वात्। अतएव हि "यत्तावज्जीवेशव्यवहारो न स्यात् निर्व्विशेषत्वादिति तन्न, व्यावहारिकधर्म्ममादायैव तद्व्यवहारोपपत्तेः, परमार्थत एतद्व्यवहाराभावे बाधकाभावात्" इति मिताक्षरब्रह्मसूत्रविवृतिकृदुक्त्या नेयमवरुद्ध्यते। "पारमार्थिकस्तु नायं सन्ध्याश्रयसर्गो वियदादिवत्" इत्युक्त्वा "न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति" (३।२।४ भा) इति श्रीमच्छङ्करोक्तिः स्वतोऽनृतत्वं सदात्मना तु तस्य सत्यत्वमिति स्वीकारान्न विवादकोटिमारोहति। जीवो नियतमात्मतः परात्मनो विशेषत्वं पश्यन् तत्स्वरूपभूतं सत्यज्ञानादिकमनुभवविषयीकरोति, तत्तत्स्वरूपात्मस्वीकरणेन च स्वात्मस्थितान् तत्तद्बिन्दून् विपुलीकरोतीति कोऽत्र विवादविषयः। अनेन पुनः "सत्तामात्रेण वस्तुज्ञानापेक्षया तन्मूलस्वरूपज्ञानस्य वैशेष्यम्" इति यदुक्तमारम्भे तदनवद्यम्। प्राज्ञालिङ्गितजीवस्य नित्यत्वं तेनैक्यं सम्यगैक्येऽपि हृकृन्मत्यादेरविलुप्तत्वञ्च वेदान्ते सुव्यक्तमिति तद्विचारोऽलम्। जीवात्मनो हृकृन्मत्यादेरविलुप्तत्वेऽपि क्रियाशीलत्वेऽपि च कथं न प्रकृतिपरमपुरुषाभ्यां विभक्तत्वं द्वितीयत्वञ्चास्येति जिज्ञासायां—"कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति" (गी ४।२०) इतिवत् सर्व्वथातद्विरोधित्वपरिहारादात्मकर्त्तृत्वनिर्लोपि प्रकृतिनियन्तुः परात्मनः कर्त्तृत्वमात्रस्फूर्त्तेः नेति। कथमकर्त्तुः कर्त्तृत्वम्? सर्व्वकारणत्वात्; अत्यन्ताविक्रियत्वेऽप्यन्यत्र क्रियासञ्चारणात् कारणत्वन्तस्य।

६। षष्ठे पुनर्निरुक्तरीत्योपस्थितेन सिद्धान्तेन स्यावादिना विरोधनिष्पत्तिरिति तमेवात्र परिगृह्य तत्त्वं निरूपयामः। न हि खलु जीवमननुप्रविश्य सृष्टेः सम्भावनास्ति। अतएव जीवपरयोरैक्यत्र प्रदर्शनेदं प्रकरणं निबद्धमिति मिताक्षरब्रह्मसूत्रविवृतिकारवचनं वयं बहु मन्यामहे। "ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। (तै २।१)" इति जीवपरात्मनोरैक्यत्र स्थितिरस्मिन् प्रकरणे प्रधानतयोपतिष्ठते। परमे व्योम्नि हार्द्दाकाशे गुहायां निहितं सत्यं ज्ञानमनन्तं ब्रह्म यो वेदेति कथनात् जीवात्मनि तत्परिच्छन्नत्वेन विद्यमानं ब्रह्मैवात्राभिधेयम्। 'तस्माद्वा एतस्मादात्मनः' इत्यत्र तदेव ब्रह्म एतमेव जीवात्मानं परिच्छन्नेनाभिन्नतदैक्येनैवात्मशब्देनाभिदधाति श्रुतिर्यथा माण्डुक्ये (५।२) यथा च बृहदारण्यके (२१।२)।

सत्येवं पञ्चस्वन्नमयादिपर्व्वसु परमात्मालिङ्गितो जीवएवाभिधेयो भवति। ततो "ब्रह्मविदाप्नोति परम्" इत्युपक्रमः, "सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यत्र चरितार्थः, न पुनः पर्व्वसु पञ्चसु तस्य प्रसरइत्यायाति, तत्र तत्र परालिङ्गितजीवस्यैव प्राधान्यात्। न हि जातु मोक्षपरा श्रुतिः कुत्रचित् परिच्छिन्नरप्राधान्येन जीवस्य प्राधान्यं स्थापयति, यद्येवं स्यात् "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्" इति जीवात् परात्मानं पृथक्कृत्य तमेव ग्रहीतुं न कोऽपि शक्नुयात्। यद्यन्नमयादिषु सर्व्वेष्वेव साक्षाद्ब्रह्मत्वात्मत्वेन ग्रहणीयम्, तदैकस्मादन्यस्यान्तरतमत्वकथनेन चरमे पर्व्वण्यानन्दमयस्य ब्रह्मत्वनिरूपणं सुनक्ती भ्रान्तिरेव। न हि सर्व्वेषूपाधिषु ब्रह्माविर्भावदर्शनं समानं जीवसन्निधौ तत्तदुपाधिव्यवहितत्वात् स्वात्मनि त्वव्यवहितत्वात् तत्रैवापरोक्षदर्शनमभिदधाति श्रुतिः "तत्त्वमसि" इत्यादिवाक्यैः। अतः परात्मालिङ्गिते जीवे स्वस्मिन्नात्मपरिशोधनेन ब्रह्मदर्शनमपरोक्षं भवतीति तत्साधनाय कल्पितानां पर्व्वाणां तारतम्येनान्तरत्वमुक्त्वा चरमे कोष आनन्दमये सर्व्वान्तरत्वमुच्यते। "एकात्मप्रत्ययसारम्" इति श्रौतन्यायेन सर्व्वेषु पर्व्वस्वेक एवात्मा ब्रह्मेति "असन्नेव" इति मन्त्रादनन्तरं "तस्यैषएव शारीर आत्मा यः पूर्व्वस्य" इति निर्व्वचनम्। प्रथमे द्वितीये पर्व्वणि ब्रह्मोपासनं तस्मिंस्तस्मिन्नुक्त्वा तृतीये चतुर्थे पञ्चमे च तद्वेदनमेवोक्तमित्येतत्त्रितये न किमपि तारतम्यमस्तीति न वाच्यम्। तृतीये ब्रह्मणो मनोऽतीतत्वकथनेन तत्रानन्दस्फूर्त्तौ, चतुर्थे त्वनुष्ठिते कर्म्मणि ब्रह्मकर्म्मसमाधिना प्रमादनिवृत्तिः पापपरिहारः सर्व्वकामावाप्तिरिति तद्द्वारकेण वेदनमिति पञ्चमोक्ताद्वेदनात्तयोरस्य विशेषः। पञ्चमे तु "अस्तीति ब्रुवतोऽन्यत्र कथन्तदुपलभ्यते" इति श्रौतन्यायेन वेदनमत्र साक्षाद्दर्शनमिति ज्ञेयम्। आनन्दमयो न आनन्दआनन्दएव ब्रह्म, अत आनन्दमयोजीवएवेति सिद्धान्तो न रुचिरो माण्डुक्ये जीवपरिष्वक्तर्य्यानन्दमय इति विशेषणदर्शनात्। तुरीये 'न प्रज्ञानघनः' इति कथनान्न जीवपरिष्वक्ता ब्रह्मेति भणनम् "एकात्मप्रत्ययसारम्" इत्यनेन विरोधमुद्भावयतीति जीवप्रकृतेस्तुरीये तस्मिन्नविभक्ततया स्थितिप्रदर्शनार्थं परिष्वक्तृत्वास्वीकारस्तस्मिन्निति तत्त्वम्। आनन्दभुक्त्वं तस्यानन्दाद्ब्रह्मणः स्वातन्त्र्यं दर्शयति, योऽसावानन्दभुक् स एवानन्दमय इति निरुपाधिकादात्मनोऽस्य भेद इति चेत्, न; बिम्बतेजसयोरेकोगदिंग्रतिमुखवत् चेतोमुखेनानन्दसम्भोगो न परिष्वक्तरि किन्तु तद्भावापन्ने जीव एवेति—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति॥" (ऋक् १म, १६४सू २०ऋक्) इति परिष्वक्तानन्ददाता जीवस्तद्भोक्ता च पक्षित्वेन रूपित इति तत्त्वम्। एवमप्यानन्दमयो ब्रह्मेति न सिद्ध्यति, यतो जीवेऽप्यानन्दसंक्रमणात्तस्यैवानन्दमयत्वम्। आनन्दभोक्ता ब्रह्मानन्दमय इति न सिद्ध्यति दातृत्वभोक्तृत्वभेदविलोपात्। ननु प्रज्ञानघनएवानन्दमय इति जीवपरयोरेकत्वे तयोरानन्दमयत्वं भोक्तृत्वञ्चोभयमिति? नैवम्, परे न जातु भोक्तृत्वं सम्भवत्यतो दातृभोक्तृभेदस्यापरिहार्य्यत्वात् तयोरेकत्वेन प्राज्ञइत्यभिधानत्वेऽपि तत्तद्विशेषणयोगात् जीवपरयोरेकभावस्थितिमात्रं व्यज्यते। हि यस्मात् आनन्दभुक् चेतोमुखः, अतएवानन्दमयः प्राज्ञइति वचनन्तु दर्शयति जीवसम्बन्धवशात् आनन्दमयस्यैव प्राज्ञइति संज्ञा। आनन्दइत्यनुक्त्वानन्दमयइत्युक्तिः पुनः सम्भोगकाले प्राचुर्य्यमुच्छ्वसितत्वमानन्दस्य जीवेनानुभूयत इति ज्ञापयति। न हि खलु पुनः पुनरुक्तिरानन्दमयमधिकृत्य किन्त्वानन्दमित्यभ्यासासिद्धत्वादानन्दमयो न ब्रह्म भवितुमर्हतीत्युक्तिर्

दर्थिता ; जीवकृतानन्दप्राचुर्य्यानुभवेन न जीवपरिच्छिन्नत्वस्यानन्दत्वं व्याहन्यते ; जीवस्यैवात्र तदनुभवे-नान्तर्यामित्वानन्दस्वत्वसम्भावना न तत् परिच्छिन्नत्वम् इत आनन्दएवानन्दमय इत्यन्यथानन्दपदेनानन्द-मयस्याभ्यासत्वं को निवारयेत ? मयटा ( पा, ५।४।२१ ) प्रस्तुत आनन्दएवोच्यते प्राचुर्य्यं वोक्तहेतोरिति न कोऽपि दोषः। ये तु पञ्चपर्व्वसमापनानन्तर "अथातोऽनुप्रश्नाः" ( तै, २।६ ) इत्यथशब्दबलेन जीवतत्परिच्छिन्नप्रधानात् पञ्चपर्व्वप्रकरणादस्य साक्षादानन्दप्रधानप्रकरणस्य सम्बन्धविच्छेदं मन्यन्ते, ते प्रकृताया उपनिषद आद्यन्तमध्ये आनन्दस्वरूपोपव्याख्यानत्वं ( १।१।१३—२० ) नेक्षन्ते। "आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दं शान्ति-समृद्धममृतम्" ( तै १।६।२ ) इत्युपक्रम्य मध्ये "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आनन्दमयः ( २।५ ) ; "रसो वै सः। रसं ह्येवायं लब्ध्वानन्दीभवति। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एषह्येवानन्दयाति ( २।७ ) ; अन्ते "आनन्दो ब्रह्मेति व्यजानात्" ( ३।६ ) "एवमानन्दमयमात्मानमुपसंक्रम्य" ( ३।६।१० ) इति। आनन्दमयो जीवः "ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्रत्यं पुच्छं ब्रह्मैव प्रधानमिति ब्रह्मपुच्छवादं न वयं बहुमन्यामहे, श्रुतिप्रक्रमभङ्गात् सूत्राक्षरविरोधित्वाच्च। युक्तायुक्तविचारोऽस्य मिताक्षरब्रह्मसूत्रविवृतौ द्रष्टव्यः।

अन्नमयादिषु "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्मपुराणमग्र्यं मनसैवाप्तव्यम्॥" ( वृह ६।४।१८ ) इत्यनुरूपमन्ने प्राणे मनसि बुद्धौ जीवे च तत्तच्छरीरकमात्मानमन्तर्यामिणं पश्यता तन्मननचिन्तनोपासनं प्रकरणस्यास्याभिप्रायः। इयांस्तु विशेषः—अन्नमये—अन्नरसपरिपुष्टेष्वङ्गेष्वन्नस्यान्नत्वेन पोषयितृत्वेन ब्रह्मसान्निध्यपरिचिन्त-नम्। अतएव तैस्तैरङ्गैर्जीवपरयोरैक्यस्थितिप्रदर्शिपक्षित्वारोपणम्। एवमन्यत्र। ऋग-प्येतत् साधनमनुमोदते, तद्यथा—'अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः॥" ( ऋक् १०म, ६०सू, १२ऋक् ) इति। प्राणमये—शरीरस्यास्य भिन्नभिन्न-देशेषु भिन्नभिन्नाकारेण प्रकाशमानासु प्राणक्रियासु प्राणस्य प्राणत्वेन जीवनधारयितृत्वेन ब्रह्म-सन्निधिं परिचिन्त्य प्राणक्रियापरिपोषिकायां पृथिव्यां प्राणरूपिब्रह्मसन्निधानविमर्शनम्। अतएव "प्राणोह्येष यः सर्व्वभूतैर्विभाति" ( मु ३।१।४ ) इति। मनोमये यजुराद्यध्ययनविषयेषु मनसो मनस्त्वेन चेतयितृत्वेन वागतीतब्रह्मपरिचिन्तनं तज्ज्ञानितानन्देन च विगतभयत्वम्। विज्ञानमये—ब्रह्मकर्म्मसमाधानोपयोगिमनोवृत्तिषु सर्व्वबुद्धिविज्ञानकारणे मनोधर्म्मे महत्त्वे च "विज्ञानमानन्दं ब्रह्म" ( वृह, ५।६।२८ ), "बुद्धिर्बुद्धिमतामस्मि" ( गी ७।१० ) इति बुद्धेर्बुद्धित्वेन बोधयितृत्वेन, जीवपक्षे—प्रज्ञानघनत्वेन ब्रह्मदर्शनम्। आनन्दमये—आनन्दस्य भिन्नभिन्नाभिव्यक्तिषु प्रियादिषु सर्व्वान्तर्भावकं तत्तदभिव्यक्तिमूलं ब्रह्माणि च "विज्ञानमानन्दं ब्रह्म" इति स्वात्मनि, पक्षान्तरे—जीव-परिच्छिन्नेऽपि साक्षादानन्दघनब्रह्मदर्शनम्। आनन्दघनत्वपरिग्रहाय सर्व्वान्तर्भावकत्वेन तत्तदभि-व्यक्तिमूलत्वेनात्र ब्रह्मभावनात् ब्रह्मपुच्छवादस्य साधनपक्षे सामञ्जस्यमिति सर्व्वमवदातम्।

७—२३। आपरिसमाप्तेर्ब्रह्मणः सर्व्वगतत्वं प्रसङ्गतः सर्व्वातीतत्वञ्चाभिधायैकस्योपासनाया-मन्यस्य च ज्ञानपरिग्रहावुपयोगितां दर्शयन्ति श्रुतयः। यद्यपि वेदोक्तकर्म्माण्यवधीरयन्ति ताः, तथापि तदुक्तान् देवान् "एकं सद्विप्रा बहुधा वदन्ति" (ऋक् १।१६४।४६) इति वैदिकन्यायस्यान्ति-क्रमणीयतयैकस्यात्मस्वरूपप्रकाशस्थानत्वेन स्वीकृत्य स्वासाधारणाध्यात्मिकविषयेषु च ब्रह्मानुसन्धानं

तच वीक्षयित्वा सर्व्वगतत्वमेव ब्रह्मणः सर्व्वत्र स्थापयन्ति। "एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" (तै, २।७) इति श्रुतेः प्रकाशस्थानानि दृष्टितोऽपसार्य्य सर्व्वत्र ब्रह्मग्रहणस्य प्राधान्यमिति, आदित्ये, अग्नौ, वायौ, प्राणे, पृथिव्याम्, आकाशे, अन्तरिक्षे, दिवि, समुद्रे, चन्द्रे, विद्युति, गायत्र्यां, ज्योतिषि, तमसि, हृदये, चक्षुषि, श्रोत्रे, दिक्षु, मुखे, नाभि, वाचि, मनसि, सङ्कल्पे, चित्ते, ध्याने, विज्ञाने, बले, अन्ने, अप्सु, तेजसि, स्मरे, आशायाम्, इत्यादिष्वभेदेन ब्रह्मदर्शनमभिदधाति। सर्व्वाण्येतान्यन्तर्भूय भूम्नि, अहम्, आत्मनि सर्व्वगतत्वेन दर्शनं परिसमापयन्ति। आदित्ये हिरण्यश्मश्रुत्वादिकल्पनमगनुसरणेनेति नैतदतिचित्रम्। ये पुनरिदमनुसृत्य परब्रह्मणोरूपवत्त्वं स्थापयितुं यतन्ते, तान् "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" (३।२१) इति वेदान्तानुमोदिता ऋक् प्रज्ञानघनरूपत्वस्वीकारे कालयतीति वृथा वाग्वितण्डया। अत्राह मिताक्षरसूत्रवृत्तिकृत्—"जन्मादिसूत्रे नित्यानपायिविग्रहविशेषस्यापि ब्रह्मणि नित्यज्ञानानन्दादिवत् साधनात् सर्व्वत्रापि परब्रह्मविद्यासु विग्रहविशेषस्यापि सौन्दर्यादिपदग्राह्यस्यानन्दादिवदुपसंहारः कार्य्यएवेति तत्तावदसङ्गतम्। निष्कलस्य ब्रह्मणो विग्रहविशेषे मानमेव नास्तीति जन्मादिसूत्र एव वक्ष्यमाणत्वात्, 'अशरीरस्य ब्रह्मणः' इत्यादि मैत्रायणीयादिश्रुतिविरोधात्; सगुणस्य ब्रह्मणो मायावशतः कार्य्यविशेषे विग्रहसम्भवेऽपि तस्य मायिकत्वेन नित्यानपायित्वायोगात्, केवलचिन्मयनित्यानपायिविग्रहविशेषस्य शशशृङ्गकल्पत्वात्।" "ऐशहैरण्यगर्भादिप्रविभागमजानन्तो विष्णुरेव जगत्कारणं न शिवो जीवत्वात्, शिवएव जगत्कारणं न विष्णुर्जीवत्वादित्यादिवादान् कुर्व्वन्तः परास्ताः।" इति। प्रस्थानान्तरगताः शिवविष्णुनारायणादयो न वेदान्तसूत्रविषया इति सएव सुस्पष्टमवोचत्, तद्यथा—"किञ्च मुख्यब्रह्मत्वे विधेये प्रकरणे विद्यते सति मध्येऽकस्मादानन्दमये गौणब्रह्मत्वपरब्रह्मपदयोजनमनुचितमेव। यच्च शैवैरेव 'नेतरोऽनुपपत्तेः' इत्यादिचतुःसूत्रीं महानारायणपरतया नीत्वा विहृतं तदेतदयुक्तम्, नारायणोपनिषद्गतवाक्यस्येह प्रतीकत्वेन ग्रहणादर्शनात्, तदुपनिषत्परत्वेन नेतुमशक्यत्वात्; श्रुतिविवरणपरतत्तदधिकरणेषु प्रथमं तत्तच्छ्रुत्यवयवावलम्बदर्शनात्। न चानन्दवल्लीभृगुवल्ल्यनन्तरमेव महानारायणपाठदर्शनेनानन्दवल्ल्यामानन्दमय इति प्रतीकस्य ग्रहणान्महानारायणस्याप्यानन्दमयविचारसन्दष्टत्वेन विचारात् पृथक्प्रतीकग्रहणाभावेऽपि न दोष इति वाच्यम्। महानारायणस्य भिन्नप्रस्थानत्वेन विना प्रतीकग्रहणमिमानि सूत्राण्येतदुपनिषत्पराणीति निर्णयायोगात्।" इति।

अत्र भिन्नभिन्नवेदान्तवचनसंघे यद्यदवश्यवक्तव्यमस्ति संक्षेपतस्तत्तद्दिङ्दर्शनरूपतया निबध्यते। तत्र सप्तमेऽष्टमे (७।८) कथं वादित्यस्य हिरण्यश्मश्रुत्वादिकल्पनं तदुक्तम्। अत्र देवलोकानां मनुष्यलोकानाञ्च बहुलं यन्निरूपितं तेन पुनर्लोकविषये कोऽसौ सिद्धान्तः स्वतउपतिष्ठते दर्शयिष्यामस्तत् गतिवल्ल्याम्। नवमस्य च (९) लोकसम्पर्कीया विवृतिस्तथैव। दशमे (१०) पूर्व्वत्र परत्र च कारणधर्म्मो यस्मिन्नेव प्रकाशते तद्दृष्टितोऽपसार्य्य ब्रह्मैव तन्नाम्ना ख्यायते वेदान्तेषु। यैः पुनः "नामधा एकएव" इत्यभियोक्तृसमुदाहृतश्रुतौ नामधेति विशेषणं नाम्नां प्रेरकसञ्चारणपोषणकारणत्वादिति व्याख्यायते, तैरपि स्वीकार्य्यं कारणधर्म्माणि परापरप्रकृतितदधीशयोरेकत्वमनुभूयात्मनाभेदोपलब्धिर्यदीदिति तदा नामसमं रकस्याप्यभेदपरिग्रहोभवतीति। कथमिति

जिज्ञासायामस्तत्कारणधर्म्मापसारणेन नामाऽर्थग्रहणं सद्भिलुप्यत इत्युत्तरम्। आकाशादिशब्दमाना-न्नामेव ब्रह्मत्वेन परिग्रहो वेदवेदान्तेषु समानः। तत्र तत्र ब्रह्मिज्ञानादिकमनुभूयमानं यदा तद-न्तरङ्गेणानन्येन सङ्गतं प्रतिभाति तदा सर्व्वं नामरूपादिकं तिरोधत्ते साक्षात्परमात्माऽऽत्मसन्निधौ प्रकाशते। चतुर्द्दशे (१४) लोकसम्पर्कीया विश्वतिर्गतिवक्त्राम्। सप्तदशे (१७) भूमानं स्फूटीकर्त्तं यतो यत्नूयो यथाक्रमं तत्प्रदर्शनम्। न खल्वानन्दं स्वयं भासमानमपि कस्यापि चिन्तायत्तम्। एवं सति कथं स्यान्नामरूपतिरोधानेन साक्षात् परात्मप्रकाशः? भूमत्वेन, सर्व्वतोविसारित्वतया ग्रस्तत्वात् चिन्तायामिरवकाशत्वेन। एवमहमुपदेशे चात्मोपदेशे च।

अष्टादिशोनविंशयोः (१८।१९) पूर्व्वत्र च आकाशस्य ब्रह्मत्वेन परिग्रहो विस्पष्टः। गौरूप-स्याकाशस्य ब्रह्मलिङ्गत्वेन ग्रहणं साधकानां व्यवहारः। नात्र बौद्धानामपि विमतिरस्ति। कथमेवं ग्रहणमाकाशस्येति जिज्ञासायां—निखिलप्रपञ्चतिरोधानेन ब्रह्मसत्तापरिग्रहे सा गौरूपापि सर्व्वतः प्रकाशमानाऽन्तर्व्वाह्यमापूर्य्य साधकमालिङ्गन्ती निरुपमामिमां बुद्धिगोचरीकर्त्तुमाकाशे-नास्या उपमेति—तन्निवृत्तिः। तस्यां सत्तायां समग्रं विश्वं भूतजातञ्च प्रकाशत इत्यतोऽप्युप-मायास्तस्याः साधुत्वम्। भाष्यकारोऽप्याह—"आकाशो वै इत्यादि ब्रह्मणो लक्षणनिर्द्देशार्थम्। आध्यानायाकाशो वै श्रुतिषु प्रसिद्ध आत्मा। आकाशवदशरीरत्वात् सूक्ष्मत्वाच्च स चाकाशो नाम" इति। "दहरोऽस्मिन्नन्तराकाश इति लक्षणनिर्द्देशस्य प्रकृतोपयोगं दर्शयति आध्यानाय" इति भाष्यव्याख्याता। स पुनः "ते यदन्तरा तद्ब्रह्म" इत्यंशं प्रथमं प्रथमाद्विवचनान्तत्वेन गृहीत्वा "ते नामरूपे यस्य अन्तरा मध्ये वर्त्तेते" इति व्याख्याय पश्चात् षष्ठ्यर्थद्वितीयाद्विवचना-न्तत्वेन "तयोर्नामरूपयोरन्तरा मध्ये यत् नामरूपाभ्यामस्पृष्टम्" इति व्याख्यातवान्। अनन्तस्य ब्रह्मणो निरवकाशत्वान्नामरूपयोरन्तर्बाह्यं तेनापूर्णमित्येकतरव्याख्यानेनोभयसिद्धत्वेऽपि विस्प-ष्टार्थमिदम्।

विंशे (२०) तेजोवन्नं मूर्त्तं वायुश्चान्तरीक्षं चामूर्त्तम्। निखिलं जगत्तोऽोमयं चक्षुरादि-ग्राह्यं, तस्मिन् ब्रह्मसत्तोपलब्धेः पूर्व्वप्रदर्शितप्रकाशस्थानापसारणन्यायेन सिद्धत्वेऽपि ब्रह्मत्वं नात्र कथं मूर्त्तस्य जगतो ग्रहणं—

सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः।
सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः॥ (श्वे ३।११)
सहस्रशीर्षा: पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतोवृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥ (श्वे ३।१४)
सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति॥ (श्वे ३।१६)

इत्याद्याभिस्तत्कारणं प्रदर्श्यते।

सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत्॥ (श्वे ३।१७)

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ( श्वे ३।१९ )

इत्याद्याभिर्ग्रन्थस्य तत्त्वं ज्ञाप्यते । परापरप्रकृतिमालिङ्ग्य विद्यमानस्य नियन्तुः परात्मनः करादिप्रेरकत्वेन तत्रिंस्तेषामारोप इति नायुक्तं, यदि श्रुत्युक्तबोधगमस्य बुद्धिर्न जहाति । अतएवाह मिताक्षरब्रह्मसूत्रविवृतिकृत्—"जीवद्वारा परमात्मनस्तत्प्रविष्टस्य शारीरत्वं भवति चेत्, न निवार्य्यते, स्वातन्त्र्येणेश्वरस्य शारीरत्वं केवलं वारयामः ।" इति । श्रीमच्छङ्करेणापि "जगदात्मकं रूपमाद्यमैश्वरम्" स्वीकृतम् । नानेन शैववैष्णवाचार्य्याणां विरोधः । विरोधः पुनः रूपस्यास्य मायिकत्वामायिकत्वस्वीकारे । तुच्छत्वमस्य प्रतिपादयति मायिकेऽमायिके वा शरीरधर्म्मारोपः सर्व्वेषां वादिनां समानानामादरविषयः । याऽसौ परेणानन्या तस्या मायेतिशब्देन विमुग्धमतिनाऽभ्यर्हितत्वं न जातु विस्मरणीयम् । वैचित्र्यजननेन रूपं रूपं प्रज्ञानघनत्वमेव परस्याभिव्यनक्ति सा । एवं हि शिवस्वरूपेयं जीवाय परतत्त्वं ज्ञापयति । यत्तु चित्सुखादिघनत्वप्रतिपत्त्या मूर्त्तत्वपरिकल्पनं तदपि जीवानुभूतावशरीरत्वेनोपलभ्यते न पुनः शरीरत्वेन, तथा सत्यभिनिवेशस्य नाश्यात् घनत्वापगमएव । घनत्वाघनत्वं न परब्रह्मणि किन्तर्हि जीवोपलब्धाविति तस्मिन्नेव तदिति भ्रान्तिरेव । वायोरमूर्त्तत्वेऽपि स्पर्शग्राह्यत्वं तस्य, अतएवाह श्रुतिः—"नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि" ( तै २।८ ) इति । अन्तरीक्षं आकाशः, तस्य च ब्रह्मलिङ्गत्वं व्याख्यातम् । अन्तरिक्षमिति ह्रस्वत्वं छान्दसम् । अन्तः ईक्ष्यते जगत् यस्मिन्निति अन्तरीक्षम् । ब्रह्मसाधर्म्म्यख्यातस्तस्मिन् ।

एकविंशे (२१) जगज्जीवान्तर्यामिणां परस्परसम्बन्धं प्रदर्श्य ब्रह्मणि सर्व्वभेदापगमो विवियतेऽतोऽस्या मधुविद्यायास्तत्त्वनिरूपिकात्वम् । जगतो जीवान्तर्यामिणोः शरीरत्वम्, जीवस्य च नियन्तुरन्तर्यामिणः सर्व्वथा नियमाधीनत्वम्, एवञ्च जगज्जीवयोरन्तर्यामिणा प्रियत्वेनैक्यं ऽखण्डत्वम्, तेन चाखण्डत्वेन सर्व्वान्तर्भावकेन ब्रह्मणा—विभजनात् प्राक् यथा कार्य्यकारणादिभेदशून्यत्वम्—तथैकरसत्वं सर्व्वस्य दर्शयति श्रुतिः । न पुनर्वक्तव्यमेवमेकरसत्वे व्यवहर्त्तुः सर्व्वव्यवहारनिवृत्तिर्जगज्जीवादेरुच्छेदश्चेति । तथैकरसत्वे स परात्मैव 'सर्व्वानुभूः' सर्व्वानुभवकर्त्ता, सएव 'सर्व्वात्मना सर्व्वमनुभवति ।' विचित्रमेतद्यत् परात्मा सर्व्वमनुभवतीति । तथा सति कथं तस्य तुरीयत्वं प्रपञ्चातीतत्वं शान्तत्वं शिवत्वमद्वैतत्वं वा । जीवानुभवानां वैचित्र्यात् वैषम्यात् परस्यानुभवस्य वैचित्र्यं वैषम्यञ्च, तेन च शान्तत्वादेः क्षतिः । नैवम् । एकत्वं हि वैचित्र्यस्य जीवातु, तद्विना वैचित्र्यस्य स्थितिर्न सम्भाव्यते । स परात्मा नित्यमेकः सन् निखिले जगति निखिले जीवे तत्तत्साकल्यकरणोपयोगि भिन्नभिन्नं वैचित्र्यं भिन्नभिन्नं भावञ्च प्रोद्भावयति । नामरूपवत् तत्तद्वैचित्र्यं स च स च भावो यदि तस्मिन्न विधृताविभक्तभावेन कुतः स्यात्तेषामागमस्तस्मिंस्तस्मिन् । अनुभवानां सुखदुःखसहभावित्वात् परेऽपि सुखदुःखस्पर्श इति चेत्, न । एकं मङ्गलं सुखरूपेण दुःखरूपेण वानुभवति जीवः स्वस्थास्वस्थमानसावस्थानुसारतः । एवमेकस्य द्व्यात्मकतयानुभवः सम्भोगाय शोधनाय च भवति जीवानामिति तत्त्वम् । यदा हि जीवः सर्व्वविरोधविलये परेणैकरसत्वमाप्नोति, तदा स तस्मिन्नुद्भूतस्य भावस्य कर्त्तारमात्मानं न मन्यते किन्तर्हि तमेव यतोऽस्यागमः ।

नैषोऽस्यानुभवः मिथ्याभूतः, तत्त्वतस्तस्यानुभवस्यैव सत्यत्वात्। सत्यश्चैतदनुक्तत्य 'सर्व्वानुभूः' इति विशेषणं निरुपाधौ ब्रह्मण्यपि श्रुतिर्नियोजयति। एवञ्च "सवा अयमात्मा सर्व्वेषां भूतानामधिपतिः" इत्यादि वाक्यञ्च निरुपाधौ परब्रह्मणि। विशेषणनियोगोऽस्याः श्रुतेस्तत्त्ववश्यम्। द्वाविंशे त्रयोविंशे च (२२।२३) यत्तत्त्वमस्ति, तत्पूर्व्वव्याख्यातवचननिचयविवरणेन स्फुटमापद्यतेति प्रयत्नेनालम्।

उपसंहारे पुनरिदं विवेक्तव्यम्—व्याकर्त्तृत्वेन व्यवहर्त्तृत्वेन, सृष्टिप्रक्रियया स्वकीयप्रज्ञानघनरूपत्वप्रकाशनेन, सर्व्वानुभूत्वेन, सर्व्वनियन्तृत्वेन च, सर्व्वोपरि शिवस्वरूपत्वेन च परं ब्रह्मात्मानं नित्यं जीवसन्निधौ प्रकाशयतीति चेत्, कथं सर्व्वदैव तदहृष्टादिशब्दभाक् तिष्ठतीति। न ह्यनन्तस्य पारं गन्तुं कोऽपि समर्थः। दृष्टेऽपि तस्यादृष्टत्वं नापगच्छति। अदृष्टस्यापारत्वाद्यदृष्टं, निपुणावलोकनेन तत् तस्मिन्ननन्ते तिरोधत्ते। एवं नित्यमेव जीवआत्मानमसम्पन्नं पश्यन् तस्मिन्नविभक्ततया स्थातुं सर्व्वानुभूत्वञ्च तस्य निरवच्छेदेनोपलब्धुं यतते। तत एव हि तस्य सम्पन्नता। एकस्मादव्यवहार्य्यशब्दात् व्यवहारव्यावहारिकव्यवहर्त्तृत्वादिनिरूपणं न साध्विति मन्यसे चेत् व्याकारव्याकारिकव्याकर्त्तृत्वादिशब्दैरभिप्रेतार्थसिद्धिः स्यात् "व्याक्रियत वि वा अक्रियत विस्पष्टं नामरूपविशेषावधारणमर्य्यादं व्यक्तीभावमापद्यत" इति भाष्यकारकृतव्याकृति निर्वचनेन व्यवहारादिपदैर्यत् सिद्ध्यति तत् सिद्ध्यति किं वृथावादीत्यापनेन। वस्तुतस्तु वेदान्तान्तरानुसरणेन सर्व्वमत्र व्याख्यातमिति सुधीभिर्द्रष्टव्यम्। कथं व्याख्यानेनार्थविस्तारः? तन्निश्वसितत्वात् तस्य।

## इत्यारोहवल्ली तृतीयोऽध्यायः।

# चतुर्थोऽध्यायः।

## ब्रह्मवल्ली।

१। अनेजदेकं मनसो जवीयो
नैनद्देवा आप्नुवन् पूर्व्वमर्षत्।
तद्धावतोऽन्यानत्येति तिष्ठ-
त्तस्मिन्नपो मातरिश्वा दधाति॥
तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यतः॥ ईश ४।५

१। शारीरवल्ल्यां सर्व्वगतं सर्व्वातीतञ्च ब्रह्म निरूपितम्। अधुना तत्स्वरूपादिकं ब्रह्मवल्ल्यां निरूप्यते। तत्रादिमवचनद्वयं: अनेजदिति तदेजतीति—तत् परतत्त्वम् एकम् असहायम्, अनेजत् निश्चलं सर्व्वदा एकरूपम्, अथच मनसः मनसः जवीयः द्रुतगामि—मनसोऽप्यप्राप्यत्वात्। मनसोऽपि जवीयस्त्वात् पूर्व्वम् अर्षत् गतम्, तस्मात् देवाः चक्षुरादयः एनत् न आप्नुवन् न प्राप्तवन्तः। धावतः द्रुतं गच्छतः अन्यान् तत् परतत्त्वं अत्येति अतीत्य गच्छति। 'जवीयः' 'अर्षत्' 'अत्येति' इत्यादिभिः स्यात् अनेजदिति विशेषणस्य वैफल्यमतस्तन्निरस्यति श्रुतिः—'तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति'—तत् तिष्ठत् सर्व्वतोविसारि सर्व्वं व्याप्य स्थितं; तस्मिन् परतत्त्वे—"[illegible]" इति श्रौतन्यायेन—विद्यमानः मातरिश्वा प्राणः तच्छक्त्या शक्तिमान् अपः कर्म्माणि दधाति निर्व्वहति। स्वयमचलं सदक्षमिव क्रियोत्पादनेन जवीयस्त्वमात्मनः प्रकटयतीति श्रुतेः समाधानम्।

तदेवार्थं विशदयति तदेजतीति। तत् परतत्त्वम् एजति चलति जडवत् तिष्ठति, सर्व्वक्रियाधारत्वमात्मनः प्रकटयति आत्मादिषु

२। सपर्य्यगाच्छुक्रमकायमव्रण-
मस्नाविरꣳ शुद्धमपापविद्धम्।
कविर्म्मनीषी परिभूः स्वयम्भू-
र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥
ईश ८।

क्रियासञ्चारणात्; तत् न एजति न चलति न विक्रियां भजते। तत् दूरे तद्वत् अन्तिके समीपे विदुषाम् अविदुषां वा अनन्तत्वात्। अस्य सर्व्वस्य अन्तः तत्, अस्य सर्व्वस्य वाह्यतः पुनः तत्।

२। सइति। पूर्व्वप्रवचनद्वयादात्मेति समाकृष्य स इति पुंलिङ्गेन निर्द्देशः। 'आत्मा ब्रह्म' (३।६८) इति श्रौतसिद्धान्तवशात् क्लीवलिङ्गान्तविशेषणानां निर्व्विशेषेण सन्निवेशोऽप्यत्र। अन्यत्रापि वेदान्तवचनेष्वेव विशेषणानां विमिश्रत्वदर्शनात् "तद्दूरे तद्वदन्तिके" इति न्यायमाश्रित्यैकमेव परतत्त्वं कदाचित् परोक्षत्वेन कदाचिदपरोक्षत्वेन निर्द्देशभागिति श्रौताभिप्रायः विस्पष्टं प्रतिभाति। स अपरोक्षभूतः आत्मा पर्य्यगात् परि समन्तात् अगात् गतवान् सर्व्वतोविसारी। अन्तिकत्वं दृष्टितोऽपसार्य्य दूरत्वमस्य बुद्धिस्थं कृत्वा "सर्व्वमेतद्ब्रह्म" (३।६८) इति तमेव परोक्षत्वेन निर्द्दिशति—सोऽयम् आ ब्रह्म शुक्रम्—"तस्य भासा सर्व्वमिदं विभाति" (४।६) इति दीप्तिमत्, अकायं—सर्व्वत्वेऽपि तत्तच्छरीरसम्बन्धवर्ज्जितम्, तथा च अव्रणम् अक्षतम् अपूर्णताशून्यम्, अस्नाविरं वेदनासाधनस्नायुरहितम्, शुद्धं निर्म्मलम्, अपापविद्धं पापैः देहादिसम्भूतैः किल्बिषैः अविद्धं संमिश्रणाप्रवणम्। ब्रह्मत्वात् वृंहणत्वात् सर्व्वं ब्रह्मण्यन्तर्भूय पुनश्चापरोक्षतया तदन्तिके समानीय विशिनष्टि—कविः सर्व्वदृक्, मनीषी मनसईशिता सर्व्वज्ञः ईश्वरः, परिभूः सर्व्वेषामुपर्य्युपरि विद्यमानः नियन्तृतया, स्वयम्भूः स्वयं भवतीति सर्व्वनिरपेक्षः, अथच शाश्वतीभ्यः नित्याभ्यः समाभ्यः वत्सरेभ्यः नित्यकालमिति यावत् याथातथ्यतः यथा यस्य

३ । न तत्र चक्षुर्गच्छति न वागगच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्व्वेषां ये नस्तद्व्याचचक्षिरे ।

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

प्रयोजनं तथा तदनुसारतः अर्थान् प्रयोजनानि व्यदधात् व्यभजत् । भूतप्रयोगो वर्त्तमानभविष्यतोरुपलक्षणत्वेन । शुद्धत्ववशात् जीव-प्रयोजनविभजने न तस्मिन् किमपि वैषम्यमिति तत्तद्विशेषणानां विन्यासः ।

२ । प्रथममविज्ञेयं विनिर्द्दिश्य कथं वा तन्निर्द्देश्यमिति वक्तुमाह न तत्रेत्यादि । चक्षुः न तत्र गच्छति—अदृष्टं तत्, वाक् न तत्र गच्छति—अवाग्विषयं तत्, मनो न तत्र गच्छति—अचिन्त्यं तत्, न विद्मः न वयं तत् वेदनाविषयं कृतवन्तः चक्षुराद्यविषयत्वात् । यथा येन प्रकारेण एतत् ब्रह्म अनुशिष्यात् उपदिशेत् तत् न विजानीमः । कथम् ? तत् विदितात् इन्द्रियगोचरविषयात् अन्यत्, अथो अपिच अविदितात् इन्द्रियागोचरविषयात् अधि उपरि । सत्येवं कथं जानीथ 'विदितादन्यत्, अविदितादधि' इति । पूर्व्वेषाम् आचार्य्याणां ये नः अस्मभ्यं तत् ब्रह्म व्याचचक्षिरे व्याख्यातवन्तः तेभ्यः इति एवं शुश्रुम श्रुतवन्तः ।

यदि ब्रह्मैवं सर्व्वप्रकारेण ज्ञानातीतं कथं तज्ज्ञाने प्रयास इति वादनिरसनाय कथयति सर्व्वप्रेरकत्वं तस्याश्रित्य यदिति । यत् वाचा वाक्येन अनभ्युदितम् अनभ्युक्तम्, येन वाक् वाक्यम् अभ्युद्यते प्रकाश्यते प्रयुज्यते तत् एव ब्रह्म त्वं विद्धि जानीहि, यत् इदं दृश्यमानं बाह्यवस्तुजातम् उपासते, न इदं ब्रह्म ।

यन्मनसा न मनुते येनाहुर्मनोमतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

तल (१) ३—८ ।

४ । यदि मन्यसे सुवेदेति दभ्र-
मेवापि नूनं त्वं वेत्थ ब्रह्मणोरूपम् ।
यदस्य त्वं यदस्य देवेष्वथ नु
मीमांस्यमेव ते—मन्ये विदितम् ॥

यदिति । मनसा यत् न मनुते न मननविषयीकरोति जनः, येन मनः मतम् मननविषयीकृतम् इति आहुः ब्रह्मविदः, तदेव इत्यादि पूर्ब्बवत् ।

यदिति । चक्षुषा यत् न पश्यति न विषयीकरोति जनः, येन चक्षूंषि चक्षुःक्रियाः जनः पश्यति विषयीकरोति तदेव इत्यादि पूर्ब्बवत् ।

यदिति । श्रोत्रेण यत् न शृणोति जनः, येन इदं श्रोत्रं श्रुतं विषयीकृतं तदेव इत्यादि पूर्ब्बवत् ।

यदिति । प्राणेन यत् न प्राणिति न चेष्टते, येन प्राणः प्रणीयते स्वकार्य्यं निर्व्वहति । प्राणः घ्राणमित्यर्थे—प्राणेन घ्राणेन यत् प्राणिति घ्राणविषयीकरोति, येन प्राणः घ्राणं प्रणीयते गन्धविषयीकरोति, तदेव इत्यादि पूर्ब्बवत् ।

४ । ज्ञानातीतं ब्रह्म यदि केवलं वागादिषु प्रेरयितृत्वेनोपलब्धव्यं,

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥

प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम् ॥

सत्त्वाद्यवच्छिन्नत्वात्, न तदा तस्य साक्षाज्ज्ञानं भवति। अस्ति चेत् कोऽप्युपायस्तस्य साक्षाज्ज्ञानलाभे, तदवश्यं वेदितव्यम्। निर्दिशति तच्छ्रुतिस्तस्य ज्ञेयत्वाज्ञेयत्वं प्रथयन्ती यदीत्यादिभिः। ब्रह्मणो रूपं स्वरूपं त्वं सुवेद सुष्ठु जानामि इति यदि मन्यसे, नूनं निश्चितं ब्रह्मणो रूपं त्वं दभ्रम् अल्पम् एव अपि वेत्थ जानासि—तत् स्वरूपं न किञ्चिदपि त्वं ज्ञातवान्। अस्य ब्रह्मणः त्वं यत्, अथ देवेषु अस्य ब्रह्मणः यत्, तत् नु ते तव मीमांस्यम् एव? एवं पृष्टः शिष्य आह—मन्ये विदितं ज्ञातम्।

किं ज्ञातं तदेव शिष्योऽब्रवीत् नाहमिति। अहं ब्रह्म सुवेद सुष्ठु जानामि इति न मन्ये। न वेद न जानामि इति नो न, वेद जानामि इति च न। न वेद न जानामि इति न, जानामि इति च न, तदेतत् नः अस्माकं मध्ये यः वेद जानाति स तत् ब्रह्म वेद।

किञ्च यस्येति। यस्य ब्रह्म अमतम् अविज्ञातं—न हि जानामीति बुद्धिः—तस्य ब्रह्म मतं ज्ञातम्, यस्य ब्रह्म मतं ज्ञातं—जानामीति बुद्धिः, न स ब्रह्म वेद। विजानतां ज्ञानवतां ब्रह्म अविज्ञातं—न वयं तत् जानीम इति बुद्धिः, अविजानताम् अज्ञानिनां विज्ञातं—जानीम इति बुद्धिः।

यद्येवं कथमुक्तं 'मन्ये विदितम्' इति तदेवाह प्रतीति। यत् ब्रह्म प्रतिबोधविदितं बोधं बोधं प्रति विदितं बोधविषयरूपेण ज्ञातम्

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचिन्त्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति॥

तल (२) ८—१३।

इति मतं सम्यग्दृष्टिः। न हि तद्विना बोधस्य जातूदयसम्भावनास्ति, अतस्तदेव बोधयितृ इति ज्ञातवानस्मि एषैव च तस्य सम्यग्दृष्टिः। बोधव्यवधानवशात् नात्राव्यवहितं तत्रेमन्यस्ये, साक्षाज्ज्ञातुर्बोधिनैतज्-ज्ञानस्य सम्बद्धत्वात्, बोधेन च ज्ञातुरभेदात् वागादिषु प्रेरकत्वेन दर्शनवत् नैतत्तादृग्व्यवहितम्। नाहमनन्तस्य ज्ञानं कात्‌स्न्र्येन जातु लप्सेऽतोऽल्पेनापि तेन साक्षादुपलब्ध्या परितुष्ट इति शिष्याभिप्रायः। एतद्बुद्ध्या अमृतत्वं मोक्षं हि विन्दते प्राप्नोति। कोऽसौ वात्रोपायस्तं दर्शयति— आत्मना वीर्य्यं सामर्थ्यं विन्दते लभते, विद्यया तज्ज्ञानेन अमृतं मोक्षं विन्दते लभते। न हि वीर्य्यं विना विद्याफलसम्भावना सुतरां लब्ध-वीर्य्योह्यात्मा विद्यया मोक्षं लभत इत्युक्तम्। अत्र 'ब्रह्मणो यत् त्वम्' इत्यस्योत्तरं स्वस्य ब्रह्मणो बोधयितृत्वप्रकाशस्थानत्वेन प्रदत्तम्, 'देवेषु अस्य यत्' इत्यस्य च परवर्त्तिन्याख्यायिकया (२।११—१४)।

न केवलमात्मनि बोधयितृत्वेन प्रेरयितृत्वेन वा दर्शनेन सिद्ध्यति तस्य पूर्णत्वम्। अतः कथं स्यात्तत्सिद्धिरिति दर्शयति इहेति। इह जन्मनि चेत् तत् परतत्त्वम् अवेदीत् विदितवान्, अथ तदा सत्यं स्वस्य सद्भावापन्नत्वम् अनन्तकालस्थायित्वम् अस्ति भवति। चेत् यदि न इह अवेदीत् महती विनष्टिः दुर्गतिः—अमरणधर्म्मत्वात्र हि महा-विनाशः। कथं वा स्यात्तद्दुर्गतेरवरोधस्तद्वदति—धीराः भूतेषु भूतेषु सर्व्वभूतेषु चराचरेषु तत् परतत्त्वं विचिन्त्य बोधयितृत्वेन प्रेरयितृत्वेन च ध्यात्वा विविच्येति पाठे अन्विष्य अस्मात् लोकात् प्रेत्य अमृताः सम्पन्नाः भवन्ति।

५। यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥
मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥

६। तदेतदिति मन्यन्तेऽनिर्द्देश्यं परं सुखम्।
कथं नु तद्विजानीयां किमु भाति विभाति वा॥

५। एकस्मिन् परतत्त्वे भिन्नभिन्नाकारेण प्रतीयमानानामैहिकामुष्मिकविषयाणामेकत्वानुभव एव मृत्युनिवारणः। यत्र नास्त्येतदेकत्वानुभवः, तत्र भेदबुद्धेर्हिंसाद्वेषादिमृत्युकारणान्युत्पद्यन्ते। तत्कारणनिरासाय वदति श्रुतिः यदिति। यत् एव इह इह लोके तत् एव अमुत्र परलोके, यत् अमुत्र परलोके तत् अनु तदनुरूपम् इहलोके—एकस्मिन्नुभयोः स्थित्यादिहेतोः। यः जनः इह नाना इव अनेकरूपम् इव पश्यति, स मृत्योः इहलोकात् प्रस्थानानन्तरं परत्र मृत्युं भयकारणम् आप्नोति प्राप्नोति। श्रुतिरियं गतिवल्ल्युरचितापि ब्रह्मणः सर्व्वात्मभावकत्वं विस्पष्टं प्रकटयत्यतोऽस्याः संग्रहोऽत्र।

मनसेति। न इह किञ्चन—एकत्वकारणेन ब्रह्मणा सम्बन्धविवर्ज्जितत्वाभावात्—नाना अनेकम् अस्ति, इदं मनसा अध्यात्मयोगेन एव आप्तव्यम् आयत्तीकर्त्तव्यम्। मृत्योरित्यादि पूर्व्ववद् गच्छतेः प्राप्त्यर्थत्वात्।

६। परोक्षस्यापरोक्षत्वं कथं स्यात् सर्व्वेषां सन्निधौ, तत् तत्स्वरूपनिर्द्देशेन दर्शयति श्रुतिः तदिति। अनिर्द्देश्यं निर्द्देष्टुमशक्यं तत् परोक्षं ब्रह्म,—योगेन ब्रह्मसंस्पर्शसुखानुभवात्—परमं सुखम् एतत् अपरोक्षं ब्रह्म इति मन्यन्ते योगिनः। अहम् अयोगी तत् परोक्षं ब्रह्म कथं नु विजानीयाम्? तस्य स्वयम्प्रकाशत्वे आत्मप्रकाशकत्वे च सिद्धे स्यात् सुलभं तत् सर्व्वेषाम् अतएव—तत् भाति स्वयं

न तत्र सूर्य्यो भाति न चन्द्रतारकम्
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेवभान्तमनुभाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति ॥

काठः ५।१४।१५ । मु २(२)।१० । श्वेत ६।१४ ।

७ । ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥
तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन ।
तद्वैतत् ।

प्रकाशते, विभाति चन्येषां सन्निधाने विस्पष्टं दृश्यते किमु ? इति जिज्ञासा ।

तत्रोत्तरं न तत्रेति । तत्र ब्रह्मणि सूर्य्यः सर्व्वावभासकोऽपि न भाति न भासकतासामर्थ्यवान् भवति, तथा चन्द्रतारकं न भासकतासामर्थ्यवद् भवति, इमाः विद्युतः न भान्ति भासकतासामर्थ्यवत्यः भवन्ति, अयम् अग्निः कुतः भास्यति भासकतासामर्थ्यवान् भविष्यति । कथम् ? परात्मतया बुद्धिगोचरीकृत्योत्तरं—तम् एव परात्मानं भान्तं नित्यप्रकाशमानम् अनुभाति अनुदीप्यते सर्व्वम् सूर्य्यादिकम् । इदं सर्व्वं तस्य भासा दीप्त्या—ज्ञानप्रकाशेन—विभाति दीप्तिमत् भवति जनचक्षुर्गोचरीभवति । स्वात्मप्रकाशकतासामर्थ्यशून्यं सर्व्वमिदं केन प्रकाश्यत इत्यनुसन्धानेन भारूपं सर्व्वप्रकाशकं ब्रह्म स्वतोऽवगम्यते ।

७। सर्व्वान्तर्भावकत्वं ब्रह्मणः प्रदर्श्य तस्य सर्व्वातीतत्वं रूपकेण निर्णीयते ऊर्द्ध्वमूलइति । ऊर्द्ध्वमूलः ऊर्द्ध्वं सर्व्वातीतं ब्रह्म तदेव मूलं यस्य स, अवाक्शाखः अर्व्वाचः अधोगताः शाखाः महाभूताद्याः यस्य स एष अश्वत्थः न श्वः चिरं तिष्ठतीति अश्वत्थः संसारः सनातनः अव्ययः प्रवाहक्रमेण चिरस्थायी । तत् मूलम् एव शुक्रं शुभ्रं, ब्रह्म

यदिदं किञ्च जगत् सर्व्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति॥
भयादस्याग्निस्तपति भयात्तपति सूर्य्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥
कठ ६।१।२।३, तै २।८।१।

८। आविः सन्निहितं गुहाचरन्नाम
महत्पदमत्रैतत् समर्पितम्।
एजत् प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं
परं विज्ञानाद् यद्वरिष्ठं प्रजानाम्॥

ब्रह्म, तत् अमृतम् अविनश्वरम्। तस्मिन् सर्व्वे लोकाः श्रिताः आश्रिताः, तत् उ पुनः कश्चन न अत्येति न अतिक्रम्य वर्त्तते। एतत् वै तत्—यज्ज्ञानादमृता भवन्ति इति परेण सम्बन्धः।

सर्व्वातीतस्य महतोमहीयस्त्वं ख्यापयति भीषणत्वप्रदर्शनेन यत् इति। यत् किञ्च इदं सर्व्वं निखिलं जगत् ततः निःसृतं निर्गतं सत् प्राणे प्राणस्वरूपे तस्मिन्—अधिष्ठाय—एजति प्रचलति क्रियावत् भवति तन्निरपेक्षक्रियाया असम्भवात्। यद्यप्येवं कुतो वा तस्य भीषणत्वम्? तत् महत्, अतएव भयम् उद्यतं वज्रं भयकारणत्वात्। तस्य महत्त्वं स्मृत्वा भयमुपतिष्ठते उद्यतं वज्रम् इव च तत् लक्ष्यते।

भयमिति कथमं पराक्रान्तत्वप्रदर्शनार्थम्। तदेव विवृणोति भयादिति। अस्य ब्रह्मणः भयात् भीत्या अग्निः तपति, भयात् सूर्य्यः तपति, भयात् इन्द्रः च, वायुः च, पञ्चमः मृत्युः च धावति स्वस्वाधि-कृतकार्य्यनिर्व्वाहाय सत्वरो भवति।

८। सर्व्वान्तर्भावकस्यापरोक्षत्वं कथं सम्भवति तदुक्तम्। यदिदं सर्व्वातीतं कथं तस्यापरोक्षत्वं स्यात् तत् सम्प्रति कथयति आविरिति। आविः प्रकटं यथा स्यात् तथा सन्निहितं, गुहाचरं गुहायां हृदि

यदर्च्चिमद्यदणुभ्योऽणु च
यस्मिन् लोका निहिता लोकिनश्च।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः
तदेतत् सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि॥

मु २(२)।१।२।

८। हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥

चरतीति नाम प्रसिद्धम्। तत् कुतोऽस्य सर्व्वातीतत्वम्? महत्पदं महत् अनन्तं पदं भूतनिवासस्थानम्—महत्त्वादेव सर्व्वातीतं सत् अपि सन्निहितं गुहाचरम्। अपिच अत्र अस्मिन् सर्व्वातीते एजत् चलत्, प्राणत् प्राणवत्, निमिषत् निमेषोन्मेषवत् एतत् सर्व्वं समर्पितं निहितम्। यत् एतत् सत् सर्व्वोपादानम्, असत् अव्यक्ततया स्थितम्, वरेण्यं वरणीयं, यत् वरिष्ठं वरतमम्, तत् प्रजानां लोकानां विज्ञानात् परम् अतिरिक्तं तदविषयम् इति जानथ अवगच्छथ यूयं शिष्याः।

यदिति। यत् अर्च्चिमत् दीप्तिमत्, यत् अणुभ्यः अणु, यस्मिन् लोकाः लोकिनः तद्वासिनः च निहिताः, तत् एतत् अक्षरं शाश्वतं ब्रह्म। स प्राणः, तत् पुनः वाङ्मनः, तत् एतत् सत्यं, तत् अमृतम्, हे सौम्य, तत् वेद्धव्यम् अध्यात्मयोगेन प्रवेष्टव्यम्।

८। तदुपलब्धिस्थानं वदति हिरण्मय इति। हिरण्मये ज्योतिर्म्मये बुद्धिविज्ञानप्रकाशे परे श्रेष्ठे कोषे विज्ञानमयकोषे विरजं रजः मलं तद्वर्ज्जितं, निष्कलं निरवयवं ब्रह्म। तत् शुभ्रं शुद्धं, ज्योतिषां भौतिकानां ज्योतिः प्रकाशकम्, आत्मविदः विवेकिनः यत् विदुः विजानन्ति तत् ब्रह्म।

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण
अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥

मु २(२)।९।११।

१०। बृहच्च तद्दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत् सूक्ष्मतरं विभाति।
दूरात् सुदूरे तदिहान्तिके च
पश्यत्स्विहैव निहितं गुहायाम् ॥

मु ३(१)।७।

११। ॐ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता।
सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे

ब्रह्मेति। इदम् अमृतं ब्रह्म एव पुरस्तात्, ब्रह्म पश्चात्, ब्रह्म दक्षिणतः उत्तरेण च; इदं ब्रह्म एव अधः च ऊर्द्धं च प्रसृतं व्याप्तम्, इदं वरिष्ठं वरतमं ब्रह्म विश्वं समस्तम्।

१०। सर्व्वान्तर्भावकसर्व्वातीतयोरेकतयैकत्र सन्निवेशः बृहच्चेति। तत् ब्रह्म बृहत् सर्व्वातीतम्, अतएव दिव्यम् अपार्थिवम् इन्द्रियाविषयम्, अचिन्त्यरूपं चिन्तयितुमशक्यं रूपं स्वरूपं यस्य, सूक्ष्मात् च तत् सूक्ष्मतरम् विभाति प्रकाशते। तत् दूरात् सुदूरे इह अन्तिके च, पश्यत्सु चेतनावत्सु दर्शनसामर्थ्ययुक्तेषु इह एव गुहायां बुद्धौ निहितम्।

११। लक्षणात्मकस्वरूपनिर्णयं विना न जातु वस्तुपरिग्रहः। सर्व्वातीतस्य सर्व्वसम्बन्धविवर्ज्जितस्य ब्रह्मणः कथं वा लक्षणात्मकं स्वरूपं निर्णेतव्यम्। यत्र सादृश्यवैसादृश्यघटितविचारो नोपसर्पते, तत्र किमपि न बुद्धियाह्यं प्रतिभाति। यदि न हृदि ब्रह्मविषयकं

**व्योमन्। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विप-श्चितेति। तै २।१।**

ज्ञानं स्वतः प्रतिभायात्, न सम्भवेदस्य प्रतीतिः केनापि प्रयासेन। कार्य्यदर्शनेन कारणानुमानमपि स्वतो ह्यविच्छिन्नकार्य्यकारणज्ञानं विना न जातु सम्भवति। कुम्भकारेण घटादिनिर्म्माणं पश्यतः कार्य्यकारण-ज्ञानमुत्पद्यते इति न घटते। तथापीदं कार्य्यमिदं कारणमिति निर्णयात् प्राक् तादृशज्ञानस्यास्तित्वमवश्यम्भावि, अन्यथा कुतस्तस्य सम्भावना। अतः सिध्यति तस्य स्वतः प्रतिभानं ह्यविच्छिन्नत्वञ्च। स्वतः प्रतिभानं स्वतो ह्यविच्छिन्नत्वञ्च दर्शयति कुतोऽपि तस्य तत्रागमः। आगमो हि कार्य्यं तच्च कारणनिरपेक्षं भवितुं शक्यम्। अतो योऽसौ परात्मा सर्व्वकारणः सतएव तद्विषयकस्वरूपज्ञानमात्मन्याविर्भवतीति सत्सिद्धान्तः। तमेवाश्रित्य स्वरूपनिर्णयं करोति श्रुतिः 'ब्रह्मविदाप्नोति परम्' इत्यादिभिः। ओमिति शिष्याचार्य्याणामविता; तं संस्मृत्य परं शास्त्रमारभ्यते। ब्रह्मवित् ब्रह्मज्ञः हृदा लब्धब्रह्मस्वरूपज्ञानः परं ब्रह्म आप्नोति तत्साक्षात्कारं लभते। तत् तस्मात् एषा ऋक् अभ्युक्ता ब्रह्मस्वरूपज्ञानानन्तरं तत्साक्षात्कारलाभ इत्यर्थयुक्ता ऋक् आम्नाता;—यो जनः परमे व्योमन् व्योम्नि—"ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः"( ऋक् १०म २२सू, १६४ ऋक् ) इति आकाशस्वरूपे अक्षरे परब्रह्मणि विद्यमानायां गुहायां स्वहृदि सत्यं ज्ञानमनन्तं सत्यादिस्वरूपवत् ब्रह्म निहितं निगूढ़भावेन वर्त्तमानं वेद अन्तर्दृष्ट्या जानाति, स ज्ञानानन्तरं विपश्चिता सर्व्वज्ञेन ब्रह्मणा सह साक्षात्सम्बन्धवशादेकीभूय सर्व्वान् कामान् तत्प्रेरितान् अश्नुते। विपश्चितेति विशेषणबलात् यथाभोगी येन विधिना सेव्यमानः साधकस्य तत्स्वरूपाविशेषोपयोगी तं तं तेन विधिना तद्भोगाय यच्छति परं प्राप्नोति साधकः। उत्तरखण्डे विधिर्विधीयते। विशेषव्याख्यान-मध्याय प्रवृत्तौ।

१२। यद्वै तत् सुकृतम्। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। तै, २।७।२।

१२। तेन च साक्षात्सम्बन्धं विवृणोति यद्वा इति। ब्रह्मणः क्रियाशक्तिरेव सुकृतं तस्य क्रियायाः सुष्ठुत्वात्; तस्माच्च तत् पुण्य-मित्याचक्षते तदनुसरणेनानुसर्त्तुंश्चित्तनैर्मल्यलाभात्। यत् यस्मात् एव एतत् सुकृतं पुण्यं तस्मात् स रसः एव। पुण्याविर्भावमात्रादानन्दा-विर्भावः; अतस्तयोरैकत्वं ख्यापयति श्रुतिः। जगज्जीवादिषु यदानन्द-रूपमनुभूयते तत्तद्व्यवहितत्वात् तन्न साक्षादानन्दः। पुण्यस्वरू-पाद्यदानन्दाविर्भावस्तस्याव्यवहितत्वात् साक्षात्त्वम्। आविर्भूय सर्वं प्लावयति तृप्तिहेतुर्भवतीति रसशब्देन निर्द्देशः। प्राप्यप्रापकत्वसम्बन्धं प्रदर्श्यास्य साक्षात्त्वं द्रढ़यति (१।१।१७)—रसं हि एव अयं जीवः लब्ध्वा आनन्दी आनन्दप्लावितो भवति। आनन्दादेव हि चेष्टोपतिष्ठते प्राणधारणञ्चातोवदति सा—यत् यदि एष आकाशः—तत्त्वदृष्ट्या, आकाशे वा—लोकदृष्ट्या आनन्दः न स्यात्,—"'यदेष आकाश आनन्दोन स्यात्' इत्यानन्दपदस्य समानाधिकरणत्वेन निर्द्देशात् व्योम-पदस्य भूताकाशपरत्वं तावत् प्रत्युक्तमेव भवति। न च 'यदेष आनन्द आकाशे' भूताकाशे इति सप्तम्यन्तमाकाशपदमिति। न व्योम-पदस्य भूताकाशार्थकत्वं प्रत्याख्यातुं शक्यमिति वाच्यम्, आकाशपदस्य प्रथमान्तद्वयसन्दृष्टत्वेन प्रथमान्तताया एवोचितत्वेन सप्तम्यन्तानौचि-त्यात्" ( मि, ब्र, वि, ) इति—को हि वा अन्यात् चेष्टेत, कः प्राण्यात् प्राणधारणं कुर्य्यात्। एष आनन्दएव आनन्दयाति आनन्द-यति सुखयति सुखेन चेष्टावन्तं जीवन्तं करोति। अतएवान्यत्र "यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति" (२।१७[१२२]) इति।

१३। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मेति। तै, ३।१।२।

१४। स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यऽस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमवाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन।

१३। कारणलक्षणेन ब्रह्म निर्द्दिशति यतइति। यतः एव इमानि भूतानि आब्रह्मस्तम्बपर्य्यन्तानि जायन्ते, जातानि येन जीवन्ति प्राणं धारयन्ति वर्द्धन्ते, लयकाले यत् ब्रह्म प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते तत् ब्रह्म इति विजिज्ञासस्व ज्ञातुमिच्छस्व (१।१।२)।

१४। "कस्मिन्नु आकाश ओतश्च प्रोतश्च" इत्यस्य वाचक्नव्याः प्रश्नस्योत्तरेऽक्षरं परं ब्रह्म निर्द्दिशति याज्ञवल्क्यः स ह इति। स याज्ञवल्क्यः उवाच—हे गार्गि, ब्राह्मणाः ब्रह्मज्ञाः एतत् वै तत् अक्षरं —यन्न क्षीयते न क्षरतीति तत्—अक्षरं शाश्वतं परं ब्रह्म वदन्ति, यत् अस्थूलं—स्थूलादन्यत्, अनणु—सूक्ष्मादन्यत्, अह्रस्वम्—ह्रस्वादन्यत्, अदीर्घं—दीर्घादन्यत्, अलोहितम्—अग्नेर्यो लोहितो गुणस्तद्रहितम्, अस्नेहम्—अपां यो स्नेहगुणस्तद्रहितम्, अच्छायम्—अनिर्द्देश्यत्वात् भवतु तत् छायैव न तत् छाया, अतमः—भवतु तर्हि तमः तदपि न, अवायुः—भवतु तर्हि वायुः न सोऽपि तत्, अनाकाशं —भवतु तर्हि आकाशं तदपि न तत्, असङ्गं—भवतु तर्हि सज्यत इति सङ्गः स्पर्शः न सोऽपि तत्, अरसं—भवतु तर्हि रसो न सोऽपि तत्, अगन्धं—भवतु तर्हि गन्धः न सोऽपि तत्, अचक्षुष्कम् अश्रोत्रं—

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्या यां याञ्च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्या प्रशंसन्ति यजमानं देवा दर्व्वीं पितरोऽन्वायत्ताः।

"पश्यत्यचक्षुः स शृणोत्यकर्णः" इति चक्षुःश्रोत्रकरणविरहितम्, अवाक्—भवतु तर्हि वाक् न सापि तत्, अमनः—भवतु तर्हि मनः न तदपि तत्, अतेजस्कं—नाग्न्यादिवद्भौतिकतेजोयुक्तम्, अप्राणम्—भौतिकप्राणोऽपि न तत्, अमुखं—मुखविरहितम्, अमात्रं—मात्रा मानं तद्रहितम्, अनन्तरं—छिद्रशून्यम्, अवाह्यं—वाह्यवस्तुसादृश्यरहितम्। तस्मिन् कोऽपि जीवधर्म्मा न विद्यन्त इति प्रदर्शनाय—न तत् किञ्चन अश्नाति, न कश्चन तत् अश्नाति—न भक्षयितृ न भक्ष्यं तत्।

यद्येवं तदवस्तु भवितुमर्हति? न। तदेव सर्व्वकारणमिति दर्शयति एतस्येति। हे गार्गि, एतस्य वै अक्षरस्य प्रशासने नियन्तृत्वाधीने सूर्य्याचन्द्रमसौ सूर्य्यश्च चन्द्रमाश्च विधृतौ तिष्ठतः। हे गार्गि, एतस्य वै अक्षरस्य प्रशासने द्यावापृथिव्यौ द्यौश्च पृथिवी च विधृते तिष्ठतः। हे गार्गि, एतस्य वै अक्षरस्य प्रशासने निमेषाः, मुहूर्त्ताः, अहोरात्राणि, अर्द्धमासाः, मासाः, ऋतवः, संवत्सराः इति कालावयवाः विधृताः तिष्ठन्ति। हे गार्गि, एतस्य वै अक्षरस्य प्रशासने प्राच्यः प्रागञ्चनाः पूर्व्वदिग्गमनाः गङ्गाद्याः अन्याश्च नद्यः श्वेतेभ्यः

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः।

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्तृऽविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति।

बृह ५।८।८—११।

पर्व्वतेभ्यः हिमवदादिभ्यः स्यन्दन्ते स्रवन्ते वहन्ति; प्रतीच्यः प्रतीचीं दिशम् अन्वन्यः सिन्ध्वाद्याः नद्यः अन्याश्च यां यां दक्षिणाम् उत्तरां दिशम् अनु अनुप्रवृत्ताः तां तां दिशम् अनु स्यन्दन्ते वहन्ति। हे गार्गि, एतस्य वै अक्षरस्य प्रशासने ददतः हिरण्यादीन् प्रयच्छतः जनान् मनुष्याः तच्छासनवश्यतावशादवशभावेन प्रशंसन्ति, देवाः यजमानं पितरः दर्व्वीं प्रकृतिविकृतिभावरहितहोमम् अन्वायत्ताः अनुगताः। समर्थानां दृप्तानामिवमधीनतास्वीकारे प्रशास्तुः शासनमेव हेतुः।

हे गार्गि, यो वै एतदक्षरम् अविदित्वा अज्ञात्वा अस्मिन् लोके बहूनि वर्षसहस्राणि व्याप्य जुहोति, यजते, तपः तप्यते, अस्य जनस्य तत् हवनादिकम् अन्तवत् विनाशि भवति—विफलमेव स तदनुतिष्ठते। हे गार्गि, यो वै एतत् अक्षरम् अविदित्वा अज्ञात्वा अस्मात् लोकात् प्रैति प्रयाति स कृपणः कृपापात्रम्। अथ यः एतत् अक्षरं विदित्वा ज्ञात्वा अस्मात् लोकात् प्रैति स ब्राह्मणः ब्रह्मसम्पन्नः।

हे गार्गि, तत् वै एतत् अक्षरम् अदृष्टम् अर्थ्यः दृष्टृ दर्शनक्रिया-

१५ । यस्मादर्व्वाक् संवत्सरोऽहोभिः परिवर्त्तते ।
तद्देवा ज्योतिषांज्योतिरायुर्होपासतेऽमृतम् ॥
यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥
प्राणस्य प्राणमुतचक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो
ये मनोविदुः । ते निचिक्युर्ब्रह्मपुराणमग्र्यम् ।

कर्त्तृ, अश्रुतम् अन्यैः श्रोतृ, अमतम् अन्यैः मन्तृ, अविज्ञातम् अन्यैः विज्ञातृ, अतः अन्यत् न द्रष्टृ अस्ति, अतः अन्यत् न श्रोतृ अस्ति, अतः अन्यत् न मन्तृ अस्ति, अतः अन्यत् न विज्ञातृ अस्ति—दर्शन-श्रवणादिकं सर्व्वं तदधीनं न तदनपेक्षमित्यभिप्रायः। हे गार्गि, एतस्मिन् नु खलु अक्षरे आकाशः ओतश्च प्रोतश्च—इत्युत्तरम् ( ३।८। १०—१२ )।

१५। कालातीतं तत् परतत्त्वं विवृणोति यस्मादिति। अहोभिः संवत्सरः यस्मात् परतत्वात् अर्व्वाक् अन्यत्र परिवर्त्तते भ्रमति, तत् कालातीतं ज्योतिषां ज्योतिः, अमृतं परतत्त्वं देवा आयुः आयूरूपेण उपासते। तदेव तेषामपरिणामनन्तं जीवनमिति तद्रूपेणोपासना।

सर्व्वाधारत्वेन तत् परतत्त्वं प्रदर्श्यते यस्मिन्निति। यस्मिन् पञ्च पञ्चसंख्याताः पञ्चजनाः देवपितृमनुरगन्धर्व्वरक्षांसि प्रतिष्ठिताः आकाशश्च प्रतिष्ठितः, तम् एव आत्मानं परात्मानम् अहम् अमृतम् अविनाशि ब्रह्म मन्ये। एवं विद्वान् अहम् अमृतः अविनाशित्वमाप्तः।

कथं वा तत् परतत्त्वं प्रत्यक्षीकर्त्तव्यं तदाह प्राणस्येति। ये साधकाः प्राणस्य प्राणम्, अपिच चक्षुषः चक्षुः, अपिच श्रोत्रस्य श्रोत्रम्, अपिच मनसः मनः—'ब्रह्मशक्त्यधिष्ठितानां' तेषां प्राणनदर्शनादि-सामर्थ्यमिति—विदुः जानन्ति, ते पुराणं चिरन्तनम् अग्र्यं सर्व्वश्रेष्ठं ब्रह्म निचिक्युः निश्चितवन्तः। इह ब्रह्मणि किञ्चन नाना अनेकं न

मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्।
विरजः पर आकाशादज आत्मा महान् ध्रुवः॥

वृह ६।४।१६—२०।

१६। नैनमूर्द्धं न तिर्य्यञ्चं न मध्ये परिजग्रभत्।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः॥

अस्ति इति मनसा अध्यात्मयोगेन अनुद्रष्टव्यम्। य इह परब्रह्मणि नाना अनेकम् इव पश्यति स मृत्योः मृत्योरनन्तरं मृत्युं भवकारणम् आप्नोति प्राप्नोति।

एतदेव दर्शनं स्फुटयति एकधैवेति। अप्रमेयम् अनन्तं ध्रुवं शाश्वतम् एतत् ब्रह्म एकधा अखण्डम् एव अनुद्रष्टव्यम्। न केवलं परोक्षेण किन्त्वपरोक्षेणेत्याह—महान् सर्व्वातीतोऽपि आत्मा परात्मा तत् ब्रह्म। किमयमात्माऽऽकाशः? न। आकाशात् परः तदतीतः। आकाशस्योत्पत्तिरस्ति स तु अजः जन्मरहितः। अस्ति तस्मिन् मालिन्यस्पर्शः स तु अरजः रजोमलं तद्रहितः। अन्यवस्तुसंयोगा-दस्याध्रुवत्वं विविधाकारप्राप्तेः स तु ध्रुवः स्थिरैकरसः, आकाशोऽचेतनः स तु आत्मा चैतन्यस्वरूपः।

१६। योऽयं सर्व्वतोविसारी परात्मा न जातु तस्य कापि प्रतिमा सम्भवति; स्वगौरवेणापूर्ण एव स इत्याह नैनमिति। एनं परात्मानं न ऊर्द्धं न तिर्य्यञ्चं न मध्ये परिजग्रभत् न परिग्रहीतुं शक्नु-यात्। अतएव न तस्य प्रतिमा सादृश्यम् अस्ति। विना हि सादृश्यं न वयं वस्तुपरिग्रहे समर्थाः; कथं स भवेदाराध्यस्तदाह—यस्य महत् दिगाद्यनवच्छिन्नं सर्व्वत्र परिपूर्णं यशः गौरवम्—ऊर्द्धपूर्णमधः पूर्ण-मित्येवं पूर्णत्वानुभवेन स आराध्यः।

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एन-
मेवं विदुरमृतास्ते भवन्ति ॥

श्वेत ४।१९।२० ।

१७। तद्वेदगुह्योपनिषत्सु गूढं
तद्ब्रह्मा वेदते ब्रह्मयोनिम् ।
ये पूर्व्वं देवा ऋषयश्च तद्विदु-
स्ते तन्मया अमृता वै बभूवुः ॥ श्वे ५।६ ।

तदेव स्फुटमुच्यते नेति। अस्य रूपं स्वरूपं सन्दृशे चक्षुरादि-ग्राह्ययोग्यप्रदेशे न तिष्ठति, कश्चन एनं चक्षुषा न पश्यति। हृदा भक्तियोगेन मनसा ज्ञानयोगेन हृदिस्थम् एनं ये एवं मद्रूपत्वेन विदुः जानन्ति दर्शनविषयं कुर्व्वन्ति ते अमृताः भवन्ति ।

१७। जन्मादिपूर्णत्वेन दर्शनेन सत्ताभावोपलब्धिः। न तया तस्य निगूढ़सम्बन्धमाधुर्य्यं प्रतिभाति। केन वा तद्भवेत्तदाह तदिति। तत्परतत्त्वं वेदगुह्योपनिषत्सु वेदगुह्याः याः उपनिषदः तासु गूढं प्रच्छन्नभावेनावस्थितम्। ब्रह्मा आदिपुरुषः गूढ़भावेनावस्थितं तत् ब्रह्मयोनिं वेदप्रभवस्थानं वेदते जानाति। आदिपुरुषानन्तरं पूर्व्वं पुराकाले देवाः ऋषयश्च तत् परतत्त्वं ब्रह्मयोनित्वेन विदुः। ते तन्मयाः तदात्मभूताः अमृताः बभूवुः। अतः वयमपि तादृक्साक्षादुपलब्ध्या-ऽमृता भविष्याम इत्यभिप्रायः।

*

* *

सूर्यकारिणादित्यादयः साक्षाद्ब्रह्मतयोपदिश्यन्ते। ब्रह्मवल्ल्यां संयद्वयोग्यानामपि तेषां कथमारोपवल्ल्यां सन्निवेश इति प्रश्नस्योत्तरमेतद्यत्—वेदाद्वेदान्ते समारोहो वेदव्यवहृतानामादि-

त्यादिशब्दानामपरिहार्य्यत्वात् ; यथा तेषां विरोधाभावेन वेदान्तसिद्धानां ब्रह्मादिशब्दानां व्यवहारो वेदावेदान्तस्य भेदं प्रदर्शयतीति तमेवानुसृत्य ग्रन्थान्तरत्वमस्य। न वयं ब्रह्मणि भेदं स्वीकुर्म्मः, अथाप्युपरिष्टाद्भेदसाधकवत्प्रतीयमानवाक्यनिबन्धनं यथा केवलं मुख्यगुणयार्थं तथैव पूर्व्वेण।

१—४। अथ प्रथमवचनसंघे (१) कथं वा प्रपञ्चातीतस्य प्रपञ्चसम्बन्धेऽपि न तादृक्त्वस्य हानिस्तत् प्रदर्शयति श्रुतिस्तत्सान्निध्यवशाच्चगतः क्रियाशीलत्वसंघटनेन। दूरनिकटसम्बन्धत्व-मत्वादेव सिद्धः। द्वितीये (२) यत्तस्य तदुक्तम्। तृतीये (३) विषयाविष्टचित्तानां ब्रह्मणः प्रपञ्चत्वेन योऽयं परिग्रहस्तं निषिध्य तत्प्रेरकत्वेन ग्रहणं निबध्यते। चतुर्थे (४) ब्रह्मणो दुर्ज्ञेयत्वेऽपि ज्ञानविषयत्वं तस्य कथं सिध्यतीति तत् प्रदर्श्यते तस्य बोधयितृत्वेन। जीवे तस्यो बोधोत्पत्तिर्न भाष्यकारस्याप्यनभिमता। बोधस्योत्पत्तिविनाशयोरवश्यम्भाविता न पुनर्बोधयि-तरि संघटते। जीवे यद्यप्युत्पत्तिविनाशवान् बोधो ब्रह्मणो बोधस्वरूपत्वेन ग्रहणे महानन्तराय इति मन्यसे तदपि तस्य सर्व्वानुभूत्वेन परिहृतं भवति। बोधस्याखण्डत्वेऽपि जीवस्य क्षुद्रस्य तस्य ग्रहणासामर्थ्यात् खण्डात् खण्डान्तरग्रहणकाले पूर्व्वस्य विलयः परस्योदय इति यदपि दृश्यते तदपि दृश्यमात्रम् ; यतोऽप्युत्तरबोधस्य पूर्व्वबोधमूलत्वं न जातु स्वीकर्त्तुं शक्यम्। 'यदस्य त्वं यदस्य देवेषु' इत्यस्याचार्य्यकं व्याख्यानं नूतनतया भासमानमपि न कमपि दोषमावहति, ब्रह्मप्रकाशस्थानत्वेन देवमनुष्यादीनां सर्व्वेषां च ग्रहणात्। न खल्वेकस्मिन् समग्रस्वरूपप्रकाशो जातु सम्भवति, अतश्चराचरेषु तत्प्रकाशदर्शनं विना न कोऽपि पूर्णतामीयीतेति च सिद्धान्तः सम्यगेव।

५—१०। पञ्चमे (५) यदिहलोकपरलोकयोरेकत्वं ब्रह्मणि प्रदर्शितं तत् खलु जीवजीवन-स्याखण्डत्वं प्रतिपादयति। एकस्मिन् ज्ञातरि नान्यथा भवितुमर्हति। सर्व्वत्रैव तच्छासनं त्रिवत्वेनेति तयोरिहपरयोर्भेदबुद्ध्या भीतिरज्ञानमूलिकैव। विशेषनियोगोऽस्याः श्रुतेर्गतिवज्ज्ञान। षष्ठे (६) प्रथमं सुखस्वरूपत्वेन ब्रह्मणोऽपरोक्षत्वं निर्णीय पश्चाज्ज्ञानरूपत्वेनेति न कश्चिदपि विरोध-मुद्भावयति। ब्रह्मणि स्वरूपस्य न नानात्वं, तथा सति स्वस्मिन् विरोधोऽपरिहार्य्यः। सुखस्य ज्ञानस्यैकमेव तस्मिन्नन्यथा प्रथमं सुखस्वरूपमेवापरोक्षत्वसाधकत्वेन विन्यस्य पुनश्च प्रश्नानुसारिण्युत्तरे ज्ञानस्वरूपस्य तादृक्त्वं न जातु प्रतिपाद्येत। कथं वा स्वरूपाणामेकत्वं वस्यामस्तदुपरिष्टात्। सप्तमे (७) ब्रह्मणः सर्व्वातीतत्वेऽपि तस्मिन्नेव नित्यकालं निखिलसंसारस्य स्थितिं दर्शयति श्रुति-स्तेन च तस्य नित्यसम्बन्धम्। अष्टमे (८) सर्व्वातीतस्य सर्व्वगतत्वं सर्व्वान्तर्भावकत्वं न जात्वप-गच्छतीति प्रदर्श्य तस्मिन् सर्व्वदैव भेदशून्यत्वमिति द्रढयति। नवमे (९) यद्यपि विज्ञानात्मनि ज्ञानस्वरूपत्वेन परतत्त्वोपलब्धिरुच्यते, तथापि न तत्र परिमितत्वेन तस्य दर्शनं किन्त्वाहैं व्यापक-त्वेन। स्थाने दृष्टिनिवेशो ज्ञानेऽनन्तत्वरक्षणमिति साधकसमयः समर्थ्यतेऽनया। दशमे (१०) पुनरष्टमोक्तविषयस्यादर्शेन स्थापनम्।

११। एकादशे स्वरूपज्ञानं, तेन ब्रह्मैकत्वमेकतया च शोको निवर्त्त्यन्ते। प्रथमन्तावत् स्वरूपज्ञानं परतत्त्वप्रेरणया हृदि प्रादुर्भवतीति निर्देशः किं वेदान्तप्रतिपत्तिसिद्ध इति विवेक्तव्यम्।

आदिपुरुषे वेदान्तप्रादुर्भाव इति मते नास्ति कस्याप्यसम्मतिः। प्रतिहृदयं तत्प्रादुर्भावः सम्भवेनेति वेदान्तसमयः—"कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति, हृदये ह्येव सत्यं प्रतिष्ठितं भवति।" (१२।१) इति। अतएव च जातस्य शिशोर्वेदाभिधत्वमथर्वणि च (११।२४ प्र। ५।७) ब्रह्मचारिणो बटोर्वेदोत्पादयितृत्वम्। यदपि वेदादिपुरुषे प्रादुर्भूतपरतत्त्वज्ञानं सम्प्रदायाविच्छेदेनाद्यत्वानामपि सम्भवति तच्छ्रवणेनेति तदपि न सम्यक्। "यमेवैष वृणुते तेन लभ्यः" इति स्वात्मप्रकाशं विना श्रवणेन परतत्त्वविज्ञानसम्भावनां प्रतिवदति श्रुतिः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" (५।३) इत्यादिभिः। अतएव हि श्वेताश्वतर आह—

"यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" (१२।१३) इति।

यथैवान्धानां वर्णादिपरिज्ञानं न सम्भवति तथैव परमतत्त्वानुन्मीलितान्तर्नयनानां न श्रवणाध्ययनादिना परतत्त्वपरिग्रहः। भवति चान्तस्तत्स्वरूपस्फूर्त्तौ तेन च जीवस्यैकता। कथमिति जिज्ञासा चेत्, तत्स्वरूपानुरूपेण जीवस्वरूपेणावस्थानभावित्वं तस्या इति मन्तव्यम्। न केवलं स्वरूपैक्यं स्वरूपस्यानन्त्यात् यथा च स्वादुतरोत्तरसत्ताकल्पस्फुरणं जीवस्य, तथैव भोगविधिस्फूर्त्तिरपि तद्धृदये। उत्तरग्रन्थेऽन्नादिषु ब्रह्मदर्शनेन विशेषविशेषस्वरूपस्फुरणं पूर्व्वमुक्तम् (३।१६० पृ)। अत्र पुनरन्नादि सर्व्वं भोगोपकरणमिति सहजेनैवोपलभ्यते। सर्व्वेषु भोगोपकरणेषु ब्रह्मदर्शनं जीवे तत्तत्स्वरूपपरिपुष्टये भवतीति ब्रह्मदर्शनविधिनैव तेषामुपभोगः। विद्यावल्ल्यां विस्तारोऽस्य द्रष्टव्यः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र स्वरूपमेकं बहु वेति विचार्य्यम्। सत्यं सत्तामात्रं चेत्, ब्रह्मणाभेद एव तत्। सर्व्वं सन्मूलकमिति कथनं ब्रह्मसत्तया तेषां सत्तेति न पुनर्विरुद्धम्। ज्ञानन्तु ज्ञप्तिमात्रं, ब्रह्मैव ज्ञानं न ततस्तस्य कापि भिन्नता। आनन्त्यन्तु ब्रह्मणः परिच्छेदराहित्यं व्यनक्ति न तस्मात् तस्य भेदः। एवं सत्यादीनां ब्रह्मतो भेदेन ग्रहणस्य निमित्ताभावादेकत्वमखण्डत्वं न जातु तैरपैति। सुकृतं रसस्वरूपञ्च तदिति न भेदकारणम्। क्रियाशक्तिस्तेनानन्ता; आनन्दः पुनः पूर्णत्वमस्य प्रदर्श्यते सुतरां तया तेन च तस्याखण्डत्वस्य न कापि हानिः। एवमखण्डत्वे सिद्धेऽपि शिवत्वमस्य ज्ञानाद्भिन्नमिति प्रतीयते। नैवम्। न हि पूर्णज्ञानं जातु शिवत्वविरहितं, यतः शिवत्वं ज्ञानस्य पूर्णत्वमेव प्रकटयति। पूर्णज्ञानेन पूर्णतापादनाय यत् यत् क्रियते तत्तज्जीवानां हिताय सुखाय भवतीति तस्यैव शिवमिति नामकरणम्।

१२—१७। द्वादशे (१२) यदुक्तं तदतिरिक्तमेतद्वक्तव्यं यत्, न ह्यानन्दो निष्क्रियत्वमानयति साधकेषु किन्तर्हि पूर्णक्रियाशीलत्वम्। "आत्मानं स्वयमकुरुत" इत्युक्त्या ब्रह्मणः सुकृतत्वं स्थापितम्। कृतिरेव कृतं—कृतं क्रिया—ब्रह्मणि नित्यं सुष्ठु-क्रिया वर्त्तते। सैव क्रियानन्दरूपेण सर्व्वत्रात्मानं प्रकटयति। ये पुनस्तदानन्दस्पर्शमनुभवन्ति ते तत्स्वभावलाभात् भवन्ति क्रियावन्त एव। अतएवाह श्रुतिः "सुखमेव लब्ध्वा करोति" इति। त्रयोदशे (१३) यत् कारणलक्षणमनुक्तं तेनैव सर्व्वत्र कार्य्येषु कारणधर्म्मानुपलभ्य तदंशे तदाविर्भावं श्रुतिरबोधयत्। कार्य्यस्य कार्य्यत्वं कारणं विना न जातु सम्भवति, अतएवाद्भ्यादीनामादित्यमादिकं कारणे ब्रह्मणि

विद्यत इति तत्तदनर्थसंघनिरोधाय कारणब्रह्मदर्शनमुपदिश्यते तेषाम्। चतुर्दशे ( १४ ) ब्रह्मणः प्रपञ्चस्वभावत्वं निषिध्य तस्य शास्तृत्वं स्थापयति। शास्यशासकयोर्भेदं विना न आत्यन्तिकशास्तृत्वमन्यस्य शास्तृत्वं सम्भवति। एवञ्च शास्ये शास्तीचितधर्मारोपेण तद्धर्मातीतेन विना कथं वा सम्भवेत्। अतएव ब्रह्मणोऽस्थूलत्वादिकं शास्यधर्मातीतत्वं दर्शयति। द्रष्टृत्वादिकं दृष्टादिषु दर्शनादिधर्मारोपेण तस्मिन्ननुभूयत इति न प्रपञ्चधर्मत्वं तेषाम्। चतुर्दशे आकाशातीतत्वं संसाध्य पञ्चदशे ( १५ ) प्रथमं तस्य कालातीतत्वं दर्शयति। कालदेशातीतं यदि न भवेद्ब्रह्म कालदेशगतानां शास्तृत्वं न जातु तस्मिन् सम्भवेत्। तदेव सर्व्वेषामायुस्तस्मिन्नेव तेषां नित्यकालं स्थितेरिति सुष्ठूक्तमत्र। ब्रह्मणि देवादीनां स्थितिं सुस्पष्टमुल्लिख्य तस्मिन् समस्तविश्वस्य स्थितिकथाकाशाधारत्वेन तस्य। प्राणादीनां प्राणनादिभिः प्रत्यक्षीकरणेन नानात्वं तस्मिन्नापतति चाखण्डत्वञ्च तस्य तिरोधत्त इति तन्निवारणाय विविधविषयेषु तत्तन्मूलशक्तित्वेन प्रकाशमानमपि ब्रह्म नित्यं स्वस्यैकत्वं न जहाति, तथा सति तत्तद्विषयैः सह तस्य विनाशएवोपालप्स्येत। ये पुनर्नानाविषयेषु तस्य नानात्वमवधारयति तेषां बुद्धिभेदो जायते, तेन च तेषु "भयं द्वितीयाभिनिवेशतः स्यात्" इति न्यायेन भयकारणमुत्पद्यते। अत्र पुनराकाशलिङ्गत्वं ब्रह्मणः पश्यतो तदाकाशमेवेति बुद्धिर्न जायेतेत्यभिप्रायेण तस्याकाशत्वखण्डनम्। षोडशे ( १६ ) सर्व्वविधसादृश्यमस्मिन् निवार्य्य केवलं पूर्णतया तत्परिचयो निबद्धते। कथं तत् पूर्णत्वमनुभवविषयं भविष्यतीति अत्र ज्ञानञ्च भक्तिश्चोभयमेव कारणत्वेनोपस्थाप्यते। न खलु वक्तव्यं भक्तिर्नौपनिषद्विषया पुराणविषयत्वात्तस्याः। अस्यामुपनिषदि परायाभक्तेरुल्लेखः सुस्पष्टमेव। इयमेव पुराणमूलमिति सुधीभिर्विचिन्त्यम्। सप्तदशे (१७) निःसंशयोपलब्धेरुपायो निबद्धते। चक्षुरादेः प्रेरकत्वेन शक्तिमत्तया, जड़ादिपूर्णत्वेन च सत्तामात्रतया भवति तस्योपलब्धिः। न यदि तस्य ज्ञानं, तज्ज्ञानस्य च पुनरस्माकं कुशलपथप्रदर्शकत्वं प्रतिभाति, न जातु स्वादलाभिस्तस्य मधुरतरसत्वस्यानुभवः। भवति च स ह्यस्माकं तेन ज्ञानवितरणेन। यदि न स्यादस्मासु तदनुग्रहणोपयोगिता कुतो वा वेदयोगित्वं तस्य अवेदनुभवगोचरः। अतो हि जातमात्रस्य शिशोर्देवत्वं [illegible]योगित्वं स्वीकृतं तत्त्वदर्शिभिरुपनिषद्भिश्चर्षिभिः। इत्यलं पल्लवितेन।

●

## इति ब्रह्मवल्ली चतुर्थोऽध्यायः।

---

# पञ्चमोऽध्यायः।

## परात्मवल्ली।

१। केनेषितं पतति प्रेषितं मनः
केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति
चक्षुः श्रोत्रं क उ देवो युनक्ति॥
श्रोत्रस्य श्रोत्रं मनसो मनो य-
द्वाचोह वाचं स उ प्राणस्य प्राणः
चक्षुषश्चक्षुरतिमुच्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति॥ तल १(१)१।२

१। ब्रह्मपरात्मनोर्यद्यपि न भेदस्तथापि सर्व्वान्तर्भावकाद्ब्रह्मणो देहादिप्रेरकत्वेन भेदं परिकल्प्य परात्मवल्ल्यारभ्यते। तत्र प्रथमं प्रश्नोत्तरच्छलेन तस्य चक्षुरादिप्रेरकत्वं निबध्नाति श्रुतिः केनेषितमिति। केन प्रेषितं प्रेरितं मनः इषितम् इष्टम् अभिलषितं विषयं पतति अनुगच्छति; प्रथमः मुख्यः प्राणः केन युक्तः प्रेषितः प्रैति गच्छति स्वव्यापारं प्रति, केन इषितां अभिप्रेताम् इमां वाचं लौकिकाः वदन्ति, कः पुनः देवः चक्षुः श्रोत्रं युनक्ति प्रेरयति ?

प्रश्नानामेकेनोत्तरेण समाधानं करोति श्रोत्रस्येति। यस्मात् स देवः श्रोत्रस्य श्रोत्रं श्रवणकारणं, मनसः मनः मननकारणम्, वाचः वाचं वचनकारणं, प्राणस्य प्राणः प्राणनकारणं, चक्षुषः चक्षुः दर्शनकारणं, तस्मात् धीराः श्रोत्रादिभिः तत्तत्सामर्थ्यभूतं कारणं अतिमुच्य अतिशयेन पृथक्कृत्य अस्मात् लोकात् प्रेत्य अमृताः भवन्ति।

२। तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति॥ काठ २।१२।

३। नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा वृणुते तनूं स्वाम्॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्॥

२। न हि परात्मा योगं विना अन्तश्चक्षुर्गोचरीभवतीत्याह तमिति। दुर्दर्शं दुःखेन दर्शनीयं, गूढं गहनम्, अनुप्रविष्टं प्रच्छन्नं, गुहाहितं गुहायां हृदि स्थितं, गह्वरेष्ठं गह्वरे इन्द्रियातीतदुर्गमस्थाने तिष्ठतीति गह्वरेष्ठं, पुरातनं सनातनं देवम् अध्यात्मयोगाधिगमेन आत्मनि समाधानम् अध्यात्मयोगः तस्य अधिगमेन आयत्तीकरणेन मत्वा ज्ञात्वा धीरः संयतात्मा हर्षशोकौ जहाति त्यजति।

३। यद्यपि परात्मा स्वयमात्मप्रकाशं न कुर्य्यात्, तत् स्वरूप-ज्ञानं जातु न सम्भवेदित्याह नायमिति। अयम् आत्मा परात्मा न प्रवचनेन वेदाध्ययनेन अनेकवेदस्वीकरणेन, मेधया ग्रन्थावधारण-सामर्थ्येन, बहुना श्रुतेन श्रवणेन शास्त्रज्ञानेन वा न लभ्यः। यद्येवं कथमस्य लाभः? यं जनम् एष वृणुते अनुगृह्णाति तेन एष लभ्यः। कथं? एष आत्मा परात्मा स्वां तनूं स्वरूपं वृणुते तत्सन्निधाने प्रकाशयति।

स्वरूपज्ञानलाभानन्तरं तेनैकीभवनरूपा प्राप्तिः कषायपरिपाकेण भवतीत्याह—दुश्चरितात् पापकर्मणः यो न विरतः, यो न शान्तः न

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनम्।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥

कठ २।२३—२५।

४। अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तन्मृत्युमुखात् प्रमुच्यते॥ कठ ३।१५

निवृत्तेन्द्रियव्यापारः, यो न समाहितः न एकाग्रमनाः, यो न शान्तमानसः न—अव्यापृतचित्तः सर्व्वेषां विशेषणानां नञा सम्बन्धवशात् प्रत्येकमेषां—प्रज्ञानेन स्वरूपमात्रज्ञानेन न एनम् आप्नुयात् प्राप्नुयात्। नारदप्रभृतीनां साधकानां प्रथमदर्शनानन्तरं कषायपरिपाकं यावत् नाभूदविच्छेदसाक्षात्कार इति ध्येयम्।

विनानुग्रहं न भवति स्वरूपज्ञानं निरवच्छेदसाक्षाद्दर्शनं चेति द्रढ़यति तस्य महत्त्वप्रदर्शनेन यस्येति। यस्य परात्मनः ब्रह्म ब्राह्मणञ्च क्षत्रं क्षत्रियञ्च उभे ओदनम् अशनं संहरणविषयं भवतः—तयोर्धर्म्मसंरक्षणसहायत्वेऽपि तस्य वैषम्यरहितत्वं मृत्योरधीनैरपरैस्तयोः समत्वं साधयति—योऽयं मृत्युर्ग्रसति सर्व्वं सोऽपि यस्य उपसेचनम् अशनोपकरणम् (१।२।१९); स यत्र निजस्वरूपे नित्यविद्यमानः, को वा तत्र निजस्वरूपे इत्था इत्थं विद्यमान इति वेद जानाति।

४। सर्व्वबुद्धिसाक्षिणः परात्मनः शब्दादिप्रवर्त्तकत्वेऽपि न शब्दादिसाम्यमित्याह अशब्दमिति। यत् परात्मतत्त्वम् अशब्दम्, अस्पर्शम्, अरूपम्, अव्ययम् अक्षयम्, तथा अरसं, नित्यम् अगन्धवत् च; तत् अनाद्यनन्तम् आद्यन्तविरहितं, महतः बुद्धेः परम् अतीतं, ध्रुवं कूटस्थं नित्यं परात्मतत्त्वं निचाय्य अवगम्य मृत्युमुखात् मृत्युभयात् प्रमुच्यते मुक्तो भवति।

५। पराञ्चि खानि व्यतृणत् स्वयम्भू-
स्तस्मात् पराङ् पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन्॥ कठ ४।१।

६। य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाणः
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिँल्लोकाः श्रिताः सर्व्वे
तदु नात्येति कश्चन। एतद्वैतत्।
अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।

५। इन्द्रियेष्वभिनिवेशवशतः परात्मानं न पश्यति जनः। तेभ्योव्यावृतनयनएव तं पश्यतीत्याह पराञ्चि इति। स्वयम्भूः परात्मा पराञ्चि वाह्यविषयाभिमुखानि खानि श्रोत्रादीन्द्रियाणि व्यतृणत् सृष्टवान्; तस्मात् जनः पराङ् वाह्यवस्तु पश्यति, न अन्तरात्मन् न अन्तरात्मानम्। आवृत्तचक्षुः तेभ्यः परावृत्तनयनः कश्चित् धीरः धीमान् विवेकी अमृतत्वम् इच्छन् प्रत्यगात्मानं परात्मानम् ऐक्षत् दृष्टवान्—अधुनापि पश्यति तम् तादृग्जनः।

६। सोऽयं परात्मा चिरजाग्रज्जनानामर्थान् विदधातीत्याह य एष इति। यः एष पुरुषः प्राणिषु सुप्तेषु कामं यथाकामं यथा स्यात् तथा कामम् अभिलषितार्थनिचयं निर्म्मिमाणः निष्पादयन् जागर्त्ति। तत् एव परतत्त्वं शुक्रं शुभ्रं शुद्धं, तत् ब्रह्म, तत् एव अमृतम् उच्यते तत्त्वज्ञैः। सर्व्वे लोकाः तस्मिन् परब्रह्मणि श्रिताः स्थिताः। तत् परतत्त्वं कश्चन न अत्येति न अतिक्रम्य वर्त्तते। तत् आत्मतत्त्वमेव एतत् यत् जिज्ञासितम्।

प्रेरयितृत्वेन प्रतिजनहृदयं प्रविष्टः सोऽयमेकएवेत्याह अग्नि-

एकस्तथा सर्व्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥
वायुर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥
सूर्य्यो यथा सर्व्वलोकस्य चक्षु-
र्न लिप्यते चाक्षुषैर्वाह्यदोषैः ।
एकस्तथा सर्व्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन वाह्यः ।
एको वशी सर्व्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति ।

रिति । यथा अग्निः एकः सन् भुवनं इयं सर्व्वं जगत् दाहिकया गत्या प्रविष्टः रूपं रूपं काष्ठतृणादिरूपं प्रति प्रतिरूपः—तत्र तत्र प्रतिरूपवान् वाह्यभेदेन बहुविधः—बभूव ; तथा सर्व्वान्तरात्मा सर्व्वेषां भूतानाम् अभ्यन्तरः आत्मा रूपं रूपं प्रति प्रतिरूपः तत्तदनुरूपः, बहिश्च आकाशादिभिः ।

वायुरिति । वायुः यथा एकः सन् इत्यादि पूर्व्ववत् ।

एवं प्रतिरूपत्वेऽपि न परात्मा तैर्लिप्यतइत्याह सूर्य्य इति । सूर्य्यः यथा सर्व्वलोकस्य चक्षुः सन् चाक्षुषैः चक्षुःसम्बन्धैः वाह्य-दोषैः—अभद्रदर्शनादिभिर्यथा तत्तद्दोषैश्चक्षुर्दूषितं भवति न तथा—तैः लिप्यते, तथा एकः सर्व्वभूतान्तरात्मा वाह्यः बहिःस्थितः सन्—लोक-दुःखादिति शेषः—लोकदुःखेन न लिप्यते ।

एवङ्गुणसम्पन्नपरात्मदर्शनेन कृतार्थतेत्याह एकइति । वशी नित्य-

तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥
नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥

काठ ५।८—१३।

७। तं त्वां पृच्छामि क्वासौ पुरुष इति। तस्मै स होवाच। इहैवान्तःशरीरे सौम्य स पुरुषोयस्मिन्नेताः षोड़शकलाः प्रभवन्तीति।

मात्मवशे स्थितः यः सर्व्वभूतान्तरात्मा एकः सन् एकं रूपं स्वरूपं बहुधा पात्रभेदात् विविधरूपेण प्रतीयमानं करोति, ये धीराः विवेकिनः तम् आत्मस्थं पश्यन्ति, तेषां शाश्वतं चिरस्थायि सुखं, न इतरेषां न अपरेषाम् अताहशानाम्।

नित्यानामिति। नित्यानां मध्ये यः नित्यः, चेतनानां जीवानां मध्ये यः चेतनः, बहूनां मध्ये यः एकः कामान् अर्थान् विदधाति ; ये धीराः तमात्मस्थम् इत्यादि पूर्व्ववत्।

७। भरद्वाजगोत्रोत्पन्नः सुकेशाः कोशलदेशीयराजतनयेन हिरण्यनाभेन सम्पृष्टो यदाऽऽत्मतत्त्वं तं न विवक्तुमशकत्, तदेवाचार्य्यं पिप्पलादमपृच्छत् तं त्वेति। तं त्वा त्वां भगवन्तं पृच्छामि—असौ पुरुषः क्व इति। तस्मै सुकेशसे स पिप्पलाद उवाच—हे सौम्य, इह एव अन्तःशरीरे हृदि स पुरुषः, यस्मिन् एताः प्राणाद्याः षोड़शकलाः प्रभवन्ति उत्पद्यन्ते इति।

स ईक्षाञ्चक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ।

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम्, मनोऽन्नमन्नाद्वीर्य्यं तपो मन्त्राः कर्म्म लोका लोकेषु च नाम च ।

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोड़शकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतोभवति । तदेष श्लोकः ।

स षोड़शकलः पुरुषः ईक्षांचक्रे पर्य्यालोचयामास—कस्मिन् उत्क्रान्ते वहिर्निःसृते अहम् शरीरात् उत्क्रान्तः निःसृतः भविष्यामि, कस्मिन् प्रतिष्ठिते प्रतिष्ठास्यामि इति ।

स पुरुषः प्राणं हिरण्यगर्भम् प्राणात् श्रद्धां शुभप्रवृत्तिहेतुभूताम् असृजत, ततः खम् आकाशं, वायुः, ज्योतिः तेजः, आपः जलं, पृथिवी क्षितिः, इन्द्रियं दशसंख्यं, मनः सङ्कल्पविकल्पात्मकम्, अन्नं व्रीहियवादिकम् ; अन्नात् वीर्य्यं सामर्थ्यं बलम्, तपः विशुद्धिसाधनम्, मन्त्राः कर्म्मसाधना ऋगादयः, कर्म्म अग्निहोत्रादि, लोकाः कर्म्मफलरूपाः, लोकेषु नाम च देवादयः कर्म्मफलभोक्तारः बभूवुः ।

एवं नामरूपाभिव्यक्तिमभिधाय पुनस्तयोस्तस्मिन् विलयं विलये च तस्याविकृतभावेन स्थितिमाह दृष्टान्तमुखेन स यथेति । स षोड़शकलः पुरुषः—यथा स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्राभिमुखगमनशीलाः इमाः नद्यः समुद्रं प्राप्य अस्तं गच्छन्ति तिरोदधते,

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।

तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति

तान् होवाचैतावदेवाहमेतत् परं ब्रह्म वेद।

नातः परमस्तीति। प्रश्न ६।१—७।

८। दिव्यो ह्यमूर्त्तः पुरुषः स वाह्याभ्यन्तरो ह्यजः।

अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः॥

मु २(१)।२।

तासां नामरूपे गङ्गायमुनेत्यादिलक्षणे भिद्येते विनश्येते समुद्रइति एवं प्रोच्यते, एवम् एव अस्य परिद्रष्टुः पुरुषस्य पुरुषायणाः पुरुषाभिमुख-गमनशीलाः प्राणाद्याः षोड़शकलाः पुरुषं प्राप्य अस्तं गच्छन्ति तिरो-दधते, तासां षोड़शकलानां नामरूपे भिद्येते विनश्येते पुरुष इति एवं—प्रोच्यते। यएवं विद्वान् स पुरुषः अकलः प्राणादिकलाविरहितः निरुपाधिः सन् अमृतोभवति। तत् एतस्मिन्नर्थे एषश्लोकः—

अराइति। रथनाभौ रथचक्रस्य नाभौ अराः रथचक्रपरिवाराः इव यस्मिन् पुरुषे कलाः प्राणाद्याः प्रतिष्ठिताः, तं वेद्यं वेदनीयं पुरुषं वेद जानीयात्। मृत्युः यथा वो युष्मान् मा परिव्यथाः मा परिव्यथयतु तथा तं पुरुषं वित्त इति शेषः।

तानिति। तान् शिष्यान् पिप्पलाद उवाच—एतत् परं ब्रह्म, एतावत् एव अहं वेद विजानामि। न अतः परतरात् प्रकृष्टतरम् अस्ति।

८। तस्य परमपुरुषस्य प्राणाद्यतीतस्वरूपमाचष्टे दिव्य इति। नामरूपवीजभूतादव्याकृतात् परतः परात् अक्षरात् हिरण्यगर्भात् परः स पुरुषः हि दिव्यः अलौकिकः, अमूर्त्तः सर्व्वविधमूर्त्तिवर्ज्जितः, वाह्याभ्यन्तरः वाह्याभ्यन्तरेण वर्त्तमानः, अजः जन्मरहितः, अप्राणः

९। अस्मिन् द्यौः पृथिवी चान्तरीक्ष-
मोतं मनः सह प्राणैश्च सर्व्वैः।
तमेवैकं जानथ आत्मानमन्या
वाचो विमुञ्चथ अमृतस्यैष सेतुः॥
अरा इव रथनाभौ संहता यत्र नाड्यः
स एषोऽन्तश्चरते बहुधा जायमानः।
ओमित्येव ध्यायथ आत्मानं
स्वस्ति वः पराय तमसः परस्तात्॥
मु २ (२)।५।६।

१०। सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम्।

प्राणरूपकरणवर्ज्जितः, अमनाः सङ्कल्पविकल्पात्मकमनोरहितः, शुभ्रः शुद्धः।

९। तमेव पुनर्विवृणोति अस्मिन्निति। प्राणैः करणैः सर्व्वैः अन्यैश्च सह द्यौः पृथिवी अन्तरीक्षं मनः च अस्मिन् परात्मनि ओतं समर्पितम्। तम् एव एकम् आत्मानं परात्मानं जानथ जानीत अन्याः वाचः ग्राम्यकथाः विमुञ्चथ विमुञ्चत परित्यजत। कथम्? एष परात्मा अमृतस्य सेतुः संसारोत्तारहेतुः।

अरा इति। रथनाभौ अराः इव यत्र हृदये नाड्यः संहताः सम्प्रविष्टाः, तत्र हृदये स एष परात्मा बहुधा जायमानः प्रकाशमानः अन्तः चरते विराजते। तम् आत्मानं परात्मानं ओम् इति ओङ्काररूपेण ध्यायथ चिन्तयत। तमसः परस्तात् तामोरूपं संसारं तीर्त्वा पराय परकालाय नः युष्माकं स्वस्ति निर्व्विघ्नम् अस्तु।

१०। ग्राम्यकथा वर्ज्जयित्वा परात्मसाक्षात्काराय किं कर्त्तव्यं तदाह सत्येनेति। एष आत्मा सत्येन सत्याचरणेन, तपसा मननेन,

अन्तःशरीरे ज्योतिर्म्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ॥ मु ३(१)।५।

११। न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्म्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥
एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन् प्राणः पञ्चधा संविवेश।
प्राणैश्चित्तं सर्व्वमोतं प्रजानां
यस्मिन् विशुद्धे विभवत्येष आत्मा ॥

मु ३ (१)। ८।६।

सम्यग् ज्ञानेन, नित्यं ब्रह्मचर्य्येण अविच्छिन्नेन इन्द्रियसंयमेन लभ्यः। अन्तःशरीरे शरीराभ्यन्तरे सोऽयं परात्मा ज्योतिर्म्मयः ज्ञानोज्ज्वलः, शुभ्रः शुद्धः, यं उत्यादिभिः क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः यतयः यत्नशीलाः पश्यन्ति साक्षात्कुर्व्वन्ति। स्वरूपवाचकत्वादस्या अत्र सन्निवेशः।

११। ज्ञानपरिशुद्धचित्तेन तदभिनिवेशएव प्रकृष्टोपायस्तत्-साक्षात्कारायेत्याह न चक्षुषेति। न चक्षुषा, नापि वाचा, न अन्यैः देवैः इन्द्रियैः, तपसा कृच्छ्रसाधनेन, कर्म्मणा अग्निहोत्रादिना वा गृह्यते परात्मा। ज्ञानप्रसादेन ज्ञाननैर्म्मल्येन विशुद्धसत्त्वः निर्म्मलचित्तः सन् ततः तदनन्तरं ध्यायमानः चिन्तयन् निष्कलं सर्व्वावयवशून्यं तं परात्मानं पश्यते पश्यति साक्षात्करोति।

एष इति। यस्मिन् शरीरे प्राणापानादिभेदेन पञ्चधा प्राणः संविवेश सम्यक् प्रविष्टवान्, अस्मिन् एव अणुः अतिसूक्ष्मः आत्मा परात्मा चेतसा वेदितव्यः। प्रजानां जनानां सर्व्वं निखिलं चित्तं

१२। अथहैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेति। एष त आत्मा सर्व्वान्तरः। कतमो याज्ञवल्क्य सर्व्वान्तरः। यः प्राणेन प्राणिति स त आत्मा सर्व्वान्तरो योऽपानेनापानिति स त आत्मा सर्व्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्व्वान्तरो य उदानेनोदानिति स त आत्मा सर्व्वान्तर एष त आत्मा सर्व्वान्तरः।

प्राणैः इन्द्रियैः ओतं व्याप्तम्, यस्मिन् चित्ते विशुद्धे मलविरहिते एष आत्मा परात्मा विभवति आत्मानं प्रकाशयति।

१२। साक्षादपरोक्षत्वं हि परात्मनः। तदेव जनकयज्ञभूमिगतयाज्ञवल्क्योषस्तसंवादेन प्रथयति अथेति। अथ अनन्तरम् एनं याज्ञवल्क्यं चाक्रायणः चक्रस्यापत्यम् उषस्तः पप्रच्छ पृष्टवान्। हे याज्ञवल्क्य इति सम्बोध्य स उवाच—अपरोक्षात् द्रष्टुः परोक्षत्वाभावात् साक्षात् अव्यवहितं यत् ब्रह्म यः आत्मा परात्मा सर्व्वान्तरः तं व्याचक्ष्व विवृणु इति। एवमुक्तो याज्ञवल्क्य आह—एष ते तव आत्मा सर्व्वान्तरः सर्व्वस्याभ्यन्तरः। आत्मशब्दस्य देहादिवचनत्वात् संशयवशात उषस्त आह—हे याज्ञवल्क्य, कतमः आत्मा सर्व्वान्तरः? याज्ञवल्क्य आह—यः प्राणेन मुखनासिकासञ्चारिणा प्राणिति प्राणचेष्टां करोति, स ते तव आत्मा सर्व्वान्तरः; यः अपानेन अधोगवायुना अपानिति अपानक्रियां करोति, स ते तव आत्मा सर्व्वान्तरः, यः व्यानेन सर्व्वदेहगवायुना व्यानिति सर्व्वदेहगतचेष्टां करोति, स ते तव आत्मा सर्व्वान्तरः; यः उदानेन ऊर्द्धगवायुना उदानिति ऊर्द्धगतचेष्टां करोति स ते तव आत्मा सर्व्वान्तरः। आत्मात प्राणनादिक्रियाप्रवर्त्तकः परात्मेत्युत्तरवाक्येनायाति।

स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौर-सावश्वइत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षा-द्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेति। एष त आत्मा सर्व्वान्तरः। कतमो याज्ञवल्क्य सर्व्वान्तरः। न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः। एष त आत्मा सर्व्वान्तरोऽतोऽन्यदार्त्तम्। ततो होषस्तश्चाक्रायण-उपरराम। वृह ५।४।१।२।

प्रत्यक्षवस्तुप्रदर्शनप्रतिज्ञानानन्तरं लक्षणेन तत् प्रदर्शितमित्यपरि-तुष्यन् स उषस्तश्चाक्रायण उवाच—कश्चित् गामश्वं प्रत्यक्षं दर्शयामीति प्रतिज्ञापरः—असौ गौः—यश्चलति, असौ अश्वः—यो धावतीति चल-नादिलक्षणैः—यथा—व्यपदिश्यते, एवमेव—'यः प्राणेन प्राणिति' इत्यादिप्राणनादिलक्षणैः त्वया—एतत् उपदिष्टम्। अतः पुनः पूर्व्वप्रश्नमुत्थापयति—'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्व' इति। याज्ञवल्क्यः पुनः पूर्व्वमुत्तरमेवोत्तरत्वेनोपस्थाप-यति—'एष त आत्मा सर्व्वान्तरः' इति। स पूर्व्ववत् जिज्ञासते—'हे याज्ञवल्क्य, कतमः सर्व्वान्तरः' इति। प्रेरकत्वानुभवेन साक्षात्-प्रत्यक्षीभवति स इति "यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति" इत्यादि श्रौतन्यायमाश्रित्योत्तरमदात् याज्ञवल्क्यो न दृष्टेरिति। दृष्टेः चक्षुषः द्रष्टारं दर्शनकर्त्तारं तत्प्रेरकञ्च न पश्येः त्वम्; श्रुतेः श्रोत्रस्य श्रोतारं श्रवणकर्त्तारं तत्प्रवर्त्तकञ्च न शृणुयाः त्वम्; मतेः मननव्यापारस्य मन्तारं मननकर्त्तारं तत्प्रवर्त्तकञ्च न मन्वीथाः त्वम्; विज्ञातेः बुद्धि-वृत्तेः विज्ञातारं बोधकर्त्तारं तत्प्रवर्त्तकञ्च न विजानीयाः त्वम्। त्वमिति पदेनात्र जीवात्मा द्रष्टृत्वादिपदेन परात्मा। जीवात्मनोऽपि द्रष्टृत्वाद्यस्तीति जीवपक्षात। न, तत् पुनः परात्माधीनतया सिध्यति,

१३। यदैतमनुपश्यत्यात्मानं देवमञ्जसा।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥
बृह ६।४।१५।

१४। द्वे अक्षरे ब्रह्मपरे त्वनन्ते
विद्याविद्ये निहिते यत्र गूढ़े।
क्षरन्त्वविद्या ह्यमृतं तु विद्या
विद्याविद्ये ईशते यस्तु सोऽन्यः॥ श्वेत ५।१।

न स्वातन्त्र्येण, अतएवहि वदति श्रुतिः—"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" (३।२२[१४६पृ]) इति। प्रथमार्थे विक्रियावत्त्वं द्वितीयार्थे त्वन्तर्भावितण्यन्तत्वेन व्याख्यातव्यमिति विप्रतिपत्तौ "पश्यत्यचक्षुः स शृणोत्यकर्णः" "सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्। सर्व्वस्य प्रभुमीशानम्" (६।६) इत्यादिभिः समाधातव्यम्। "अयमात्मा ब्रह्म सर्व्वानुभूः" (३।२१) इत्यस्याः प्रयोगे सर्व्वमनवद्यं भवति। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (३।५[५८पृ]) इत्यत्रापि जीवस्य दृक्शक्तिः परात्मसापेक्षेति न कश्चिद्विरोधः। एष ते तव आत्मा परात्मा सर्व्वान्तरः, अतः परात्मनः अन्यत् आर्त्तम्। ततः तदनन्तरम् उषस्तः चाक्रायणः उपरराम निवृत्तो बभूव।

१३। तस्य सर्व्वनियन्तृत्वमाह यदेति। यदा एतं देवं द्योतनशीलं दातारं वा, ईशानं भूतभव्यस्य कालत्रयस्य नियन्तारम्, आत्मानं परात्मानम् अञ्जसा साक्षात् अनुपश्यति उपदेशप्राप्त्यनन्तरं साक्षात्करोति, ततः तदा न विजुगुप्सते न आत्मानं गोपायितुमिच्छति अन्यं निन्दति वा।

१४। सर्व्वाधारस्य तस्यैशित्वमाह द्वे इति। गूढ़े अनभिव्यक्ते अनन्ते ब्रह्मपरे हिरण्यगर्भात् परे श्रेष्ठे यत्र यस्मिन् अक्षरे परब्रह्मणि

विद्याविद्ये विद्या च अविद्या च द्वे निहिते स्थापिते, तस्मिन् विद्यमाना अविद्या तु क्षरं संसारकारणं, विद्या तु अमृतं मोक्षकारणम्। यस्तु विद्याविद्ये ईशते नियमयति स ताभ्याम् अन्यः तन्नियन्तृत्वात्।

*

* *

वेदे वेदान्तेषु चैकएव शब्दः भूतेषु जीवेषु परात्मनि च प्रयुज्यते। अतस्तत्तल्लिङ्गैरर्थावधारणं तत्र नियमः। आत्मशब्दस्य देहे मनसि जीवे परात्मनि च प्रचुरप्रयोगः। यत्र पुनरिन्द्रियादियोगेन तस्य प्रयोगस्तत्र देहः, परात्मना तु मनो जीवो वा। प्रसिद्धेषु वेदान्तेषु परात्मशब्दस्य विरलप्रचारः, 'आत्मनि परे' इत्येवमस्ति कुत्र-कुत्रचित्। अक्षग्रामस्य प्रेरकत्वादिलिङ्गैः परात्मपर-आत्मशब्दः परिगृहीतः।

१। प्रथमवचनसंघे प्रेरकत्वलिङ्गमेवास्य प्रधानतः परिदृश्यते। न त्वत्र श्रोत्रस्य श्रोत्रमित्यादिना श्रवणकारणादिकमन्यतरतोऽवगम्यते; अत्र च नापि शक्यमर्थान्तरं कर्त्तुं शब्दसन्निवेशक्रममनुसृत्य। एषैव शैली सर्व्वत्र वेदान्तेषु। व्याख्यानकाले यथैषा गृह्यते बहुत्र यथावादी विना वाङ्निष्पत्त्यैव तिरोधत्ते। यथैवात्र कार्य्यात् कारणं पृथक्कृत्य प्रदर्शितं, तथैव सर्व्वत्र। कारणज्ञानादेव मुक्तिरिति कार्य्यात्तद्विभजनयत्नो वेदान्तेषु।

२। कथं वाध्यात्मयोगेनानधिगम्यस्याधिगमो भवतीति जिज्ञासा वस्तुदर्शनरीत्यालोचनेन निवृत्ता भवति। सत्यपि पदार्थे सम्मुखीने न तज्ज्ञानं प्रतिफलति चेन्मनोऽन्यत्र निविष्टम्। व्यक्तीभविष्यत्येतत् पञ्चमे।

३। तृतीयसंघगतवचनानां परात्मपरत्वं सन्दिग्धं, जीवविषयकप्रश्नोत्तरगतत्वादेतेषाम्। "यस्य ब्रह्म च क्षत्रञ्च" इत्यस्या ब्रह्मपरत्वं महर्षिबादरायणेन साधितम्। एतन्निर्दिष्टतत्त्वविषयेण पूर्व्ववर्त्तिश्रुतिद्वयगतविषयस्यैक्यात् परात्मपरत्वमेतयोरवश्यम्भावीति बुद्ध्या तत् परत्वेनात्र द्वयमपि संगृहीतम्। विशेषतः कर्त्तृकर्म्मभेदेन जीवात्मपरात्मनोरेकत्रसन्निवेशान्निःसंशयतामापद्यते परात्मपरत्वमेतयोरिति सुधीभिर्विवेच्यम्। निजस्वरूपे विद्यमानस्य परात्मनोऽनधिगम्यत्वं वचनत्रयस्याभिप्रेतम्। यद्यप्यनधिगम्यएव स तन्मननादिकं सर्व्वं व्यर्थम्; तेन च साक्षात्सम्बन्धस्यासम्भवनायां नित्यं संसारदुःखभागेव स्याज्जीवः। तदनुग्रहेण तत्स्वरूपोपलब्धिसम्भावनेति कथनादनुग्रहस्यानियतत्वेन सर्व्वेषां जीवानां भवेद्दुःखनिवृत्तिः सुखावाप्तिश्चेति शास्त्रारम्भकप्रतिज्ञाभङ्गः। दृश्यते बहुषु जीवेष्वनुग्रहावतारत्वेन च स्वरूपज्ञानम्, तथापि नाविच्छेदसाक्षात्कारो नापि संसारवासनाविरतिः। अतो वदति श्रुतिस्तदुपायः "नाविरतोदुश्चरितात्" इत्यादिभिः। यदि दुश्चरिताविरत्यादिभिरेव तत्प्राप्तिः किमनुग्रहेण? न हि स्वरूपज्ञानं विना तदाराधनं सम्भवति, विना च तदाराधनं न स्यात् कषायपरिपाकः, कषायपाकाभावे च नास्ति निरवच्छेदसाक्षात्कारस्य कापि सम्भावना, तं विना च न चिरसुखावाप्तिः। सुतरां स्वरूपज्ञानकारणस्यानुग्रहस्य निर्निमित्तत्वेऽपि स्थिरता तस्य साधकजीवने तदाराधनादिभिः सिध्यतीति नानुग्रहादीनां वैफल्यम्। न हि

किमपि निर्निमित्तं भवितुमर्हत्यतोऽस्यैवानुग्रहस्यापि किमप्यप्राप्तं निमित्तम्। भवतु तन्नैव निष्टं कर्म। सर्व्वकारणस्य चेन्निमित्तापेक्षित्वं तन्निमित्तस्य तन्नियन्तृत्वापातात् कारणत्वस्य क्षतिः, तन्निमित्तस्य च निमित्तान्वेषणे स्यादनवस्था। अतएव शिवस्वरूपस्य तस्यानुग्रह एव स्वभावो न तत्र निमित्तान्तरमस्तीति सुष्ठूक्तम् "अनुग्रहस्य निर्निमित्तत्वेऽपि" इति। आराधनादीनामपि तन्मूलकत्वमिति न तैरनुग्राहकस्य सर्व्वकारणत्वक्षतिः।

४। स्वभावसाम्यं विना न जातु द्वयोर्वस्तुनोः सम्बन्धो घटते। घटपटयोर्भिन्नत्वेऽपि वर्णादिप्रपञ्चगुणैस्तयोः साम्यमस्ति। नियम्यनियन्तृत्वसम्बन्धः किंवा सम्भवति स्वभावासाम्येऽपि? "अस्थूलमनण्वह्रस्वम्" (४।१४) इत्यादिभिः प्रपञ्चस्वभावत्वं ब्रह्मणोऽस्वीकृतम्। स्थूलत्वादीनामागमापायित्ववशान्न तेषां ब्रह्मस्वभावत्वम्। यदि न विद्यते प्रपञ्चे ब्रह्मस्वभावत्वं नापि वर्त्तते सम्बन्धस्तयोः। अस्ति पुनः प्रपञ्चस्य ब्रह्मस्वभावत्वं सत्तादिभिः। प्रपञ्चोऽयं ब्रह्मशक्तिवैचित्र्य-घटितः। स्थूलत्वादिवैचित्र्यपरिहारेऽपि शक्तिस्तत्रावशिष्यते। शक्तिरियं परब्रह्मणोऽनन्येति शब्दस्पर्शादिसाम्यविरहितत्वेऽपि तयाऽस्य सम्बन्धो न जातु विच्छिद्यते। अतः सर्व्वं प्रपञ्चगुणं परिहायानाद्यनन्तं नित्यं परतत्त्वमित्युक्त्वा तदवगमेन मुक्तिरिति सिद्धान्तयति श्रुतिः।

५। इन्द्रियाणां विषयग्रहणाय देहे सन्निवेशः; अतस्तेषां विषयप्रवणता स्वाभाविकी। न हि खलु तैरन्तरात्मा परिदृश्यते। यद्येवं कथमाह श्रुतिः—"आवृत्तचक्षुः प्रत्यगात्मानमैक्षत्" इति। इन्द्रियाणि विषयेभ्यो विनिवर्त्त्यान्तर्मुखीनतया स्थापितानि मनस्येकीभवन्ति। विषयमल-परिशून्यं मनोदैवं चक्षुरात्मनः। अतएव "मनोऽस्य दैवं चक्षुः" (छा ८।१०।१२।५) इत्यत्र भाष्यकार आह—"मनस्तु त्रिकालविषयोपलब्धिकरणं मर्दितदोषञ्च सूक्ष्मव्यवहितादिसर्व्वोपलब्धि-करणञ्चेति दैवं चक्षुरुच्यते।" इति। वेदान्तेषु क्वचिन्मनसा परात्मा न प्राप्तुं शक्यः, क्वचित् प्राप्तुं शक्य इत्युक्तम्। यत्र न प्राप्तुं शक्य इत्युच्यते तत्रामर्दितदोषं, यत्र प्राप्तुं शक्य इत्युच्यते तत्र मर्दितकषायं मन इति न कोऽपि विरोधः। मर्दितकषायस्य मनसो दैवचक्षुरात्मना परात्मना च परिहृतविरोधत्वादिति बोद्धव्यम्। कोऽयमत्र विरोध इति जिज्ञासायामिन्द्रियाणां विषय-ग्रहणसहायार्थं व्यापृतं मनो यदा विषयमलसंस्पर्शान्मलिनतां भजते, तिरोधत्ते तदास्य विषयातीत-सूक्ष्मपदार्थदर्शनसामर्थ्यम्; एवं सामर्थ्यविलोपएव विरोध इति ज्ञेयम्। विषयदर्शनस्य स्वाभा-विकक्रियातया मनसस्तत्सहायकत्वञ्च तादृक्तया कथमयं विरोध इति परिगण्यते? विवेक-परिपक्वत्वमेव मनसः स्वाभाविक्यवस्था, दृश्यते च तच्छुकादिषु गृहस्थधर्मनिरतेष्वपि, आधुनिकेष्वपि क्वचित् क्वचित्। तदवस्थतया विषयग्रहणसहायकत्वे न पुनस्तस्य विषयातीतसूक्ष्मपदार्थ-दर्शनसामर्थ्यविलोपो भवति। यत्र प्रतिहतास्य स्वाभाविकी शुद्धावस्था तत्रैव योगोपायेन मलापनयः प्रयुज्यते। सिद्धे च तस्मिन् नित्यसन्निहितपरात्मवस्तुदर्शनेऽस्य सामर्थ्यं प्रसरति। दर्शन-मत्र साक्षाज्ज्ञानमिति ज्ञेयम्।

६। पूर्व्वमतवचनैर्जीवस्य मतिमुक्त्वा "य एष सुप्तेषु जागर्त्ति" इति वचनात् श्रीमच्छङ्कर आह—"'य एष सुप्तेषु जागर्त्ति' इति प्रसिद्धानुवादाज्जीवएवायं कामानां निर्म्माता सङ्कीर्त्त्यते। तस्य तु वाक्यशेषेण 'तदेव शुक्रं तद्ब्रह्म' इति जीवभावं व्यावर्त्त्य ब्रह्मभाव उपदिश्यते" (वे, सू, भा, ३।२।४)

इति। श्रीमच्छ्रीकण्ठस्त्वाह—"जीवस्य सत्यसङ्कल्पत्वादिकं तिरोहितमिति तस्य स्वप्नादिसृष्टिसामर्थ्यं न सम्भवति। अतः 'पुरुषो निर्म्मिमाणः' इति न जीवविषयं किन्तु 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन' इति वाक्यशेषादीश्वरविषयत्व-दैकार्थ्यात्" इति। एवमन्येऽपि। विरोधोऽयं भाष्यकाराणां तत्त्वतोऽकिञ्चित्करः ; यतः "न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते" इत्यनन्तरवाक्यमेव स्वयं तु तं समाधत्ते। 'य एष' इत्यत्र यत्पदमुपक्रमगतपरात्मपरम्, एतत्पदं समीपगतजीवपरम्। वेदान्ते पराऽपर-प्रकृतिपरिष्वङ्गात् पुरुषविधतेति पुरुषपदं जीवपरयोरेकभावावस्थितिसूचकम्। तत्पदस्य पर-वर्त्तितत्पदेन सम्बन्धवशात् जीवपरिष्वक्तुः पुरुषस्यैव निर्म्माणकर्तृत्वं व्यक्ततरम्। सुप्तेष्विति पदेन नात्र स्वप्नावस्थेति सूच्यते ; सति स्वापे "अत्रैष देवः स्वप्ने महिमानमनुभवति" (४।५) इत्यादि वेदान्तवचनैर्जीवस्यैव स्वप्नगतविषयानुभवः स्यान्निर्म्मातृत्वन्तु प्राज्ञव्यापारेण। सर्व्वेषु प्राणिषु सुप्तेष्वपि पुनः परात्मा चिरजाग्रत् जाग्रत्स्वप्नसुषुप्तिसमुत्थितानर्थान् याथातथ्यतो निर्म्माति। न पुनर्व्वक्तव्यं सुषुप्तौ जीवार्थमर्थविधाने न किमप्यस्ति प्रयोजनमिति। "पश्यन् वै तन्न पश्यति" ( ४।५[५८४] ) इत्यादिवचनात् परब्रह्मघनानन्दसम्पत्सम्भोगोनार्थस्य इति शिवम्।

कथं सर्व्वभूतान्तरात्मा एकः सन् बहुधा भवतीति प्रश्नोत्तरे रूपं रूपं प्रतिरूपत्वेन तद्भवतो-क्तिरुत्तरं न भवति सन्देहविमोचनाय, तेन तस्य विकारित्वसम्भवात्। विकारित्वं वारयति श्रुति-र्दृष्टान्तमुखेन। अग्निराधारानुसारतस्तद्रूपेण दृश्यमानोऽपि न केवलं नाग्नित्वं जहाति, तद्रूपश्च न भवति तस्य तात्त्विकं भुवनव्यापित्वात्तस्य, सर्व्वत्राविलेनाविकारेणैव च स्थितत्वात्। एवं वायुरपि। अग्निर्व्वायुर्व्वा किं न तत्तद्विषयसम्बन्धान्मलिनत्वं भजते ? दुर्गन्धादिनाऽऽगन्तुकत्वेऽपि अवादिसंसृष्टयोस्तयोर्दूषितत्वेन ग्रहणात् सूर्य्यदृष्टान्तेन निर्लेपतां सर्व्वभूतान्तरात्मनो दर्शयति श्रुतिः। सूर्य्यो हि बहिःस्थः स्वकिरणयोगेनान्यसम्पर्कवान्, सर्व्वभूतान्तरात्मा तु न तथा ; तत् कथमस्य दृष्टान्तस्य साम्यम् ? न हि 'लोकदुःखेन बाह्यः' इति विशेषणेन दृष्टान्तसाम्यम्। कथमभ्यन्तरेण स्थितस्यापि तस्य दुःखबाह्यत्वं सम्भवतीति प्रश्नस्य प्रतिवचनं दुःखस्य[illegible]ानसम्भव-त्वाज्ज्ञानेन तेनासंस्पर्श इति। कथमज्ञानसम्भवत्वं तस्य ? कल्याणे चाकल्याणदर्शनमज्ञानं, तत एव तदुत्पत्तेः। न पुनस्तत् परात्मनि सम्भवति। अस्त्वपि रूपं रूपं प्रतिरूपं यदि न तद्रूपं तात्त्विकं किं व्यर्थेनैतावता प्रयासेन ? न विफलप्रयासः, यतोऽस्य "श्रोत्रस्य श्रोत्रम्" इत्यादिवत् सूर्य्यस्य सूर्य्यः, चन्द्रस्य चन्द्रः, पर्व्वतस्य पर्व्वतः, समुद्रस्य समुद्र इत्यादिभावेन ग्रहणात् सर्व्वत्र तत्तत्-कार्य्याणां कारणस्वरूपतत्त्वोपलब्धिरनायाससाध्या भवति। न हि तस्य कारणत्वेनोपलब्धिं विना कार्य्याणि स्वात्मनियन्तृत्वाभिप्रायेणान्यत्र नियन्तृत्वेन दर्शनं सम्भवति, विनैव दर्शनं न च शाश्वतसुख-लाभः। शाश्वतसुखलाभो यदि स्यादियता प्रयासेन को वा न तं स्वीकुर्य्यात् ? अत्र "अयमात्मा ब्रह्म सर्व्वानुभूः" (४।२१) इत्यस्या नियोगे भवति प्रतिरूपत्वकथनस्य मूलमाविष्कृतम्। अनुरूपभवन-मनुभवः। भवति तत्प्रकारकं ज्ञानमनुभव इति लक्षणयोऽप्यनुरूपभवनेन न विरोधः। सर्व्वमनु-भवति तत्तद्वस्त्वनुरूपं भवतीति सर्व्वानुभूः। न हि जातु सर्व्वान्तरात्मा वस्त्वनुरूपः किन्तु वस्त्वेव तदनुरूपम्, तत् कथं सर्व्वानुभूरिति तद्विशेषणम्। उच्यते। सर्व्वं यमनुजातं तज्ज्ञानानुरूपमेव

ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम् ॥ ( १अ, १३।१३ श्लो )।

इत्यादिभिर्यद्यपि हिरण्यगर्भादेव सृष्टिरजायतेति प्रतीयते तथापि "महाभूतादिवृत्तौजाः" "सर्व्वभूतमयः" "विविधाः प्रजा सिसृक्षुः" "बीजमवासृजत्" इत्येतैः स्वयम्भोर्विशेषणैः प्रदर्श्यते हिरण्यगर्भे निहिततत्त्वानामेव ततोऽभवत् सृष्टिरिति। जीवपरयोरनुप्रवेशादेव यतोऽस्य प्रभवः, ततो न वेदान्तेन स्मृतेर्विरोधइति मन्तव्यम्। वस्तुतस्तु स्वायम्भुवमन्वाद्याः श्रुतेर्मन्वादिमताना-मौत्पत्तिः। तत्र पुनः किं प्रजापतेः, ऋषीणामपि स्रष्टृत्वं दृश्यते,—

त आयजन्त द्रविणं समस्मा ऋषयः पूर्व्वे जरितारो न भूना।
असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥

( ऋक् १०म, ८२सू, ४ ऋक् ) इति।

"प्राणात् श्रद्धाम्" इत्याकाशादेः पूर्व्वं श्रद्धाया उत्पत्तिस्तत्सहायः प्रजापतिः सर्व्वं पर्य्यभवदिति प्रतीयते तपःस्थानीयत्वात्तस्याः। कथं प्राणो हिरण्यगर्भइति निर्द्देशः? ऋक्प्रामाण्यात्;—

अपां यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।
ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ॥

( ऋक् १०म १२१सू, ७ऋक् )

इति।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकआसीत्।
स दधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ( १ ऋक् )

इत्यत्र भूतस्य अग्रे हिरण्यगर्भः समवर्त्तत, जातः सन् एकः पतिः आसीत्; पृथिवीम् इमां द्यां च दधार स्थापितवान्। कोऽसौ देवः यतो हिरण्यगर्भो जातः, न सोऽत्र निर्द्दिष्ट इति सोऽयं देवः पुरुषएवेति वेदान्तो निर्णीतवान्। कः प्रजापतिरितिवेदवादिनः, अन्ते

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ ( १० ऋक् )

इत्युक्तत्वात्। एवं द्वितीयायामृच्यपि यत्पदं 'स दधार' इत्यत्रत्यतत्पदेन सम्बन्धवशात् प्राणा-हिरण्यगर्भादेव सृष्टिरिति परवर्त्तिनः। ऋक्षु पुनर्नियन्तृत्वमेव स्पष्टं न स्रष्टृत्वम्। सुतरां स पुरुषएव स्रष्टा तदधीनकर्त्तृत्वं प्रजापतेर्हिरण्यगर्भस्येति तत्त्वम्। पुरुषः प्राणं प्राणात् श्रद्धामसृजत इत्यत्र यथा सृष्टौ पुरुषस्य साक्षात्कारणत्वं तथा प्राणादाकाशादिकं बभूवेत्यत्रापि। मन्वादिषु हिरण्यगर्भस्य निर्म्मातृत्वं स्रष्टृत्वं यद्दृश्यते तदृषीणामनुगतस्रष्टृत्ववत् तपःप्रभावप्रदर्शनपरम्। तपसा रूपान्तरताप्राप्तिर्भावानामभिमतेऽपि ज्ञेया ऋषिसृष्टिः। तत्त्वमासे पुनः कोऽयं हिरण्यगर्भः? महत्तत्त्वं—बुद्धिः। तदंशा भूतानीन्द्रियाणि च। "अध्यवसायोबुद्धिः। २।१३।" इति सांख्यसूत्रस्य भाष्ये श्रीमद्विज्ञानभिक्षुराह—"महत्तत्त्वस्य पर्य्यायो बुद्धिरिति।......अस्याश्च बुद्धेर्महत्त्वं स्वेतर-सकलकार्य्यव्यापकत्वान्महैश्वर्य्याच्च मन्तव्यम्।......हिरण्यगर्भे चेतनेऽपि महानिति शब्दो बुद्ध्यभि-मानित्वेनैव।........एवमेव रुद्रादिष्वहङ्काराद्यभिधानोऽपि बोध्यः। महदाद्यभिमानिदेवतानाञ्च

सर्व्वेषामेव भूताभिमानिपर्य्यन्तानां स्वस्वबुद्धिरूपाय प्रतिनियतोपायवी भवत्यनन्तैर्वाम्ना:" इति। जीववुद्धावेव स्वप्रतिबिम्बितं वेदच परमपुरुष: प्रकटयति, ततस्तामेवावलम्ब्य ऋषि: वेदप्रकाशक इति ध्येयम्। अतएव हि वंशब्राह्मणे वेदप्राप्तिमधिकृत्य "परमेष्ठी ब्रह्मण:" ( बृ ४।६।१ ) इत्यत्र भाष्यकार आह—"परमेष्ठी विराट्, ब्रह्मणो हिरण्यगर्भात्। तत: परमाचार्य्यपरम्परा नास्ति।" इति। अत्र भाष्यव्याख्याता पुनराह—"स्वयं प्रतिभातवेदो हिरण्यगर्भो नाचार्य्यान्तरमपेक्षते। ईश्वरानुगृहीतस्य बुद्धावाविर्भूताद्वेदादेव विद्यालाभसम्भवादित्यर्थ:" इति।

पुरुषादुत्पन्नानां प्राणादीनां पुरुषे पुन: प्रवेशे पुरुषमात्रमवशिष्यत इति ज्ञानात् कथमस्तत्व-मिति जिज्ञासायामीमांसा तत्त्वकल्पाम्।

८—११। पुरुषात् प्राणादिकं सर्व्वमजायत, अजनात् प्रागासीत् तस्मिंस्तेषां स्थितिश्चा-भिन्नतया, तत् कथमुच्यतेऽष्टमे ( ८ ) 'अप्राण:' 'अमना:' स: इति? यो हि येषां धारयिता स तेषामतीत इति न स प्राणो वा मनो वा। यद्येवं कथं स्यात् कार्य्यकारणयोरेकत्वम्? भवेत्तच्छक्त्या न पुनरुपाधिना। अतएवाह श्रीमच्छङ्कर: "कारणस्यात्मभूता शक्ति: शक्तेश्चात्मभूतं कार्य्यम् ( वे, सू, भा २।१।१८ )" इति। नवमे ( ९ ) त्वेकविज्ञानेन सर्व्वविज्ञानं भवतीति कारणात् परात्मानं परित्यज्यान्यदालोचनं व्यर्थम्। किमिदमेकविज्ञानेन सर्व्वविज्ञानमिति? यज्ज्ञानाद्बुद्धेर्वैमल्यात् सर्व्वमन्यद्यथायथं प्रतिभाति तदेव तत्। ये पुनस्तमुपेक्ष्य विषयमात्रेऽभि-निविष्टास्तेषु बुद्धेरव्यवसायिकत्वान्न तत्त्वस्फूर्त्ति:। दशमे ( १० ) विषयप्रवणैरिन्द्रियैरपह्रियते चित्तं परात्माभिनिवेशत:, कैरुपायैस्तन्निरोध: स्यात्तदुच्यते। सत्यं, तप:, सम्यग्ज्ञानं, ब्रह्मचर्य्यं चतुर्णामेषां युगपदवलम्बनं श्रेयस्करमन्योन्यसापेक्षत्वात्। न हि सत्याचरणं विना मननं, मननं विना सम्यग्ज्ञानं, सम्यग्ज्ञानं विना निरवच्छिन्नेन्द्रियसंयम: सम्भवति। कथम्? असत्य-प्रतिष्ठं चित्तं हि सदा चञ्चलम्, चञ्चलेन चित्तेन मननं कुत:? चञ्चलचित्ततया मननासम्भवे कुतो वा सम्यग्ज्ञानस्फूर्त्ति:, सम्यग्ज्ञानस्फूर्त्तिं विना क्वासौ तत्त्वालोचनानुकूला देहधारणोपयोगि-विषयसेवेति विप्रतिपत्तौ देहकर्म्मणाध्याधुरिको प्रवृत्तिरुद्दीपिता भयजनितकामक्रोधाद्युद्वेगं जन-यन्ती विघ्नमेवोत्पादयेत्। एकादशे ( ११ ) एतैरुपायैर्विशुद्धे चेतसि परात्मप्रकाश: स्वतएव भवतीति प्रदर्श्यते।

१२।१२। द्वादशे ( १२ ) योऽस्यात्मा सर्व्वान्तरस्तमेव व्याख्यातवान् महर्षिर्याज्ञवल्क्य:। य: प्राणेन प्राणिति, व्यानेन व्यानिति, उदानेन उदानित्याख्यानेन भवति प्रत्यक्षो यत् जीवात्मैव सर्व्वान्तरत्वेन तेन व्याख्यात:। स्यादेतदेवम्; तेन व्याख्याता मधुब्राह्मणमन्तर्यामिब्राह्मणञ्च विफलीभवेत्। शरीरिणात्माऽप्यभावेन यथा लोके परिगृह्यते तथा "रूपं रूपं प्रतिरूपो बभूव" इति श्रौतन्यायेन प्राणादिशरीरोऽपि परात्मा। शब्देनैकोऽपि भिन्नार्थनिर्बन्ध इति नियमो न जातु कुत्रापि वेदान्ते परिहार्य्य:। तत्परिहारे पुन: पदे पदे विपरीतार्थप्रतीति: संघटते। जिज्ञासोर्महति निर्बन्धेऽपि न स स्वनिर्बन्धमजहात्। यथायोनीत्यरेव प्रश्नकर्त्तोपरराम तदपि न स्यात् स्टिकरं चेत्तेन प्रेरयितव्यं तन्मनसि न प्रत्यभासत्। न त्वं दृष्टेर्द्रष्टारं पश्यसि, श्रुते: श्रोतारं शृणोषि, मतेर्मन्तारं मनुषे, विज्ञातेर्विज्ञातारं विजानीषे, अतश्च तत्प्रेरणामनुभवसि

# षष्ठोऽध्यायः।

## भगवद्दर्शी ।

१। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत्
अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत्

कठ ४।१२।१३।

देहादेः प्रेरकत्वेन यथा ब्रह्मैव परात्मा तथा जीवसन्निधावीश्वरत्वेनात्मैश्वर्य्यप्रकटनेन ब्रह्मैव भगवान्। निखिलस्य तदैश्वर्य्यत्वेऽप्यात्मस्वरूपमहिम्ना जीवहृदयस्यानुरागानुकर्षणमेव तस्य भगवत्त्वेनोपलब्धेः साक्षात्कारणम्। तेनानाकृष्टचित्तानां सर्व्वं तुच्छम्, अन्यथा विचित्रनक्षत्रखचितमाकाशं नियतं दृक्सन्निधौ विद्यमानमपि न कथं तज्जनानां हृदयमपहरति। हृदयापहरणस्य कथा दूरे, कोऽपि सामर्थ्यं तदुपरि जातु दृष्टिमपि न क्षिपति। ब्रह्मणः सर्व्वानुभूत्वं यथा परात्मत्वानुभवे तथा शिवस्वरूपं भगवत्त्वानुभवे कारणम्।

१। जीवस्य कल्याणाय कालत्रयं नियम्य तदात्मानुरूपतया तत्सन्निधावात्मप्रकाशोऽनुग्रहमेव व्यनक्ति, अतः कथयति श्रुतिः अङ्गुष्ठमात्र इति। अङ्गुष्ठमात्रः हृत्पुण्डरीकप्रमाणानुसारतः तत्प्रमाणकः हृदयाकाशव्यापी पुरुषः परापरप्रकृतिपरिष्वक्ता भूतभव्यस्य कालत्रयस्य ईशानः नियन्ता सन् मध्ये आत्मनि देहे तिष्ठति। ततो न विजुगुप्सते आत्मानं गोपायितुमिच्छति साधकः। तत्सन्निधावात्मप्रकाशं करोति तदनुकम्पया अध्यात्मास इति भावः। एतत् एव तत् परं ब्रह्म।

अङ्गुष्ठमात्र इति। अङ्गुष्ठमात्रः हृत्परिमाणः ज्योतिरिव ज्योति-

२। यदा पश्यः पश्यते रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनं परमं साम्यमुपैति॥
प्राणोह्येष यः सर्व्वभूतैर्विभाति
विजानन् विद्वान् भवते नातिवादी।
आत्मक्रीड़ आत्मरतिः क्रियावा-
नेष ब्रह्मविदां वरिष्ठः॥ मु ३ (१)।३।४।

यथा धूमेनानाच्छादितं तथा अधूमकः अनाच्छन्नस्वरूपः पुरुषः भूतभव्यस्य कालत्रयस्य ईशानः नियन्ता सन् स एव अद्य स एव श्वः आगामिनि दिने विद्यमानः शिवस्वरूपत्वेनेति शेषः। एतत् एव तत्।

२। ब्रह्मणो भगवत्त्वं तदुचितैर्विशेषणैः प्रतिपादयति यदेति। यदा पश्यः विद्वान् रुक्मवर्णम् उज्ज्वलवर्णं दीप्यमानतया प्रकाशमानं कर्त्तारं सुकृतम्, ईशं शास्तारं, ब्रह्मयोनिं वेदप्रभवस्थानं पुरुषं परापरप्रकृतिपरिष्वक्तारं पश्यते साक्षात्करोति, तदा विद्वान् पुण्यपापे पुण्यं पवित्रोऽहमित्यभिमानं पापं कलुषं ते विधूय दूरे निक्षिप्य निरञ्जनः निर्म्मलः सन् तेन परमपुरुषेण परमं निरतिशयं साम्यम् एकत्वम् उपैति प्राप्नोति।

प्राणइति। एष पुरुषः हि प्राणः प्राणस्य प्राणः, यः सर्व्वभूतैः सर्व्वैः भूतैः सङ्गतः विभाति प्रकाशते। तं विजानन् विशिष्टभावेन जानन् विद्वान् साधकः न अतिवादी न तमतिक्रम्य विषयान्तरकथानिरतः भवते भवति, किन्तु आत्मक्रीड़ः आत्मनि परात्मनि क्रीड़ा क्रीड़नं यस्य, आत्मरतिः आत्मनि परात्मनि रतिः प्रीतिः यस्य, क्रियावान् तत्स्मरणादिरतः एष साधकः ब्रह्मविदां ब्रह्मज्ञानां वरिष्ठः श्रेष्ठः, केवलज्ञानमात्रात् तस्मिन् क्रीड़नादेः श्रेष्ठत्वात्।

३। एतत्ततोभवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। तै १।६।२।

४। मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादरः।

३। साधकेष्वात्मस्वरूपप्रकटनेन ब्रह्म भगवत्त्वेनानुभवगोचरीभवति। तदेवाह आकाशेति। ततः स्वाराज्यप्राप्त्यनन्तरं एतत् भवति। किं तत्? आकाशशरीरम् आकाशएव शरीरं लिङ्गं यस्य तत् ब्रह्म भवति—सत्यात्म सत्यानां मूर्त्तामूर्त्तानाम् आत्मा स्वरूपं यतः तत्, प्राणारामं प्राणानाम् आरामो यस्मिन् तत्, मनआनन्दं मनसः आनन्दः यस्मिन् तत्, शान्तिसमृद्धं शान्त्या समृद्धम्, अमृतम् साधकसन्निधाविति शेषः।

४। "सर्व्वं खल्विदं ब्रह्म तज्जलानिति (२।११)" इति कारणब्रह्मोत्पन्नं जगत् कारणेनाभिन्नभावेन स्थितं, तत्प्रेरणया चेष्टाशीलमिति कारणं ब्रह्म प्रेरकत्वेन सन्निधाप्य यदुपासनं विहितं, सर्व्वत्र तस्य नियोगं विदधाति मनोमय इति। एष मे मम आत्मा अन्तर्यामी मनोमयः मनउपाधिकः मनसः प्रेरयिता, प्राणशरीरः प्राणएव शरीरं प्रकाशस्थानं यस्य, भारूपः सर्व्वप्रकाशकः, सत्यसङ्कल्पः अवितथसङ्कल्पः, आकाशात्मा आकाशस्वरूपः, सर्व्वकर्म्मा सर्व्वाणि कर्म्माणि यतः यस्मिन् येन स—तज्ज-तल्ल-तदनत्वात्, सर्व्वकामः सर्व्वे कामाः यतः यस्मिन् येन स, सर्व्वगन्धः—सर्व्वे गन्धाः यतः यस्मिन् येन स, सर्व्वरसः—सर्व्वे रसाः यतः यस्मिन् येन स, सर्व्वम् इदम् अभ्यात्तः अभि सर्व्वतः आत्तः प्राप्तः सर्व्वं स्ववशे स्थापितं तेनेति भावः, अवाकी वाङ्निष्पत्ति-

एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः।

सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः।

छा ३।१४।२—४।

विरहितः विना वाङ्निष्पत्त्या सर्व्वं करोतीति भावः, अनादरः सम्भ्रमविरहितः सर्व्वानपेक्षः।

अयं सूक्ष्मादपि सूक्ष्मः ज्यायसो ज्यायानित्याह एषइति। एष मे मम आत्मा अन्तर्यामी अन्तर्हृदये हृदयमध्ये व्रीहेः वा, यवात् वा, सर्षपात् वा, श्यामाकात् वा, श्यामाकतण्डुलात् वा अणीयान् अणुतरः अतिसूक्ष्मः। तथा एष मे मम आत्मा अन्तर्यामी अन्तर्हृदये हृदयमध्ये पृथिव्याः ज्यायान् वृहत्तरः, अन्तरिक्षात् आकाशात् ज्यायान्, दिवः ज्यायान्, अन्येभ्यः लोकेभ्यः ज्यायान्।

एष सर्व्वकर्म्मा सर्व्वकामः इत्यादि पूर्व्ववत्। पुनरुक्तिरेतद्रूपेणोपासनस्य सर्व्वत्वावधारणस्य च कृतार्थताहेतुत्वात्। अन्तर्हृदये हृदयमध्ये एष मे मम आत्मा अन्तर्यामी, एतत् ब्रह्म—“सर्व्वं खल्विदं ब्रह्म” इति—सर्व्वमात्मन्यन्तर्भूय विद्यमानम्। एवम् आत्मानं परात्मानम् इतः प्राप्तः—तेनाव्याकृतः ( ३।१४।[६८४] ) इति यावत्—अहं प्रेत्य अस्माल्लोकात् प्रस्थाय अभिसम्भवितास्मि—अभि तदाभिमुख्येन तदनुग्रहेण सम्भविष्यामि—यथाक्रतु यथोपासनम् (२।११) इति शेषः—इति यस्य साधकस्य वेदनम्, अद्धा सत्यं स्यात् एव स तथा, अत्र न

५। पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥ वृ ७।१।

६। य एको जालवान् ईशत ईशिनीभिः
सर्व्वांल्लोकानीशत ईशिनीभिः।
य एवैक उद्भवे सम्भवे च
य एतद्विदुरमृतास्ते भवन्ति॥

विचिकित्सा संशयः अस्ति इति ह किल शाण्डिल्यः आह स्म उक्तवान्। द्विरभ्यास आदरार्थः। इयं शाण्डिल्यविद्या। "तामैश्वर्य्यपरां काश्यपः परत्वात्। २९।" "आत्मैकपरां वादरायणः। ३०।" "उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम्। ३१।" "भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात्। ८५।" इत्येतेषां शाण्डिल्यसूत्राणां नियोगोऽध्यायप्रवृत्तौ।

५। सर्व्वातीतं सर्व्वगतं सर्व्वमात्मन्यन्तर्भूय विद्यमानं ब्रह्मैकमेवेति प्रतिपादयति पूर्णमद इति। अदः विप्रकृष्टं सर्व्वातीतं ब्रह्म पूर्णं व्यापि निरन्तरं निरुपाधिकञ्च; इदं समीपस्थं प्रतिहृदयस्थपरात्मरूपि ब्रह्म पूर्णं व्यापि निरन्तरं निरुपाधिकञ्च—नेदं जगद्वयवहार्य्यत्वादपूर्णत्वात्। पूर्णात् सर्व्वातीतसर्व्वगतोभयसम्मिलनात् पूर्णं सर्व्वमन्तर्भूय वर्त्तमानं भगवत्तया प्रख्यातं ब्रह्म उदच्यते उद्गच्छति—प्रतिहृदयं विद्यमानमपि तदतीत्य वर्त्तमानं सत् सर्व्वमात्मन्यन्तर्भूय प्रकाशते। एवं त्रैविध्येन प्रकाशमानं ब्रह्म युगपदुपासनार्थं ग्रहीतुमशक्यत्वात् यदि प्रतिहृदयगतं ब्रह्मैव गृह्णाति साधकः साधनाभ्यासहेतोः किमस्ति तत्र दोषसम्भावना? तदुत्तरे श्रुतिराह—पूर्णस्य सर्व्वातीतस्य पूर्णं सर्व्वान्तर्भावकम् आदाय यत् अवशिष्यते प्रतिहृदयगतं ब्रह्म तत् पूर्णमेव। पूर्णस्य पूर्णतायां न जातु धारणाभेदात् क्वापि क्षतिः।

६। भगवत्त्वं परात्मनः स्फुटयति य इति। यः एकः जालवान्

एको हि रुद्रो न द्वितीयाय तस्थु-
र्य इमाँल्लोकान् ईशत ईशिनीभिः।
प्रत्यङ्जनांस्तिष्ठति सञ्चुकोपान्तकाले
संसृज्य विश्वा भुवनानि गोपाः॥
विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुत विश्वतस्पात्।
संबाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः॥
यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः।

मायी ईशिनीभिः स्वशक्तिभिः ईशते ईष्टे नियच्छति। कान्? सर्व्वान् लोकान् ईशिनीभिः ईशते। उद्भवे विभूतिविस्तारे सम्भवे आत्मप्रकाशे यः एकः एव। यः एतत् अविकारित्वं तस्य विदुः जानन्ति, ते अमृताः विकारातीताः भवन्ति।

एक इति। यः इमान् लोकान् ईशिनीभिः स्वशक्तिभिः ईशते ईष्टे, स रुद्रः हि यतः एकः, ततः द्वितीयाय द्वितीयं न तस्थुः, न स्वीकुर्व्वन्ति ब्रह्मविदः। प्रत्यङ् सर्व्वेषाम् अभ्यन्तरः सन् स तिष्ठति; अन्तकाले प्रलये स जनान् सञ्चुकोप संहृतवान्; विश्वा विश्वानि सर्व्वाणि भुवनानि संसृज्य स गोपाः गोप्ता रक्षिता।

विश्वत इति। स विश्वतश्चक्षुः—सर्व्वप्राणिगतानि चक्षूंष्यस्येति विश्वतश्चक्षुः—एवमुत्तरत्र। उत अपि च विश्वतोमुखः, विश्वतोबाहुः, उत अपि च विश्वतस्पात्। स एकः देवः द्यावाभूमी द्याञ्च भूमिञ्च जनयन् बाहुभ्यां द्विपदान् मनुष्यादीन् संधमति संयोजयति, पतत्रैः पक्षैः पक्षिणः संधमति।

य इति। यः विश्वाधिपः विश्वस्य पालयिता, महर्षिः सर्व्वज्ञः,

हिरण्यगर्भं जनयामास पूर्व्वं
स नो बुद्ध्या शुभया संयुनक्तु॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्॥
ततः परं ब्रह्मपरं बृहन्तं
यथानिकायं सर्व्वभूतेषु गूढ़म्।
विश्वस्यैकं परिवेष्टितार-
मीशं तं ज्ञात्वाऽमृताभवन्ति॥

रुद्रः देवानां प्रभवः उत्पत्तिहेतुः उद्भवः ऐश्वर्य्यहेतुः, पूर्व्वं सृष्ट्यादौ हिरण्यगर्भं ब्रह्माणं जनयामास, स नः अस्मान् शुभया कल्याणमय्या बुद्ध्या संयुनक्तु सम्पन्नान् करोतु।

येति। हे रुद्र, या ते तव शिवा मङ्गलमयी, अघोरा सौम्या, अपापकाशिनी पुण्याभिव्यक्तिकारी तनूः स्वरूपं तया शन्तमया सुखमया तनुवा स्वरूपेण, हे गिरिशन्त—गिरौ स्थित्वा शं सुखं तनोतीति—अभिचाकशीहि अभिपश्य निरीक्षस्व श्रेयसा नियोजयस्व।

यामिति। हे गिरिशन्त, अस्तवे क्षेप्तुं याम् इषुं वाणं हस्ते बिभर्षि धारयसि, हे गिरित्र गिरेः त्रातः, ताम् इषुं शिवां मङ्गलमयीं कुरु, पुरुषं जीवं जगत् विश्वं च मा हिंसीः।

ततइति। ततः पुरुषयुक्तजगतः परं श्रेष्ठं, ब्रह्मपरं ब्रह्मणः हिरण्यगर्भात् परं, बृहन्तं महान्तं, यथानिकायं यथाशरीरं सर्व्वभूतेषु गूढ़म् अन्तरवस्थितम्, विश्वस्य एकं परिवेष्टितारं निखिलं विश्वम् आत्मन्यन्तर्भूय वर्त्तमानं, तम् ईशम् ईश्वरं ज्ञात्वा अमृताः विकारातीताः भवन्ति।

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥
यस्मात् परं नापरमस्ति किञ्चि-
द्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्व्वम् ॥
ततो यदुत्तरतरं तदरूपमनामयम् ।
यएतद्विदुरमृतास्ते भवन्त्य-
थेतरे दुःखमेवापियन्ति ॥

वेदाहमिति । तमसः अज्ञानात् परस्तात् अतीतम् आदित्यवर्णं प्रकाशरूपं महान्तम् एतं पुरुषं परापरप्रकृतिपरिष्वक्तारम् अहं वेद जाने । तं पुरुषम् एव विदित्वा ज्ञात्वा अति मृत्युम् एति मृत्युम् अत्येति अतिक्रामति अयनाय परमपदप्राप्ताय अन्यः पन्थाः तज्ज्ञानं-हिना अपरः उपायः न विद्यते ।

यस्मादिति । यस्मात् परमपुरुषात् परं श्रेष्ठं न अपरं किञ्चित् अस्ति, यस्मात् न अणीयः न सूक्ष्मतरः, न ज्यायः न वृहत्तरः किञ्चित् अस्ति, दिवि द्योतनशीले स्वे महिम्नि वृक्ष इव स्तब्धः अवाकी, एकः असहायः तिष्ठति । एवम्भूतेन तेन पुरुषेण परापरप्रकृतिपरिष्वक्ता इदं सर्व्वं पूर्णम् नैरन्तर्य्येण व्याप्तम् ।

तत इति । ततः पुरुषयुक्तजगतः उत्तरतरं अतीतं यत्, तत् अरूपं रूपादिरहितम्, अनामयं तापरहितम् । एतत् परतत्त्वं विदुः जानन्ति ये, ते अमृता विकारातीताः भवन्ति, अथ इतरे तदन-भिज्ञाः दुःखम् एव अपियन्ति प्राप्नुवन्ति ।

सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः।
सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः॥
महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः।
सुनिर्म्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदाजनानां हृदये सन्निविष्टः।
हृदा मन्वीशो मनसाभिक्लृप्तो
यएतद्विदुरमृतास्ते भवन्ति॥
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतोवृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥

सर्व्वेति। सर्व्वाणि आननानि मुखानि शिरांसि मस्तकानि ग्रीवाश्च अस्य इति सर्व्वाननशिरोग्रीवः, सर्व्वेषां भूतानां गुहायां बुद्धौ शेते इति सर्व्वभूतगुहाशयः, सर्व्वव्यापी स भगवान् सर्व्वैश्वर्य्यपूर्णः, तस्मात् कारणात् स सर्व्वगतः निखिले जगति प्रकाशमानः शिवः मङ्गलस्वरूपः।

महानिति। एष महान् प्रभुः समर्थः पुरुषः परापरप्रकृतिपरिव्यक्ता सत्त्वस्य अन्तःकरणस्य प्रवर्त्तकः प्रेरयिता इमां सुनिर्म्मलाम् अति विशुद्धां प्राप्तिं परमपदप्राप्तिम् ईशानः ईशिता नियन्ता, ज्योतिः प्रकाशस्वरूपः, अव्ययः अपचयविरहितः।

अङ्गुष्ठेति। अङ्गुष्ठमात्रः हृदयरन्ध्रपरिमाणः हृदयाकाशव्यापी पुरुषः अन्तरात्मा सन् सदा जनानां हृदये सन्निविष्टः। हृदा अनुरागेण मनसा मननेन स मन्वीशः ज्ञानेशः अभिक्लृप्तः अभिमुखीकृतः अभिव्यक्तः। यः एतत् तत्त्वं विदुः जानन्ति ते अमृताः विकारातीताः भवन्ति।

सहस्रशीर्षा इति। पुरुषः सहस्रशीर्षाः—सहस्राणि अनन्तानि शीर्षाणि यस्य,—एवमुत्तरत्र—सहस्राक्षः सहस्रपात्। स विश्वतः

पुरुष एवेदꣳसर्व्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम् ।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं सुहृत् ॥
नवद्वारे पुरे देही हꣳसोलेलायते वहिः ।
वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च ॥

सर्व्वतः भूमिं वृत्वा व्याप्य दशाङ्गुलम् अत्यतिष्ठत् अतीत्य अतिष्ठत् । दशाङ्गुलमित्यविवक्षितमनन्तत्वमेवाभिप्रेतम् ।

पुरुष इति । यत् भूतं, यत् च भव्यं भविष्यत्, यत् च इदं वर्त्तमानं तत् सर्व्वं पुरुषः एव, ततएव कालत्रयस्य तद्वर्त्तिविषयाणाञ्च प्रवृत्तेः । यत् अन्नेन अतिरोहति वर्द्धते तस्य, उत अपि च अमृतत्वस्य ईशानः नियन्ता सः ।

सर्व्वत इति । तत् परतत्त्वं सर्व्वतः पाणिपादं सर्व्वतः अक्षिशिरोमुखम्—अक्षीणि शिरांसि मुखानि च यस्य—सर्व्वतः श्रुतिमत् श्रवणवत्, लोके त्रिभुवने सर्व्वम् आवृत्य आच्छाद्य तिष्ठति ।

सर्व्वेन्द्रियेति । सर्व्वेषाम् इन्द्रियाणां गुणानां दर्शनश्रवणादीनाम् आभासः क्रियाप्रकाशः यतः तत् सर्व्वेन्द्रियगुणाभासं, स्वयन्तु सर्व्वेन्द्रियविवर्ज्जितं सर्व्वविधकरणरहितं, सर्व्वस्य जगतः प्रभुम् अधीश्वरम्, ईशानं नियन्तृ, सर्व्वस्य शरणं आश्रयः, सुहृत् कारणं च ।

नवद्वार इति । शिरसि सप्तद्वाराणि द्वे अवाची इति नवद्वारे पुरे देहे देही जीवः हंसः सन् परात्मना एकः सन् तत्प्रेरणया वहिः लेलायते विषयग्रहणाय चञ्चलो भवति । स तु परात्मा सर्व्वस्य लोकस्य स्थावरस्य चरस्य च वशी वशिता नियन्ता ।

अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्॥
अणोरणीयान् महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादात् महिमानमीशम्॥
वेदाहमेतमजरं पुराणं
सर्व्वात्मानं सर्व्वगतं विभुत्वात्।

अपाणीति। अपाणिपादः करचरणरहितः अथच जवनः दूरगामी ग्रहीता सर्व्वग्राही सर्व्वशक्तित्वात्; अचक्षुः चक्षुरहितः अथच पश्यति, अकर्णः कर्णरहितः अथच शृणोति, ज्ञानस्वरूपत्वात्; वेद्यं ज्ञातव्यविषयं स वेत्ति—अमनस्कोऽपीति शेषः—सर्व्वज्ञत्वात्; न च तस्य वेत्ता ज्ञाता अस्ति सर्व्वप्रकाशकत्वादानन्त्याच्च। तं महान्तं पुरुषं परापरप्रकृतिपरिष्वक्तारम् अग्र्यं प्रथमं—सर्व्वकारणत्वात्—आहुः ब्रह्मविदः।

अणोरिति। अणोः सूक्ष्मात् अपि अणीयान् सूक्ष्मतरः, महतः वृहतः अपि महीयान् वृहत्तरः, आत्मा परात्मा अस्य जन्तोः प्राणिजातस्य गुहायां हृदि निहितः स्थितः। तम् अक्रतुं विषयभोगसङ्कल्परहितं, महिमानं वृद्धिक्षयरहितम्, ईशम् ईश्वरं धातुः सर्व्वनियन्तुः प्रसादात् अनुग्रहतः जनः प्रश्यति, पश्यन् वीतशोकः शोकरहितः भवति।

वेदाहमिति। विभुत्वात् आकाशवद्व्यापकत्वात् एतम् अजरं परिणामधर्म्मवर्ज्जितं पुराणं पुरातनं, सर्व्वात्मानं सर्व्वेषामात्मभूतं,

जन्मनिरोधं प्रवदन्ति यस्य
ब्रह्मवादिनोऽभिवदन्ति नित्यम् ॥
श्वेत ३।१—२१।

७। य एकवर्णोबहुधा शक्तियोगा-
द्वर्णाननेकान् निहितार्थो दधाति।
वि चैति चान्ते विश्वमादौ स देवः
स नो बुद्ध्या शुभया संयुनक्तु ॥

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः ॥ श्वेत ४।१।२

८। यो योनिं योनिमधितिष्ठत्येको
यस्मिन्निदं सञ्च वि चैति सर्व्वम्।

सर्व्वगतम् ईशम् अहं वेद जानामि— धातुः प्रसादादितिशेषः ; यस्य जन्मनिरोधं जन्माभावम् अजत्वं ब्रह्मवादिनः प्रवदन्ति, नित्यं च यं ते अभिवदन्ति नमस्कुर्व्वन्ति।

७। तस्यैकत्वं स्वशक्त्या बहुत्वोत्पादनञ्चाभिदधाति य एक इति। यः एकः असहायः, अवर्णः भेदसाधकवर्णरहितः, निहितार्थः निगूढ़-प्रयोजनः—'गृहीतप्रयोजनः स्वार्थनिरपेक्षः'—बहुधाशक्तियोगात् अनेकान् वर्णान् शुक्लादिरूपान् दधाति विदधाति, स देवः आदौ अग्रे विश्वम् एति प्राप्नोति स्वसम्बन्धेन प्रकटयति, अन्ते लयकाले च व्येति संहरति। स नः अस्मान् शुभया बुद्ध्या संयुनक्तु संयोजयतु।

सर्व्वस्य तत्स्वरूपत्वात् तेनाभिन्नत्वं वर्णयति तदेवेति। तत् परतत्त्वम् एव अग्निः, तत् एव आदित्यः, तत् एव चन्द्रमाः, तत् एव शुक्रं शुद्धं, तत् ब्रह्म सर्व्वान्तर्भावकम्, तत् आपः जलम्, तत् प्रजापतिः हिरण्यगर्भः।

८। स्वशक्त्यधिष्ठातृत्वेन ब्रह्मणो भगवत्त्वं निर्णीयते य इति। यः

तमीशानं वरदं देवमीड्यम्
निचाय्येमां शान्तिमत्यन्तमेति ॥ श्वेत ४।११।

९। यो देवानामधिपो
यस्मिँल्लोका अधिश्रिताः।
य ईशेऽस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥

* सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपम्।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥

एकः योनिं योनिं मूलप्रकृत्यवान्तरप्रकृतीः अधितिष्ठति, इदं सर्व्वं यस्मिन् समेति सङ्गच्छते च, व्येति लयं प्राप्नोति च, तं वरदम् अभीष्टप्रदम्, ईड्यं स्तुत्यम्, ईशानं नियन्तारं देवं निचाय्य अपरोक्षीकृत्य अत्यन्तं सर्व्वनिवृत्तिकरं यथा स्यात् तथा इमां प्रत्यक्षां शान्तिम् एति प्राप्नोति।

९। भगवत्त्वं तस्य वर्णयति यद्दति। यः देवानां ब्रह्मादीनां अधिपः स्वामी, यस्मिन् लोकाः अधिश्रिताः, यः अस्य द्विपदः चतुष्पदः मनुष्यादेः ईशे ईष्टे तान् नियच्छति, तस्मै कस्मै—कं सुखं स्मैभावश्छान्दसः—काय सुखस्वरूपाय देवाय हविषा पूजोपचारेण विधेम परिचरेम।

सूक्ष्मेति। कलिलस्य सङ्कटस्य गहनस्य स्थूलसूक्ष्मादिघटितस्य मध्ये सूक्ष्मातिसूक्ष्मम् अतिसूक्ष्मत्वात् तत्तत्प्रविष्टम्, अनेकरूपं विविधस्वरूपं तत्तदनुरूपप्रकटितात्मस्वरूपं, विश्वस्य स्रष्टारम्, विश्वस्य परिवेष्टितारं तदन्तर्भूय विद्यमानं शिवं मङ्गलस्वरूपं ज्ञात्वा विदित्वा अत्यन्तं यथा स्यात् तथा शान्तिम् एति प्राप्नोति।

स एव काले भुवनस्यास्य गोप्ता
विश्वाधिपः सर्व्वभूतेषु गूढ़ः।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च
तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥

घृतात् परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा शिवं सर्व्वभूतेषु गूढ़म्।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥

एष देवो विश्वकर्म्मा महात्मा
सदा जनानां हृदये सन्निविष्टः।
हृदा मनीषा मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥

सएवेति। सएव काले प्रकाशमानस्य अस्य भुवनस्य गोप्ता रक्षिता, विश्वाधिपः विश्वस्य पालयिता, सर्व्वभूतेषु गूढ़ः प्रच्छन्नभावेनावस्थितः, यस्मिन् विश्वपतौ ब्रह्मर्षयः देवताः च युक्ताः योगसम्बन्धाः एकीभावेनावस्थिताः, तम् एवम् एवम्प्रकारेण ज्ञात्वा विदित्वा मृत्युपाशान् मृत्युबन्धान् छिनत्ति छिन्नान् करोति।

घृतादिति। घृतात् परं तदुपरि विद्यमानं मण्डं तत्सारः इव अतिसूक्ष्मं, सर्व्वभूतेषु गूढ़ं, शिवं मङ्गलस्वरूपं, विश्वस्य एकं परिवेष्टितारं, देवं ज्ञात्वा विदित्वा सर्व्वपाशैः सर्व्वबन्धनैः मुच्यते मुक्तो भवति।

एष इति। एष देवः विश्वकर्म्मा विश्वं क्रियत इति विश्वकर्म्मा विश्वस्रष्टा, महात्मा महान् चासौ आत्मा चेति सर्व्वव्यापी, सदा नित्यकालं जनानां हृदये सन्निविष्टः सम्यक् प्रविश्य स्थितः, हृदा

यदाऽतमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः।
तदक्षरं तत् सवितुर्व्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी॥

श्वेत ४।१३—१८।

अनुरागेण, मनीषा विवेकेन, मनसा मननेन ज्ञानयोगेन अभिक्लृप्तः अभिमुखीकृतः—'प्रकाशितोऽखण्डैकरसत्वेनाभिव्यक्तः'। यत् एतत् तत्त्वं विदुः जानन्ति, ते अमृताः विकारातीताः भवन्ति।

यदेति। यदा अतमः तमसोऽत्यत्वम् सृष्टेः प्राक्कालः अभवत्—"तमआसीत् तमसा निगूढ़म्" (१०म, १२९सू, ३ऋक्) इति यत् सृष्टेरग्रे तम आसीत् तत् सृष्ट्युन्मुखे अत्यमभवत्—; तत् तदा न रात्रिः न दिवा—"तर्हि न रात्र्या अह्न आसीत् प्रकेतः" (२ऋक्) इति, न सत् आसीत् न च असत्—"नासदासीन्नो सदासीत्तदानीम्" (१ऋक्) इति। यदि किमपि नासीत् तदा कथं सृष्टिरभवत्? केवलः असहायः अद्वैतः शिवः—"प्रपञ्चोपशमः शिवोऽद्वैतः (३।५[६८ष्ठ) —एव आसीत्—"आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास" (२ऋक्) इति। तत् शिवतत्त्वम् अक्षरम् अविनाशि, अतएव सृष्टेः प्रागपि आसीत्। "तम आसीत्तमसा निगूढ़म्" इति वचनेन तदक्षरं तमःस्वभावमिति स्यात् संशयस्तन्निरसनायाह—तत् सवितुः प्रकाशस्वभावस्य सूर्य्यस्य वरेण्यं भजनीयम्। "न रात्र्या अह्न आसीत् प्रकेतः" इति कुतस्तत्प्रकाशिका प्रज्ञा आसीत्? तस्मात् शिवतत्त्वात् प्रज्ञा च प्रसृता। किमेषा प्रज्ञा ततो भिन्ना? तथा सति "तदेकं" "केवलः" इति न सिध्यति। अतएवाह—पुराणी। "आनीदवातं स्वधया" इत्युक्तत्वात् प्रज्ञैव तस्यात्मस्वरूपभूता—स्वमात्मानं परात्मानम् दधाति धारयतीति व्युत्पत्त्या स्वधा, तथैव व्युत्पा-

१०। यो योनिं योनिमधितिष्ठत्येको
विश्वानि रूपाणि योनीश्च सर्व्वाः।
ऋषिं प्रसूतं कपिलं यस्तमग्रे
ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत् ॥
एकैकं जालं बहुधा विकुर्व्व-
न्नस्मिन् चेत्रे संहरत्येष देवः।
भूयः सृष्ट्वा पतयस्तथेशः
सर्व्वाधिपत्यं कुरुते महात्मा ॥

दिता निर्व्विकल्पा जलमित्यस्या अर्थे। सृष्टेः प्राक् स्वरूपभूतया प्रज्ञयाऽऽसीत् तत् परतत्त्वमतआह—श्रुतिः—"ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् अहं ब्रह्मास्मीति" (८।१२) इति। अतएव च सृष्टिकाले प्राज्ञइत्यस्य संज्ञा।

१०। सर्व्वभावानां ज्ञानप्रवर्त्तकानाञ्चोत्पादयितृत्वेन तस्य भगवत्त्वं दृढ़यति यइति। यः एकः योनिं योनिं प्रकृत्यवान्तरप्रकृतीः, विश्वानि सर्व्वाणि रूपाणि रोहितादीनि, सर्व्वाः योनीः प्रभवस्थानानि अधितिष्ठति, यः अग्रे ऋषिसम्प्रदायप्रवर्त्तनस्याग्रे प्रसूतं स्वेनैवोत्पादितम् ऋषिं कपिलं सांख्यशास्त्रप्रणेतारं ज्ञानैः स्वोपदिष्टैः बिभर्त्ति धारयति पोषयति। कथम्? जायमानम् उत्तरोत्तरऋषिवंशानुक्रमेणाविर्भूयमानं च तं पश्येत् इति।

एकैकमिति। एष देवः अस्मिन् चेत्रे प्रकृतौ एकैकं प्रत्येकं जालं—जलति जीवति अनेनेति जालं—जीवनोपादानं बहुधा नानाप्रकारं विकुर्व्वन् परिणामयन् संहरति आत्मनि विलीनं करोति। भूयः पुनः सृष्ट्वा संहृतपदार्थजातम् आविष्कृत्य पतयः मरीच्यादयः प्रजापतयः ये तान् तथा सृजन्ति। ततः महात्मा महान् आत्मा सर्व्वव्यापी परात्मा ईशः सर्व्वनियन्ता सन् सर्व्वाधिपत्यं कुरुते।

सर्व्वा दिश ऊर्द्ध्वमधश्च तिर्य्यक्
प्रकाशयन् भ्राजते यद्वनड्वान्।
एवं स देवो भगवान् वरेण्यो
योनिस्वभावानधितिष्ठत्येकः॥

यच्च स्वभावं पचति विश्वयोनिः
पाच्यांश्च सर्व्वान् परिणामयेद्यः।
सर्व्वमेतद्विश्वमधितिष्ठत्येको
गुणांश्च सर्व्वान् विनियोजयेद्यः॥

तद्वेदगुह्योपनिषत्सु गूढं
तद्ब्रह्मा वेदते ब्रह्मयोनिम्।

सर्व्वा इति। ऊर्द्ध्वम् अधः तिर्य्यक् च सर्व्वाः दिशः प्रकाशयन् यत् उ यथा अनड्वान्—अनः शकटं ग्रहचक्ररूपं वहतीति—आदित्यः भ्राजते दीप्तिमान् भवति, एवं स एकः वरेण्यः भजनीयः भगवान् देवः योनिस्वभावान् प्रकृतिगतान् स्वभावान् आत्मसंसृष्टभावान् अधितिष्ठति।

यच्चेति। यत् च यस्मात् च—योनिस्वभावानधितिष्ठतीति—हेतोः यः विश्वयोनिः स्वभावम् अग्न्यादेरौष्ण्यादिकं पचति निष्पादयति; सर्व्वान् पाच्यान् परिणामयोग्यान् पृथिव्यादीन् परिणामयेत् यथाप्रयोजनं तत्तद्रूपेण प्रकाशयेत्। य एकः सन् सर्व्वम् एतत् विश्वम् अधितिष्ठति, सर्व्वान् गुणान् सत्त्वरजस्तमोरूपान् च यथाप्रयोजनं विनियोजयेत्। सातत्येनानुष्ठाने लिङो निषेधात् प्रयोजनानुसारतोऽनुष्ठानेऽत्र लिङ्। परेणान्वयः।

तदिति। तत् परतत्त्वं वेदगुह्योपनिषत्सु वेदगुह्यायामुपनिषदश्चेति तासु गूढं प्रच्छन्नभावेनावस्थितं, ब्रह्मयोनिं वेदप्रभवं तत्

ये पूर्व्वं देवा ऋषयश्च तद्विदु-
स्ते तन्मया अमृता वै बभूवुः ॥

श्वेत ५।२—६।

११। तमीश्वराणां परमं महेश्वरं
तं देवतानां परमञ्च दैवतम्।
पतिं पतीनां परमं परस्तात्
विदाम देवं भुवनेशमीड्यम् ॥

न तस्य कार्य्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥

ब्रह्मा हिरण्यगर्भः—ईश्वरानुगृहीता बुद्धिः—वेदते वेत्ति जानाति। पूर्व्वे ये देवाः ऋषयश्च आसन् ते तत् विदुः जानन्ति। तन्मयाः तदात्मभूताः ते पुनः अमृताः विकारातीताः—अमरणधर्म्माणः—बभूवुः।

११। भगवतः साक्षात्प्रत्यक्षत्वं विवृणोति तमिति। ईश्वराणां वैवस्वतादीनां क्षमताशालिनां तं परमं महेश्वरम्, देवतानाम् इन्द्रादीनां तं परमं च दैवतम्, पतीनां प्रजापतीनां तं पतिम्, परस्तात् परतः अक्षरात् तं परमं देवं द्योतनस्वभावम्, ईड्यं स्तुत्यं भुवनेशं भुवनेश्वरं विदाम जानीम।

न तस्येति। तस्य कार्य्यं देहं, करणं चक्षुरादि च न विद्यते, तत्समः च अभ्यधिकः च न दृश्यते। अस्य विविधा एव परा शक्तिः श्रूयते वेदादिषु, सा च शक्तिः स्वाभाविकी स्वरूपभूता ज्ञानबलक्रिया ज्ञानक्रिया चिच्छक्तिः, बलक्रिया क्रियाशक्तिः च।

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥

यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः ।
स्वभावतो देव एकः स्वमावृणोत् ।
स नो दधाद्ब्रह्माप्ययम् ॥

एको देवः सर्व्वभूतेषु गूढ़ः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा ।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥

न तस्येति । लोके तस्य कश्चित् पतिः न अस्ति, सुतरां न तस्य ईशिता शास्ता, न एव च तस्य लिङ्गम् अनुमापकं चिह्नम् । स कारणं सर्व्वेषां, करणाधिपाधिपः करणानाम् इन्द्रियाणाम् अधिपानां तदधिष्ठातृणाम् अधिपः प्रेरयिता, सुतरां न च अस्य कश्चित् जनिता जनयिता न च अधिपः ईश्वरः ।

यद्दति । ऊर्णनाभः लूता तन्तुवायः तन्तुभिः स्वप्रभवैः इव, यः तु देवः स्वभावतः स्वरूपतः एकः सन् प्रधानजैः स्वशक्तिप्रभवैः नामरूपैः स्वम् आत्मानम् आवृणोत् आच्छादितवान्, स नः अस्मभ्यं ब्रह्माप्ययं ब्रह्मणि अप्ययं प्रवेशं दधात्—लेटि—दधातु ।

एकइति । एकः असहायः, देवः द्योतनस्वभावः, सर्व्वभूतेषु गूढ़ः प्रच्छन्नभावेनावस्थितः, सर्व्वव्यापी सर्व्वतोविसारी, सर्व्वभूतान्तरात्मा सर्व्वेषां भूतानाम् अन्तरात्मा अभ्यन्तरः आत्मा नियन्ता, कर्म्माध्यक्षः कर्म्मणां प्रवर्त्तयिता, सर्व्वभूताधिवासः सर्व्वप्राणिषु वसतीत्यर्थः, साक्षी

एकोवशी निष्क्रियाणां बहूना-
मेकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम्॥
नित्यो नित्यानां चेतनश्चेतनाना-
मेकोबहूनां यो विदधाति कामान्।
तत् कारणं सांख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥

श्वेत ६।६—१३।

१२। एको हंसो भुवनस्य मध्ये
स एवाग्निः सलिले सन्निविष्टः।

सर्व्वभूतानां द्रष्टा, चेता चेतयिता, केवलः निरुपाधिकः, निर्गुणः सत्त्वादिगुणरहितः।

एकइति। एकः असहायः, वशी स्वतन्त्रः, निष्क्रियाणां कर्त्तृत्व-विरहितानां जीवानाम् एकं बीजं सूक्ष्मभूतं जीवनोपादानं बहुधा विविधाकारं करोति। ये धीराः बुद्धिमन्तः तम् आत्मस्थं पश्यन्ति, तेषां शाश्वतं नित्यं सुखं, न इतरेषाम् अपरेषाम्।

नित्यइति। नित्यानां मध्ये यः नित्यः, चेतनानां जीवानां मध्ये यः चेतनः चेतयिता, बहूनां मध्ये यः एकः, कामान् सर्व्वान् यः विदधाति यच्छति, सांख्ययोगाधिगम्यं ज्ञानयोगेन प्राप्यं देवं द्योतन-स्वभावं, कारणं सर्व्वेषां जनयितृ, तत् परतत्त्वं ज्ञात्वा सर्व्वपाशैः सर्व्व-विधबन्धनैः मुच्यते मुक्तो भवति।

१२। परापरप्रकृतिपरिष्कृततया भगवत्तत्त्वं वर्णयति एकइति। अस्य भुवनस्य मध्ये एकः हंसः परात्मा। स एव अग्निः, सएव सलिले

तमेव विदित्वाति मृत्युमेति
नान्यः पन्था विद्यते ऽयनाय॥

स विश्वकृद्विश्वविदात्मयोनिः
कालकारो गुणी सर्व्वविद्यः।
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः॥

स तन्मयो ह्यमृत ईशसंस्थो
ज्ञः सर्व्वगो भुवनस्यास्य गोप्ता।
य ईशे अस्य जगतो नित्यमेव
नान्यो हेतुर्विद्यते ईशनाय॥

जले निविष्टः। तम् अम्न्यादिपरिच्छिन्नाकारं परात्मानं विदित्वा मृत्युम् अत्येति अतिक्रामति, अयनाय परमपदप्राप्तये न अन्यः पन्थाः उपायः विद्यते।

स इति। स विश्वकृत् विश्वस्रष्टा, विश्ववित् विश्वं वेत्तीति तत्स्थसर्व्वविषयवेत्ता, आत्मयोनिः स्वयम्भूः, आत्मनां जीवानां योनिः प्रकाशस्थानम् अथवा आत्मा जीवः एव योनिः प्रकृतिः यस्य सः, कालकारः कालस्य कर्त्ता प्रवर्त्तयिता, गुणी सर्व्वविधकल्याणगुणसम्पन्नः, सर्व्ववित् सर्व्वज्ञः, प्रधानक्षेत्रज्ञपतिः परापरप्रकृतिस्वामी, गुणेशः गुणानां सत्त्वरजस्तमसाम् ईशः नियन्ता, संसारमोक्षस्थितिबन्धनहेतुः संसारमोक्षस्थितिबन्धनानां कारणम्।

सइति। स तन्मयः जगदात्मभूतः, अथच अमृतः अविकारी, ईशसंस्थः ईश एव संस्था संस्थानं तद्रूपेणात्मप्रकाशः यस्य नियन्तृरूपेण नित्यप्रकाशमानः, ज्ञः ज्ञाता, सर्व्वगः सर्व्वत्र प्रविष्टः, अस्य भुवनस्य गोप्ता पालयिता, यः नित्यम् एव अस्य जगतः ईशे ईष्टे, अस्य

यो ब्रह्माणं विदधाति पूर्व्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥

श्वेत ६।१५—१८ ।

जगतः ईशनाय नियमनाय न अन्यः हेतुः कारणं कर्त्ता—तस्मात्—विद्यते ।

यइति । यः ब्रह्माणं हिरण्यगर्भं पूर्व्वं सर्गादौ विदधाति सृजति, यः पुनः तस्मै ब्रह्मणे वेदान् च प्रहिणोति प्रचोदयति । आत्मबुद्धिप्रकाशम् आत्मनः जीवस्य बुद्धेः प्रकाशो यस्मात्, देवं द्योतनस्वभावं तम् एव मुमुक्षुः मुक्तीच्छुः सन् अहं शरणं प्रपद्ये गच्छामि ।

निष्कलमिति । निष्कलं निरवयवं, निष्क्रियं कूटस्थं, शान्तं प्रपञ्चातीतं, निरञ्जनं निर्लेपम्, अमृतस्य मोक्षस्य परं सेतुं परमं।पायं, दग्धेन्धनं दग्धानि इन्धनानि काष्ठानि येन तं देदीप्यमानम् अनलम् इव तम् अहं शरणं प्रपद्ये इति पूर्व्वेणान्वयः ।

* * *

ऐश्वर्य्यवत्त्वं हि भगवत्त्वम् । यदा संकुचितैश्वर्य्यमात्मनि विद्यमानं परं ब्रह्म, न तदा तद्भगवत्-संज्ञया शब्द्यते, अतस्त्वनित्यत्वं भगवत्त्वस्य मन्यते बहुभिः । सर्व्वमैश्वर्य्यं स्वाभिव्यञ्जकभावेन विद्यते चेत्, जिज्ञास्यं किन्नाम तस्य ज्ञानविषयम् ? यदि वदसि नेति, तस्य ज्ञानस्वरूपस्याप्यनित्यत्व-मापतितम् । स्वैश्वर्य्यविषयकज्ञानस्यैकदापि विद्यते, तेन न तस्य भगवत्त्वस्यापि नित्यत्वम् । अतएवाह श्रुतिः—"नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।

एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्। विरजः पर आकाशादज आत्मा महान् ध्रुवः। (४।१५)" इति। विशेषणान्यमूत्यानि नित्यभगवत्त्वमेव द्योतयन्ति। ये पुनः "यएक वर्णः (६।७)" इति श्रुतिमुपेत्य मन्यन्ते स्वैश्वर्य्यैर्बहुभवनमेव नानात्वमिति, ते पुनरैश्वर्य्याणामनित्यत्वं संसाध्य ब्रह्मण एकधात्वं रचन्ति। अन्तर्निविष्टानामैश्वर्य्याणां तदतीत्य तत्सत्तानिरपेक्षत्वेन न जातु स्थितिरिति तैर्न तस्य कूटस्थस्य नित्यापरिवर्त्तनीयस्य नानात्वमिति सिद्धान्त एवादरणीयः। अन्यथा "ते यदन्तरा तद्ब्रह्म" (३।१९) इत्यादिश्रुतीनां स्याद्व्याकोपः। भवेच्चेत् तस्यैश्वर्य्यविस्तारे विपरिवर्त्तनं समग्रमेव सर्व्वं विनश्येदिति ज्ञेयम्। तज्ज्ञानादनादित्वेन तद्विषयाः सम्भवन्ति, अतो न जीवगता दोषास्तस्मिन् वर्त्तन्ते।

१।२। प्रतिहृदयं प्रकाशमानमपि तदतीतत्वेन यत्र वर्ण्यते तत्र ब्रह्मणो भगवत्त्वमनुभूयत इति दर्शयति प्रथमे द्वितीये च वचनसंघे। हृदयं नाङ्गुष्ठप्रमाणं तत्परिमाणकत्वग्रहणं ततोऽपि सूक्ष्मत्वप्रदर्शनाय। हृदि निविष्टस्य चित्तस्य सन्निधौ न किमपि स्थूलं किन्तर्हि सूक्ष्मचित्सत्ता प्रतिभाति। सेयं तत्र भासमानाप्यनन्तत्वमस्या बुद्धाववतिष्ठते, तेन च सर्व्वकालनियन्तृत्वं पुरुषशब्दवाच्यपरापरप्रकृतिपरिष्वक्तृत्वञ्च। "गुणी" (६।१२) इति कल्याणगुणगणानां तस्मिन् स्फुरणं विना न जातु तस्य भगवत्त्वं स्फुटं प्रतिभाति। अतएव "ज्योतिरिवाधूमकः" "रुक्म-वर्णम्" इति पुरुषविशेषणम्। "शान्तं शिवमद्वैतम्" (३'५[६८४]) इत्यद्वैतविशेषणेन प्रदर्श्यते शिवस्वरूपस्य न कदापि भावान्तरतोपतिष्ठत इति। अत्र "स एवाद्य स उ श्वः" इत्युक्तं तत्स्वरूपप्रदर्शनाय। स परात्मा शिव एव, अथापि न सर्व्वत्र शिवस्वरूपं स्पष्टवाक्येन किन्तर्हि तस्य भगवत्त्वख्यापनाय तत्प्रकाशकविशेषणैरनुद्यते, सर्व्वेषां तत्तद्गुणानां तन्मूलकत्वात्। यथैवात्र "ब्रह्मयोनिम्" इति विशेषणं साधकबुद्धौ वेदप्रकाशकत्वं तस्य झटिति प्रोद्भासयते, "कर्त्तारम्" इति विशेषणं भारार्पणस्थानत्वम्, "प्राणः" इति विशेषणञ्च सातिशयप्रियत्वम्। एभिर्विशेषणै-स्तस्मिन् क्रीड़ा तस्मिन् रतिसम्भजनादिनिरतत्वञ्च सम्भाव्यते। भगवदाराधनया तत्साम्यप्राप्तिञ्च विशेषानुग्रहं सूचयति ; तथैव निरञ्जनत्वम्।

३। तृतीये व्याख्याता श्रुतिर्भाष्यकारहृदयमनुसृत्य। शिवाचार्य्येण त्वन्यथा व्याख्याता, तद्यथा—"आकाशत इत्याकाशः प्रकाशश्चिदम्बरमुच्यते, न भूताकाशः, विशेषाभावात्। निखिल-जगदण्डखण्डनिकुरम्बजलधिस्थानीया परमप्रकृतिरूपा परमशक्तिर्हि चिदम्बरमुच्यते। तत्स्वरूपं ब्रह्म आकाशशरीरम्। परमप्रकृतित्वं चिदाकाशस्य 'सर्व्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति। आकाशो ह वै नामरूपयोर्निर्व्वहिता' इत्यादिश्रुतिसिद्धम्। सत्यात्म सत्तास्वरूपम्। प्राणारामं प्राणः सकलाधारभूता चिदम्बरप्रकृतिरुच्यते। स्वरूपभूतायां तस्यामारामो यस्य तत् प्राणारामम्। मनआनन्दं मनस्येवानन्दो यस्य न बाह्यकरणे तन्मन-आनन्दम्। अत्राप्यानन्द इति चिदम्बरप्रकृतिरुच्यते, तथा च श्रूयते 'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्।' शान्तिसमृद्धं शिवतासम्पन्नम्। अमृतमनादिमुक्तम्। अत्र सच्चिदानन्दपरमाकाशस्वरूपं ब्रह्म स्वरूपानन्दं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धम् 'मनआनन्दम्' इत्यनेन। इदमेव शापकं ब्रह्मभावमापन्नानां मुक्तानां निरतिशय स्वरूपानन्दानु-

भवन्नापि बाह्यकरणनिरपेक्षमन्तःकरणमस्तीति । अतो बाह्यकरणनिरपेक्षेणैव प्रत्यगीश्वरज्ञानेनैव मनसा स्वरूपानन्दमनुभवद्ब्रह्म नित्यतृप्तम् ।" इति । अत चिच्छक्तिरेव ब्रह्मणः शरीरमिति निर्दिश्य तस्यैव बाह्यकरणनिरपेक्षस्य बोधात्मना मनसा स्वरूपानन्दभोगो वर्णितः, मुक्तानाञ्च तत्साम्यं तत्सम्भोगे । न हि चिच्छक्तिर्ब्रह्मणः शरीरं किन्तु तत्प्रकाश एव ब्रह्मण आत्मप्रकाशः । कोऽयमानन्दः ? आत्मस्वरूपप्रकाश एव सः । तथैवाह श्रुतिः—"तदात्मानं स्वयमकुरुत । तस्मात्तत् सुकृतमुच्यत इति ( ८।६ ) । यद्वै तत् सुकृतं रसो वै सः (४।१९) ।" कोऽयं स्वरूपानन्दसम्भोग ? स्वरूपलीलाविस्तार एव सः । तथैवाह श्रुतिः—"आनन्दरूपममृतं यद्विभाति" ( २।६[७८१] ) "कोह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ।" ( ४।१२ ) इति । बाह्यान्तःसर्व्वेन्द्रियविवर्जितस्य ( ६।६ ) ब्रह्मणो यथा बाह्यकरणनिरपेक्षत्वं तथान्तःकरणस्य च । न हि स्वरूपातिरिक्तं तस्मिन् जीववत् करणादि जातु सम्भवति । भवतु बोधस्वरूपमेव तस्य मनः । तेन मनःसम्भावनायां ज्ञानत्रयप्रसक्तत्वभेद उपतिष्ठते नित्यसन्निहितज्ञानाभावरूपजीवगतदोषश्च । कथं "नान्योऽतोऽस्ति मन्ता" ( ३।१२ ) इति "मनसोमनोयत्" ( ५।१ ) इति मनसः प्रेरयितृत्वेन । अतः प्रेरयितुः अन्यः तन्निरपेक्षः कोऽपि न मन्ता मननकर्त्ता अस्ति तत्प्रेरणां विना तत्सामर्थ्याभावादिति श्रुतेरर्थः । सुतरां जीवसन्निधौ कथं तत् परतत्त्वमात्मप्रकाशं करोति तदेव दर्शयति श्रुतिरियमिति सत्सिद्धान्तः । तथैव सा व्याख्याता ।

४ । चतुर्थे प्रकटितैश्वर्य्येण भगवत्त्वेन कथं वा ब्रह्मोपासनं भवति तत् प्रदर्शितम् । "तज्जलान्" ( २।११ ) इत्यत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" (४।१ ) इति जन्म प्राणधारणं लय इति क्रममुपेक्ष्य जन्म लयः प्राणधारणमिति क्रमस्य कथं ग्रहणमित्यस्य तत्त्वं सर्व्वात्रे विचार्य्यम् । तद्व्याख्याने पुनः 'अन्' इति स्वरूपतो ग्रहणम् । अन् अननम् । तदन् तस्याननम् । ब्रह्मणोऽपृथग्भावेन स्थितिं विना जगदावरणं परोक्षत्वसाधकञ्च । अतएव कारणे कार्य्यं प्रविलाप्य तेनापृथग्भावेन संस्थाप्य यद्दृश्यते सर्व्वं तत् न ततो भिन्नं स्वप्नो वा किन्तर्हि तदननं तत्स्वरूपप्रकटनं तद्विचित्रशक्त्याविष्कार इति श्रुतिर्दर्शयति "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्युक्तक्रमविलङ्घनेन । एतज्जगत्प्रविलापनं ब्रह्मणो विचित्रशक्त्याविष्कारप्रत्यक्षीकरणञ्च ज्ञानचक्षुषा साध्यते न तु बाह्यकरणेनेति भाष्यकारोक्तिरेव ( २।२९४ ) तत्र प्रमाणम् । यत्तूपासनार्थं विहितं मनोमयादिकं न प्रविलापयितव्यमिति स समादधात्, तच्छ्रुत्युक्तजन्मादिक्रमव्युत्क्रममविचार्य्यैवेति मन्तव्यम् । न हि विना कारणं चिरप्रसिद्धक्रमस्य विपरिवर्त्तनं श्रुत्या साध्यते । कारणं ब्रह्मैव सर्व्वथोपास्यं न जातु कार्य्यम् । "सर्व्वं खल्विदं ब्रह्म" इत्यनेन ब्रह्मैवात्र "तज्जलानिति" इतीदमुपास्यं न पुनर्जगत् कार्य्यभूतम् । "ब्रह्मदृष्टेरुत्कर्षात् (४।१।५ )" इति जगति ब्रह्मदृष्टिविधानात् विहिता न पुनर्जगद्विलाप्य ब्रह्मैवोपास्यत्वेन गृहीतमिति चेत्, जगतो विलयानन्तरमननं स्वरूपप्रकटनं कस्येति जिज्ञासोपतिष्ठते । यदि तस्य पूर्व्वं विलय एव साधितः कथं पुनस्तस्य स्यादननम् । वस्तुतः जगतः कारणाद्ब्रह्मणोऽपृथक्त्वं संसाध्य यदननमुपलभ्यते न तत् तस्य जगतः किन्तर्हि तत्प्रेरकस्य ब्रह्मण एवेति चरम-

सिद्धान्तः। मनः-प्राण-वा-चक्षुराकाश-वायु-काम-गन्ध-रसानां कारणं यद्ब्रह्म तदेवोपास्यत्वेनात्र गृहीतं न मनआदिकम्। तथा सति "एतम् आत्मा" इति वचनं व्यर्थं स्यात्। आत्मेति वचनेन ब्रह्मणोऽन्तर्यामित्वेन प्रेरकत्वेनैवात्र ग्रहणं श्रुतिसम्मतम्। तदनाहृत्य प्रपञ्चग्रहणेनात्रोपासना विहितेति कथनं श्रुतेरभिप्रायविपरीतमेव। वदसि यदि ब्रह्मैवात्र प्रपञ्चं परिहाय ग्रहणीयं चेत् कथं मनआदेरभिधानमिति? तत्रोच्यते—"अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वस्य बोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः" इति सत्यपि निर्व्विवादविषये "पुरुषमात्रेणाशक्यः प्रविलापयितुम्" इति सङ्कटमुपतिष्ठते। ततो निस्तारो विद्ययेति चेत्, कथं न मन्यसेऽनया शाण्डिल्यविद्ययेति, यतोऽनया प्रपञ्चविलापनस्य सरलपन्थाः प्रदर्श्यते। अथ मन आदेरभिधानमिति संशयो निर्म्मूलः, तेषां ब्रह्मदर्शने प्रत्यनीकत्वं नित्यप्रत्यक्षम्। प्रत्यनीकानामानुकूल्येनावर्त्तनं यथा भवति तथैवास्याः श्रुतेरुपदेशः। मनआदीनां नात्र प्रतीकत्वेन ग्रहणं तथा सत्यात्मोपदेशो (४।१।४) विरुद्ध्येत। "अरूपवदेव हि तत् प्रधानत्वात्।" (३।२।१४)—प्रधानत्वात् नामरूपयोर्निर्व्वोढृत्वात् कारणत्वात् तत् ब्रह्म नामरूपवत्सु कार्य्येषु अरूपवत् एव हि—इति रूपवत्सु कार्य्येष्वरूपवत् कारणदर्शनं सूत्रकारेणानुमोदितम्। सर्व्वमेतद्विशदीभविष्यति शाण्डिल्यसूत्रैः। तद्यथा—

"तामैश्वर्य्यपरां काश्यपः परत्वात्। २९।" तां बुद्धिं ब्रह्मप्रमितिम् ऐश्वर्य्यपरां परमेश्वरैश्वर्य्यविषयिणीं काश्यप आचार्य्यो मन्यते। कथम्? जीवात्मभ्यः परत्वात् अत्यन्तभिन्नत्वात्। "आत्मैकपरां बादरायणः। ३०।" आत्मैकपरां शुद्धात्मविषयिणीं तां बुद्धिं बादरायण आचार्य्यो मन्यते सर्व्वस्य तदभिन्नत्वात्। "उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम्। ३१।" ऐश्वर्य्यपरामात्मैकपरामुभयपरां बुद्धिं मन्यते शाण्डिल्य आचार्य्यः, यतः "सर्व्वं खल्विदं ब्रह्म" इत्यैश्वर्य्यपरता "एष म आत्मान्तर्हृदये" इत्यात्मपरतेत्युभयपरता श्रुतौ तथैवोपपद्यते च श्रुतिस्मृतिपर्य्यालोचनया। "भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात्। ८५।" भजनीयेन परात्मना अद्वितीयम् अभिन्नं अपृथग्भावेनावस्थितम् इदं सर्व्वम्। कथम्? कृत्स्नस्य सर्व्वस्य तत्स्वरूपत्वात् तत्सत्तया सत्तावत्त्वात् तज्ज्ञानेन ज्ञानवत्त्वात्। यथाह भगवद्भक्तिचन्द्रिकाख्यशाण्डिल्यसूत्रव्याख्यानकृत् श्रीमन्नारायणतीर्थः—"सर्व्वस्यापि पदार्थस्य तद्विवर्त्तत्वेन सदात्मकत्वात्। पूर्व्वरूपापरित्यागेनोत्तरावस्थारूपस्य विवर्त्तस्य घटादेरिव स्वकारणतः पृथगसत्त्वात्। सत्त्वहीनस्यालीकत्वात् सत्त्वस्य च विषयज्ञानरूपत्वात् ज्ञानस्य लाघवत्वादेकस्य नित्यस्य स्वप्रकाशब्रह्मरूपत्वात्, अस्ति-भाति-प्रियात्मकमिदं सर्व्वं नामरूपात्मकं नामरूपाभावे ब्रह्मैव। .........'वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः' इत्यनेनाद्वैतज्ञानिनः भक्तस्यैवोत्कर्षः प्रतिपादितो भगवद्गीतायाम्। विविधपरिच्छेदशून्यत्वलक्षण-पूर्णत्वादिमाहात्म्यज्ञानवतस्तस्य व्यवस्थितावपि सर्व्वस्य तत्स्वरूपत्वावगमेन ब्रह्मण्येव निरतिशयप्रीतिसम्भवादित्यभिप्रेत्याद्वैतमुक्तम्। एतेन अद्वितीयं पारमार्थिकं द्वितीयं न भवति, कृत्स्नस्योपादेयतया तत्स्वरूपत्वात्। न ह्युपादेयस्याविनाभावित्वलक्षणं पारमार्थिकत्वं सम्भवति, तत्स्वरूपत्वन्तु समवायस्यानभिधित्सरूपोऽभावाविरुद्धभेदाभेदावच्छिन्नं तादात्म्यम्। तत्र प्रमाणन्तु 'सर्व्वं खल्विदं ब्रह्म तज्ज-

लानिति' 'ततो जगज्जगत्तस्मिन् स जगच्चाखिलं मुने।' इति।" इति। जगत्याविष्कृतशक्तिकारणं ब्रह्म स्वात्मनि च परात्मेत्युभयमेलनात् भगवत्त्वं ब्रह्मणः शाण्डिल्यविद्यायां स्फुटतरमिति निर्व्विवादम्।

भाष्ये "तज्जतल्लतदनम्" इति ग्रहणेन व्याख्यानं कृत्वा कथमत्र तत्त्वाख्यानपक्षे "तदन्" इति स्वरूपग्रहणम्? तस्मिन् अनिति तेन इति ग्रहणे "रूपं रूपं प्रतिरूपो बभूव" इति न्यायेन कारणस्य ब्रह्मणस्तस्मिन् तस्मिन् मननादिवैचित्र्येणात्मप्रकटनमित्यायाति, तेन च भवति तत्र तत्र ब्रह्मसाक्षात्कारः। तत्त्वाख्यानपक्षे तु "अयमात्मा ब्रह्म सर्व्वानुभूः" इति न्यायानुसारान्मननाद्यनुभवान् स्वयं परात्मा सर्व्वस्मिन्नात्मनि प्रकटयतीति विशेषः। प्रथमपक्षे लयानन्तरं तस्मिंस्तस्मिं-स्तत्तद्वैचित्र्येण ब्रह्मण आत्मप्रकटनं तत्तद्व्यवधानतिरोधानाय भवति, तेषां तेषां स्वातन्त्र्यविलोपात् (५।२०२पृ)। पूर्व्वत्र वैचित्र्यमय्या क्रियाशक्त्या पश्चादनुभवमय्या ज्ञानशक्त्या पूर्णैश्वर्य्यब्रह्मदर्शनम्। इयमेव भगवल्लीलेत्याख्यायते। भगवज्ज्ञानशक्तौ ज्ञानशक्त्याकारेण विद्यमानं जगत् जीवबुद्धौ प्रकटयति नित्यं भगवानिति संक्षेपः। विशेषविवृतिस्तत्त्वव्याख्याम्।

५। पञ्चमे पुनर्ब्रह्मणो जीवबुद्धौ त्रिविधप्रकाशो न जातु तस्मिन् भेदसाधकः सर्व्वत्रैव तस्य पूर्णत्वाहानेरिति यद्दर्शितं तत् स्फुटतयैव प्रतिभाति। अत्र श्रीमच्छङ्करेण यदुक्तं वैष्णवाचार्य्यैर्यत् स्वमतमनया श्रुत्या समर्थितं तदिह व्याख्यानरीत्या नानादृतं किन्तर्हि तत्त्वाविष्करणेन तत्तन्निहितसत्यमाविरभूदिति मन्यामहे। "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्" इत्यस्याः श्रुतेरर्थात् 'अदः पूर्णम्' 'इदं पूर्णम्' इति निष्पाद्य अदःशब्देनापरोक्षं तद्ब्रह्म पूर्णमिति निर्णीय, इदं शब्देन कार्य्यात्मकं नामरूपस्थं ब्रह्म पूर्णमित्यवधार्य्य पूर्णात् कारणात्मकात् ब्रह्मतस्तस्य कार्य्यात्मकब्रह्मण उदयेऽपि स्वस्वरूपपूर्णत्वं न तेन परिहृतमिति "पूर्णात् पूर्णमुदच्यते" इत्यंशस्य, तथा पूर्णस्य कार्य्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय स्वज्ञानेन भूतमात्रोपाधिसंसर्गजन्यत्वावभासं तिरस्कृत्य केवलं पूर्णं ब्रह्मैवावशिष्यते इति "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इत्यंशस्य च श्रीमच्छङ्करकृतव्याख्यानस्य सारः। अतो यस्य न कार्य्येण सम्बन्धस्तत् सर्व्वातीतं, यच्च प्रतिकार्य्यं प्रविष्टं तत् सर्व्वगतं, यत् पुनः सर्व्वान्तःप्रविष्टमपि निरञ्जनं तदतीतं तत् सर्व्वान्तर्भा[illegible]कमिति सिद्धान्तेन श्रीमच्छङ्करस्य न कोऽपि विरोधः। "पूर्त्तिः सार्व्वत्रिकी यद्यप्यविशेषा तथापि हि। तारतम्यञ्च तच्छक्तिव्यक्त्यव्यक्तिकृतं भवेत्॥" इति वैष्णवाचार्य्याणां सिद्धान्तो नातिविरुद्धः। यतस्ते सर्व्वत्र विष्णोः पूर्णत्वमविशेषमिति स्वीकृत्य "पूर्णमदः पूर्णमिदम्" इति श्रुतिमुदाहार्षुर्व्याकृषासुश्च—"अदोऽवतारिरूपम् इदमवताररूपम् उभयं पूर्णम्, सर्व्वशक्तिमत् पूर्णादवतारिरूपात् पूर्णमवताररूपं लीलाविस्ताराय स्वयमुदच्यते प्रादुर्भवति तल्लीलापूर्त्तः। पूर्णस्यावताररूपस्य पूर्णं स्वरूपम् आदाय स्वस्मिन्नैक्यं नीत्वा पूर्णमवतारिरूपमन्यवाविलीनं सदवशिष्यते तिष्ठतीत्यर्थः।" इति। शक्तिप्रकाशतारतम्येन यत् तारतम्यं न तद्ब्रह्मणि किन्तर्हि यद्वीतरीति न कोऽपि दोषः।

६। षष्ठे रुद्ररूपेण ब्रह्मणो ग्रहणं दृश्यते। चित्रमेतद्यद्ब्रह्मसंहितोक्तानामन्येषां देवानां अधःकरणं वेदान्तैः साधितं न पुना रुद्रस्य। नायमब्रह्मसंहितोक्तो रुद्र इति वक्तुं शक्यं यतस्तत्रापि-

तेन रुद्रेणास्य न केवलं सादृश्यं किन्तु विशेषणैरैकत्वमस्ति । अत्र शिवाभिधेयो रुद्रो वर्ण्यते न तत्र स इति भणितिरपि न विचारसहा । संहितोक्तस्यापि शिवत्वमसन्दिग्धमेव । शिवशब्दं सुखत्वेन गृह्णाति निरुक्तकारः । निगमश्च—"शिवाभिर्न स्मयमानाभिरागात्" ( १म, ७९सू, २ऋक् ) इति । नैतद्वेदान्तविरुद्धं शिवस्वरूपानन्दस्वरूपयोरभिन्नत्वात् । शमशिवयोरैकपर्य्यायत्वम् । पापजनितभीतिरन्यो रुद्रमूर्त्तिदर्शने हेतुरिति चेत्, तदृक्संहितायां यथा स्फुटं न तथात्र । रुद्रस्य धन्वित्वं यत्रात्र तथा तत्राप्यतिप्रसिद्धम् । कतिपयाभिरुद्धृताभिरृग्भिः स्युरेतानि निःसंशयप्रत्ययविषयाणि ।

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमं हृदे ॥
यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥
यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः ॥
गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥
यः शुक्र इव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥
शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥

( ऋक् १म, ४३सू, १—६ ऋक् ) इति ।

अत्र प्रकृष्टप्रज्ञावत्त्वमभीष्टवर्षित्वं, महत्त्वं, हृदयाधिष्ठातृत्वं, रक्षकत्वं, स्तुतिपतित्वं, यज्ञपतित्वं, भिषक्तमत्वं, सुखदत्वं, शुक्रत्वं, ज्योतिष्मत्त्वं, देवानां परत्वं, निवासत्वं दृश्यते ।

इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामेऽस्मिन्ननातुरम् ॥

इत्यारभ्य प्रथममण्डलस्थं समग्रं चतुर्द्दशाधिकशततमं सूक्तं रुद्रदेवताकं पूर्व्वोक्तविशेषणैरतिरिक्तमधिकवीर्य्यवत्त्वमस्य दर्शयति ।

त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।
व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥
श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥

( ऋक् २म, ३३सू, २।३ ऋक् )

उन्मा ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥ ( ६ ऋक् )

अर्हन् बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ ( १० ऋक् )

अत्राप्य पापहरणत्व-पूजार्हत्व-धन्वित्वादिकं सुस्पष्टम् । भिषजः सन्नस्य प्रदत्तसुखमशीयाभिलाषित्वमप्यत्र दृश्यते । एवमन्यदन्यत्रानुसन्धेयम् ।

"गिरिशन्त" इति "गिरित्र" इति च विशेषणं शैवधर्म्मपरेयमुपनिषदिति प्रतिभाति । शैवाः

पुनरेते तेषां पक्षसमर्थनाय प्रमाणत्वेन गृह्णन्ति। तथाह्यप्ययदीक्षितः श्रीकण्ठभाष्यव्याख्यायां शिवार्कमणिदीपिकायाम्—"एवं श्वेताश्वतरशाखिनां मन्त्रोपनिषदुपक्रमेऽपि 'ब्रह्मवादिनो वदन्ति। किं कारणं ब्रह्म कुतः स्म जाताः' इत्यादिना केषाञ्चित् ब्रह्मवादिनामृषीणां जगतः परमस्य कारणभूतं ब्रह्म किं दैवतात्मकमिति संशयमुपक्षिप्य जगतोऽकारणकत्वस्य कालाद्यन्यकारणत्वस्य चोपपत्तेः ब्रह्म जगज्जन्मादिकारणमित्येतदेवासिद्धमिति संशयस्य निरालम्बनत्वप्रसङ्गपरिहाराय तैरेव कृतं जगदकारणकत्वान्यकारणकत्वपक्षद्वयनिरासं—'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' इति मन्त्रेण—प्रदर्श्य स्वतस्तन्निर्णयाशक्तानां ब्रह्मविद्याधिदेवतायाः परशक्तेरम्बिकायाः प्रसादात्तन्निर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तत्साक्षात्कारं—'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्'—इत्यर्द्धेनोपन्यस्य—'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः'—इत्यादिना तस्याः प्रसादात् कालादिसकलावान्तरकारणाधिष्ठातारं परमकारणं महादेवमपश्यन्नित्येतदर्थप्रतिपादनात् सोऽपि सन्दर्भोऽचानुप्राप्यप्रमाणतयानुसन्धेयः। तत्र यद्यपि 'यः कारणानि' इत्यादिमन्त्रे 'तमपश्यन्' इति पूर्व्वक्रियानुषङ्गवति सकलकारणाधिष्ठातारं कारणमपश्यन्नित्येतावदेव प्रतीयते न तु शिवं तथाभूतकारणमपश्यन्निति, तत्र शिववाचकपदाभावात्; तथापि 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः। संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः' 'विश्वाधिपो रुद्रो महर्षिः' 'तस्मात् सर्व्वगतः शिवः' 'मायिनन्तु महेश्वरम्' 'तमीशानं वरदं देवमीड्यम्' इत्याद्यनन्तरसन्दर्भो यावदुपनिषत्परिसमाप्ति हरेशरुद्रशिवमहेश्वरेशानादिभिः शिवस्यासाधारणनामभिरेव जगत्कारणस्य निर्द्देशदर्शनात् 'यः कारणानि' इति मन्त्रस्य शिवमेव जगत्कारणमपश्यन्नित्यस्मिन्नर्थे तात्पर्य्यमुन्नीयते" इति। येयमम्बिकेत्युक्ता सेयमुमा विद्यारूपेण तलवकारोपनिषद्यप्युक्ता (२।५ [ १२श ])। "अम्बिकापतयउमापतये" (१।१।४) इत्यादि वाक्यं श्रुतित्वेन शैवभाष्ये गृह्यते। "'अम्बिकापतय उमापतये' इति चिच्छक्तिशिवत्वाभ्यासः" इति टीकाकृत्। शैवधर्म्मेणावतारवादस्य प्रथमप्रवर्त्तनाऽवैदिकी... न वयं वक्तुमुत्सहामहे; ऋक्संहितायामपि यतस्तस्यास्तित्वं पश्यामः (६ म, ४७ सू, १८ ऋक् [३।२१]); ७म, ५५सू, १ऋक् [ २।१८ ])। शैवधर्म्मात् पौराणिकधर्म्मस्याधिकाभिव्यक्तिरिति स्वीकर्त्तव्यम्।

वैदिकरुद्रस्यावतारतया शिवस्याम्बिकायाश्च संग्रामाधिष्ठातृत्वं दृश्यते महाभारतादौ तद्यथा—

सञ्जय उवाच—धार्त्तराष्ट्रबलं दृष्ट्वा युद्धाय समुपस्थितम्।
अर्ज्जुनस्य हितार्थाय कृष्णो वचनमब्रवीत्॥
श्रीभगवानुवाच—शुचिर्भूत्वा महाबाहो संग्रामाभिमुखे स्थितः।
पराजयाय शत्रूणां दुर्गास्तोत्रमुदीरय॥
सञ्जय उवाच—एवमुक्तोऽर्ज्जुनः संख्ये वासुदेवेन धीमता।
अवतीर्य्य रथात् पार्थ स्तोत्रमाह कृताञ्जलिः॥

भीष्म २३ अ, १—३ श्लो।

लोके दृश्यते तत्तदवकारानुरूप ब्रह्मविद्यात्मकता:,—

> उमे शाकम्भरि श्वेते कृष्णे कैटभनाशिनि ।
> हिरण्याक्षि विरूपाक्षि धूम्राक्षि च नमोऽस्तु ते ॥
> वेदश्रुतिमहापुण्ये ब्रह्मण्ये जातवेदसि ।
> जम्बूकटकचैत्येषु नित्यसन्निहितालये ॥
> त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनाम् ।
> स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि ॥ ९—११ श्लो ।

पाशुपतास्त्रलाभायार्ज्जुनस्य रुद्राराधना, रुद्रस्य पर्व्वतवासित्वं दिव्यास्त्रधारित्वमित्यादिकं द्रोणपर्व्वणि सुस्पष्टम् ;—

> ग्रहनक्षत्रसोमानां सूर्य्याग्न्योश्च समत्विषम् ।
> अपश्यत तदा पार्थो ज्वलन्तमिव पर्व्वतम् ॥
> समासाद्य तु तं शैलं शैलाग्रे समवस्थितम् ।
> तपोनित्यं महात्मानमपश्यद्वृषभध्वजम् ॥ द्रोण ८० अ, ३०।३८ श्लो ।

> नमो भवाय सर्व्वाय रुद्राय वरदाय च ।
> पशूनां पतये नित्यमुग्राय च कपर्द्दिने ।
> महादेवाय भीमाय त्र्यम्बकाय च शान्तये ॥ ५४ श्लो ।

> येन देवारयः सर्व्वे मया युधि निपातिताः ।
> तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ॥ द्रोण ८१अ, ७ श्लो ।

रुद्रं च विश्वकर्म्मणः ( ६।९ ) पुरुषस्यापि च ग्रहणमस्यां दृश्यते । अतो हि "विश्वतश्चक्षुरुत विश्वतोमुखः" इत्याद्येकाशीतितमसूक्तस्य तृतीया, नवतितमसूक्तस्य च "सहस्रशीर्षा पुरुषः" "पुरुषएवेदं सर्व्वम्" इति प्रथमा द्वितीया च ऋगनीकृता । विश्वगतचक्षुरादीनि 'चक्षुषश्चक्षुः' इति श्रौतन्यायेन तस्यैव परमपुरुषस्य चक्षुरादीनीति कल्प्यन्ते । अतः अस्मात् पश्यन्ति शृण्वन्ति स्पृशन्ति, न पुनस्तत्तत्स्थः परात्मेति भ्रान्तिवारणाय विश्वतश्चक्षुरित्याद्युपन्यासः । "अरूपवदेव हि तत्" (३।२।१४) इतिन्यायेन न पुनः स स्वयं चक्षुरादिमान् । "सर्व्वेन्द्रियविवर्ज्जितं" "अपाणिपादः" इत्युक्त्वा स्वयं श्रुतिरेवास्य न्यायस्योद्भावयित्री । "धातुः प्रसादात्" इत्यत्र भगवद्दर्शनं तत्प्रसन्नतयेति विस्पष्टम् । तत्त्वमस्य ( ५।६ [२००१] ) पूर्व्वमेवोक्तम् ।

७। एकस्मिन् परब्रह्मणि न जातु विवर्त्तनमुपतिष्ठते, नित्यमेकमेव तत् तिष्ठति, तज्ज्ञानबल-क्रियया बहुत्वमस्य जगत इति तत्त्वमत्र स्फुटतया व्यज्यते । न हि ज्ञानशक्तिर्जातु विनाभिप्रायं कञ्चिदर्थमुत्पादयति, तथा सति ज्ञानत्वमेवास्याहानेः । यदि परात्मा नित्यमेकोऽपि तस्याभि-प्रायः पुनर्विविध इति स्वीकरोषि, तेन तस्यैकत्वस्य हानिरुत्पद्यते, विविधत्वेन तस्य तेन भेदात् । एकस्यैकएवाभिप्रायश्चेत्, कथं वा विविधत्वेन जगति तस्याभिव्यक्तिः ? एका शक्तिराधारभेदाद्यथा बहुधा प्रतीयमाना बहुत्वप्रसवे हेतुस्तथा तस्याभिप्रायोऽपि । ज्ञानशक्तेः क्रियाशक्तेश्चैकत्वं पूर्व्वमुक्तम्

( ५।१४[२०६१] )। तत्र यदुक्तम् "आत्मानुरूपेण कार्य्याणां विपरिवर्त्तनकाले" इति किन्तदात्मानुरूपमिति पर्य्यालोचनेऽभिप्राय एव स इत्यायाति। तस्याभिप्रायस्य यदि न तत्स्वरूपत्वं स्यात् यथा शक्तिः, तेन च तस्य भेद एव प्रसज्येत। शिवस्वरूपस्य तस्य शिवाभिप्रायं विनाऽन्यत् किञ्चन न भवितुमर्हति। तत्स्वरूपमेव तस्याभिप्रायः। न हि शिवस्वरूपं ज्ञानाद्भिन्नं, यतः पूर्णज्ञानं न जातु स्यादशिवमशिवत्वस्यापूर्णत्वात्। तज्ज्ञानक्रियया यद्भवति तच्छिवमेव भवति। एवं ज्ञान-क्रिया-मङ्गलाभिप्रायाणामेकत्वे परात्मना तेषामेकत्वमभिन्नत्वञ्चेति सिद्ध्यति। यद्याधारभेदैनैषां बहुधाप्रतीयमानत्वं, तेनाधारभेदेनैवैकत्वं विहन्यते, यतः शक्तेरन्यत्वं विना तदवलम्बनेन बहुधात्वं तस्या जातु न सम्भवति। नामरूपे एवाधारभेद इति स्वीकृतेऽपि नामरूपे ततो भिन्ने इति ताभ्यामेवैकत्वस्य क्षतिः। अथापि नामरूपयोः स्थितिं श्रुतिरनुमोदते, तेन च तयोर्नित्यत्वमायाति। यदि ते तच्छक्तेरन्ये स्यातामेकत्वविज्ञानस्य क्षतिः। तयोरनित्यत्वे पुनराकस्मिकत्वं न निवार्य्यते, ब्रह्मणः सर्व्वकारणत्वस्य च हानिः। तज्ज्ञानबलक्रिययोत्पद्येते ते चेत्, कथं तयोर्ब्रह्मणि नित्यस्थितिर्वर्ण्यते श्रुतिः? स्वशक्तिनिहितत्वान्न सा स्वातन्त्र्येण किन्त्वभिन्नत्वेन। किमेतन्निहितत्वं? आधाराधेयत्वं चेत्, स्वातन्त्र्यं को निवारयेत। अतस्तत् स्फुरणयोग्यत्वमिति वाच्यं वस्तुस्वभावत्वेन यथाग्नेर्दाहिका शक्तिः। तां स्फुरणयोग्यतामवलम्ब्यैव "ते यदन्तरा" ( ३।१९ ) इत्युक्तिः। तत्स्फूर्त्तौ बहुधा प्रतीयमानत्वस्य च कारणं ते। स्फुरणयोग्यतेत्युक्त्या न रहस्योद्भेदः। प्रत्यक्षयोर्वस्तुतत्सामर्थ्ययोरस्वीकारस्याशक्यत्वात् तत् सोढव्यम्। "शक्तेरात्मभूतं कार्य्यम्" इत्युक्तेरेवायं प्रपञ्चः। आधुनिकैर्विज्ञाननिरतैः परीक्षया वर्णादीनां शक्तिवैचित्र्यमात्रं प्रतिपादयद्भिर्वेदान्तकृतान्तस्य पारमार्थिकत्वं नितरां दृढीकर्तमिति ज्ञातव्यम्।

८—१२। अष्टमे ( ८ ) सप्तमस्यैव विषयदृढीकरणम्। नवमे (९) "यदेशोऽस्य विपदस्यतुष्पदः" इत्येष ऋग्वेदे दशममण्डलस्यैकविंशत्यधिकशततमसूक्तं नास्याः सम्बन्धं दर्शयति। तत्र कः प्रजापतिरिति पूर्व्वं निर्दिश्य ( ५।७[२०४] ) अथमन 'कस्मै' काय सुखस्वरूपायेति व्याख्या? "यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः" इति विषयपरिवर्त्तनानुरोधात्। वैदिकदेवैर्योऽसौ प्रेरयिता तमेव सर्व्वत्र श्रुतिः प्रधानत्वेन गृहीत्वा वेदवचनानि तत्परत्वेन व्याचष्टे स्वाङ्गीभूतानि च कुरुत इति ज्ञेयम्। "यदाऽतमस्तन्न दिवा न रात्रिः" इत्यत्र माण्डूक्योपनिषदविरोधितया ( ३।५[६८५] ) तुरीयं ब्रह्म शिवस्वरूपत्वेन गृहीतम्। श्रीकण्ठस्त्वाह—"यत् सर्व्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते" इति। व्याख्याता पुनः—"शिवशब्दप्रवृत्तिनिमित्तपर्य्यालोचनयाप्यशक्यार्थमिद्धिमभिप्रेत्य तेन विशेष्यनिर्द्देशः कृतः। शिवएव तत्त्वं शिवतत्त्वम्। तत्त्वशब्देनाथ कालत्रयवर्त्ति शाश्वतं वस्तूच्यते।......एवं चात्र तत्त्वशब्दप्रयोगेण शिवस्य 'न सन्न चासच्छिवएव केवलः' इति मन्त्रोक्तसर्गाद्यकालावस्थायित्वप्रदर्शनेन कारणवाक्यान्तरेभ्यः प्रबलेन तेनापि जगत्कारणत्वस्य शिवैकान्त्यसिद्धिरिति सूच्यते" इति। भव-शर्व्वेशान-पशुपति-रुद्रोग्र-भीम-महादेवा इत्यष्टनामधेयानि। 'सद्रूपं ब्रह्म भवशब्दवाच्यम्' 'शर्व्वशब्देन सकलसंहर्तृ ब्रह्म' 'निरुपाधिकपरमैश्वर्य्यविशिष्टत्वादीशानशब्दवाच्यं ब्रह्म' 'ईश्वरस्येशित्व्यापेक्षतया पशुपतिशब्दवाच्यं ब्रह्म' 'संसाररुग्द्रावकत्वाद्रुद्रशब्दवाच्यं ब्रह्म' 'नियामकत्वेन

निखिलचेतनजडहेतुतया भीमशब्दाभिधेयं ब्रह्म' 'महत्त्वेन दीप्यमानतया महादेव इत्युच्यते शिवः'। इति। दशमे (१०) न केवलं सृष्टिप्रवाहः किन्तर्हि तत्त्वज्ञानोपदेष्टॄणामपि प्रवाह-क्रमेणागमनमस्तीति दर्शयति। कथं पुनरुपदेष्टॄणां प्रवाह इति? "ऋषिभिर्विमर्शं जायमानश्च पश्येत्" इत्यनेन तत् साधयति। स्वोपदिष्टैर्ऋषिभिर्धारणपोषणमुत्तरोत्तरजायमानत्वमृषिसम्प्रदाया-विच्छेदसाधकम्। परलोकगता देवा ऋषयोऽद्यापि ब्रह्मतत्त्वालोचनया जीवन्तीति "ये पूर्व्वं देवा ऋषयश्च तद्विदुः" इत्यनेन प्रदर्श्यते। "तद्ब्रह्मा वेदते" इति वर्त्तमानप्रयोगात् ईश्वरानुगृहीता बुद्धिस्तत् परतत्त्वं नित्यकालं जानातीति तत्त्वमुद्भूयते।

एकादशे (११) क्रियया शक्तेर्विविधत्वं प्रकाशमानमपि न तस्या एकत्वस्य हानिः "स्वाभाविकी ज्ञानबलक्रिया" इत्यनेन सूच्यते। 'श्रूयते' इति पदेन विविधत्वं लोके वेदेषु च ख्यातमिति निर्द्दिश्य कथमेकत्वं तस्याः पुनर्निबध्नातीति जिज्ञासा चेत् "महद्देवानामसुरत्वमेकम्" (ऋक् ३म ५५सू) इति शक्तिविषये वैदिकसिद्धान्तः विविधाकारेण प्रकाशमानापि शक्तिरेकैवेति प्रति-पादयति। तत्त्वविषये न लोकानां किन्त्वाप्तवाक्यानां प्रमाणत्वमिति प्रसिद्धिर्न पुनस्तत्त्वं बाधते। यत् किञ्च बहिःप्रकाशमानं तदेव लोकाः पारमार्थिकत्वेन गृह्णन्ति, न पुनरन्तःप्रविश्य तत्त्वमुद्भा-वयन्तीत्याप्तेभ्यस्तेषां महत् पार्थक्यम्। "स्वभावतो देवएकः समावृणोत्" इत्यनेन तत्त्वन्तु तदावरण-भेदं विना न प्रकाश्यत इति स्वयं श्रुतिर्वक्ति। तथाप्ताः पुनराराधनया तं परदेवं प्रसाद्यावरणो-न्मोचनाय प्रभवन्तीति "सनो दधाद ब्रह्माप्ययम्" इति प्रार्थना। "कार्य्याध्यक्षः" "निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति" इत्यादिवचनैर्ब्रह्म नित्यं सक्रियं तदन्यं निष्क्रियाद्इति वेदान्तवादिनां विरोधि मतं कथमत्र पुष्यतइति विप्रतिपत्तिः कारणस्य कारणत्वं न सिद्ध्यति क्रियां विनेति निर्द्धारणेन निरसनीया। तेषां निष्क्रियत्वे दृढा मतिर्न पुनरनादरार्हा, यतः सक्रियत्वेऽपि तस्य निष्क्रियत्वं निर्लेपतयैव नित्यसिद्धम्? अतएव "निष्कलं निष्क्रियं शान्तं निरवद्यं निर-ञ्जनम्" (६।१२) इति। न हि जीवः कारणमतएव तस्य निष्क्रियत्वं, सक्रियत्वं पुनस्तस्य कार्य्याध्यक्षस्य क्रियाप्रवर्त्तयितुः प्रेरणया। यद्येवं कथं स कर्म्महेतोर्धर्म्माधर्म्मफलभाक्? "योनि-स्वभावानधितिष्ठत्येकः" (६।१०) इति स्वप्रवर्त्तितस्वभावानतिक्रम्य न स परः तं प्रेरयति कर्म्मसु। यदि पुनः स परेण प्रतिष्ठितात् स्वभावादात्मानं विच्यावयत्यधर्म्मं प्राप्नोति, स्वभावे विद्यमानः धर्म्ममिति निर्व्विवादम्।

द्वादशे (१२) "गुणी" "गुणेशः" इति द्वयोरेकस्मिन् मन्त्रे सन्निवेशेन निर्गुणत्वं सगुणत्वं परात्मनः कथमेकत्र सम्भवति तन्निर्व्विवादतया दर्शयति। यो हि गुणानां नियन्ता, न स पुनः गुणकृतविकारभाक् भवितुमर्हति। तथा सति तस्य तेषां नियन्तृत्वं व्याहन्यते। एवं निर्गुणोऽपि स कथं गुणी? स्वरूपेण। न हि वस्तु स्वरूपविहीनं भवितुमर्हति। तत्स्वरूपमेव तस्य गुणः। गुण आमन्त्रणे। आमन्त्रणं सभाजनम्। गुण्यतेऽनेनेति गुणः। येन विशिष्यते स गुणः। शक्तिज्ञानशिवस्वरूपेण च स विशिष्यते। तस्य स्वरूपस्य न त्वेकत्वं भिन्नदृष्ट्या भिन्नतया दर्शनेनापि तिरोधत्ते। सुतरामागन्तुकोपाद्यादिगुणवत्त्व तेषामनित्यत्वं भेदसाधकत्वं वा। गुण-श्चेद्विशेषणं तदा भेदसाधकः सः। कथं तत् स्वात्मनि सम्भवति? जीवात्मगतश्चास्य विशेषत्वमस्ति

नियन्तृत्वादिभिरिति जीवबुद्धौ विशेषत्वं तस्य यत् प्रतिभाति न तदाकस्मिकं सर्व्वेश्वरे तदस्तीति पूर्व्वमुक्तं विशेषणस्य सफलत्वम् (१।५।[१५५।१५७ष])। सत्तामात्रं परं ब्रह्म सर्व्वेषां वादिनां निर्व्विवादस्थलमिति स्वीकृतेऽपि तस्मिन्नपि विशेषानुभवोऽनिवार्य्यः। सुष्ठूक्तं श्रीमद्रामानुजेन ;—"यदुक्तं वेदान्तवाक्यानि निर्व्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनीति तदयुक्तम्। एकविज्ञानेन सर्व्वविज्ञानोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्व्वज्ञता सर्व्वशक्तियोगः सत्यसङ्कल्पत्वं सर्व्वान्तरत्वं सर्व्वाधारत्वं सर्व्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवम्भूतब्रह्मात्मकत्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात् प्रकरणस्य।" इति। "यो वेदांश्च प्रहिणोति तस्मै" इति वर्त्तमानप्रयोगस्य कारणमुक्तम्। कथं "ब्रह्माणं विदधाति पूर्व्वम्" इति वर्त्तमानप्रयोगः? न केवलं सृष्टादौ किन्तु प्रतिजीवं बुद्धेर्नवनवाभिव्यक्तिरपि परात्मनः प्रवर्त्तनमपेक्षत इति प्रदर्शनार्थं सः।

## इति भगवद्भक्तौ षष्ठोऽध्यायः।

---

# सप्तमोऽध्यायः।

## जीवात्मवल्ली।

१। येयं प्रेते विचिकित्सा मनुष्येऽ-
स्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाऽहं
वराणामेष वरस्तृतीयः॥
देवैरत्रापि विचिकित्सितं पुरा
न हि सुविज्ञेयमणुरेष धर्म्मः।
अन्यं वरं नचिकेतो वृणीष्व
मा मोपरोत्सीरति मा सृजैनम्॥

१। नरपतेर्वाजश्रवसस्य पुत्रो नचिकेताः पितरं नरकगमनसाधनदक्षिणादानोद्यतं पश्यंस्ततो वारयितुं "कस्मै मां दास्यसि" इति वारत्रयमजिज्ञासत। ततः क्रुद्धः पिता "मृत्यवे त्वां ददामि" इत्युवाच। नचिकेताः पुनः पितृवाक्यप्रतिपालनाय यमनसदने प्रस्थितस्तत्र त्रिरात्रमनाहारेणोवास। मृत्युस्तज्ज्ञात्वा तं वरत्रयदानेन तर्पयितुमयतत। अत्र तृतीयवरप्रार्थनेन विषयारम्भः येयमिति। प्रथमवचनसंघे दुर्लभत्वमात्मज्ञानस्य प्रदर्श्यते। मनुष्ये प्रेते मृते सति एके अस्ति इति, एके अपरे न अयम् अस्ति इति च वदन्ति। या इयं विचिकित्सा संशयः, तत् एतत् पक्षद्वयं त्वया अनुशिष्टः ज्ञापितः विद्यां विजानीयां तयोस्तत्त्वं ज्ञातुमिच्छामि, वराणां एव तृतीयः वरः।

यम आह देवैरिति। अत्र पक्षद्वयविषये पुरा देवैः अपि विचिकित्सितं संशयितं, न हि एतत् सुविज्ञेयम्। कथम्? एष धर्म्मः आत्मज्ञानरूपः अणुः सूक्ष्मः। हे नचिकेतः, अन्यं वरं वृणीष्व प्रार्थ-

देवैरत्रापि विचिकित्सितं किल
त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ।
वक्ता चास्य त्वादृगन्यो न लभ्यो
नान्योवरस्तुल्यमेतस्य कश्चित्॥

शतायुषो पुत्रपौत्रान् वृणीष्व
बहून् पशून् हस्तिहिरण्यमश्वान्।
भूमेर्महदायतनं वृणीष्व
स्वयञ्च जीव शरदो यावदिच्छसि॥

एतत्तुल्यं यदि मन्यसे वरं
वृणीष्व वित्तं चिरजीविकाञ्च।
महाभूमौ नचिकेतस्त्वमेधि
कामानान्त्वा कामभाजं करोमि॥

यस्व, मा मां मा उपरोत्सीः उपरुद्धम् अनुरुद्धं मा कार्षीः। मा मां प्रति एनं वरम् अतिसृज विमुञ्च।

नचिकेता आह देवैरिति। किल पुरा अत्र देवैः अपि विचिकित्सितम्। हे मृत्यो, त्वं च यत् आत्मतत्त्वं न सुविज्ञेयम् इति आत्थ; तस्य अस्य आत्मतत्त्वस्य त्वादृक् त्वत्तुल्यः अन्यः वक्ता व्याख्याता न लभ्यः। एतस्य तुल्यं न कश्चित् अन्यः वरः प्रार्थनीयविषयः अस्ति।

यमः प्रलोभयन्नाह शतायुष इति। शतायुषः शतवर्षजीविनः पुत्रपौत्रान् वृणीष्व प्रार्थयस्व, बहून् पशून् हस्तिहिरण्यम् अश्वान्, भूमेः महत् आयतनं विस्तीर्णराज्यं वृणीष्व प्रार्थयस्व। शरदः वर्षाणि यावत् इच्छसि स्वयं च जीव।

एतदिति। एतत्तुल्यं यदि अन्यं वरं मन्यसे अभिलषसि, वित्तं प्रभूतहिरण्यरत्नादि चिरजीविकां च वृणीष्व प्रार्थयस्व। हे नचिकेतः,

ये ये कामा दुर्ल्लभा मर्त्त्यलोके
सर्व्वान् कामाꣳश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्य्या
न हीदृशा लम्भनीया मनुष्यैः ॥
आभिर्मत्प्रत्ताभिः परिचारयस्व
नचिकेतो मरणं मानुप्राक्षीः ॥

श्वोभावा मर्त्त्यस्य यदन्तकैतत्
सर्व्वेन्द्रियाणाञ्जरयन्ति तेजः ।
अपि सर्व्वञ्जीवितमल्पमेव
तवैव वाहास्तव नृत्यगीते ॥

त्वं महाभूमौ एधि—आ सम्यक् ईशिष्व—राजाभव । त्वां कामानाम् अभिलाषाणां कामभाजम् अभिलषितसम्पन्नं करोमि ।

ये ये इति । मर्त्त्यलोके पृथिव्यां ये ये कामाः दुर्ल्लभाः दुष्प्राप्याः, तान् सर्व्वान् कामान् छन्दतः स्वच्छन्दं प्रार्थयस्व वृणीष्व । सरथाः सतूर्य्याः सवादित्राः इमाः सम्मुखवर्त्तिन्यः रामाः अप्सरसः, मनुष्यैः ईदृशाः न हि लम्भनीयाः प्रापणीयाः । मत्प्रत्ताभिः मया प्रदत्ताभिः आभिः अप्सराभिः परिचारयस्व आत्मानं परिचारितं सेवितं कुरु । हे नचिकेतः, मरणं मरणसम्पर्कीयप्रश्नं मा अनुप्राक्षीः मा पृच्छ ।

नचिकेता आह श्वोभावा इति । श्वोभविष्यन्ति न भविष्यन्ति वेति सन्दिह्यमानएव भावः येषां ते श्वोभावाः—त्वत्प्रदत्तभोगाः—मर्त्त्यस्य मनुष्यस्य यत् एतत् सर्व्वेन्द्रियाणां तेजः तत् जरयन्ति अपक्षयन्ति । सर्व्वं जीवितं सर्व्वायुः अपि अल्पम् एव—किन्त्वत्प्रदत्तदीर्घजीवनेनेति भावः । तव एव वाहाः रथतुरङ्गादयः नृत्यगीते अप्सरकृते तव तिष्ठन्तु ।

न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा।
जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव॥
अजीर्य्यताममृतानामुपेत्य
जीर्य्यन्मर्त्यः क्वधस्थः प्रजानन्।
अभिध्यायन् वर्णरतिप्रमोदा-
नतिदीर्घे जीविते को रमेत॥
यस्मिन्निदं विचिकित्सन्ति मृत्यो
यत् साम्पराये महति ब्रूहि नस्तत्।
योऽयं वरो गूढ़मनुप्रविष्टो
नान्यस्तस्मान्नचिकेता वृणीते॥

कठ १।२०—२९।

न वित्तेनेति। मनुष्यः वित्तेन न तर्पणीयः तोषणीयः। चेत् यदि त्वा त्वाम् अद्राक्ष्म दृष्टवन्तः वयं, तत एव वित्तं लप्स्यामहे तद्दर्शन फलात्। यावत् त्वम् ईशिष्यसि ईशिष्यसे प्रभुः स्याः, जीविष्यामः त्वदनुग्रहात् विना वरप्राप्त्या। अतएव स एव वरः मे वरणीयः प्रार्थनीयः।

अजीर्य्यतामिति। अजीर्य्यतां वयोहानिविरहितानाम् अमृतानां अमरणधर्म्माणां देवानाम् उपेत्य समीपं गत्वा प्रजानन् मरणधर्म्मत्वा-मरणधर्म्मत्वं प्रकृष्टज्ञानेन ज्ञात्वा क्वधःस्थः कुः पृथिवी सा एव अधः—अन्तरीक्षादिलोकापेक्षया—तस्यां तिष्ठतीति क्वधःस्थः सन् जीर्य्यन्मर्त्यः जरामरणवान् कः वर्णरतिप्रमोदान् तत्तच्चञ्चलविषयान् अभिध्यायन् आलोचयन् अतिदीर्घे जीविते रमेत रतिं लभेत? न कोऽपीति भावः।

यस्मिन्निति। हे मृत्यो, यस्मिन् प्रेते मृते इदम् अस्ति नास्ति वेति

२ । अन्यच्छ्रेयोऽन्यदुतैव प्रेय-
स्ते उभे नानार्थे पुरुषꣳसिनीतः ।
तयोः श्रेय आददानस्य साधु
भवति हीयतेऽर्थाद्य उ प्रेयोवृणीते ॥
श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद्वृणीते ॥
स त्वं प्रियान् प्रियरूपाꣳश्च कामा-
नभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।

विचिकित्सन्ति संशेरते, महति साम्पराये पारलौकिकविषये यत् ज्ञातव्यं, तत् नः अस्मभ्यं ब्रूहि कथय । गूढ़ं प्रच्छन्नं गहनं अनुप्रविष्टः योऽयं वरः परलोकविषयकः, तस्मात् वरात् अन्यं वरं नचिकेताः न वृणीते न प्रार्थयते ।

२ । प्रलोभ्यमानोऽपि नचिकेता न भोगानकामयतेति परितुष्टो यम आह अन्यदिति । श्रेयः निःश्रेयसम् अन्यत्, प्रेयः प्रियतरम् पुनः अन्यत् । ते उभे नानार्थे भिन्नप्रयोजने पुरुषं जीवं सिनीतः बध्नीतः । तयोः श्रेयःप्रेयसोः श्रेयः आददानस्य गृह्णतः साधु भवति । यः उ पुनः प्रेयः वृणीते आदत्ते स अर्थात् पुरुषार्थात् हीयते च्यवते ।

श्रेय इति । श्रेयः च प्रेयः च मनुष्यम् एतः प्राप्नुतः । धीरः विवेकी तौ श्रेयःप्रेयःपदार्थौ सम्परीत्य सम्यक् परिगम्य सम्यङ् मनसा आलोच्य विविनक्ति पृथक् करोति । धीरः प्रेयसः प्रियतरात् श्रेयः अभिवृणीते उपादत्ते, मन्दः मूढ़ः योगक्षेमात् शरीराद्युपचयरक्षणहेतोः प्रेयः प्रियतरं वृणीते आदत्ते ।

सत्वमिति । हे नचिकेतः, स त्वं प्रियान् प्रियरूपान् च कामान्

नैताꣳसृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ॥
दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता।
विद्याभीप्सिनन्नचिकेतसं मन्ये
न त्वा कामाबहवो लोलुपन्तः ॥

काठ २।१—४।

३। न साम्परायः प्रतिभाति बालं
प्रमाद्यन्तं वित्तमोहेन मूढ़म्।
अयं लोको नास्ति पर इति मानी
पुनः पुनर्वशमापद्यते मे ॥

अभिध्यायन् आलोचयन् अत्यस्राक्षीः पर्य्यत्याक्षीः परित्यक्तवान्; वित्त-मयीं धनप्रायाम् एतां सृङ्कां सृतिं पदवीं न त्वम् अवाप्तः अवाप्तवान् असि; यस्यां सृङ्कायां बहवो मनुष्याः मज्जन्ति मग्नाः भवन्ति सीदन्ति।

दूरमिति। या च अविद्या कर्म्म प्रेयोविषया या च विद्या श्रेयोविषया ते एते प्रेयःश्रेयसी विषूची नानारूपगतिविशिष्टे भिन्नफले दूरं दूरेण महतान्तरेण विपरीते। नचिकेतसं विद्याभिप्सिनं मन्ये। कथम्? बहवः कामाः भोगविषयाः न त्वां लोलुपन्तः लोलुपं कृतवन्तः।

३। भोगलोलुपताया महदनिष्टमाह नेति। साम्परायः पार-लौकिकविषयः वित्तमोहेन मूढ़ं प्रमाद्यन्तं भ्रमाकुलं बालम् अज्ञानं प्रति न प्रतिभाति न प्रकाशते। अयं लोकः न अस्ति न परः इति मानी मननशीलः तादृक् जनः पुनः पुनः मे मम शमनस्य वशम् अधी-नताम् आपद्यते प्राप्नोति।

श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यन्न विद्युः।
आश्चर्य्यो वक्ता कुशलोऽस्य लब्धा-
श्चर्य्यो ज्ञाता कुशलानुशिष्टः॥
न नरेणावरेण प्रोक्त एष
सुविज्ञेयो बहुधा चिन्त्यमानः।
अनन्यप्रोक्ते गतिरत्र नास्त्य-
णीयान् ह्यतर्क्यमणुप्रमाणात्॥
नैषा तर्केण मतिरपनेया
प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ।

दुर्ल्लभत्वमस्य तत्त्वस्याह श्रवणायेति। यः अयम् आत्मा श्रवणाय अपि श्रवणार्थम् अपि बहुभिः न लभ्यः वक्तुरभावात्। यदि वा वक्ता लभ्यते—शृण्वन्तः अपि बहवः यम् इमम् आत्मानं न विद्युः न विजानीयुः। अस्य आत्मनः वक्ता आश्चर्य्यः दुर्ल्लभत्वात् अलौकिकः अद्भुतः। अस्य आत्मनः लब्धा लाभकर्त्ता कुशलः निपुणः कौशलवान्। कुशलानुशिष्टः कुशलेन निपुणेन आचार्य्येण अनुशिष्टः उपदिष्टः सन् अस्य आत्मनः ज्ञाता आश्चर्य्यः अद्भुतः।

न नरेणेति। एष आत्मा अवरेण हीनेन नरेण प्रोक्तः न सुविज्ञेयः। कथम्? बहुधा विविधभावेन अनियतप्रकारेण चिन्त्यमानः। अनन्यप्रोक्ते अनन्येन एकान्तभावगतेन प्रोक्ते अत्र आत्मनि गतिः अस्ति नास्तीत्यादिरूपा विविधा चिन्ता न अस्ति। एष आत्मा अणुप्रमाणात् अणीयान्; हि अतएव तत् आत्मतत्त्वम् अप्रतर्क्यं तर्केण विविधमार्गप्रसारि चिन्तनेन न लभ्यम्।

नैषेति। हे प्रेष्ठ प्रियतम, यां मतिं त्वम् आपः प्राप्तवान् असि एषा मतिः तर्केण न अपनेया न अपनेतव्या न हन्तव्या। कथम्?

यान्त्वमापः सत्यधृतिर्बतासि
त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥
जानाम्यहं शेवधिरित्यनित्यं
न ह्यध्रुवैः प्राप्यते हि ध्रुवन्तत्।
ततो मया नाचिकेतश्चितोऽग्नि-
रनित्यद्रव्यैः प्राप्तवानस्मि नित्यम् ॥
कामस्याप्तिं जगतः प्रतिष्ठां
क्रतोरानन्त्यमभयस्य पारम्।
स्तोममहदुरुगायम्प्रतिष्ठां
दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥

काठ २।६—११।

अन्येन त्वत्तो ज्ञानवता अपरेण एव प्रोक्ता व्याख्याता इयं मतिः सुज्ञानाय प्रकृष्टज्ञानाय भविष्यति। हे नचिकेतः, त्वं बत—विस्मये—सत्यधृतिः सत्यधारणवान् असि। त्वादृक् प्रष्टा जिज्ञासुः नः अस्मभ्यं भूयात् भवतु।

जानामीति। अहं यमः शेवधिः निधिः इति पार्थिवधनमिति यावत् अनित्यं जानामि। ध्रुवं नित्यं तत् आत्मतत्त्वम् अध्रुवैः अनित्यैः द्रव्यैः न हि प्राप्यते। ततः मया अनित्यैः द्रव्यैः नाचिकेतः—योऽसावग्निः सम्प्रति तन्नाम्ना प्रसिद्धः स्यात् स—अग्निः चितः निर्व्वर्त्तितः, तेन नित्यम् आपेक्ष्यं सर्गाख्यं याम्यं स्थानं प्राप्तवान् अस्मि। प्रस्थानत्रयाणां भेदवादप्रदर्शनायैषाहृतासीत्; अत्र पुनर्विषयविच्छेदव्याख्यायास्या निवेशः।

हैरण्यगर्भादिस्थानाभिलाषत्यागेनास्य शिष्यस्य स्वतो महत्त्वं दर्शयति कामस्येति। कामस्य अभिलाषस्य आप्तिं प्राप्तिं, जगतः प्रतिष्ठां कर्मणा जगदाश्रयत्वलाभं—"ब्रह्मचारीणांश्चरति रोदसी" "स दधार

४। एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः
प्रवृह्य धर्म्म्यमणुमेतमाप्य।
स मोदते मोदनीयꣳ हि लब्ध्वा
विवृतꣳ सद्म नचिकेतसं मन्ये॥

अन्यत्र धर्म्मादन्यत्राधर्म्मादन्यत्रास्मात् कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद॥

काठ २।१३।१४।

पृथिवीं द्याम्" ( अथ, ११।५।१ ) इति; क्रतोः यज्ञस्य आनन्त्यम् अनन्तकालफलप्रदं हैरण्यगर्भं पदं—"शाश्वतीः समा उपयन्ति लोकाः शाश्वतीः समा उपयन्त्यापः। इष्टं पूर्त्तं शाश्वतीनां समानां शाश्वतेन हविष्टानन्तं लोकं समारुरोह।" ( तै, ब्रा २।५।५ ) इति; अभयस्य प्रच्युतिहीनगतेः पारं परां निष्ठां—"अनन्तꣳ ह वा अपारमक्षय्यं लोकं जयति योऽग्निं नाचिकेतं चिनुते।" (तै, ब्रा, ३।११।८) इति; स्तोम-महदुरुगायं स्तोमं स्तुत्यं महत् ऐश्वर्य्ययुक्तं स्तोमञ्च तन्महच्च उरुगायं विस्तीर्णां गतिं—न केवलम् अक्षय्यं किन्सर्व्वापारं; प्रतिष्ठां सर्व्व-लोकजयरूपाम्—"अन्तरिक्षं दिवं भूमिमादित्यान् मरुतो दिशः। लोकान् स सर्व्वानाप्नोति यो ददाति शतौदनाम्।" ( अथ, १०।५।१० ) इति; सर्व्वम् एतत् धृत्वा धारणया सत्यावधारणेन धीरः विवेकी सन्, हे नचिकेतः, त्वम् अत्यस्राक्षीः त्यक्तवान्।

४। आत्मतत्त्वोपदेशः प्रस्तूयते मृत्युना एतदिति। एतत् वक्ष्यामाणम् आत्मतत्त्वं श्रुत्वा सम्परिगृह्य उपादाय मर्त्त्यः मरणधर्म्मा नरः प्रवृह्य सम्यक्तो भूत्वा धर्म्म्यं धर्म्मादनपेतम् अणुं सूक्ष्मम् एतम् आत्मानम् आप्य प्राप्य मोदनीयं हर्षणीयं तम् एतं लब्ध्वा स मोदते। नचिकेतसं प्रति सद्म ब्रह्मनिकेतनं विवृतम् अपावृतद्वारम्।

दृश्यमानं यत् किञ्च तदतीतं यद्वस्तु तद्व्याख्यानाय नचिकेता आह

५। न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित्।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥

हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायꣳहन्ति न हन्यते ॥

अन्यत्रेति। धर्म्मात् शास्त्रीयानुष्ठानात् अन्यत्र तदतीतं, अधर्म्मात् अविहितानुष्ठानात् अन्यत्र तदतीतं, अस्मात् दृश्यमानात् कृताकृतात् कार्य्यकारणात् अन्यत्र तदतीतं, भूतात् अतीतात् च अन्यत्र तदतीतं, भव्यात् भविष्यतः च अन्यत्र तदतीतं, चकारात् वर्त्तमानात् अन्यत्र तदतीतं यत्, तत् पश्यसि जानासि त्वम्, तत् वद। परतत्त्वजीवतत्त्व-साधारणोऽयं प्रश्नः।

५। परतत्त्वजीवतत्त्वसाधारणत्वात् प्रश्नस्य प्रथमं परतत्त्वमाख्याय (२।२) तदनन्तरमात्मतत्त्वमाह न जायत इति एवमन्यत्र। विपश्चित्—विप्रकृष्टं चिनोति ज्ञानविषयं करोतीति दीर्घदर्शी चैतन्य-स्वरूपः आत्मा—विपश्चिदित्यत्र गीतायां 'कदाचित्' इति पाठः, तेन 'ब्रह्मणा विपश्चिता' (४.११) इत्यत्रान्यत्रब्रह्मविशेषणविपश्चिच्छब्दादर्थान्तरमत्र दृष्टीतं जीवविशेषणत्वात्—न जायते, न म्रियते, न अयं कुतश्चित् कारणात् बभूव—कारणस्य ब्रह्मणः परप्रकृतित्वात्; कश्चित् न अतो बभूव—अस्य स्रष्टृत्वाभावात्। अयम् अजः जन्मरहितः—देहादिजन्म नास्य जन्म; नित्यः चिरस्थायी, शाश्वतः अपक्षयशून्यः, पुराणः प्राचीनोऽपि नवीनः, शरीरे हन्यमाने न अयं हन्यते।

हन्तेति। हन्ता हननकर्त्ता हननाभिलाषी हन्तुं हनिष्याम्येनमिति चेत् मन्यते चिन्तयति, हतः विनष्टदेहः चेत् हतं हतोऽहमिति मन्यते, तौ उभौ हन्तृहताभिमानिनौ न विजानीतः न स्वरूपज्ञौ, अयम् आत्मा कमप्यात्मानं न हन्ति, नापि आत्मा हन्यते हतो भवति।

अणोरणीयान् महतो महीया-
नात्मास्य जन्तोर्निहितो गुहायाम्।
तमक्रतुः पश्यति वीतशोको
धातुप्रसादान्महिमानमात्मनः॥
आसीनो दूरं व्रजति शयानो याति सर्व्वतः।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति॥
अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥

कठ २।१८—२२।

अणोरिति। अस्य जन्तोः प्राणिनः आत्मा अणोः सूक्ष्मात् अणीयान् सूक्ष्मतरः, महतः महतः परिमाणात् महीयान् महत्तरः, गुहायां हृदि निहितः प्रतिष्ठितः। तम् आत्मानम् अक्रतुः वाह्यविषयोपरतबुद्धिः धातुप्रसादात् देहधारणकारणशोणितादयः धातवः तेषां प्रसादात् विषयप्रवणतारूपवैगुण्यापनोदनात् वीतशोकः अपनीतविषयजनितखेदः आत्मनः महिमानं महत्त्वं पश्यति प्रत्यक्षीकरोति। श्वेताश्वतरपाठे "धातुः प्रसादात्" इति, "ईशम्" इति च। तेन च विषयभेदादव्याख्याः पुनरुल्लेखः।

आसीन इति। आसीनः उपविष्टः दूरं व्रजति—कालदेशबाधामतिक्रम्य दूरस्थविषयमात्मचिन्तायत्तं करोति, शयानः निद्रितः सर्व्वतः याति स्वप्ने विचरति। मदामदं हर्षाहर्षं तदुभयविपरीतधर्म्माक्रान्तं तं देवम् आत्मानं मदन्यः मत्तो मृत्योः कः अन्यः ज्ञातुम् अर्हति समर्थो भवति।

अशरीरमिति। अनवस्थेषु अस्थायिषु शरीरेषु अवस्थितम्, अशरीरं देहरहितम् आत्मानं महान्तं विभुं देहाद्यतीतं मत्वा ज्ञात्वा धीरः विवेकी न शोचति, देहापगमेऽपि तस्याविनाशित्वात्।

६। ऋतं पिबन्तौ सुकृतस्य लोके
गुहाम्प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः॥

यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्।
अभयं तितीर्षताम्पारं नाचिकेतꣳशकेमहि॥

आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च॥

६। परात्मनैव जीवात्मनः सादृश्यमतस्तावुभावेकत्र सन्निवेश्य बुद्धिगोचरौ कर्त्तुमाह ऋतम् इति। लोके जगत्यां—"आत्मानं स्वयमकुरुत तस्मात्तत् सुकृतमुच्यते" (८।६) इति—व्याकृतावस्थायां सुकृतस्य ऋतम्—इयर्त्ति हृदयमिति—क्रियाफलं रसम् आनन्दं पिबन्तौ भुञ्जानौ गुहायां बुद्धौ परमे श्रेष्ठे परार्द्धे—परस्य ब्रह्मणः अर्द्धं स्थानं—हार्दाकाशे प्रविष्टौ छायातपौ छायातपाविव नित्यसम्पृक्तौ जीवात्मपरात्मानौ ब्रह्मविदः वदन्ति कथयन्ति। त्रिनाचिकेताः त्रिःकृत्वः नाचिकेतोऽग्निः चितः यैः ते अपि वदन्ति एवम्।

यदिति। यतः छायातपाविव जीवात्मपरमात्मानौ ते वदन्ति, अतएव ईजानानां यजमानानां यः सेतुः पारगमनोपायः, यत् अक्षरं परं ब्रह्म, पारं तितीर्षतां तर्त्तुमिच्छतां तं नाचिकेताग्निं चेतुं, तत् ब्रह्म च ज्ञातुं शकेमहि शक्नुमहि।

आत्मानमिति। आत्मानं जीवं रथिनं रथस्वामिनं विद्धि जानीहि, शरीरम् एव तु रथं विद्धि, बुद्धिं तु सारथिं रथचालकं विद्धि, मनः एव च प्रग्रहं रश्मिं विद्धि।

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारञ्चाधिगच्छति ॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥

इन्द्रियाणीति। इन्द्रियाणि हयान् अश्वान् आहुः, तेषु इन्द्रियेषु विषयान् रूपादीन् गोचरान् मार्गान् विद्धि, मनीषिणः विवेकिनः आत्मेन्द्रियमनोयुक्तं देहेन्द्रियमनोभिः युक्तं भोक्ता इति संसारी इति आहुः ।

यस्त्विति। सदा अयुक्तेन अनियतेन असमाहितेन मनसा यः तु रथी अविज्ञानवान् अविवेकी भवति, तस्य सारथेः बुद्धेः दुष्टाश्वाः इव इन्द्रियाणि अवश्यानि अनायत्तानि अशक्यवारणीयानि ।

यस्त्विति। सदा युक्तेन समाहितेन मनसा यः तु रथी विज्ञानवान् विवेकी भवति तस्य सारथेः बुद्धेः सदश्वाः इव इन्द्रियाणि वश्यानि दान्ताः ।

यस्त्विति। यः तु रथी अविज्ञानवान् अविवेकी सदा अमनस्कः असंयतमनाः अशुचिः भवति, न स तत् पूर्व्वोक्तम् अक्षरं परं पदम् आप्नोति संसारं लोकलोकान्तरभ्रमणं च अधिगच्छति प्राप्नोति ।

यस्त्विति। यः तु रथी विज्ञानवान् विवेकी समनस्कः संयत-

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥
इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः।
मनसश्च पराबुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः॥

मनाः शुचिः भवति, स तु तत् पूर्व्वोक्तम् अक्षरं परं पदम् आप्नोति, यस्मात् परमपदात् भूयः पुनः न जायते न संसारगतिं लभते।

विज्ञानेति। यः तु नरः विज्ञानसारथिः विवेकबुद्धिसारथिः मनःप्रग्रहवान् मनोरश्मियुक्तः, स अध्वनः संसारगतेः पारं विष्णोः सर्व्वव्यापिनः तत् परमं पदं स्वरूपम् आप्नोति।

रूपकेण यदाख्यातं स्फुटतरवाक्येन तस्य तत्त्वं निबध्नाति इन्द्रियेभ्य इति युग्मकेन। अर्थाः विषयाः हि इन्द्रियेभ्यः चक्षुरादिभ्यः पराः श्रेष्ठाः—तेषामेव सूक्ष्माणां ग्रहणाय चक्षुरादिस्थूलेन्द्रियाणां सृष्टित्वात्, अर्थेभ्यः विषयेभ्यः मनः परं श्रेष्ठं—सूक्ष्मतरेण मनसा विना तेषां निष्फलत्वात्, मनसः सङ्कल्पविकल्पात्मिकात् च बुद्धिः निश्चयात्मिका परा श्रेष्ठा, बुद्धेः महान् अतिसूक्ष्मात् महत्त्वविशिष्टः आत्मा जीवः परः श्रेष्ठः, महतः आत्मनः अव्यक्तं प्रकृतिः—सर्व्वस्य जगतो वीजभूतमव्याकृतनामरूपतत्त्वम्—परं श्रेष्ठम् जीवस्य प्रकृत्यधीनत्वात्, अव्यक्तात् प्रकृतेः पुरुषः—सर्व्वपूरणत्वात् सर्व्वान्तर्भावकः परात्मा परः श्रेष्ठः, पुरुषात् न किञ्चित् परम् अस्ति। इन्द्रियेभ्य आरभ्य पुरुषे या पर्य्यवसितिः सा काष्ठा निष्ठा पर्य्यवसानं, सा परा गतिः गन्तॄणां जीवानाम्—तस्मिन् स्थितौ जीवानां सम्पन्नता।

एष सर्व्वेषु भूतेषु गूढ़ात्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥
यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि॥
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गम्पथस्तत् कवयो वदन्ति॥ काठ ३।१—१४।

७। येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते॥ एतद्वैतत्।

स्थूलेन्द्रियेभ्यः सूक्ष्मे परात्मनि क्रमादारोहस्य प्रयोजनमुच्यते एषइति। एष पुरुषः सर्व्वेषु भूतेषु गूढ़ात्मा गूढ़ः प्रच्छन्नः आत्मा अन्तश्चैतन्यस्वरूपेण विराजमानः, सुतरां न प्रकाशते। सूक्ष्मया अग्र्यया एकाग्रतोपेतया बुद्ध्या सूक्ष्मदर्शिभिः एष दृश्यते साक्षात्क्रियते।

कथं स दृश्यते तदाह यच्छेदिति। प्राज्ञः प्रज्ञावान् विवेकी मनसी—छान्दसं दैर्घ्यम्—मनसि वाक् वाचं—वाचा सर्व्वेन्द्रियाणां ग्रहणम्—यच्छेत् निरुन्ध्यात् अभिन्नभावेन स्थापयेत्, तत् मनः आत्मनि मनआदिव्यापके ज्ञाने बुद्धौ, ज्ञानं बुद्धिः महति आत्मनि जीवे यच्छेत्, तं जीवं शान्ते निर्व्विकारे प्रपञ्चातीते आत्मनि परात्मनि यच्छेत्।

एतत्साधनार्थमाचार्य्याश्रयग्रहणाय प्रोत्साहयति उत्तिष्ठत इति। उत्तिष्ठत उत्थानं कुरुत, जाग्रत मोहनिद्रां जहीत, वरान् श्रेष्ठान् आचार्य्यान् प्राप्य सङ्गम्य निबोधत अवगच्छत। दुरत्यया दुर्गमनीया निशिता तीक्ष्णीकृता क्षुरस्य धारा तत् पथः वर्त्म, अतः दुर्गं दुःसम्पाद्यम् इति कवयः पण्डिताः वदन्ति।

७। रूपरसादिकं सर्व्वमात्माधिष्ठानेनानुभूयत इत्येतत् तत्र प्रमाणमित्याह येनेति। येन एतेन आत्मना विज्ञानस्वभावेन रूपं

स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥

यइमं मध्वदं वेद आत्मानं जीवमन्तिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥ एतद्वैतत्।

काठ ४।३—५।

८। ऊर्द्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वे देवा उपासते॥

रसं गन्धं शब्दान् स्पर्शान् मैथुनान् मिथुनधर्मोत्पन्नसुखप्रत्ययान् विजानाति, अत्र ज्ञानविषये किम् अन्यत् परिशिष्यते न किमपीति भावः। तत् एतत् वै आत्मतत्त्वं त्वया नचिकेतसा पृष्टम्।

रूपरसादिज्ञानादपि सूक्ष्मज्ञानप्रकारमाह स्वप्नान्तमिति। स्वप्नान्तं स्वप्नविज्ञेयं जागरितान्तं जागरितविज्ञेयम्, उभौ स्वप्नजागरितान्तौ येन अनुपश्यति तं महान्तं महत्त्वसम्पन्नं विभुं व्यापिनम् तदतीतम् आत्मानं मत्वा ज्ञात्वा धीरः विवेकी न शोचति।

जीवात्मज्ञानेन परमात्मज्ञानमुपतिष्ठत इति प्रदर्शयति य इम-मिति। मध्वदं मधु कर्म्मफलम् अत्तीति मध्वदम् इमम् जीवम् आत्मानम् अन्तिकात् समीपे भूतभव्यस्य कालत्रयस्य ईशानम् ईशितारं च यः वेद, ततो जीवात्मपरमात्मनोरैकत्वावस्थानज्ञानानन्तरं न विजुगुप्सते आत्मानं न गोपायितुमिच्छति। एतत् तत् जीवात्म-परात्मतत्त्वम्।

८। जीवात्माधिष्ठानवशात् प्राणादीनां क्रियानिर्व्वाहमाह ऊर्द्ध्व-मिति। प्राणं प्राणवायुम् ऊर्द्ध्वं हृदयात् उन्नयति ऊर्द्ध्वं गमयति, अपानं प्रत्यक् अधः अस्यति क्षिपति यः, मध्ये हृदयाकाशे आसीनं स्थितं वामनं वननीयं—वामानि शोभनानि नयतीति डः—वामनः

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ॥ एतद्वैतत् ।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥

कठ ५।३।४ ।

८ । द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्व-
त्त्यनश्नन्नन्योऽभिचाकशीति ॥

(३।१६)—पुण्यफलप्रापकत्वात् भजनीयं तम् आत्मानं विश्वे सर्व्वे देवाः चक्षुरादयः उपासते तदनुगताः भवन्ति ।

अस्येति । विस्रंसमानस्य भ्रंशमानस्य अतएव देहात् विमुच्यमानस्य शरीरस्थस्य अस्य देहिनः अत्र देहे तद्विगमे किं परिशिष्यते ? न किमपीत्यर्थः । एतत् वै तत् आत्मतत्त्वम् ।

न प्राणेनेति । मर्त्त्यः मरणधर्म्मा कश्चन मनुष्यः न प्राणेन न अपानेन जीवति । यस्मिन् एतौ प्राणापानौ उपाश्रितौ तेन इतरेण प्राणादिविलक्षणेन आत्मना सर्व्वे जीवन्ति ।

८ । जीवात्मपरमात्मनोरेकत्वावस्थितिं दर्शयति द्वा इति । द्वा द्वौ सुपर्णा सुपर्णौ पक्षिणौ सयुजा सयुजौ सहैव सर्व्वदा युक्तौ सखाया सखायौ—'समानं ख्यायते जनैरिति सखा', तयोः सखित्वं स्वरूपैक्यात्—समानं वृक्षं देहं परिषस्वजाते परिष्वक्तवन्तौ आलिङ्गितवन्तौ । तयोः पक्षिणोः अन्यः एकः जीवः स्वादु पिप्पलं फलम् अत्ति, अन्यः अपरः परात्मा अनश्नन् अभुञ्जानः अभिचाकशीति पश्यति साक्षितया तिष्ठति ।

समाने वृक्षे पुरुषो निमग्नोऽ-
नीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीश-
मस्य महिमानमिति वीतशोकः॥

मु ३(१) १।२ ; श्वेत ४।६।७।

१०। कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा। येन वा रूपं पश्यति येन वा शब्दं शृणोति येन वा गन्धानाजिघ्रति येन वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति।

यदेतद्धृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं

एवं परात्मनैकत्र स्थितोऽपि जीवो यदा देहादावभिनिवेशवशात् न तं जानाति तदाऽशक्तः शोचति मुह्यति, किन्तु यदा तन्महिमात्मानं सम्यक् वेत्ति तदा वीतशोको भवतीत्याह समानइति। समाने वृक्षे देहे निमग्नः आसक्तः सन् मुह्यमानः मोहमापद्यमानः पुरुषः जीवः अनीशया दीनतया शोचति सन्तप्यते। जुष्टं योगाद्युपायेन सेवितम् ईशं परमेशं यदा पश्यति साक्षात्करोति, तदा आत्मानम् अस्य ईशस्य महिमानं तन्महत्त्वे नात्मानोमहत्त्वम् इति ज्ञात्वा वीतशोकः अपगतशोकः भवति।

१०। ऋषिर्वामदेवो मातृगर्भे निवसन्नेवात्मचिन्तामकरोत्, तेन च सोऽमृतत्वं लब्धवानित्याख्यायिकामवलम्ब्यात्मतत्त्वपृच्छोपस्थिता कोऽयमिति। कोऽयम् आत्मा इति यं वयम् उपास्महे। कतरः नु स आत्मा? येन वा रूपं पश्यति, येन वा शब्दं शृणोति, येन वा गन्धान् आजिघ्रति, येन वाचं वाक्यं व्याकरोति व्यवहरति, येन वा स्वादु च अस्वादु च विजानाति स आत्मा इति।

आत्मा हि प्रज्ञानरूपः, हृदयादि सर्व्वं तस्यैव रूपान्तरमित्याह

प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामोवश इति । सर्व्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । ऐत ५।१।२ ।

११ । त्रीण्यात्मने कुरुतेति मनोवाचं प्राणं तान्यात्मने कुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसाह्येव पश्यति मनसा शृणोति । कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मनएव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति । यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न । प्राणोऽपानोव्यान उदानः समानोऽन इत्येतत् सर्व्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः । वृह ३।५।३ ।

यदेतदिति । यत् एतत् हृदयं तत् एतत् मनः । संज्ञानं चेतनभावः, आज्ञानम् आज्ञप्तिः ईश्वरभावः, विज्ञानं कलादिपरिज्ञानं, प्रज्ञानं प्रज्ञता, मेधा ग्रन्थधारणसामर्थ्यं, दृष्टिः इन्द्रियद्वारा विषयोपलब्धिः, धृतिः धारणा धैर्य्यम्, मतिः मननं, मनीषा स्वाधीनचिन्ता, जूतिः शीघ्रवेदित्वं, स्मृतिः स्मरणं, सङ्कल्पः शुक्लकृष्णादिरूपाणां सम्यक्परिकल्पनम्, क्रतुः अध्यवसायः, असुः प्राणादिजीवनक्रियानिमित्ता वृत्तिः, कामः विषयाकाङ्क्षा, वशः भोगाभिलाषः, एतानि एव सर्व्वाणि प्रज्ञानस्य नामधेयानि भवन्ति ।

११ । पूर्व्वोक्तमर्थं द्रढ़यति त्रीणीति । "यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता एकमस्य साधारणं, द्वे देवानभाजयत्, त्रीण्यात्मनेऽकुरुत, पशुभ्य एकम् (वृ, ३।५।१)" इत्यत्रत्यं 'त्रीणि आत्मनेऽकुरुत' इत्यंशं गृहीत्वा व्याख्यायते—मनो वाचं प्राणं तानि अन्नानि आत्मने

१२। गुणान्वयो यः फलकर्म्मकर्त्ता
कृतस्य तस्यैव स चोपभोक्ता।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
प्राणाधिपः सञ्चरति स्वकर्म्मभिः॥

आत्मार्थम् अकुरुत प्रजापतिः। अतएव अन्यत्रमना: अभूवं न अदर्शम्, अन्यत्रमना: अभूवं न अश्रौषम् इत्युक्तिर्दर्शयति मनसा एव जनः पश्यति मनसा एव शृणोति। कामः अभिलाषः, सङ्कल्पः प्रत्युपस्थितविषयविकल्पनम् शुक्लनीलादिभेदेन, विचिकित्सा संशयज्ञानम्, श्रद्धा सत्यधारणोपयोगिनी बुद्धिः, अश्रद्धा तद्विपरीता बुद्धिः, धृतिः देहाद्यवसादे उत्तम्भनम्, अधृतिः तद्विपर्य्ययः, ह्रीः लज्जा, धीः प्रज्ञा, भीः भयम् इति एतत् सर्व्वं मनः एव। तस्मात् एव हेतोः पृष्ठतः उपस्पृष्टः मनसा विजानाति। यः कः च शब्दः वाक् एव सा। एषा वाक् हि अन्तम् अभिधेयनिर्णयम् आयत्ता अनुगता—अभिधेयप्रकाशिका, एषः वाक् पुनः न अभिधेयवत् प्रामाण्या। प्राणः मुखनासिकासञ्चारी, अपानः मूत्रपुरीषादेरपनेता, व्यानः सर्व्वशरीरव्यापी, उदानः ऊर्द्ध्वगमनादिहेतुः, समानः अन्नपक्ता, एते अनः देहचेष्टाहेतुः इति एतत् सर्व्वं प्राणएव। एतन्मयः मनोवाक् प्राण इति त्रितयारब्धः अयम् आत्मा वाङ्मयः मनोमयः प्राणमयः।

१२। आत्मस्वरूपं विवृणोति गुणान्वय इति। गुणैः इन्द्रियैः अन्वयः सम्बन्धो यस्य स गुणान्वयः, फलकर्म्मकर्त्ता फलाय कर्म्मणां कर्त्ता, यः स कृतस्य तस्य एव च उपभोक्ता, स विश्वरूपः नानारूपः, त्रिगुणः त्रयः सत्त्वादयः गुणाः यस्य इति, त्रिवर्त्मा त्रीणि वर्त्मानि धर्म्माधर्म्मज्ञानरूपाणि यस्य, प्राणाधिपः प्राणस्य पञ्चवृत्तेः अधिपः, स्वकर्म्मभिः स्वानुष्ठानैः सञ्चरति विचरति तत्तदनुरूपभावेन।

अङ्गुष्ठमात्रो रवितुल्यरूपः
सङ्कल्पाहङ्कारसमन्वितो यः।
बुद्धेर्गुणेनात्मगुणेन चैव
आराग्रमात्रोऽप्यपरोऽपि दृष्टः॥
वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥
नैव स्त्री न पुमानेष न चैवायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते॥
सङ्कल्पनस्पर्शनदृष्टिमोहै-
र्ग्रासाम्बुवृष्ट्यात्मविवृद्धजन्म।

अङ्गुष्ठमात्र इति। अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः सूक्ष्मत्वात्, रवितुल्यरूपः ज्योतिःस्वरूपः चैतन्यत्वात्, सङ्कल्पाहङ्कारसमन्वितः सङ्कल्पः प्रत्युपस्थितविषयभेदविकल्पनम् च, अहङ्कारः अहंज्ञानञ्च, ताभ्यां समन्वितः, बुद्धेः गुणेन आराग्रमात्रः प्रतोदाग्रप्रोतलोहकण्टकाग्रमात्रः सूक्ष्मः अपि, आत्मगुणेन शरीरगुणेन च अपरः असूक्ष्मः अपि यः दृष्टः प्रत्यक्षीकृतः। परेण सम्बन्धः।

वालाग्रेति। स जीवः वालाग्रशतभागस्य केशाग्रस्य शतभागस्य शतकृत्वः भेदमापादितस्य तस्यापि शतधा कल्पितस्य च भागः विज्ञेयः। एवमतिसूक्ष्मोऽपि स च आनन्त्याय कल्पते अनन्तत्वाय अनन्तज्ञानादिलाभाय कल्पते समर्थो भवति।

नैवेति। एष जीवः न एव स्त्री, न एव पुमान्, न एव अयं नपुंसकः। तत् कथं तथा प्रतिभाति? यत् यत् शरीरम् आदत्ते गृह्णाति, तेन तेन शरीरेण स जीवः रक्ष्यते स्त्रीत्वादिभेदेन रक्षितो भवति स्वतन्त्रतया ग्रहणाय।

सङ्कल्पनेति। सङ्कल्पनस्पर्शनदृष्टिमोहैः सङ्कल्पनं मानसक्रिया

कर्म्मानुगान्यनुक्रमेण देही
स्थानेषु रूपाण्यभिसम्प्रपद्यते ॥
स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति।
क्रियागुणैरात्मगुणैश्च तेषां
संयोगहेतुरपरोऽपि दृष्टः ॥

श्वेत ५।८—१२।

स्पर्शनं त्वगिन्द्रियव्यापारः, दृष्टिः दर्शनक्रिया, मोहः विषयापहृतचित्तत्वम् एतैः स्थानेषु भिन्नभिन्नदेहेषु कर्म्मानुगानि कर्म्मानुयायीनि रूपाणि स्वरूपाणि, ग्रासाम्बुवृष्ट्या अन्नपानासेवनेन आत्मविवृद्धिजन्म आत्मनः देहस्य विवृद्धिं च जन्म च देही जीवः अभिसंप्रपद्यते प्राप्नोति।

स्थूलानीति। देही जीवः स्वगुणैः स्वात्मनिष्ठसंस्कारैः स्थूलानि सूक्ष्माणि च बहूनि एव रूपाणि स्वरूपाणि वृणोति भजते। तेषां रूपाणां क्रियागुणैः आत्मगुणैः स्वनिष्ठगुणैः च अपरोऽपि तदतिरिक्तोऽपि संयोगहेतुः नवनवयोजनाकारणं दृष्टः प्रत्यक्षीकृतः।

* *

परापरप्रकृतिकः परमपुरुषइति गीतासिद्धान्तः किन्तु वेदान्तसारभूत इति संशयापनोदनाय तत्रांभेदसाधनेऽपि तयोर्नैकान्तविलोपो दर्शयति यत्र हि सा तमनादृत्य तादृशं कृतान्तमुपन्यस्यादित्यस्य समालोचनं प्रयोजनम्। "मघवन् मर्त्यं वा इदं" शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्। आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (८।१२।१) इति सुषुप्तावात्मनो भूतानाञ्च विनाश इति शङ्कावतो मघवतः प्रबोधाय परात्मनालिङ्गितस्यात्मनोऽशरीरत्वेन स्थितिरुच्यते। अतएवाह "सर्व्वं पर आत्मनि संप्रतिष्ठते" (४।९) इति। तत्रैव च "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" इत्युक्त्वा "स परेऽक्षर आत्मनि सम्प्रतिष्ठते" इत्युक्तम्। तेन च जीवस्य द्रष्टृत्वादिकं न विलुप्तं भवतीति ज्ञायते। अतएव चाह

"यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्।" इति। यद्येवं कथम्—"न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्" (३।५[५८४]) इति। सर्व्वाणि जीवैनैकीभूतानि सुषुप्तौ परात्मनि ; सुतरां न ततोऽन्यत् किञ्चन प्रतिभाति। किन्तु यद्यपि नान्यत् पश्यति तथापि पश्यन्नेव स न पश्यति। किमिदं "पश्यन् वै तन्न पश्यति" इति ? "सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः" (६।४) इत्यादिदिशा परात्मन्येव सर्व्वं पश्यन् ततोऽन्यत् किञ्चन स न पश्यति, न जिघ्रति, न रसयत इत्यादि। एवं सर्व्वं परात्मनि पश्यतो "एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः (३।५[५८५])।" इति। "सर्व्वं पर आत्मनि सम्प्रतिष्ठते" इत्यत्रत्यसर्व्वशब्दे "पृथिवी च पृथिवीमात्रा चापश्चापो-मात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च" (३।५) इति। सुतरां परापरप्रकृतिविलोपो न परेऽव्यय आत्मनीति वेदान्तसमयः ; तमेव चानुसृतवती गीतेति नात्र काचित् विचिकित्सा। मधुब्राह्मणोक्तं सर्व्वैक्यं नैतद्विरुद्धम्, "अयमात्मा ब्रह्म सर्व्वानुभूः" (३।२१) इत्यनेन सर्व्वविलोपनिवारणात्। अन्यत्राप्येवं विज्ञेयम्।

१—३। बहिर्विषयविमुग्धेन न पुनरात्मतत्त्वमधिक्रियते बहिर्मुखत्वादित्येष सिद्धान्तो महता प्रबन्धेन प्रथमसंघे (१) प्रदर्श्यते ; द्वितीये (२) पुनर्विषयाभिलाषविरहितस्य तत्त्वाधिकारं स्वीकृत्य तृतीये (३) तदुपदेष्टुर्विरलत्वमुपादिशत्। न केवलं पार्थिवभोगाभिलाषोऽत्र विरोधी किन्तर्हि "समाधावुपसर्गा व्युत्थाने सिद्धयः" (प, सू ३।३६) इति न्यायेन सर्व्वविधैश्वर्य्याकाङ्क्षा स्वरूपप्राप्तिं प्रतिबध्नातीति विषदत्वाक्यै रभ्यदधात्।

४। आत्मतत्त्वस्य माहात्म्यं तस्मिन् कृतकृत्यताञ्च श्रुत्वा परतत्त्वात्मतत्त्वयोः साधारणभूमिमधिकृत्य योऽसौ प्रश्नोऽचोत्थापितस्तस्य तत्त्वं विचार्य्यम्। भवतु तद्धर्म्मातीतं, यतोऽन्यथा न तज्ज्ञानं कस्याप्याश्वसनीयं स्यात्। यदि धर्म्मातीतमपि तत्, कथं भवेत्तन्मुमुक्षोरिष्टं तथा सत्यपापविद्धत्वस्य चातेः। "धर्म्मावहं पापनुदं (८।१६)" इति श्रुतिविरोधोऽप्यतत्त्वमस्य प्रमिमीते। धर्म्मान् आवहतीति धर्म्मावहः धर्म्मानुत्पादयति स परात्मा इत्यस्मिन्नर्थे नायं धर्म्मः परात्मनिष्ठो जीवनिष्ठ एवेत्यायाति। किमयमागन्तुकः ? यद्येवं तत्त्वान्यत्वमस्यायाति, तेन च तत्त्वैकत्वप्रतिज्ञाहानिः। विविधबाह्यधर्म्मोत्पादकक्रियाशक्तिवज्ज्ञानक्रियासम्भूतभाववैचित्र्यं धर्म्मोऽयमिति ब्रूमः। किन्तेन साधितम् ? वैचित्र्यं यथा क्षणे क्षणे विविधपरिवर्त्तनं दृश्यते तथा धर्म्मेऽपि। वैचित्र्यस्यैतरोत्तरप्रकाशभूयस्त्वात् नानित्यत्वम्। कथं सिद्ध्यति धर्म्मविपरिवर्त्तनम् ? भाववैचित्र्यात् विविधाचारः। आचारो हि धर्म्मः। आचारः पुनस्तत्तत्कालोचितव्यवहारनियामकः, कालान्तरेऽस्य रूपान्तरताऽवश्यम्भाविनी। तद्यथा—ऋतुमत्याः "नवाश्वमन्देहात्" इति कात्यायननियोगात् विपरिवर्त्तनम् ; यज्ञेषु पशुहननस्याहिंसाधर्म्मेण निरसनम्। इत्येवं-विषयानुद्दिश्य भाष्यकार आह—"शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्व्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसा

ध्यात्मतत्त्वमधिकारेऽपेक्ष्यते। अनुपयोगादधिकारे विरोधाच। प्राक् च तथाभूतात्मविज्ञानात् प्रवर्त्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्त्तते। तथाहि ब्राह्मणो यजेतेत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्त्तन्ते। अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम। तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति। तथा देहधर्मान् स्थूलोऽहं कृशोऽहं गौरोऽहं तिष्ठामि गच्छामि लङ्घयामि वेति, तथेन्द्रियधर्मान् मूकः काणः क्लीबो बधिरः अन्धोऽहमिति, तथान्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन्।" इति। एवं तस्य धर्म्मातीतत्वे सिद्धेऽपि कृताकृतातीतत्वं पुनः कथं सिद्ध्यति? सुकृतं हि तस्य श्रौताभिधानम्, अकृतोऽयं स्वयमेव कारणत्वात्। कृतं कार्यं कारणादनन्यमपि न हि तत् कारणम्, तथा सति स्वोत्पत्तौ विरोधः। भवतु तदस्तु कार्यातीतं कथमकृतातीतं पुनः? परा चापरा च प्रकृतिरप्यकृतशब्देनोच्यते। परा चापरा च प्रकृतिर्विनाभिव्यक्तिं न परात्मनो भेदेन लक्ष्यते। अभिव्यक्तौ पुनरेकान्तःकरणादिभेदेन अन्या पृथिवीतन्मात्रादिभेदेनोपलभ्यते। तानि च पुनरवान्तरकारणत्वेन गृह्यन्ते, परात्मनि च तेषां नित्या स्थितिः। अकृतशब्देन तत्समूहं परिगृह्य तदतीतं परात्मात्मवस्त्विति प्रश्नकर्त्तुरभिप्रायः। कालातीतत्वं तस्य सुव्यक्तम्। नासौ परात्मा कालाधीनः कालस्य नियन्तैव सः। आत्मा पुनर्वयोऽवस्थादीन् कालप्रभावानतिक्रम्य वर्त्तते, ततो हि स कालप्रभावातीतः।

५। जन्ममरणधर्म्मवर्ज्जितस्यात्मनः परात्मनैकत्वेऽपि ततोऽस्य प्रभेदः स्रष्टृत्वाभावादिति विशेषोऽत्र। "अणोरणीयान्" इत्यादिविशेषणैः परात्मसाधारणैः जीवात्मपरात्मनोर्न कोऽपि भेदः प्रतीयते, एवं सति कथं वा जीवपरैयमिति ज्ञायत इति संशये "हन्ता चेन्मन्यते हन्तुं" "आसीनो दूरं व्रजति" इत्यनयोर्जीवपरयोः सन्दृष्टत्वेनास्या जीवपरत्वमिति तन्निरसनम्। अपरायां प्रकृतौ सूक्ष्मं महच्चास्ति तत्तुलनायां जीवस्यातिसूक्ष्मत्वमतिमहत्त्वं ज्ञेयं न तु परस्य तुलनायाम्। ननु "आसीनो दूरं व्रजति" इत्यस्या अपि कथं न परात्मपरत्वम्? 'मदामदम्' इति विशेषणं तत्प्रतिरोधि। न खलु तस्मिन् हर्षस्याहर्षस्य जातु सम्भवति। नापि 'आसीनः' 'शयानः' ... च, जाग्रत्स्वप्नयोरतीतएव सः। आत्मनः कालदेशातीतत्वं तद्विशेषणद्वयेन प्रतिपादयति श्रुतिः। 'महान्तम्' इति विशेषणं कथम्? प्रकृत्यधीनत्वेऽप्यस्य महत्त्वं महतो महीयसो महत्त्वेनेति प्रदर्शनाय। अतएव "महान् आत्मा" (७।८) इति। 'विभुम्' इत्येतद्दर्शयति शरीरे स्थित्वापि नास्मिन् स बद्धः। तदतीतविषयग्रहणेन तदतीतत्वं तस्य प्रत्यक्षम्। सत्यप्यात्मन एवं विभुत्वे परात्मा तु तज्ज्ञानादिकमतीत्य वर्त्तत इति ततोऽस्य भेदः, विभुत्वस्य च तस्मिन् पराकाष्ठा।

६। जीवएव परित्यक्तोपाधिः परात्मेति मतं स्वरूपैक्यघटितमन्यथा "ऋतं पिबन्तौ" इत्यादिका श्रुतयो भवन्त्यर्थशून्याः। जीवपरावुभौ चेदानन्दभुजौ परादानन्दस्य स्वातन्त्र्यमुपलभ्यते "रसं ह्येवायं लब्ध्वानन्दी भवति" (४।१२) इत्यत्र यथैव। "चेतोमुखेनानन्दसम्भोगो न परिच्छिन्नारि किन्तु तद्भावापन्नो जीवएव" (१।६[१५८४]) इत्येव सिद्धान्तोऽपि व्याहन्यते। अत्र भाष्यकार आह "एकस्तत्र कर्मफलं पिबति भुङ्क्ते नेतरः, तथापि पातृसम्बन्धात् पिबन्तावित्युच्यते छत्रिन्यायेन" इति। एकस्यानन्दभोगोऽपरस्यानन्ददानमिति तयोः पार्थक्येऽपि तद्दानमेव तस्य सम्भोगो

दानस्य सुखत्वात् सुखतस्यैवानन्दत्वात्। भोक्तृत्वे विकारित्वमिति चेत्, परिहरति तच्छ्रुतिः "अयमात्मा ब्रह्म सर्व्वानुभूः" (२।१९) इत्यनेन। "परे न जातु भोक्तृत्वं सम्भवति" (३।६[१५८१]) इत्युक्ता कथं पुनस्तस्मिन् भोक्तृत्वस्वीकारः? उच्यते, आनन्दे तस्मिन् न जातु तद्विरोधिभावस्य प्रवेशः। जीवे तेनानन्दानुभवस्योद्दीपनं स्वस्यानन्दसंक्रमणेनेति विततातपस्तपनोऽन्यान् तापयन् तपतीति यथोच्यते, तथायमविच्छेदानन्दः परात्मा जीवानानन्दयन् नन्दतीति वर्ण्यते।

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यनेन जीवस्यापि न भोक्तृत्वं, भोक्तृत्वं तस्य देहादियुक्तत्वादिति यत् केचित् वर्णयन्ति न तत् सम्यक्, अदेहित्वेऽपि "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् (३।५[५८१])" इत्याद्या जीवस्य नित्यमेव मनआदियुक्तत्वं तस्य भोक्तृत्वञ्च प्रथयन्ति। देहस्य भोक्तृत्वे सहायकत्वं कथं सम्भवति दर्शयति तच्छारीरशास्त्रम्। "क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्। करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन्॥" इति प्राचीनैः सामान्यतो यदुक्तं तदाधुनिकैर्विविधभागैर्विभज्य स्फुटतया प्रादर्शि। 'क्रियाणाम्' आकुञ्चनप्रसारणादिकानां सहायत्वे शिराणां यथा प्राधान्यं तथा 'बुद्धिकर्म्मणां' मनसो बुद्धेरिन्द्रियाणाञ्च क्रियासु 'अमोहः' अव्यामिश्रभावो यथोपतिष्ठेत,भवेच्च स्फुटतया तासां मनआदिभिर्ग्रहणं, तथैव ता उपकुर्व्वन्ति। "स्वाः शिराः पवनश्चरन्" इत्यत्र योऽसौ शिरोगतजनव्यापारी वह्निरन्तर्योपतिष्ठते तत्कारणं कम्पनं तत्पर्य्यायशब्दैः प्राचीना अभिदधति, आधुनिकास्तु व्यामिश्रवाक्यपरिहारेण शुद्धां बलक्रियामेव। शिराबितानैर्वाह्यतो बलमन्तःप्रहृत्य शिराग्रन्थितत्त्वं तत्प्राप्यतरशिराबितानैर्यानि यान्यङ्गान्याकुञ्चितव्यानि प्रसारितव्यानि वा तत्र तत्र वहिरागत्य तानि तानि कार्य्याणि साधयति। न खल्वन्तःप्रहितं बलमाकुञ्चनाद्यर्थं निःशेषं वहिरायाति। याभिः शिराभिर्बुद्ध्याद्यधिष्ठितं स्थानं विलम्बं ताभिस्तत्र शिष्टं प्रहृतं साहाय्यवैशद्यैर्बुद्ध्याद्यधिष्ठितचैतन्यविविक्तेन स्वगतवैचित्र्येण बोधविषयं भवति। अतएव देहनेतृत्वेऽपि "बुद्धेरात्मा महान् परः" इति; "येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्। एतेनैव विजानाति" (७।७) इति, "ऊर्द्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते॥ (७।८)" इत्यादिकाभिरात्मनो महत्त्वेऽपि च देहोपकार्य्यत्वम्।

"ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि" इति योगोपायः सर्व्वथा साधकेनावलम्बनीयः। सर्व्वं जगत् जीवबुद्धौ भासते। सा बुद्धिर्यदात्मनि निबद्धा भवति, न भवति सा जगद्विषयकविविधवासनया विचलिता। एवं स्वस्वरूपेऽधिष्ठितोऽपि जीवो न विज्ञानतिक्रामति, स्वस्याल्पशक्तित्वादल्पज्ञानत्वाच्च। विषयविलक्षणा न जातु स्थिरतां लभेत, यद्यन्यत्र रसमालभ्य तेषां विरसत्वं स्वभावसिद्धतां नाप्नुयात्। सर्व्वविकारातीते परब्रह्मणि यदात्मा निबद्धो भवति, तदा तत्र शान्तिरसेनाप्लुतः सर्व्वथान्याकाङ्क्षाशून्यो भवति सः। जीवस्य परात्मनि निरोधो योगस्य परा काष्ठा। अतएवाह "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥" इति। "अव्यक्तात् पुरुषः परः" इत्युक्तत्वात् साङ्ख्योक्तपुरुषएवात्र विवक्षित इति न भ्रमितव्यम्। वेदान्ते पुरुषस्य अष्टत्वविधानात् (५।७) नायं साङ्ख्योक्तपुरुषः।

७—११। अथमे (७) जीवात्मनो व्याप्यत्वं तस्य सप्राणतीतत्वञ्च निरूप्य कर्म्मफलभोक्तृत्वं

यदस्य बन्धनमवश्यम्भावि ततोऽस्य निर्मोक्षं चिन्तयति नित्यतत्सन्निहितपरात्मध्यानेन। सर्व्वाणि कर्म्माणि कालमाश्रित्यैवोद्यन्ति। कालः पुनः सर्व्वनियन्त्रधीनः। सुतरां काले काले तन्नियन्त्रा प्रेरितानि कर्म्माणि तन्नियन्तुरभिप्रायानुसरणेन चेन्निर्व्वहति जीवः, न तानि तद्बन्धनाय किन्तर्हि विमोक्षायैव हि भवति। एवं तस्य नियन्तृत्वं ज्ञात्वानुसृततदभिप्रायो जीवो विगतशङ्को भवति, निरवच्छेदेन परात्मसन्निधावेव तिष्ठति, नात्मानं ततो जातु गोपायितुमिच्छति, तथैव तस्य कृतार्थत्वात्।

अष्टमे (८) जीवस्य प्राणादिनिरपेक्षकर्तृत्वमुक्त्वा नवमे (९) तस्य परात्मसखित्वं स्पष्टवाक्येन निबध्नाति। निरपेक्षस्य परात्मनस्तदपेक्षस्य च जीवस्य कथं सखित्वमिति न संशयितव्यम्। पितुः पुत्रस्य च सखित्वं यथा स्वाभाविकं न प्रयत्नसाध्यं तथैव जीवपरयोः। निरपेक्षसापेक्षयोः सम्बन्धो हि घनिष्ठो यथा दम्पत्योः। यो हि निरपेक्षः स पुनः प्रेम्णाऽन्यं निबध्नाति, प्रेम्णः सर्व्वथा स्वार्थविरहितत्वात्। जीवो न पुनः परात्मनोऽतिरिच्यते परात्मात्मता हि तस्य जीवातुः। स्वस्य ज्ञानशक्त्यादिभिः परस्तं नित्यकालं जीवयतीति कथं न स्यात् सहयोगित्वादिकम्। "अस्य महिमानम्" इति वाक्येन सर्व्वमिदं स्वयं श्रुतिरेव प्रतिपादयति।

दशमे (१०) पुनः प्रज्ञानरूपस्यात्मन एव हृदयादिकं सर्व्वं नामेत्युक्तम्। एकादशे (११) तदेव दृढीकृतमात्मार्थमेवापरेषां क्रियेति प्रदर्शनेन। रूपादिभिर्यथा प्राकृतिकविषयाणां बहिःप्रकाशस्तथा हृदयादिभिरात्मन इति सरलसिद्धान्तः। द्वादशे (१२) जीवस्य कर्तृत्वादिकं विवृणोति। यद्यपि मन एवेन्द्रियाधिपतिरिति प्रसिद्धिर्मनसैवात्मा पश्यतीत्यादिकारणात्, तथापि तस्य कर्म्मफलभोक्तृत्वं दर्शयति मनआदिकं सर्व्वं तदधीनमतस्तेषां क्रियायाः स एव फलभुक्। अतएवाह "प्राणाधिपः" इति तस्य विशेषणम्। क्रियानिष्पत्तौ यद्यपि देहादीनां सर्व्वेषां कर्तृत्वं गीतायां गीतं तथापि जीवस्य तदन्तर्यामिण एव तत्र प्राधान्यं मन्तव्यम्। अन्तर्यामिसम्बन्धवशात् यदप्यपरेषां जीवकर्तृत्वमुपेक्ष्य तत्पराभवाय क्रियाकारित्वं दृश्यते, तदपि जीवस्याधीनतास्वीकारादेवोपपन्नम्। स्वात्मभूतान्तर्यामिप्रेरणामनादृत्य जीवो यदा क्रियासु प्रवर्त्तते, तदा तत्तत्क्रियामूलं चक्षुरादि तत्प्रभुत्वमपहृत्य तमेव दासत्वे नियोजयति। एवं पराभूतो यदा सोऽनुतप्तः स्वान्तर्यामिणं परमपुरुषमाश्रयति तदा पुनस्तत्कृपया लब्धबलश्चक्षुरादिनेतृत्वे प्रतिष्ठितो भवति। कथं तस्य चक्षुराद्यधीनता भवतीति "त्रिगुणः" "बुद्धेर्गुणेनात्मगुणेन दृष्टः" इति विशेषणानि तद्दर्शयन्ति। तेनाभिन्नं मनआदिकमाश्रित्य सत्त्वादिगुणाः प्रभवन्ति तं स्वायत्तीकर्तुम्, ततः "अनीशया शोचति मुह्यमानः" इति तस्यावस्था। यद्यप्यतिसूक्ष्मत्वात् तस्याराग्रमात्रत्वं वालाग्रशतभागस्य शतधाभागत्वमुक्तं तथापि "स चानन्त्याय कल्पते" इत्युक्तिस्तस्याल्पशक्तेरल्पज्ञस्यानन्तशक्तिरनन्तज्ञानमेव प्राप्यमिति परात्परमहिमत्वेन तस्य महिमत्वमिति सुस्पष्टं दर्शयति। "नैव स्त्री"त्यादि श्लिष्टं विवेक्तव्यं गतिवक्षाम्।

## इति जीवात्मवल्ली सप्तमोऽध्यायः।

---

# अष्टमोऽध्यायः।

## प्रकृतिवल्ली।

१। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं
तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं
तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥
यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति।

प्रकृतिर्जगतो मूलोपादानम्, सा किं परब्रह्मणो भिन्ना अथवा तदभिन्ना तत्स्वरूपा चेति विचारः सूत्रकारमीमांसानुसरणेन (१।४। २३—२७) सर्व्वैर्वेदान्तवादिभिः परस्यैव निमित्तोपादानकारणत्वेन पर्य्यवसितः। यदि ब्रह्मैव प्रकृतिः कथं वल्ल्यन्तरे तस्या उल्लेखः? तस्याः कारणस्यात्मभूतत्वेऽपि कार्य्यात्मभूता चेति भेदप्रदर्शनाय वल्ल्यन्तरम्। मुख्यं तस्या ब्रह्मस्वरूपत्वं गौणं कार्य्यत्वमिति द्वयात्मकत्वे स्वनिष्ठवैचित्र्येण बहुभवनमेव कारणम्।

१। ब्रह्मैव प्रकृतिर्भूतयोनित्वेनेति स्पष्टमभिदधाति यत्तदिति। "अथ परा यया तदक्षरमधिगम्यते" (१।६) इत्यतो यत् तत् अक्षरं तत् अद्रेश्यम् अदृश्यं ज्ञानेन्द्रियागम्यं, अग्राह्यं कर्म्मेन्द्रियाविषयम्, अगोत्रम् अमूलम्, अवर्णं शुक्लत्वादिद्रव्यधर्म्मैरहितम्, अचक्षुःश्रोत्रं ज्ञानेन्द्रियहीनम्, अपाणिपादं कर्म्मेन्द्रियवर्ज्जितं, नित्यम् अविनाशि विभुं—'विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभु', सर्व्वगतं व्यापकं, सुसूक्ष्मं, सुतरां अव्ययम् अपचयशून्यं यत् भूतयोनिं भूतानां कारणं धीराः विवेकिनः तत् परि सर्व्वतः पश्यन्ति।

स्पतएव तस्मादिदमसुदेति विनाप्यासादिति दृष्टान्तमुखेनाह यथेति। यथा ऊर्णनाभिः लूताकीटः तन्तून् सृजते बहिःप्रसारयति गृह्णते च

यथा सतः पुरुषात् केशलोमानि
तथाऽक्षरात् सम्भवतीह विश्वम् ॥
तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम् ॥
यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते ॥

मु १(१) ७—९ ।

२ । तदेतत् सत्यं—

यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।

प्रतिसंहरति चात्मनि, यथा पृथिव्याम् ओषधयः व्रीह्यादयः सम्भवन्ति उत्पद्यन्ते, यथा सतः विद्यमानात् पुरुषात् केशलोमानि प्रभवन्ति तथा अक्षरात् परब्रह्मणः इह विश्वं सम्भवति ।

अनायासेनोत्पद्यते विश्वं। तत् किं तदुत्पत्तिर्ज्ञाननिरपेक्षा ? नेत्याह तपसेति । तपसा—"यस्य ज्ञानमयं तपः" इत्युक्तत्वात्—ज्ञानबाहुल्येन क्रियाशक्तिप्रकाशेन ब्रह्म चीयते उपचीयते प्रवृद्धं भवति बहु॰॰॰मा- त्मानं प्रकाशयति । ततः ब्रह्मणः अन्नम् अव्याकृतं वीजम् अभि- जायते ; अन्नात् अव्याकृतात् वीजात् प्राणः मनः सत्यं भूतपञ्चकं लोकाः भूरादयः कर्म्मसु च अमृतम् अविनाशि फलम् अभिजायते ।

ज्ञानस्वरूपस्य सृष्टिविषये प्राधान्यमाह यइति । यः परात्मा सर्व्वज्ञः सर्व्वं जानाति सामान्येनेति, सर्व्ववित् सर्व्वं वेत्ति विशेषेणेति, यस्य ज्ञानमयं ज्ञानप्रचुरं तपः क्रियाशक्तेः प्रकाशः, तस्मात् परात्मनः एतत् ब्रह्म हिरण्यगर्भाख्यं नाम रूपम् अन्नं च जायते ।

२ । अक्षरपरब्रह्मतोऽपरायाः प्रकृतेरभिव्यक्तिर्वर्णिता सम्प्रति परायास्ततोऽनायासेन प्रकटप्राप्तिं वर्णयति तदेतदिति । "येनाक्षरं

तथाक्षराद्विविधाः सौम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥ मु २(१)१ ।

३। एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा ॥

पुरुषं वेद सत्यं" इत्येतदनुवर्त्योक्तं—हे सौम्य, तत् एतत् सत्यं यतः अक्षरात् परब्रह्मणः—सुदीप्तात् प्रज्वलितात् पावकात् अग्नेः यथा सहस्रशः सरूपाः समानरूपविशिष्टाः स्फुलिङ्गाः अग्निकणाः प्रभवन्ते उत्पद्यन्ते निःसृताः भवन्ति तथा—विविधाः भावाः जीवाः प्रजायन्ते प्रादुर्भवन्ति, तत्र अक्षरे एव च अपियन्ति प्रतिगच्छन्ति ।

३। सामान्यतो यदुक्तं तदेव विशेषेणोच्यते एतस्मादिति। एतस्मात् अक्षरात् परब्रह्मणः प्राणः मनः सर्व्वेन्द्रियाणि सर्व्वाणि इन्द्रियाणि खम् आकाशं वायुः ज्योतिः आपः जलं विश्वस्य सर्व्वस्य धारिणी धरित्री पृथिवी च जायते प्रादुर्भवति ।

एतान्युत्पादयन् स एव परात्मा "रूपं रूपं प्रतिरूपोबभूव" (५।६) इत्युक्तदिशा तेषु विहरति। तदेतदवयवकल्पनया (२।१२) प्रदर्शयति अग्निरिति। अस्य सर्व्वभूतान्तरात्मनः अग्निः मूर्द्धा शिरः, चन्द्रसूर्य्यौ चक्षुषी, दिशः श्रोत्रे कर्णौ, विवृताः उद्घाटिताः वेदाः च वाक्, वायुः प्राणः, विश्वं समस्तं जगत् हृदयम्, पद्भ्यां पदद्वयाय तदर्थं पृथिवी। हि अतएव एष सर्व्वभूतान्तरात्मा—सर्व्वेषु भूतेषु अन्तरात्मतया विराजमानत्वात् ।

तस्मादग्निः समिधो यस्य सूर्य्यः
सोमात् पर्ज्जन्य ओषधयः पृथिव्याम्।
पुमान् रेतः सिञ्चति योषितायां
बह्वीः प्रजाः पुरुषात् सम्प्रसूताः॥
तस्मादृचः सामयजूंषि दीक्षा
यज्ञाश्च सर्व्वे क्रतवो दक्षिणाश्च।
संवत्सरश्च यजमानश्च लोकाः
सोमो यत्र पवते यत्र सूर्य्यः॥
तस्माच्च देवाबहुधा सम्प्रसूताः
साध्या मनुष्याः पशवो वयांसि।

तस्मादिति। तस्मात् सर्व्वभूतान्तरात्मनः अग्निः जायते, यस्य अग्नेः सूर्य्यः समिधः ज्वलनहेतुः--अस्तमिते सूर्य्ये तदर्चिरग्नौ निहितेति श्रौतप्रसिद्धेः;—सोमात् सोमरसात् पर्ज्जन्यः वृष्टिः, ततः पृथिव्याम् ओषधयः व्रीह्यादयः, ओषधिभ्यः रेतः शुक्रं, यत् पुमान् योषितायां सिञ्चति, एवं परम्परया पुरुषात् परापरप्रकृतिपरिष्वक्तः बह्वीः प्रजाः सम्प्रसूताः। अग्न्यादयोऽत्रावान्तरकारणत्वेन ग्राह्याः।

तस्मादृच इति। तस्मात् पुरुषात् सम्प्रसूताः ऋचः छन्दोविशिष्टाः, साम पाञ्चभक्तिकसप्तभक्तिकस्तोमादिगीतिविशिष्टं, यजुः अनियताक्षर-पादगद्यविशिष्टम्, एते त्रिविधा मन्त्राः, दीक्षा यज्ञोपयोगित्वाय नियमे-र्देहकर्षनव्यापारः, यज्ञाः अग्निहोत्रादयः, क्रतवः सयूपाः, दक्षिणाः च एकगवाद्यपरिमितसर्व्वस्वान्ताः, संवत्सरं च कालकर्म्माङ्गे, यजमानः च यज्ञकर्त्ता, लोकाः कर्म्मप्राप्याः, यत्र पितृयाणे सोमः पवते पुनाति, यत्र देवयाने सूर्य्यः पवते पुनाति।

तस्मादिति। तस्मात् च पुरुषात् सम्प्रसूताः देवाः, साध्याः देव-विशेषाः, मनुष्याः, पशवः, वयांसि पक्षिणः, प्राणापानौ, व्रीहियवौ,

प्राणापानौ व्रीहियवौ तपश्च
श्रद्धा सत्यं ब्रह्मचर्य्यं विधिश्च ॥

सप्त प्राणाः प्रभवन्ति तस्मात्
सप्तार्च्चिषः समिधः सप्त होमाः ।
सप्त इमे लोका येषु चरन्ति
प्राणा गुहाशया निहिताः सप्त सप्त ॥

अतः समुद्रा गिरयश्च सर्व्वे-
ऽस्मात् स्यन्दन्ते सिन्धवः सर्व्वरूपाः ।
अतश्च सर्व्वा ओषधयो रसश्च
येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥

तपः च मननं, श्रद्धा आस्तिक्यबुद्धिः, सत्यं यथाभूतार्थवचनं, ब्रह्मचर्य्यं भोगाभिलाषत्यागः, विधिः च इतिकर्त्तव्यता ।

सप्तेति। तस्मात् पुरुषात् प्रभवन्ति सप्तप्राणाः शीर्षस्थसप्तेन्द्रियद्वाराणि, सप्तार्च्चिषः तेषां द्वाराणां स्वस्वविषयद्योतकदीप्तयः, सप्त समिधः विषयाः, सप्त होमाः तद्विषयविज्ञानानि, सप्त इमे लोकाः इन्द्रियस्थानानि, येषु लोकेषु गुहाशयाः—गुहायां देहे हृदये वा शेरते ये ते—निहिताः धात्रा स्थापिताः सप्त सप्त प्राणाः चरन्ति ।

अतइति। अतः पुरुषात् सर्व्वे समुद्राः, गिरयश्च पर्व्वताः, अस्मात् सर्व्वरूपाः विविधाः सिन्धवः नद्यः स्यन्दन्ते ; अतः च सर्व्वा ओषधयः रसं च, येन रसेन भूतैः पञ्चभिः अन्तरात्मा शरीराभ्यन्तरस्थात्मा तिष्ठते।

पुरुष एवेदं विश्वं कर्म्म तपो ब्रह्म परामृतम्।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं
विकिरतीह सौम्य॥
मु २(१)३—१०।

४। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः, वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। तै॰२।१।३।

५। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छती३। अहोविद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता ३ उ। सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳ सर्व्वमसृजत। यदिदं किञ्च। तत् सृष्ट्वा तदेवानुप्राविशत्।

सर्व्वात्मकत्वमस्योपदिशति सर्व्वोपादानत्वात् पुरुष इति। इदं विश्वं कर्म्म तपः पुरुषः एव। यः एतत् परामृतं परमम् अमृतं ब्रह्म गुहायां हृदि निहितं वेद, हे सौम्य, स इह अविद्याग्रन्थिं विकिरति विक्षिपति नाशयति।

४। परापरप्रकृतिपरिष्वक्तः पुरुषात् सृष्टिमभिधाय विशेषं तत्राभिदधाति तस्माद्वाइति, तस्मात् ब्रह्मणः एतस्मात् जीवात्मनः उभयोः सम्मिलनात् आत्मनः परात्मनः परमपुरुषात् (१।६[१५८६]) आकाशः सम्भूतः, आकाशात् वायुः, वायोः अग्निः, अग्नेः आपः, अद्भ्यः पृथिवी, पृथिव्याः ओषधयः, ओषधीभ्यः अन्नम्, अन्नात् रेतः, रेतसः पुरुषः जीवः।

५। सामान्यत आकाशाद्युत्पत्तिमभ्युपाधितारतम्येन तत्र तत्र

परात्मनः प्रकाशतारतम्यमुक्त्वा "असन्नेव भवति" (२।६[७७पृ]) इति मन्त्रेण ब्रह्मसत्त्वासत्त्ववेदनात् सत्त्वमसत्त्वमभ्यदधाज्जीवस्य। एकस्मा-ब्रह्मण एवाकाशादयः सर्व्वं सम्भूताः। तत् कथं विदुषोऽविदुषः सत्त्वासत्त्वबुद्धिः? न हि जातस्य सतः किन्तर्हि सत एव जगदुद्भवः सम्भ-वति। अत्र विदुषामविदुषाञ्च समानप्रतिपत्तिः, सत्यां समानप्रति-पत्तौ गतिरपि तयोः समाना स्यात्। ततः संशयवशात् प्रथमं शिष्यः प्रश्नमुद्भावयति अथेति। अथ अनन्तरम् अतः अस्तिनास्तितः अनु आचार्य्यस्योक्तिम् अनु प्रश्नः जिज्ञासा शिष्यस्य—कश्चन अविद्वान् प्रेत्य अमुं लोकं गच्छति उत नेति। कश्चित् विद्वान् प्रेत्य अमुं लोकं समश्नुते प्राप्नोति उत नेति। न हि सामान्यतोऽस्तित्वज्ञानेन ब्रह्म-वित्त्वं सम्भवति, भवति तत्तु यतोऽपरोक्षज्ञानेनैव। अतोऽपरोक्ष-ज्ञानसाधनाय ब्रह्मणो जगत्कारणत्वं विशेषेणोक्त्वा शिष्यं बोधयति विदुषोऽविदुषोर्भेदञ्च साधयति सइति। स परात्मा—"तस्माद्वा एत-स्मात्" इत्यत्र तच्छब्दो ब्रह्मवाचक एतच्छब्दो जीववाचकः। तयोः केवलतच्छब्दानुवर्त्तनात् शुद्धब्रह्मैव तुरीयात्मशब्दप्रतिनिधिः स इति पदेन बोध्यत इति, न। आनन्दमयवाक्ये "तेनैष पूर्णः" (२।६[७७पृ]) इति कथनात् जीवोऽत्र परात्मनोऽन्तर्भूतः। एवमन्तर्भूतत्वेन तस्य ग्रहणात् शुद्धो जीवो विशेषणभावापन्नः परात्मैव विशेष्यतया प्रधानः। स एवात्मान्तर्भूतजीवः स इति पदेन परिगृह्यीतः। अन्यथा सृष्टिक्रम-श्रोक्तो न घटते जीवानुप्रवेशं विना तदसम्भवात्, "रसो वै सः" (४।१२) इत्यत्र साक्षाद्ब्रह्मैव रसशब्दवाच्यं तदन्तर्भूतो जीवस्तु "रसं ह्येवायं लब्ध्वा" इति वाक्येन रसभुक्। सुतरां सर्व्वत्रात्मान्तर्भूतजीवत्वे पुनः कर्तृत्वस्थले ब्रह्मणो भोक्तृत्वस्थले जीवस्य परिग्रहः। स परात्मा अकामयत ऐच्छत्। किमैच्छत्? बहु स्यां प्रजायेय इति। किमत्र बहुभवनं जन्म च? व्याकरणम्; आत्मन्यभिन्नभावेन स्थितयोः परा-परप्रकृत्योर्विभजनम्। केन वा स विभजनं कृतवान्? स्वात्म-ज्ञानेन। अतएवाह—स तपः अतप्यत—"यस्य ज्ञानमयं तपः"

तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च। सत्यमभवत्। यदिदं किञ्च। तत् सत्यमित्याचक्षते। तदप्येष श्लोको भवति। तै २।६।२।३।

६। असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानं स्वयमकुरुत। तस्मात्तत् सुकृतमुच्यत इति।

तै, २।७।१।

(८।१) इति—आत्मज्ञानं ज्ञानाकारेण उदभावयत्। स तपः ज्ञानं तप्त्वा ज्ञानाकारेणोद्भाव्य यत् इदं किञ्च तत् इदं सर्व्वं नामरूपञ्च असृजत व्याकरोत्। तत् सृष्ट्वा व्याकृत्य, तत् एव अनुप्राविशत्।

तत् अनुप्रविश्य सत् च दृश्यमानं, त्यत् च अदृश्यमानं, निरुक्तं च वचनीयम्, अनिरुक्तं च अवचनीयं, निलयनं च आश्रितम्, अनिलयनं च अनाश्रितं, विज्ञानं च चेतनम्, अविज्ञानं च अचेतनं, सत्यं च स्थायि, अनृतं च अस्थायि अभवत्। किन्तदस्तु यदेवमभवत्? सत्यम् अव्याकृतावस्थम् अखण्डब्रह्मवस्तु यत् इदं किञ्च अभवत्। अतएव तत् ब्रह्म वस्तु सत्यं व्याकृतस्य सर्व्वस्य सत्ताभूतं—तेनैव व्याकृतनामरूपयोः सत्यत्वात्। तत् तस्मिन् एव अर्थे एष श्लोकः भवति।

६। कोऽसौ श्लोकस्तं कथयति असदिति। असत् अदृश्यमानम् अव्याकृतं ब्रह्मवस्तु वै एव अग्रे आसीत्, ततः अव्याकृतब्रह्मवस्तुनः सत् दृश्यमानं सर्व्वम् अभवत्। कथम्? तत् ब्रह्मवस्तु स्वयम् आत्मानं—परापरब्रह्मात्मभिन्नम्—अकुरुत विभक्तवान् स्वात्मन्यभिप्रकाशमकरोत्। तस्मात् कारणात् तत् ब्रह्मवस्तु सुकृतं शोभनक्रियम् उच्यते—सर्व्वेषु कार्य्येषु कर्तृ इति गीयते।

७। आत्मा वा इदमेक एवाग्र आसीत्। नान्यत्किंचन मिषत्। स ईक्षत लोकान् नु सृजा इति।

स इमाँल्लोकानसृजत। अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः। पृथिवी मरो या अधस्तात्ता आपः।

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्यएव पुरुषं समुद्धृत्यामूर्च्छयत्।

७। विस्तारतः सृष्टिमाह आत्मेति। इदं दृश्यमानं जगत् अग्रे सृष्टेः प्राक् एकः आत्मा एव आसीत्—अव्याकृतावस्थायां तदभिन्नत्वात्; न अन्यत् किञ्च मिषत् व्यापारवत् आसीत्। सुतरां स आत्मा ईक्षत ऐक्षत ज्ञानशक्तिमुद्भावयत्—लोकान् नु सृजे सृजेय इति।

स इमान् लोकान् असृजत व्याकृतवान्। के पुनः ते? अम्भः, मरीचिः, मरम्, आपः। तेषां व्याख्यानमाह—दिवं परेण द्युलोकात् उपरि अदः तदेतत् अम्भः, द्यौ अस्य प्रतिष्ठा तदुपरिस्थितत्वात्; मरीचयः अन्तरिक्षं; पृथिवी मरः मृत्योरधीनत्वात्; याः अधस्तात् पृथिव्याः ताः आपः। सृष्टेः प्रागप्तेजसोः प्राधान्यमासीत्, अतस्तयोः प्राधान्येनोल्लेखः। अम्भः—अपां सूक्ष्मोपदानमन्यथा पृथिव्या अधस्तादापइति स्वतन्त्रोक्तिर्न सिद्ध्यति। 'अपां भरणात्' अम्भ इति भाष्यकारः।

स ईक्षत ऐक्षत इमे नु लोकाः, एषां परिपालनाय लोकपालान् नु सृजे सृजेय इति। स अद्भ्यएव पुरुषम् आदिजीवं समुद्धृत्य निष्कृष्य अमूर्च्छयत् मूर्त्तिमन्तं कृतवान्।

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्। मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः। ऐ १।१—४।

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति।

तं पुरुषम् अभ्यतपत् सर्व्वानुभूत्वात् स्वात्मनिहितेन ज्ञानेन तदाकारतया उदभावयत्; अभितप्तस्य ज्ञानेनाङ्कृतस्य तस्य मुखं निरभिद्यत मुखाकारं सुषिरम् अजायत यथा पक्षिणः अण्डम्। यद्यप्यण्डमित्युपमया तापसम्पर्क एवात्र बुध्यते, तथापीयमालङ्कारिकोक्तिर्ज्ञानज्योतिषोरेकत्वाध्यवसानादिति ज्ञेयम्। मुखात् वाक् वचनं, वाचः वचनात् अग्निः; नासिके निरभिद्येताम्, नासिकाभ्यां प्राणः प्राणेन्द्रियं, प्राणात् वायुः; अक्षिणी निरभिद्येताम्, अक्षिभ्यां चक्षुः दर्शनेन्द्रियं, चक्षुषः आदित्यः; कर्णौ निरभिद्येतां, कर्णाभ्यां श्रोत्रं श्रवणेन्द्रियं, श्रोत्रात् दिशः; त्वक् चर्म्म निरभिद्यत, त्वचः लोमानि, लोमभ्यः ओषधिवनस्पतयः; हृदयं निरभिद्यत, हृदयात् मनः, मनसः चन्द्रमाः; नाभिः निरभिद्यत, नाभ्याः अपानः, अपानात् मृत्युः। शिश्नं निरभिद्यत, शिश्नात् रेतः, रेतसः आपः अजायन्तेति शेषः। अग्न्याद्यास्तत्तदधिष्ठातृदेवताः। १।

ताः एताः अग्न्याद्याः देवताः सृष्टाः सत्यः अस्मिन् महति पति-

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति।

ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं वतेति पुरुषोवाव सुकृतम्। ता अब्रवीद्यथायतनं प्रविशतेति।

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनोभूत्वा हृदयं प्राविशत् मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्।

विस्तीर्णे अर्णवे—"यद् वा अदः सलिले सु संरब्धा अतिष्ठत" (३।३ [४०पृ]) इति—जलराशौ प्रापतन् पतितवन्तः तं पुरुषम् अशनायापिपासाभ्यां क्षुत्तृड्भ्याम् अन्ववार्जत् अनुगमितवान् संयोजितवान्। ताः देवताः एवं स्रष्टारम् अब्रुवन्—आयतनं प्रतिष्ठास्थानं नः अस्मभ्यं प्रजानीहि ज्ञापय, यस्मिन् प्रतिष्ठिताः वयम् अन्नम् अदाम भक्षयाम इति।

ताभ्यः देवताभ्यः गाम् आनयत् स्रष्टा। ताः देवताः अब्रुवन्—न पुनः अयं गौः नः अस्मभ्यं अलं पर्य्याप्तम्। ताभ्यः देवताभ्यः अश्वम् आनयत्, ताः अब्रुवन्—अयं अश्वः नः अस्मभ्यं न पुनः अलम्।

ताभ्यः देवताभ्यः पुरुषम् आनयत्, ताः अब्रुवन्—सुकृतं सुष्ठुकृतं शोभनम् आयतनं बत इति। अतः पुरुषः वाव एव सुकृतं सुकृताभिधं स्रष्टृवत्। स्रष्टा ताः अब्रवीत्—यथायतनं यस्य यत् योग्यम् आयतनं प्रतिष्ठास्थानं तत् प्रविशत इति।

अग्निः वाक् भूत्वा मुखं प्राविशत्; वायुः प्राणः प्राणं भूत्वा नासिके प्राविशत्; आदित्यः चक्षुः भूत्वा अक्षिणी प्राविशत्, दिशः

तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति। स ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवतः।

ऐ २।१—५।

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति।

सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्त्तिरजायत। या वै सा मूर्त्तिरजायतान्नं वै तत्।

श्रोत्रं भूत्वा कर्णौ प्राविशन्, ओषधिवनस्पतयः लोमानि भूत्वा त्वचं चर्म्म प्राविशन्, चन्द्रमाः मनः भूत्वा हृदयं प्राविशत्, मृत्युः अपानः भूत्वा नाभिं प्राविशत्, आपः रेतः भूत्वा शिश्नं प्राविशन्।

तं स्रष्टारं अशनायापिपासे क्षुत्तृषे अब्रूताम् उक्तवत्यौ आवाभ्याम् अधिष्ठानम् अभिप्रजानीहि ज्ञापय इति। स स्रष्टा ते अशनायापिपासे अब्रवीत्—एतासु एव देवतासु वां युवाम् आ[भज]ामि वृत्तिसंविभागेन अनुग्रह्णामि, एतासु देवतासु युवां भागिन्यौ भागवत्यौ करोमि। तस्मात् स्रष्टृवचनात् यस्यै कस्यै देवतायै हविः गृह्यते आवर्ज्यते अस्यां देवतायाम् अशनायापिपासे भागिन्यौ एव भवतः। २।

स स्रष्टा ईक्षत ऐक्षत। इमे लोकाः च लोकपालाः च; एभ्यः अन्नं सृजे सृजेम इति।

स अपः अभ्यतपत्, अभितप्ताभ्यः ताभ्यः अद्भ्यः मूर्त्तिः घनीभूताकारः चराचरम् अजायत। या वै सा मूर्त्तिः अजायत, तत् वै अन्नम्।

तद्देतदभिसृष्टं नदत् पराङ्त्यजिघांसत् तद्वाचाजिघृक्षत् तन्नाशक्नोद्वाचा ग्रहीतुम्। स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्।

तत् प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुम्।
स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्॥

तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम्।
स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्॥

तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्।
स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्॥

तत् एतत् अन्नम् अभिसृष्टं नदत् भयात् शब्दं कुर्व्वत् पराङ् पराङ्मुखं सत् अत्यजिघांसत्—हन हिंसागत्योः—अभिगन्तुम् ऐच्छत् पलायितुं प्रारभत इत्यर्थः। तत् अन्नं स वाचा वचनेन अजिघृक्षत् ग्रहीतुमैच्छत्, तत् अन्नं वाचा ग्रहीतुं न अशक्नोत्। यत् यदि ह एव एनत् अन्नं स वाचा अग्रहैष्यत् गृहीतवान् स्यात्, अन्नम् अभिव्याहृत्य एव अन्नमित्युक्त्वैव अत्रप्स्यत् तृप्तः अभविष्यत् लोकः।

प्राणेन घ्राणेन स तत् अन्नम् अजिघृक्षत्, प्राणेन घ्राणेन तत् ग्रहीतुं न अशक्नोत्। स यत् यदि एव प्राणेन घ्राणेन एनत् अग्रहैष्यत् अन्नम् अभिप्राण्य आघ्राय एव अत्रप्स्यत् लोकः।

चक्षुषा तत् अन्नं स अजिघृक्षत्, चक्षुषा ग्रहीतुं तत् न अशक्नोत्, स यत् यदि एव चक्षुषा एनत् अग्रहैष्यत् अन्नम् दृष्ट्वा एव च अत्रप्स्यत् लोकः।

श्रोत्रेण तत् अजिघृक्षत् तत् श्रोत्रेण ग्रहीतुं न अशक्नोत्। स यत् यदि एव एनत् श्रोत्रेण अग्रहैष्यत् अन्नम् श्रुत्वा एव अत्रप्स्यत् लोकः।

तत्त्वचाजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुम्।
स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत्॥
तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम्।
स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्॥
तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुम्।
स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्॥

तदपानेनाजिघृक्षत् तदावयत् स एषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः।

स ईक्षत कथं न्विदं मदृते स्यादिति। स ईक्षत कतरेण प्रपद्या इति। स ईक्षत यदि वाचाभिव्याहृतं

त्वचा चर्म्मणा तत् अजिघृक्षत्, त्वचा तत् ग्रहीतुं न अशक्नोत्। स यदि एव त्वचा एनत् अग्रहैष्यत् अन्नम् स्पृष्ट्वा एव च अत्रप्स्यत् लोकः।

मनसा तत् अजिघृक्षत्, मनसा तत् ग्रहीतुं न अशक्नोत्। स यत् यदि एव मनसा एनत् अग्रहैष्यत्, अन्नम् ध्यात्वा चिन्तयित्वा एव च अत्रप्स्यत् लोकः।

शिश्नेन तत् अजिघृक्षत्, शिश्नेन तत् ग्रहीतुं न अशक्नोत्, स यदि एव एनत् शिश्नेन अग्रहैष्यत् अन्नं विसृज्य विमुच्य एव च अत्रप्स्यत् लोकः।

अपानेन अर्द्धाङ्मुखच्छिद्रादधोगेन वायुना स तत् अजिघृक्षत्, तदा वयत् अवयत् जग्राह। यत् यस्मात् वयदिति कारणात् स एष वायुः अन्नस्य ग्रहः ग्राहकः। यत् यस्मात् कारणात् वै एव एष वायुः अन्नायुः अन्नम् आयुः जीवनं यस्य—अन्नायुष्ट्वं प्राणस्य प्रसिद्धत्वात्।

स ईक्षत ऐक्षत। कथं नु इदं कार्य्यकरणसंघातं मदृते मां विना स्यात् इति। स ईक्षत ऐक्षत—कतरेण प्रपद्ये प्रपद्येयम् इति।

यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति।

स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत। सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति।

स जातो भूतान्यभिव्यैक्षत् किमिहान्यं वावदिषदिति। स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति।

स ईक्षत ऐक्षत—यदि वाचा अभिव्याहृतम् उक्तं, यदि प्राणेन प्राणेन अभिप्राणितं घ्रातं, यदि चक्षुषा दृष्टं, यदि श्रोत्रेण श्रुतं, यदि त्वचा चर्म्मणा स्पृष्टं, यदि मनसा ध्यातं चिन्तितं, यदि अपानेन अभ्यपानितम् उत्सृष्टं, यदि शिश्नेन विसृष्टं निःसारितं—कोऽहमिति।

स एतम् एव सीमानं केशविभजनदेशं विदार्य्य एतया द्वारा द्वारेण प्रापद्यत प्रविष्टवान्। सा एषा द्वाः विदृतिः नाम तन्नाम्ना प्रसिद्धा। तत् एतत् नान्दनं नन्दनं—दैर्घ्यं छान्दसम्—आनन्दकरं। तस्य प्रविष्टस्य त्रयः आवसथाः निवसतिस्थानानि—जागरितकाले चक्षुः, स्वप्नकाले अन्तर्मनः, सुषुप्तकाले हृदयाकाशम्; त्रयः स्वप्नाः जाग्रत्स्वप्नसुषुप्ताख्याः। अयम् आवसथः प्रथमः—चक्षुः; अयम् आवसथः द्वितीयः—आन्तरं मनः; अयम् आवसथः तृतीयः—हृदयाकाशः—अयमावसथइत्युक्तानुकीर्त्तनमेव।

स जातः पिण्डं प्रविष्टः भूतानि अभिव्यैक्षत् आभिमुख्येन आलोचितवान्—किम् इह कार्य्यकरणसंघाते अन्यं मद्व्यतिरिक्तम् आत्मानं वावदिषत् वदितुम् इच्छति इति। स एतम् एव पुरुषं परापरप्रकृतिपरिच्छन्नारं ब्रह्म सर्व्वान्तर्भावकं ततमं—अव्यक्तकारेणैकेम लुप्तेन—

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। परोक्षप्रिया इव हि देवाः। ऐ ३।१—१४।

पुरुषे ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत् सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भूत आत्मन्येवात्मानं बिभर्त्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म।

तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा, तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति।

ततमं व्याप्ततमम् अपश्यत्। पश्यन् स किमवदत्? इदं ब्रह्म अदर्शम् इति।

तस्मात् इदं पश्यतीति इदन्द्रः नाम। इदन्द्रः ह वै पुनः नाम लोके प्रसिद्धिः। तं सन्तं विद्यमानम् इदन्द्रम् एव इन्द्रम् इति—परोक्षेण आचक्षते ब्रह्मविदः। हि यस्मात् देवाः परोक्षप्रियाः इव—देवानां प्रत्यक्षनामग्रहणद्वेषित्वात्। द्विरावृत्तिः समाप्तिसूचिका। इन्द्रोऽयं विश्व इति (३।२३) ज्ञातव्यम्। ३।

अयं जीवः आदितः प्रथमतः पुरुषे पितरि एव गर्भः भवति रेतोरूपेण। यत् एतत् रेतः तत् एतत् पितृदेहस्य सर्व्वेभ्यः अङ्गेभ्यः सम्भूतं परिनिष्पन्नम् तेजः साररूपम्। आत्मानं रेतोरूपम् आत्मनि देहे एव बिभर्त्ति धारयति। यदा स पिता तत् रेतः स्त्रियां सिञ्चति, अथ एनत् रेतः जनयति, तत् अस्य जीवस्य प्रथमं जन्म।

तत् सिक्तं रेतः स्वम् अङ्गं स्तनादि यथा तथा स्त्रिया आत्मभूयम् आत्माव्यतिरेकतां गच्छति। तस्मात् कारणात् एनां स्त्रीं तत् सिक्तं रेतः न हिनस्ति न बाधते। सा स्त्री अस्य भर्त्तुः एतम् आत्मानम् अत्र उदरे गतं बुद्ध्वा भावयति वर्द्धयति परिपालयति।

सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्त्ति सोऽग्रएव कुमारं जन्मनोऽग्रेऽधि भावयति। स यत् कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म।

सोऽस्यायमात्मा पुण्येभ्यः कर्म्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्ज्जायते तदस्य तृतीयं जन्म। तदुक्तमृषिणा।
गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति॥
गर्भएवैतच्छयानो वामदेव एवमुवाच।

सा भावयत्री एवं भर्त्तुः आत्मभूतं गर्भं पालयित्री भावयितव्या भर्त्रा पालयितव्या भवति। सा स्त्री तं गर्भं बिभर्त्ति धारयति। अग्रे प्रथमम् एव स पिता जन्मनः अग्रे सीमन्तोन्नयनादिना अधि ऊर्द्ध्वं जातकर्म्मादिना कुमारं भावयति परिवर्द्धयति। स पिता जन्मनः अग्रे अधि ऊर्द्ध्वं च कुमारं यत् भावयति, तत् आत्मानम् एव भावयति एषां लोकानां सन्तत्यै अविच्छेदाय। एवं पुत्रोत्पादनादिकर्म्मणा हि इमे लोकाः सन्तताः अविच्छेदेन वर्त्तमानाः। तत् अस्य जीवस्य द्वितीयं जन्म।

अथ सोऽयम् आत्मा पुण्येभ्यः कर्म्मभ्यः पुण्यकर्म्मसम्पादनार्थम् अस्य पितुः स्थाने प्रतिधीयते प्रतिनिधीयते। अथ अनन्तरम् अस्य पुत्ररूपेण जातस्य जीवस्य अयम् इतरः अन्यतरः आत्मा पितृरूपः कृतकृत्यः कृतार्थः वयोगतः गतवयाः वृद्धः जीर्णः सन् प्रैति म्रियते। स पितृरूपः आत्मा इतः संसारात् प्रयन् गच्छन् एव पुनः जायते। तद् अस्य तृतीयं जन्म—पितापुत्रयोरात्मत्वेनैकत्वात् पुत्रस्यापि अ-

स एवं विद्वानस्माच्छरीरभेदादूर्द्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवत् समभवत्।

ऐत ४।१—६।

८। आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत् सदासीत्तत् समभवत्तदाण्डं निरवर्त्तत तत् संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतञ्च सुवर्णञ्चाभवताम्।

पुत्रापेक्षया भवेत् तादृशं जन्म इति च कारणात्। तत् क्षतकृत्यत्वम् उक्तम् ऋषिणा वामदेवेन ;—नु वितर्के। गर्भे मातृगर्भे नु सन् अहं देवानां विश्वा विश्वानि निखिलानि जानिमानि जन्मानि अन्ववेदम् अनुबुद्धवान् अस्मि। शतम् आयसीः आयस्यः लौहमय्यः पुरः शरीराणि मा माम् अरक्षन् रक्षितवत्यः, श्येनः इव जवसा वेगेन ज्ञानकृतसामर्थ्येन अधः निरदीयम् निर्गतः अस्मि (ऋक् ४म, २७सू, १ऋक्)। गर्भे शयानः एव वामदेवः एवम् एतत् उवाच।

स वामदेवः एवं विद्वान् अस्मात् शरीरभेदात् देहनाशात् अनन्तरम् ऊर्द्ध्वः उन्नतः सन् उत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्व्वान् कामान् आप्त्वा प्राप्य अमृतः समभवत्। द्विरावृत्तिः सफलात्मज्ञानस्य समाप्तिसूचनाय।

८। आदित्यो ब्रह्मणः पाद (३।१३) इत्युक्तम्। तस्मिन्नेव समग्रब्रह्मदृष्ट्यर्थमिदमारभ्यते सृष्टिप्रक्रियाप्रदर्शनेन आदित्यइति। आदित्यः ब्रह्म इति आदेशः उपदेशः। तस्य उपव्याख्यानं प्रागवस्थादिकथनम्। अग्रे सृष्टेः प्राक् इदम् जगत् असत् अव्याकृतनामरूपम् आसीत्, तत् इदं सत् व्याकृतनामरूपम् आसीत्, तत् सत् समभवत् वीजाकारं प्राप्नवत्। तत् वीजाकारम् आण्डम् अण्डं निरवर्त्तत संवृत्तम्। तत् अण्डं संवत्सरस्य मात्रां तत्परिमाणकालम् अशयत अनिर्भिन्नम्

तद्यद्रजतᳪ सेयं पृथिवी यत् सुवर्णᳪ सा द्यौर्यज्जरायु ते पर्व्वता यदुल्वं समेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकᳪ स समुद्रः ।

अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्व्वाणि च भूतानि सर्व्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति सर्व्वाणि च भूतानि सर्व्वे चैव कामाः ।

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशोह यदेनᳪ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् । छा, ३।१९।१—४ ।

अतिष्ठत्, तत् ततः संवत्सरकालादूर्द्धं निरभिद्यत निर्भिन्नम् अभवत् । ते निर्भिन्ने आण्डकपाले रजतं च सुवर्णं च अभवताम् ।

तत् यत् रजतं सा इयं पृथिवी, यत् सुवर्णं सा द्यौः, यत् जरायु गर्भवेष्टनं ते पर्व्वताः, यत् उल्वं गर्भोपादानं शुक्रशोणितसन्निपातं तत् समेघः मेघसंवलितः नीहारः, याः धमनयः शिराः ताः नद्यः, यत् वास्तेयं वस्तौ भवम् उदकं जलं स समुद्रः ।

अथ यत् तत् गर्भरूपम् अजायत सोऽसौ आदित्यः । तं जायमानम् आदित्यम् अनु लक्षीकृत्य उलूलवः उलु उलु इति घोषाः विस्तीर्णरवाः उदतिष्ठन् उत्थितवन्तः । यतः सर्व्वाणि च भूतानि सर्व्वे च कामाः तस्मात् आदित्यात् उदतिष्ठन्, ततः सर्व्वाणि भूतानि सर्व्वे एव च कामाः तस्य उदयं प्रति प्रत्यायनम् अस्तगमनं प्रति उलूलवः घोषाः अनुतिष्ठन्ति कोलाहलं कुर्व्वन्ति । सूर्य्योदये भूतानि कामाश्च स्वस्वक्रियायै सरवमुद्यच्छन्ति अस्तमिते तस्मिन् विश्रामाय भोगाय च तथा कुर्व्वन्तीति फलितार्थः ।

स यः एतम् आदित्यमहिमानम् एवं विद्वान् आदित्यं ब्रह्म इति

९। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत।

उपास्ते, अभ्यासः ह क्षिप्रम् एव तत् यत् एनं विद्वांसं साधवः शोभनाः घोषाः साधुवादपूर्णाः आगच्छेयुः च उपनिम्रेडेरन् च आनन्दोन्मत्तं कुर्य्युः च। ह्रीचकारावविलम्बार्थकौ। म्रेड—उन्मादने।

९। अव्याकृतनामरूपापेक्षया तैत्तिरीयके "असद्वा इदमग्र आसीत् ततो वै सदजायत" (८।६) इत्याह। तां प्रतिवदतीयं श्रुतिः "कथमसतः सज्जायेत" इति चेत् वेदान्तानां समन्वयः सुदूरपराहत एव स्यात्, सूत्रकारस्य च सिद्धान्तो (१।१।४) व्याहन्येत, भवेत् स्वोक्तिविरोधश्च (८।८)। अतएवासदत्र सर्व्वशून्यवादिनामसद्वादस्य निरसनायेति मन्तव्यम्। सन्मूलकं सर्व्वमिदमिति प्रदर्शनायोच्यते सदेवेति। हे सोम्य श्वेतकेतो, अग्रे सृष्टेः प्राक् इदं जगत् सत् एव आसीत्। किमिदं सत् यथाद्य बहुरूपं दृश्यते तथैवासीत्? न, एकम् एव अखण्डम् एव। अखण्डत्वे पुनरस्य कार्य्यभूतस्य कारणात्मत्वेनैव स्थितिरिति गम्यते। तत् कथमिदमा प्राधान्यमस्य ख्यायते? सम्प्रति दृश्यमानं जगत् नैवमासीदिति प्रदर्शनाय चेत् अ [illegible] अवतारः, तदा यदिदं जगत् दृश्यते तत् सृष्टेः प्रागखण्डरूपतामावमासीदिति कथनेन कारणसत्तयास्याभिन्नत्वं प्रदर्श्यते। एतस्य पुनः निःसन्दिग्धतासम्पादनाय 'अद्वितीयम्' इति विशेषणम्। वस्त्वन्तरविरहितत्वमद्वितीयत्वम्। वस्त्वन्तरविरहितमेकं सदासीदिदं जगदित्यर्थे निष्पन्ने "ते यदन्तरा तद्ब्रह्म" (३।१९) इति वाक्येनैक्यार्थं, न तयोर्वस्त्वन्तरत्वं किन्तु सदभिन्नत्वं विशेषणद्वयमत्र साधयति। तत् हि तत्र सृष्टिविषय एव एके सर्व्वशून्यवादिनः आहुः—अग्रे सृष्टेः प्राक् इदं जगत् एकम् एव अद्वितीयं असत् एव आसीत्, तस्मात् असतः सत् जायत अजायत।

कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।

तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते।

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते। छा ६।८।१—४।

हे सोम्य श्वेतकेतो, कुतस्तु खलु एवं स्यात् इति पुनः उवाच पिता आरुणिः—कथम् असतः सत् जायेत उत्पद्येत इति—नाभावात् भावस्योपलब्धेः; एकम् एव अद्वितीयं सत् तु, हे सोम्य, अग्रे सृष्टेः प्राक् इदं जगत् आसीत्। तत् अव्याकृतं सत् ऐक्षत ईक्षां कृतवत् पर्य्यालोचयत—बहु प्रभूतं व्याकृतनामरूपं स्यां भवेयम्, प्रजायेय प्रकर्षेण उत्पद्येय प्रादुर्भवेयम् इति। तत् सत् तेजः असृजत सृष्टवत्। तत् सृष्टं तेजः—परात्मनापूर्णम्—ऐक्षत बहु स्याम् प्रजायेय इति। तत् तेजः अपः असृजत। तेजसोऽपामुत्पत्तिः कथं सम्भाव्यते प्रत्यक्षदृष्टान्तेन तत् प्रतिपादयति—तस्मात् तेजसोऽपामुत्पत्तेः यत्र क्व च पुरुषः शोचति सन्तप्यते स्वेदते प्रस्विद्यति वा, तत् तदा तेजसः एव आपः अधिजायन्ते। ताः आपः—परात्मनापूर्णाः—ऐक्षन्त, बह्व्यः स्याम प्रजायेमहि इति। ताः आपः अन्नम् असृजन्त। एतदपि प्रत्यक्षदृष्टान्तेन प्रतिपादयति—तस्मात् कारणात् यत्र क्व च वर्षति तत् एव तत्र एव भूयिष्ठम् अन्नं भवति। अद्भ्यः एव तत् अन्नाद्यं व्रीहियवादिकम् अधिजायते।

१०। नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत्। अशनायययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति। सोऽर्च्चन्नचरत् तस्यार्च्चत आपोऽजायन्तार्च्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्। कं ह वा अस्मै भवति यएवमेतदर्कस्यार्कत्वं वेद।

१०। जीवात्मसम्बन्धं विना न जातु सृष्टिर्जायत इति वेदान्तसमयः प्राधान्येन प्रदर्श्यते नैवेहेति। इह संसारमण्डले अग्रे सृष्टेः प्राक् किञ्चन नामरूपप्रविभक्तविशेषं न आसीत्। इदं दृश्यमानं कार्य्यभूतं जगत् तदा मृत्युना एव आवृतम् आसीत्। यदि किञ्चन न आसीत् कथमुक्तं मृत्युनावृतमिति। प्रच्छन्नतापेक्षया 'किञ्चन न आसीत्' इत्युक्तिः। कारणे कार्य्यस्य गूढ़तया स्थितेः कारणस्य च जीवबुद्धावप्राकट्यात् तयोः प्रच्छन्नत्वम्। कोऽयं मृत्युः? अशितुम् इच्छा अशनाया। अशनायया परिलक्षितः मृत्युः; अतएव अशनाया हि मृत्युः। भोक्तृत्वमेव हि तस्य लक्षणम्। कथं भोक्तुर्मृत्युरित्यभिख्या? हिंसाप्रवृत्तेः। भोगार्थमेव जीवा जीवान् घ्नन्ति, अतएवेदं जगत् मृत्युना ग्रस्तम्। किमहिंसया नास्ति भोगसम्भावना? भोक्तृभोग्ययोरपचयोऽवश्यम्भावी, अतः सुष्ठूक्तं भोक्ता मृत्युरिति। "बुद्ध्यात्मनोऽशनाया धर्म्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भोमृत्युरित्युच्यते" इति भाष्यकारः। आत्मन्वी आत्मवान् मनस्वी स्याम् इति स तन्मनः तदीयं मनः कार्य्यालोचनक्षमम् अन्तःकरणम् अकुरुत कृतवान् स्वात्मवृत्तिभूतं तत् आविष्कृतवान्, स समनस्कः—परात्मसम्बन्धं विना न ततो विसृष्टिरिति—अर्च्चन् परात्मानं पूजयन्—तपस्तपन्निति पौराणिकाः—अचरत् व्यराजत्। अर्च्चयतः पूजयतः तस्मात् आपः अजायन्त। अर्च्चते पूजां कुर्व्वते मे मह्यं कं जलम् अभूत् इति तत् एव अर्च्चनोत्पन्नं जलम् एव अर्कस्य—अर्च्च तेर्घञ्—अर्कत्वं तेजोभूयस्त्वात् जलस्य। यः एनम् एतत् अर्कस्य अर्कत्वं वेद जानाति,

आपो वा अर्कस्तद्यदपाᳬ शर आसीत्तत् समहन्यत। सा पृथिव्यभवत् तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्ततााग्निः।

स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयᳬ स एष प्राणस्त्रेधा विहितः तस्य प्राची दिक् शिरोऽसौ चासौ चेर्म्मौ। अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्ष मुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चेति तदेव प्रतितिष्ठत्येवं विद्वान्।

अस्मै कं सुखम् एव पुनः भवति—सुखे जले च कमिति नाम-सामान्यात्।

आपः वा अर्कः—तेजोऽधिष्ठानत्वात्। तत् तस्मात् यत् अपां शरइव शरः दध्नइव मण्डभूतम् आसीत् तत् समहन्यत संघातम् आपद्यत। सा पृथिवी अभवत्, तस्याम् उत्पादितायां मृत्युः अश्राम्यत् श्रमयुक्तः बभूव। श्रान्तस्य तस्य तप्तस्य सन्तप्तस्य तेजः रसः तेजएव रसः सारः अग्निः भूत्वा निरवर्त्तत निष्क्रान्तवान्।

स मृत्युः आत्मानं त्रेधा त्रिप्रकारं व्यकुरुत विभक्तवान्। कथम्? आदित्यं तृतीयम् अग्निवाय्वपेक्षया, वायुं तृतीयम् अग्न्यादित्यापेक्षया, अग्निं तृतीयं वाय्वादित्यापेक्षया—"निरवर्त्ततााग्निः" इति कथनात् अग्निं तृतीयमिति नोक्तं स्पष्टम्। स एष प्राणः अग्निवाय्वादित्यरूपः त्रेधा विहितः कृतः। तस्य त्रेधाभूतस्य प्राची दिक् शिरः असौ च असौ च ऐशान्याग्नेय्यौ ईर्म्मौ बाहू। अथ अस्य प्राची दिक् पुच्छं जघन्यभागः असौ च असौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी; दक्षिणा च उदीची च पार्श्वे, द्यौः पृष्ठम्, अन्तरिक्षम् उदरम्, इयं पृथिवी उरः। स एष अप्सु प्रतिष्ठितः। एवं विद्वान् जानन्

सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवत् अशनाया मृत्युस्तद्यद्रेत आसीत् स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः। यावान्त्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तञ्जातमभिव्याददात् स भाण्करोत् सैव वागभवत्।

स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्व्वमसृजत यदिदं किञ्चर्च्चो यजूꣳषि सामानि छन्दांसि यज्ञान् प्रजाः पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्व्वं

यत्र क्व च एति गच्छति तत् एव तत्र एव प्रतितिष्ठति स्थितिं लभते।

स अशनाया मृत्युः द्वितीयः मे मम आत्मा शरीरं जायेत उत्पद्येत इति अकामयत। स एवं कामयित्वा मनसा पूर्व्वोत्पन्नेन वाचं मिथुनं द्वन्द्वं समभवत् समभावयत् कृतवान्—"त्रयीविहितं सृष्टिक्रमं मनसाऽन्वालोचयत्" इति भाष्यकारः। तत् तत्र मिथुने यः रेतः बीजम् आसीत् स संवत्सरः अभवत्। ततः पुरा तत्पूर्व्वं न पुनः संवत्सरः आस। तं बीजभूतं एतावन्तं कालं स अबिभः भृतवान् पुष्टिमस्यासाधयत्। यावान् संवत्सरः तावतः कालस्य परस्तात् तं बीजभूतम् असृजत सृष्टवान् कुमाराकारेण सः। तं जातं स अभिव्याददात् विदीर्णमुखं कृतवान् स कुमारः भाण् इति शब्दमकरोत्। सा एव वाक् अभवत्।

स मृत्युः ऐक्षत पर्य्यालोचयत—यदि वा इमं कुमारम् अभिमंस्ये भक्षणाय अभिलष्ये, कणीयः अल्पम् अन्नं करिष्ये इति। एवमालोचयन् स तया वाचा तेन आत्मना मनसा इदं सर्व्वं स्थावरजङ्गमम्

वा अत्तीति तददितेरदितित्वꣳ सर्व्वस्यैतस्यात्ता भवति सर्व्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद।

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत् स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्य्यमुदक्रामत्। प्राणा वै यशो वीर्य्यं तत् प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीरएव मन आसीत्।

बृ, आ, ३।२।१—७।

सोऽकामयत मेध्यं मइदꣳ स्यात् इत्यादि (२।१३)।

११। आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत्

असृजत यदिदं किञ्च—ऋचः यजूंषि सामानि छन्दांसि यज्ञान् प्रजाः पशून्। स यत् यत् एव असृजत तत् तत् अत्तुं भक्षयितुम् अध्रियत धृतवान्। यस्मात् सर्व्वं वै स अत्ति इति तत् तस्मात् अदितेः अदितिनाम्नः अदितित्वं तस्य मृत्योः प्रसिद्धम्। स सर्व्वस्य एतस्य अत्ता भवति, सर्व्वम् अस्य अन्नं भोग्यं भवति यः एवम् एतत् अदितेः अदितित्वं वेद जानाति।

भूयसा महता यज्ञेन भूयः पुनरपि यजेय इति स मृत्युः अकामयत। स अश्राम्यत् श्रममनुभूतवान्। स तपः अतप्यत ज्ञानशक्तिम् उदभावयत्। श्रान्तस्य तप्तस्य तस्य यशः वीर्य्यम् उदक्रामत् निःसृतवत्। प्राणाः चक्षुरादयः वै एव यशः वीर्य्यम्, तत् तस्मात् प्राणेषु उत्क्रान्तेषु शरीरं श्वयितुम् उच्छूनभावं गन्तुम् अध्रियत आरब्धम्। तस्य शरीरे एव मनः आसीत्, तत्रैव व्याप्टतं तत्।

एवं व्याप्टतं किमकरोत् "सोऽकामयत मेध्यं मइदं स्यात्" इत्यादि (२।१३)।

११। मृत्योश्चराचरात्मत्वेन परब्रह्मणैक्यं स्रष्टृत्वञ्चाभ्यदधात्।

ततो ऽहन्नामाभवत् तस्मादप्येतर्ह्यामन्त्रितोऽहमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति स यत् पूर्व्वोऽस्मात् सर्व्वस्मात् सर्व्वान् पाप्मन औषत्तस्मात् पुरुष ओषति ह वै स तं योऽस्मात् पूर्व्वो बुभूषति य एवं वेद।

सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति ततएवास्य भयं वीयाय कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयम्भवती।

सम्प्रति स्रष्टं परात्मना परिष्वक्तस्य भोक्तुरहन्त्वेनाह आत्मैवेति। सृष्टेः प्राक् इदं दृश्यमानं जगत् आत्मा एव पुरुषविधः पुरुषाकारः शिरःपाण्यादिमान् आसीत्। स पर्य्यालोच्य आत्मनः अन्यत् न अपश्यत्। स आदिपुरुषः अहम् अस्मि इति अग्रे व्याहरत्। ततः अहं नामा अभवत्। तस्मात् एतर्हि एतस्मिन् काले अपि आमन्त्रितः कस्त्वमित्युक्तः अग्रे अहम् इत्येव उक्त्वा अथ अनन्तरम् अन्यत् यत् नाम अस्य भवति तत् ब्रूते। यत् यस्मात् स सर्व्वस्मात् अस्मात् पूर्व्वः प्रथमः सन् सर्व्वान् पाप्मनः देहागतमालिन्यानि (८।८) औषत् अदहत्। यः पुरुषः जीवः अस्मात् सर्व्वस्मात् पूर्व्वः प्रधानः बुभूषति भवितुमिच्छति स ह वै तं पाप्मानं मालिन्यम् ओषति दहति। कोऽसौ? यः एवम् आदिपुरुषस्य स्वकार्य्यसाधनाय पापदहनव्यापारं वेद जानाति।

स अबिभेत् भीतोऽभवत्। तस्मात् अद्यत्वेऽपि एकाकी बिभेति भीतो भवति। सोऽयम् पुनः आदिपुरुषः ईक्षां चक्रे पर्य्यालोचितवान् —यत् यस्मात् मदन्यत् न अस्ति, कस्मात् नु बिभेमि इति। ततः एवं पर्य्यालोचनानन्तरम् एव अस्य भयं वीयाय विस्पष्टम् अपगतवत्। कस्मात् हि स अभेष्यत्, द्वितीयात् वै निश्चितं भयं भवति।

स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः । स्त्रिया पूर्य्यत एव ताᳲ समभवत्ततो मनुष्या अजायन्त । सोहेयमीक्षांचक्रे कथं नु मात्मन एव जनयित्वा सम्भवति हन्त तिरोसानीति सा गौरभवदृषभ इतरस्ताᳲ समेवाभवत्ततो गावोऽजायन्त वड़वेतराभवदश्ववृष इतरो गर्द्दभीतरा गर्द्दभइतरस्ताᳲ समेवाभवत्तत एकशफमजायताऽजेतरा भवद्वस्त इतरोऽविरितरा मेष इतरस्ताᳲ समेवाभवत्ततोऽजाऽवयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत् सर्व्वमसृजत ।

स वै पुनः न एव रेमे न रतिम् अन्वभवत् । तस्मात् अद्यत्वेऽपि एकाकी न रमते । स द्वितीयम् ऐच्छत् । स ह पुनः एतावान् एतत्परिमाणः आस बभूव यथा स्त्रीपुमांसौ संपरिष्वक्तौ यत्परिमाणौ स्याताम् । स इमं परिष्वक्तस्त्रीपुरुषप्रमाणम् एव आत्मानं द्वेधा अपातयत्, पातितवान् । ततः पातनात्—पातेर्डतिरिति शाब्दिकाः—पतिः च पत्नी च इति संज्ञे अभवताम् । तस्मात् स्वः आत्मा पतिपत्न्योः परिणयात् प्राक् इदं दृश्यमानम् अर्द्धबृगलम् अर्द्धविदलम् इव इति पुनः आह स्म उक्तवान् याज्ञवल्क्यः । तस्मात् अयम् आकाशः पुरुषार्द्धशिष्टः स्त्रिया स्त्र्यर्द्धेन पूर्य्यते एव । तां परिष्वक्तस्त्रीपुरुषप्रमाणादात्मनः सम्भूतां सं मिथुनभावम् अभवत् अगच्छत् उपगतवान् स आदिपुरुषः ततः मनुष्याः अजायन्त । उह उहह—आत्मानं सम्बोध्य—सा इयम्

सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्व्वमसृक्षीति ततः सृष्टिरभवत् सृष्ट्याꣳ हाऽस्यैतस्यां भवति य एवं वेद।

अथेत्यभ्यमन्थत् स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः। तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेत-

ईक्षांचक्रे पर्य्यालोचयामास—कथं नु मा माम् आत्मनः जनयित्वा उत्पाद्य सम्भवति उपगच्छति? हन्त तिरोसानि तिरोभवानि जात्यन्तरेण प्रच्छन्ना भवानि इति। सा गौः अभवत्, इतरः आदिपुरुषः ऋषभः वृषभः सन् सम्—मिथुनभावमेव—अभवत् अगच्छत्, ततः गावः अजायन्त इतरा वड़वा अभवत्, इतरः अश्ववृषः, इतरा गर्द्दभी इतरः गर्द्दभः सन् तां सम् एव अभवत् उपागच्छत्, ततः एकशफम् एकखुरम् अश्वाश्वतरगर्द्दभाख्यं एवम् अजायत। इतरा अजा अभवत् इतरः वस्तः, इतरा अविः इतरः मेषः सन् तां सम् एव अभवत् उपागच्छत् ततः अजावयः अजाश्च अवयश्च अजायन्त। एवम् एव आपिपीलिकाभ्यः यत् इदं किञ्च मिथुनं तत् सर्व्वम् असृजत।

स आदिपुरुषः अवेत् अभावयत्—अहं वाव सृष्टिः अस्मि, अहं हि इदं सर्व्वम् असृक्षि सृष्टवान् अस्मि इति। ततः अस्मात् भावनात् स सृष्टिः सृष्टिसंज्ञकः अभवत्। यः एवम् आत्मानं सृष्टित्वेन वेद स अस्य आदिपुरुषस्य एतस्यां सृष्ट्यां भवति तद्वत्।

अथेति अनेन प्रकारेण इति स मुखे हस्तौ प्रक्षिप्य अभ्यमन्थत् आभिमुख्येन मथितवान्। मुखात् च हस्ताभ्यां च योनेः अग्निम् असृजत। तस्मात् एतत् उभयं हस्तौ च मुखं च अन्तरतः अलोमकम्। कथमेव अभवत्? हि यस्मात् योनिः अन्तरतः अलोमका—तदुभयोर्योनित्वाभाव्यात् तथाभवदिति भावः। यत् इदं वचः—

ह्येव सा विसृष्टिरेष उ ह्येव सर्व्वे देवाः। अथ यत् किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदꣳ सर्व्वमन्नञ्चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः। यच्छ्रेयसो देवानसृजताथ यन्मर्त्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याꣳ ह्यस्यैतस्यां भवति यएवं वेद।

तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदꣳरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳरूप इति स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः

अमुं यज अमुं यज इति एकैकं देवं याज्ञिकाः आहुः तत् एतस्य आदिपुरुषस्य एव विसृष्टिः—"एकं सत् विप्रा बहुधा वदन्ति" (ऋक् १म, १६४सू, ४६ऋक्) इति वैदिकन्यायेन—देवभेदः। एष उ हि एव सर्व्वे देवाः। अथ यत् किञ्च इदम् आर्द्रं द्रवात्मकं तत् रेतसः स असृजत, तत् द्रवात्मकं वस्तु सोमः एव अन्नं च अन्नादः च एव। इदं सर्व्वम् एतावदेव नातोऽधिकम्। कथम्? सोमः एव अन्नम्, अग्निः अन्नादः। सा एषा ब्रह्मणः हिरण्यगर्भस्य अतिसृष्टिः सृष्टेरुत्कर्षः। का सा? यत् यस्मात् श्रेयसः प्रशस्यतरात् आत्मनः देवान् असृजत। कथमतिसृष्टिरिति सिद्धान्तः? यत् यस्मात् मर्त्त्यः मरणधर्म्मा सन्—आत्मनः पाप्मान् दग्ध्वा—अमृतान् अमरान् देवान् असृजत, तस्मात् अतिसृष्टिः। यः एवम् अस्य आदिपुरुषस्य अतिसृष्टिं वेद, स एतस्याम् अतिसृष्ट्यां भवति तद्वत्।

मूले किमासीत् कथं वा जगदाकारेण तस्याभूदभिव्यक्तिस्तदाह तद्धेदम् इति। ह ऐतिह्ये। तत् इदं परोक्षापरोक्षं जगत् तर्हि तस्मिन् काले अव्याकृतम् अनभिव्यक्तम् आसीत्। तत् अव्याकृतम्—

स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्ति। अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव। स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व्वं एकं भवन्ति। तदेतत् पदनीयमस्य सर्व्वस्य यदयमात्मानेन ह्येतत् सर्व्वं वेद। यथा ह वै पदेनानुविन्देदेवं कीर्त्तिं श्लोकं विन्दते य एवं वेद। वृह, ३।४।१—७।

असौनामा अयम्, इदंरूपः अयम् इति—नामरूपाभ्याम् एव व्याक्रियत अभिव्यक्तमभवत् –"वि आ अक्रियत विस्पष्टं नामरूपविशेषावधारणमर्य्यादं व्यक्तीभावमापद्यत"। तत् तस्मात् एतर्हि एतस्मिन् काले अपि इदं जगत्—असौनामा अयम् इदंरूपः अयम् इति—नामरूपाभ्याम् एव व्याक्रियते अभिव्यक्तीभवति। व्यक्तीभवतीति निर्द्धारणात् जीवपरिष्वकृनिरपेक्षमिदं व्यक्तीभवनमिति वा वुध्येतेति वारणाय स्पष्टमुच्यते—स एष इह प्रविष्टः आनखाग्रेभ्यः—"तत् सृष्ट्वा तदेवानुप्राविशत्" (८।५) इतिवत्। यदि प्रविष्टएव स, तत् कथं न दृश्यते, तत् कारणमाह—यथा क्षुरः क्षुरधाने क्षुरकोशे आहितः प्रवेशितः स्यात्, यथा वा विश्वम्भरः अग्निः विश्वम्भरकुलाये स्वयोनिकाष्ठादौ, तथा तम् आत्मानं न पश्यन्ति जनाः। एवं प्रत्यक्षत्वेऽपि तत् क्रियया तद्दर्शनं सम्भवतीति निर्द्दिशति। स हि अकृत्स्नः असमस्तः, अतः प्राणन् एव प्राणः नाम भवति, वदन् वाक्, पश्यन् चक्षुः, शृण्वन् श्रोत्रं, मन्वानः मनः, तानि एतानि अस्य आत्मनः क्रियानामानि एव—"रूपं रूपं प्रतिरूपः" (५।६) इति श्रौतन्यायेन। हि यस्मात् एष आत्मा अतः प्राणनादिक्रियासमुदायात् एकैकेन अकृत्स्नः असमस्तः भवति, तस्मात् स यः अतः प्राणनादि-

१२। तदाहुर्यद्ब्रह्मविद्यया सर्व्वं भविष्यन्तोमनुष्या मन्यन्ते। किमु तद्ब्रह्मावेद्यस्मात्तत् सर्व्वमभवदिति।

ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात्तत् सर्व्वमभवत्। तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणां तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवᳪ सूर्य्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं

क्रियातः एकैकं प्राणं चक्षुरिति वा उपास्ते न स वेद न स जानाति इति अतः प्राणादिकं परिहाय आत्मा इति एव उपासीत। कथम्? अत्र आत्मनि एते सर्व्वे एकम अभिन्नं भवन्ति। यत् यस्मात् अस्य सर्व्वस्य अयम् आत्मा, तत् तस्मात् एतत् आत्मस्वरूपं पदनीयं गमनीयं प्राप्यम्। हि अतएव अनेन आत्मस्वरूपेण एतत्सर्व्वं वेद जानाति। कथम्? यथा हि पदेन गवादिखुराङ्कितदेशेन तदङ्कमनुसृत्य उद्दिष्टं पश्वादि अनुविन्देत् लभेत, एवं यः एवम् आत्मस्वरूपं वेद जानाति स कीर्त्तिं ख्यातिं श्लोकं गुणवर्णनं विन्दते लभते।

१२। जीवप्रवेशं विना सृष्टिर्न सम्भाव्यतेऽतस्तदेवाग्रे प्रोक्तं सम्प्रति प्रवेष्टुः परब्रह्मणोमुख्यं सृष्टिकर्त्तृत्वं वक्तुमाह तदिति। तत्—वक्ष्यमाणमनन्तरवाक्येऽवद्योत्यं वस्तु—आहुः ब्रह्मविदः। ब्रह्मविद्यया—ब्रह्म परमात्मा तत् यया वेद्यते सा ब्रह्मविद्या तया—सर्व्वं निरवशेषं भविष्यन्तः भविष्याम इत्येवं मनुष्याः यत् मन्यन्ते, किमु तत् ब्रह्म अवेत्, यस्मात् तत् ब्रह्म सर्व्वम् अभवत्?

ब्रह्मानुरूपास्तदुपासकाभविष्यन्ति। ब्रह्म चेदात्मज्ञानेन सर्व्वमभवत्, तदा तज्ज्ञानेनोपासकानामपि सर्व्वात्मता भवितुमर्हतीति प्रश्नोऽयं 'किमु' तत् इति। तदुत्तरेऽभिदधाति—अग्रे सृष्टेः प्राक् ब्रह्म एव आसीत्, तत् आत्मानम् एव न वस्त्वन्तरम्—अहं ब्रह्म अस्मि

**ब्रह्मास्मीति स इदं सर्व्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते। आत्मा ह्येषाᳫं स भवति। अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवᳫं स देवानाम्। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः।**

इति अवेत् ज्ञातवान्। तस्मात् तत् ब्रह्म सर्व्वम् अभवत्। ब्रह्म-व्यतिरिक्तं न यतः किञ्चन आसीत्; अतस्तत् स्वयमेव—अहं ब्रह्मा-स्मीति—चिच्छक्तेर्विषयः। अहं ब्रह्मास्मीति ज्ञानं तस्य नित्यं न तु कालोत्पन्नम्। अवेत् इति कालनिर्द्देशश्चिच्छक्तेरभिव्यक्त्या सृष्ट्या-रम्भबुद्धिस्थकरणाय। यतो न वस्त्वन्तरम् आसीत् यदिदं किञ्च तत् सर्व्वं ब्रह्म स्वयमभवत्। "नामरूपाभ्यामेव व्याक्रियत" इत्युक्त्वा च पुनः "तत् सर्व्वमभवत्" इत्युक्तिः पूर्व्वापरविरोधमुद्भावयेत् यदि न सर्व्वत्र वेदान्तवाक्यानां समन्वयो घटेत। नामरूपे न चिच्छक्तेरनात्मभूते, अतो व्याकृतं सर्व्वं तत्स्वरूपत्वात् ब्रह्मेति निर्द्देशः कार्य्यकारणयोरन-न्यत्वात्। देवानां मध्ये यः यः तत् तत्र प्रत्यबुध्यत स एव तत् ब्रह्म अभवत् तेनैक्यमापत्, तथा ऋषीणां तथा मनुष्याणां—यो यस्तत् प्रत्यबुध्यत तत् अभवत्। तत् एतत् एव कृतकृत्यत्वं पश्यन् ऋषिः वामदेवः प्रतिपेदे प्रतिपन्नवान्—अहं मनुः अभवम्, सूर्य्यः च इति। तत् इदं ब्रह्म सर्व्वभूतानुप्रविष्टम् एतर्हि अस्मिन् काले यः एवं वेद—अहं ब्रह्म अस्मि इति, स इदं सर्व्वं भवति। तस्य कृतार्थस्य अभूत्यै तद्भावाभावाय देवाः न ईशते न समर्थाः भवन्ति, किमु न अन्ये। कथमेवं भवति? हि यस्मात् स एषां सर्व्वेषाम् एकात्मत्वेन आत्मा भवति। कथमेतदेकात्मत्वं न देवानां प्रियं भवति तत्कथयति—अथ

ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्ज्जन्यो यमो मृत्युरीशान इति। तस्मात् क्षत्रात् परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्ता- दुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मै- वान्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳ- सꣳ हिꣳसित्वा।

अन्यः असौ अन्यः अहम् अस्मि इति यः अन्यां देवताम् उपास्ते न स वेद जानाति, यथा पशुः एवं स देवानाम्। यथा पुनः बहवः पशवः मनुष्यं भुञ्जुः पालयेयुः पुष्णीयुः एवम् एकैकः पुरुषः देवान् भुनक्ति पुष्णाति। एकस्मिन् एव पशौ आदीयमाने व्याघ्रादिना क्रियमाणे अप्रियं भवति, किमु बहुषु अपह्रियमाणेषु। तस्मात् एषां देवानां तत् न प्रियं यत् मनुष्याः एतत् ब्रह्मात्मतत्त्वं विद्युः जानीयुः—तथा सति तेषां भोगच्युतिः।

देवयजनपरवर्णविभाग उच्यते--इदं चातुर्व्वर्ण्यम् अग्रे एकम् एव ब्रह्म आसीत् अभिन्नभावेन। 'अतएव महाभारते—"न विशेषो- ऽस्ति वर्णानां सर्व्वं ब्राह्ममिदं जगत्। ब्रह्मणा पूर्व्वसृष्टं हि कर्म्मभिर्वर्णतां गतम्॥" इति। तत् एकं सत् न व्यभवत्, न विभूत- वत्, कर्म्माणि न अशक्नोत्। ततः तत् ब्रह्म श्रेयोरूपं प्रशस्तरूपं क्षत्रम् अत्यसृजत अतिशयेन सृष्टवान्। यानि एतानि देवत्रा देवेषु क्षत्राणि तानि—इन्द्रः वरुणः सोमः रुद्रः पर्ज्जन्यः यमः मृत्युः ईशानः इति। तस्मात् अतिशयेन सृष्टत्वात् क्षत्रात् परं श्रेष्ठं न अस्ति—ब्राह्मणा- नामपि नियन्तृत्वात्। तस्मात् राजसूये क्षत्रियं मञ्चस्थम् अधस्तात्

स नैव व्यभवत् स विशमसृजत यान्येतानि देव-जातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे-देवा मरुत इति।

स नैव व्यवभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्व्वं पुष्यति यदिदं किञ्च।

स नैव व्यमवत्तच्छ्रेयोरूपमत्यसृजत धर्म्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्म्मस्तस्मात् धर्म्मात् परं नास्त्यथो अबली-

अधःस्थः सन् ब्राह्मणः—'ब्रह्मन्' इति आमन्त्रितः ऋत्विक्—उपास्ते—"त्वं ब्रह्मासि" प्रत्युत्तरेण। सुतरां क्षत्रे एव तद्यशः तस्यात्मनः यशः ब्रह्मत्वरूपं दधाति। एवमपि यत् यस्मात् ब्रह्म क्षत्रस्य सा एषा योनिः उद्भवस्थानं तस्मात् यद्यपि राजसूये राजा परमतां श्रेष्ठतां गच्छति प्राप्नोति तथापि अन्ततः राजसूययज्ञान्ते ब्रह्म स्वयोनिं प्रकाशस्थानं ब्राह्मणं पुनः आश्रयति। सुतरां यः राजा एनं ब्राह्मणं हिनस्ति न्यग्भावेन पश्यति स स्वां योनिं प्रभवस्थानम् ऋच्छति हन्ति। श्रेयांसं प्रशस्ततरं हिंसित्वा यथा तथा स पापीयान् भवति।

स वर्णप्रवर्त्तयिता न एव व्यभवत्—कर्म्माणि नैवाशक्नोत्। स विशं वैश्यम् असृजत। यानि एतानि देवजातानि देवजातिभेदाः गणशः गणं गणम् आख्यायन्ते तानि—वसवः, रुद्राः, आदित्याः विश्वेदेवाः मरुतः इति।

स वर्णप्रवर्त्तयिता नैव व्यभवत्। स शौद्रं पूषणं सेवया पोषकं वर्णम् असृजत। इयं पृथिवी वै पूषा। कथम्? इयं हि इदं सर्व्वं पुष्यति यत् इदं किञ्च।

स वर्णप्रवर्त्तयिता वर्णसृजनेन न एव व्यभवत्, तत् तस्मात् श्रेयोरूपं धर्म्मम् अत्यसृजत। तत् एतत् धर्म्मं यत् यस्मात् क्षत्रस्य

यान् बलीयाꣳ समाशꣳसते धर्म्मेण यथा राज्ञैवं यो वै स धर्म्मः सत्यं वै तत् तस्मात् सत्यं वदन्तमाहुर्धर्म्मं वदतीति धर्म्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति।

तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदोऽननूक्तोऽन्यद्वा कर्म्माकृतं यदिह वा अप्यनेवंविद् महत् पुण्यं कर्म्म करोति तद्धास्यान्ततः क्षीयत एव आत्मानमेव लोकमुपासीत स य आत्मानमेव लोक-

नियन्तुः क्षत्रं नियन्तृ, तत् तस्मात् धर्म्मात् परं न अस्ति। अथ राज्ञा यथा, तथा धर्म्मेण अबलीयाम् बलीयांसम् आशंसते जेतुं कामयते। किमसौ धर्म्मः? यः एव स धर्म्मः सत्यम् एव तत्, तस्मात् सत्यं वदन्तं जनं धर्म्मं वदति इति, धर्म्मं वा वदन्तं सत्यं वदति इति आहुः विवेकिनः। हि यस्मात् श्रेयोरूपं धर्म्मम् एव एतत् उभयं धर्म्म-सत्यरूपं, तस्मात् भवति—सिद्ध्यति धर्म्मात्परं न इति।

तत् एतत् ब्रह्म क्षत्रं विट् शूद्रः चातुर्व्वर्ण्यम्, देवेषु अग्निना एव ब्रह्म अभवत्, मनुष्येषु ब्राह्मणः ब्राह्मणस्वरूपेण, क्षत्रियेण क्षत्रियः इन्द्रादिदेवाधिष्ठितः, वैश्येन वैश्यः वसुरुद्रादिदेवाधिष्ठितः। शूद्रेण शूद्रः पृथिव्यधिष्ठितः। हि यतः एताभ्याम् अग्निस्य ब्राह्मणस्येति रूपाभ्यां ब्रह्म अभवत्, अतः देवेषु अग्नौ एव मनुष्येषु ब्राह्मणे एव लोकम् इच्छन्ति। अथ यः पुनः स्वं लोकम्—"एषोऽस्य परमोलोकः" (५।३।[५८५]) इति—परं ब्रह्म अदृष्ट्वा अपरोक्षम् अज्ञात्वा अस्मात्

मुपास्ते न हास्य कर्म्म क्षीयते अस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते। बृ, आ, ३।४।६—१५।

अथो अयं वा आत्मा इत्यादि (२।१५)।

१३। आत्मैवेदमग्र आसीदेकएव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेत्येतावान् वै कामो नेच्छꣳश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ

लोकात् प्रैति, स अविदितः स्वलोकानभिज्ञः एनम् आत्मानं न भुनक्ति न पालयति। वेदः वा अननूक्तः अनधीतः, इह यत् अन्यत् वा कृष्यादि कर्म्म तत् अकृतं येन स यथा तथा, अपि चेत् अनेवंविद् महत् पुण्यं कर्म्म करोति अथ तत् पुनः अन्ततः अन्ते क्षीयते एव। आत्मानम् एव लोकम् उपासीत। स यः आत्मानम् एव लोकम् उपास्ते, न पुनः अस्य कर्म्म क्षीयते, अस्मात् हि आत्मनः यत् यत् कामयते तत् तत् सृजते लभते।

अथ अयं वा आत्मा इत्यादि (२।१५)।

१३। "स वै नैव रेमे" (८।११) इति सामान्यतो यदुक्तं तदेव विशेषेण प्रदर्श्यते आत्मेति। इदं जायादिकं यत् किञ्चन दृश्यते अग्रे जन्मकाले एकः आत्मा एव आसीत्। यदि जायादिकं सर्व्वं तदभिन्नं तत् कुतस्तेषां स्वातन्त्र्यमासीत्? स आत्मा अकामयत—जाया मे स्यात्, अथ प्रजायेय प्रजारूपेण उत्पद्येय, वित्तं मे स्यात्, अथ कर्म्म कुर्व्वीय इति एतावान् एव कामः जीवस्याभिलषितविषयः। अथ नैतावतोऽधिकः? न इच्छन् च एतावानेव भवत्विति अनिच्छन्नपि, न अतः भूयः अधिकं विन्देत् लभेत, तस्मात् अपि एतर्हि एतस्मिन् काले जीवः कामयते—जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म्म कुर्व्वीय इति। यावत् अपि एतेषां जायादीनाम् एकैकं न

वित्तं मे स्यादथ कर्म्म कुर्व्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्नएव तावन्मन्यते तस्यो कृत्स्नता मनएवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्माऽऽत्मना हि कर्म्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्व्वं यदिदं किञ्च तदिदꣳ सर्व्वमाप्नोति य एवं वेद। ३।४।१७।

१४। त्रयं वा इदं नाम रूपं कर्म्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्व्वाणि नामान्युत्तिष्ठन्ति। एतदेषाꣳ सामैतद्धि सर्व्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि नामानि बिभर्त्ति।

स प्राप्नोति, तावत् स अकृत्स्नः असमस्तः एव मन्यते। तस्य कृत्स्नता तु पुनः जायादिकं विनापि—अस्य जीवस्य मनएव आत्मा—पतिः यजमानः सर्व्वविधकार्य्यकरणप्रवृत्तिसहायत्वात्, वाक् जाया—मनोऽनुगामित्वात् तस्याः, प्राणः प्रजा—वाङ्मनसाभ्यां चेष्टाया उत्पत्तेः, चक्षुः मानुषं वित्तम्। कथम्? हि यस्मात् चक्षुषा तत् वित्तं विन्दते लभते। श्रोत्रं हि दैवं वित्तम्। कथम्? हि यस्मात् श्रोत्रेण तत् वित्तरूपं वेदादिकं शृणोति। आत्मा देहः एव अस्य जीवस्य कर्म्म। कथम्? हि यस्मात् आत्मना देहेन कर्म्म करोति। स एष पाङ्क्तः—मनआदिपञ्चभिर्निर्वृत्तः—यज्ञः, पाङ्क्तः पशुः—यज्ञोपकरणम्, पाङ्क्तः पुरुषः यज्ञानुष्ठाता। किं बहुना यत् इदं किञ्च तत् सर्व्वं पाङ्क्तम्। य एवं वेद स सर्व्वम् आप्नोति।

१४। नामरूपकर्म्मविषयकं तत्त्वं विशेषेणोच्यते त्रयमिति। इदं जगत् त्रयं—नाम रूपं कर्म्म। तेषां नाम्नां वाक् इति एतत् सामान्यम् एषां नाम्नाम् उक्थम्—नामोत्थानकारणम्। तदेतत्

अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्व्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाᳪ सामैतद्धि सर्व्वैरूपैः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि रूपाणि बिभर्त्ति ।

अथ कर्म्मणामात्मेत्येतदेषामुक्थमतो हि सर्व्वाणि कर्म्माण्युत्तिष्ठन्त्येतदेषाᳪ सामैतद्धि सर्व्वैः कर्म्मभिः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि कर्म्माणि बिभर्त्ति । तदेतत्त्रयᳪ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतदमृतᳪ सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः । बृ, आ, ३।६।१—३ ।

प्रतिपादयति—हि यस्मात् अतः वाक्सामान्यात् सर्व्वाणि देवदत्तयज्ञदत्तादीनि नामानि उत्तिष्ठन्ति । एतत् वाक्सामान्यम् एषां नामविशेषाणां साम । कथम् ? हि यस्मात् एतत् वाक्सामान्यं सर्व्वैः नामभि समम्—नाममात्रेण सम्बन्धवशादस्य । एतत् वाक्सामान्यम् एषां नामविशेषाणां ब्रह्म अन्तर्भावकम् । हि यस्मात् एतत् सर्व्वाणि नामानि बिभर्त्ति ।

अथ रूपाणां चक्षुः इति एतत् सामान्यम् एषां रूपाणाम् उक्थम् अभिधेयं—चक्षुर्विषयत्वेन सर्व्वेषां ग्रहणात् । तदेव प्रतिपादयति—हि यतः अतः चक्षुःसामान्यात् सर्व्वाणि रूपाणि उत्तिष्ठन्ति । एतत् चक्षुःसामान्यम् एषां रूपाणां साम । हि यतः एतत् सर्व्वैः रूपैः समम्—रूपमात्रेण सम्बन्धवशादस्य । एतत् चक्षुःसामान्यं रूपाणां ब्रह्म अन्तर्भावकम् । हि यस्मात् एतत् सर्व्वाणि रूपाणि बिभर्त्ति ।

अथ कर्म्मणाम् आत्मा शरीरः इति एतत् सामान्यम् एषां कर्म्मणाम् उक्थम्—शरीरादेव कर्म्मणामुत्थानस्योक्तत्वात् । तदेव प्रतिपादयति—हि यतः अतः आत्मसामान्यात् सर्व्वाणि कर्म्माणि उत्तिष्ठन्ति । एतत् आत्मसामान्यम् एषां साम । कथम् ? हि यस्मात्

१५। अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः॥ श्वे, ४।५।

१६। स्वभावमेके कवयो वदन्ति
कालं तथान्ये परिमुह्यमानाः।
देवस्यैष महिमा तु लोके
येनेदं भ्राम्यते ब्रह्मचक्रम्॥

एतत् सर्व्वैः कर्म्मभिः समम्—कर्म्ममात्रेण सम्बन्धवशादस्य। एतत् आत्मसामान्यम् एषां कर्म्मणां ब्रह्म अन्तर्भावकम्। हि यस्मात् एतत् सर्व्वाणि कर्म्माणि बिभर्त्ति। तत् तस्मात् एतत् त्रयं सत्—एकम्; अयम् आत्मा शरीरम् उ पुनः एकः सन् एतत् त्रयम्—नामरूपकर्म्मा-त्मकत्वादस्य। तत् एतत्—त्रयाणामेकत्वम् एकस्य त्रित्वम्—अमृतम् अविनाशि। कथम्? सत्येन छन्नम्—ब्रह्मणि विद्यमानाभ्यां नाम-रूपाभ्यां व्याप्तम्। एतदेव स्फुटतयोच्यते—प्राणः क्रियात्मकः एव अमृतम्, नामरूपे—सत्यम्, ताभ्यां नामरूपाभ्यां प्राणः छन्नः व्याप्तः।

१५। पराञ्चापराञ्च प्रकृतिं तदतीतं परं ब्रह्म च स्फुटतयाभि-दधाति अजामिति। बह्वीः प्रजाः सृजमानां, सरूपां समानाकारां स्वस्वरूपतया अभिन्नां, लोहितकृष्णशुक्लाम् तेजोबन्नलक्षणाम्, एकाम् अजाम् अपरां प्रकृतिम् एकः अजः जीवः परा प्रकृतिः जुषमाणः सेवमानः अनुशेते भजते तस्याम् आसक्तः सन् तिष्ठते। अन्यः अजः नित्यबुद्धः परात्मा भुक्तभोगाम् भुक्ताः पालिताः भोगाः विषयाः यस्याः ताम् एनां जहाति निरस्तकुहकत्वात् त्यजति तदतीतः सन् तिष्ठति न तां जुषत इति भावः।

१६। भगवच्छक्त्यैव जगत् प्रवर्त्तमानमित्याह स्वभावमिति।

येनावृतं नित्यमिदं हि सर्व्वं
ज्ञः कालकारो गुणी सर्व्वविद्यः।
तेनेशितं कर्म्म विवर्त्तते ह
पृथ्व्याप्तेजोऽनिलखानि चिन्त्यम्॥

तत् कर्म्मकृत्वा विनिवर्त्त्य भूय-
स्तत्त्वस्य तत्त्वेन समेत्य योगम्।
एकेन द्वाभ्यां त्रिभिरष्टभिर्व्वा
कालेन चैवात्मगुणैश्च सूक्ष्मैः॥

आरभ्य कर्म्माणि गुणान्वितानि
भावांश्च सर्व्वान् विनियोजयेद् यः।
तेषामभावे कृतकर्म्मनाशः
कर्म्मक्षये याति स तत्त्वतोऽन्यत्॥

एके परिमुह्यमानाः भ्रान्ताः सन्तः जगत्कारणत्वेन स्वभावं तथा अन्ये कालं वदन्ति। लोके देवस्य परात्मनः एष महिमा माहात्म्यं येन इदं ब्रह्मचक्रं ब्रह्माण्डं जगत् भ्राम्यते वहमानम् अस्ति।

येनेति। येन परात्मना हि इदं सर्व्वम् आवृतम्, स ज्ञः ज्ञान-स्वरूपः—स्वभावः पुनर्न तथा, कालकारः कालस्य प्रवर्त्तकः, गुणी कल्याणगुणसम्पन्नः, सर्व्वविद्यः सर्व्ववित्; येन परात्मना ईशितं प्रेरितं कर्म्म क्रियामात्रं जगद्भ्रमणादिव्यापारः विवर्त्तते विविधाकारेण प्रकाशते ह खलु। पृथ्व्याप्तेजोऽनिलखानि क्षित्यप्तेजोमरुद्व्योमानि सर्व्वमेतत् चिन्त्यं संशयास्पदं—कारणत्वेन यत् पूर्व्वमुक्तं तत् मूलकारणोल्लेखेनात्र मीमांसितव्यम्।

तदेव मीमांसते तदिति आरभ्येति। तत् कर्म्म पृथिव्यादिकार्य्यं कृत्वा सृष्ट्वा विनिवर्त्त्य समालोच्य भूयः पुनः तत्त्वेन भूम्यादिना तत्त्वस्य

आदिः स संयोगनिमित्तहेतुः
परस्त्रिकालादकलोऽपि दृष्टः।
तं विश्वरूपं भवभूतमीड्यं
देवं स्वचित्तस्थमुपास्य पूर्व्वम्॥

स वृक्षकालाकृतिभिः परोऽन्यो
यस्मात् प्रपञ्चः परिवर्त्ततेऽयम्।
धर्म्मावहं पापनुदं भगेशं
ज्ञात्वात्मस्थममृतं विश्वधाम॥

श्वे, ६।१—६।

परतत्त्वस्य आत्मनः एकेन द्वाभ्यां त्रिभिः अष्टभिः वा कालेन सूक्ष्मैः आत्मगुणैः च योगं समेत्य सम्पाद्य, गुणान्वितानि सत्त्वादिगुणसम्भूतानि कर्म्माणि क्रियाः आरभ्य सर्व्वान् भावान् विषयान् यः विनियोजयेत् स्व-स्व-कर्म्मणि नियोजयेत्, स तेषाम् अभावे पूर्व्वावस्थां प्रापिते कर्म्मक्षये क्रियाविलोपे कृतकर्म्मनाशः कृतात्मक्रियाशक्त्युपसंहारः तत्त्वतः भूम्यादेः स अन्यत् विलक्षणं याति प्राप्नोति।

आदिरिति। स आदिः, संयोगनिमित्तहेतुः संयोगानां सृष्टीनां निमित्तं हेतुः च निमित्तोपादानकारणं, त्रिकालात् अतीतानागतवर्त्तमानात् परः अतीतः, अकलः निष्कलः प्रपञ्चातीतः अपि दृष्टः दर्शनविषयः। तं विश्वरूपं विश्वानि रूपाणि अस्य—"रूपं रूपं प्रतिरूपः" इति श्रौतन्यायात्—भवभूतम् उत्पत्तिहेतुभूतम्, ईड्यं स्तवनीयं स्वचित्तस्थं देवम् उपास्य यातीति पूर्व्वेणान्वयेन पूर्व्वं याति श्रेष्ठत्वं प्राप्नोति।

स इति। यस्मात् प्रपञ्चः परिवर्त्तते विविधाकारं प्राप्नोति, धर्म्मावहं—धर्म्मः आवहति यस्मात्, पापनुदं पापापहर्त्तारं, भगेशम्

ऐश्वर्य्यं शम्, अमृतं विश्वधाम विश्वाधारभूतं यं ज्ञात्वा पूर्व्वं याति, स वृक्षकालाकृतिभिः वृक्षः संसारः संसाराकारेभ्यः कालाकारेभ्यः परः अन्यः।

*

* *

पूर्व्वाध्याये परा प्रकृतिरभिहिताऽस्मिन् पुनरपरा। परायाः यथा परिणामित्वं स्वरूपैक्य-मथापि बहुभवनं दृश्यते, तथैवापराया अपि। विचित्रतयोभयोः परेण भिन्नत्वमपि समानम्। तत् कथं परापरेति भिन्ना संज्ञा? स्वरूपाभिव्यक्तितारतम्येन। वदति यदा श्रुतिः—"न प्रज्ञं नाप्रज्ञम्" (३।५[६८५]) इति तदा परायाः युगपद्द्विविधविषयज्ञातृत्वमपरायाः पुनर्ज्ञातृत्वविरहितत्वं सूचितम्। अस्या वैचित्र्ये यज्ज्ञानादिकं प्रकटीभवति, तत्तु साक्षात्परस्यैव न त्वपरायाः, परायास्तु पुनर्ज्ञानवैचित्र्यमेव जीवातु। एवं भेदकारणे सति कथमुभयोर्भगवत्प्रकृतित्वमभिन्नत्वञ्च। कोऽयं वैचित्र्यस्य जनिता? स्वयं पर एव। तज्ज्ञानशक्तावसति वैचित्र्ये वैचित्र्यसमागमस्य न भवेज्जातु सम्भावना। यदि तत एव वैचित्र्यस्यागमः, तत् कथं तस्मिंस्तदारोपेऽसम्मतिः? स्थिरता-भावात्। वर्णादीनां यदपि वस्तुनिष्ठस्थिरत्वं भासते लोकदृष्टौ, तथापि क्षणे क्षणे तेषामुत्पद्य-मानत्वं परीक्षातो भवति प्रतिपन्नम्। किमनेन क्षणत्वमेषामायाति? स्यान्मृषात्वं यद्यपि सर्व्वेषां वस्तूनामविशेषेण वर्णादिधर्म्मप्रकटनसामर्थ्यं दृश्येत। अतएवाह भाष्यकारः—"यच्च यदात्मना यत्र न वर्त्तते, न तत् तत्र तत उत्पद्यते, यथा सिकताभ्यस्तैलम्। प्रागुत्पत्तेरनन्यत्वादु-त्पन्नमप्यनन्यदेव कारणात् कार्य्यमित्यवगम्यते। यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्य्यमपि त्रिषु कालेषु सत्त्वं न व्यभिचरति। एकञ्च पुनः सत्त्वम्, अतोऽप्यनन्यत्वं कारणात् कार्य्यस्य (२।१।१६) इति। "य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान् निहितार्थो दधाति" (६।७) इत्यनया यदुक्तमिह तत् प्रतिपन्नम्। अत्र शक्तौ विचित्रता, "निहितार्थः" इति विशेषणेन तद्वैचित्र्यतायान्तु यज्ज्ञानादि प्रकाशमानं तत् स्वयं परात्मन इति स्फुटं प्रतीयते। चैतन्यमात्मनि निरुध्य जगति केवलं शक्तिवैचित्र्यसंक्रामणं, वर्णादिवैचित्र्यं जगति निक्षिप्य जीवात्मनि पुनश्चैतन्यसंयोजनं परस्यैव महिमा। कथं स एवमकरोदिति जिज्ञासा भूतार्थवादि-भिर्नापेक्ष्यते। अतो नास्या अवकाशो वेदान्तेषु।

१। अथ परस्य भूतयोनित्वं निर्द्धार्य्य ततः पृथिव्यादीनां निखिलस्य विश्वस्य च सम्भवो विना-यासेन सिद्ध्यतीत्याह। सर्व्वत्र तपसा सृष्टेः प्रवृत्तिर्वर्ण्यते। तपो हि प्रयाससाध्यम्; तन्न सम्भवति परात्मनि, सुतरां प्रथमं जगदुत्पत्तिमप्रयाससाध्यत्वेनैवाचीकलिखत्। पश्चात् किं वा वेदान्तानां समयमनुसृत्य 'तपसा चीयते' इत्युदलिखीत्? तपसा बहुभवनच्छेदाभिप्रेतं तपोऽधीनत्व-मेव परस्यावश्यं स्वीकर्त्तव्यम्। 'ज्ञानमयं' तस्य तप इति वचनेन तपसस्तत्स्वरूपत्वं चेत्, मयटा तस्य प्राचुर्य्यं पुनर्जीवज्ञानवत् सङ्कोचविकासमात्मनो ज्ञापयति। ज्ञानप्राचुर्य्येण ब्रह्मोपचीयत इत्यपि पूर्व्ववदसमञ्जसं स्वरूपस्वरूपिणोर्भेदसाधनेन स्वरूपाधीनत्वप्रथनात्तस्य। प्रथमं स्वरूपस्य प्राचुर्य्यं, तेन प्राचुर्य्येण च ब्रह्म उपचय, इति जीववत्तस्योपचितस्योपचितत्वं दर्शयति। एव-

मव्यवहार्य्यमिति तस्य विशेषणं न युज्यते। स्रष्टृत्वाभिमानिनि तस्मिन् घटते पुनरात्मोपचय इति चेत्, तेनापि न दोषपरिहारो ब्रह्मण एवोपचयस्योक्तत्वात्। नेदं परं ब्रह्म कार्य्यं ब्रह्मेति चेत्, सर्व्वेषु वेदान्तेष्वनास्थोत्पद्यते, तैर्जगत्कारणत्वेन ब्रह्मणो निर्द्देशात्, तद्भिन्नान्यस्य स्रष्टृत्वनिषेधाच्च। यत्र च तद्व्यतिरिक्तस्यान्यस्य स्रष्टृत्वशङ्कोपतिष्ठते, तत्र स्वयमेव श्रुतिर्वाक्यान्तरेण तामपनुदति। यथा हि "नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत्" (८।१०) इत्यादौ मृत्युकृतसृष्टिशङ्का-निवारणाय "सोऽर्च्चन्नचरत्" इत्युक्त्वा परात्मशक्त्याश्रयेण ततोऽबादिना विसृष्टिरिति भण्यते। यथा वा "आत्मैवेदमग्र आसीत् पुरुषविधः" (८।११) इत्यत्र जीवकृतसृष्टिनिरासाय "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिना श्रुत्यन्तरेणान्वयात् जीवपरिच्छिन्नः परात्मन उल्लेखः। अतएव भाष्यकार आह "नामरूपयोरपि निर्व्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत सम्भवति। 'अनेन जीवे-नात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति ब्रह्मकर्त्तृत्वश्रवणात्। ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्व्वोढृत्वमस्ति? वाढमस्ति अभेदस्तत्र विवक्षितः। नामरूपनिर्व्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति (१।३।४१)" इति। अतएवात्र "ब्रह्म नाम रूपमन्नञ्च जायते" इति कार्य्यं ब्रह्म ततोऽभवदित्युक्तम्। सत्येवं कथं वा "तपसा चीयते ब्रह्म" इत्यस्या-सामञ्जस्यं समञ्जसं भवतीति विवेच्यम्। जीवानुप्रवेशेन स्रष्टुरभिव्यक्तिरिति वेदान्तसमयः। जीवबुद्धौ न पुनरनन्तं ब्रह्म निरवशेषधारणायोग्यम्। सृष्टिप्रकाशेन समं क्रमशः स तत् धारणा-विषयं करोति, अतस्तेनानुपचीयमानत्वेऽपि स्वानुभूत्या ब्रह्मण उपचीयमानत्वमुपलभ्यते। वस्तुतस्तु न ब्रह्मोपचीयते किन्तर्हि जीवबुद्धौ सृष्टिपरम्परया तज्ज्ञानस्वरूपस्य क्रमप्रकाश एव। अतएवाह श्रुतिः "तपसा चीयते" इति। तपसा—क्रमाभिव्यक्त्योपचीयमानवत् प्रतीयमानेन ज्ञानेन—ब्रह्म उपचीयते वृद्धिं गतमित्युपलभ्यते जीवेन। अतएव हि स्रष्टादावात्मनः पुरुषविधत्वमाह (८।११) श्रुतिः।

२। न खलु वेदान्तेषु जीवोत्पत्तिर्निर्द्दिश्यते, तस्याजत्वमेव सर्व्वत्र प्रसिद्धम्। कथमत्र भाष्यकारेण 'भावाः' जीवा इति व्याख्यातम्। भावशब्दस्य सत्तामात्राभिधेयतया जीवव्यतिरिक्त-मन्यत् सर्व्वं कथं न तेन गृहीतम्। "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि व्युच्चरन्ति" (२।५[५०४]) इत्युक्त्वा न जीवस्य किन्तर्हि जीवादेव सर्व्वोत्पत्तिः श्रूयते। न जीवात् किन्तर्हि जीवपरिच्छिन्नादिति चेत्, तथापि नास्य जन्म श्रूयते। बाढम्, "चेतनश्चेतनानां" (५।६) "अस्मिन्नात्मनि......सर्व्व एत आत्मानः समर्पिताः" (२।२१) इत्यादासु जीवानां बहुत्वमथ च "आत्मैवेदमग्र आसीत् पुरुषविधः" (८।११) "अनेन जीवेनात्मनानुप्रविश्य" (१२।१) इत्याद्यास्वेकत्वमस्य दृश्यते, ततो जीवस्यैकस्य बहुभवनं परात्मन एवेति सिद्धत्वात् 'भावाः' जीवा इति व्याख्या न दोषभाक्। श्रुतिमिमामेवोद्दिश्य भाष्यकार आह—"यद्यपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसम्बन्धाद्गन्तव्यम्। उपा-ध्युत्पत्तौ अस्योत्पत्तिस्तत्प्रलये च प्रलय इति" (२।३।१७) इति। वस्तुतस्तु परा चापरा च प्रकृतिः परात्मनोऽभिन्नत्वादजत्वेन श्रुत्या निर्द्दिष्टा, "अजायमानो बहुधा व्यजायत" इति श्रौतन्यायेन बहुभवनमेव जन्मेत्याख्यातमिति ज्ञेयम्।

३ । परापरप्रकृतिपरिष्वक्तः पुरुष इत्यभिधीयतेऽतएवात्र सृष्टिप्रकरणे "दिव्यो ह्यमूर्त्तः पुरुषः" (५।८) इति पुरुषादेव प्राणमनआदीनामुत्पत्तिरूपवर्णनेन, वैदिकरीत्या सर्व्वभूतान्तरात्मनोऽस्य रूपञ्च परिकल्पितम् । किमनेन रूपपरिकल्पनयेति तत्त्वं विवेच्यम् । सर्व्वातीतं परं ब्रह्म यदपि योगप्रलयरीत्या योगिजनानुभूतौ प्रतीतिविषयं भवति, तथापि तदुपलब्धा तेनानुस्यूत तिष्ठति ; अन्यथा तदुपदेश एव वेदान्तेषु न जातु सम्भवेत् । अतएव शिवस्वरूपस्य तस्य परापरात्मप्रकृतौ नित्यप्रकाशमानत्वं स्वप्रकाशतयाभिधीयते । ततएव सृष्ट्यादौ "अहं ब्रह्मास्मि" (८।१२) इति वेदनं तस्य विकारित्वं नापादयति । किमिदं स्वप्रकाशत्वम् ? अहमस्मीति ज्ञानञ्चेत्, न वयं स्वात्मातिरिक्तविषयविज्ञानं विना ऽहमिति विविक्ततया ग्रहीतुं शक्नुमः । किञ्चास्ति परे तस्मिन् स्वात्मातिरिक्तं विषयजातं येन स्यात्तस्याहमिति ज्ञानं परिस्फुटम् ? अस्ति चेत्तेन तस्यानन्तत्वस्य हानिः । नास्ति चेदहमिति ज्ञानस्य नास्त्यवकाशः । आत्मानमेवात्मना स जानाति, ततः पुनरात्मान्तर्भूतशक्तिशक्तिवैचित्र्याणां ज्ञातृत्वात्तस्याहमिति ज्ञानमिति वदामः । न वयं प्रतिरोधं विनात्मज्ञानवन्तोऽतो भवेत्तदेव परे तथेति भणितं योगिप्रत्यक्षात्मज्ञानेन प्रतिरुद्धं भवति । योगाभिनिविष्टानां समीपतः सर्व्वं तिरोधत्ते, केवलात्मज्ञानमात्रं शिष्यते ऽहमस्मीत्याकारेण । तस्मिन्नहमि पुनः सर्व्वेषां स्फूर्त्तिरात्मान्तर्भूततया प्रदर्शयति किमासीत् परे सृष्ट्यादौ । रूपपरिकल्पनमेतदेव दर्शयति । न हि चन्द्रसूर्य्यादयश्चन्द्रसूर्य्याद्याकारेण नित्यकालं सन्ति, तथा सति तेषामुत्पत्तिकथनं प्रलापएव स्यात् । शुद्धे चिन्मात्रे परब्रह्मणि चिदाकारा सृष्टिः नित्यकालं तिष्ठतीति वदामः । जीवसन्निधौ तस्याः शक्तिवैचित्र्ययोगात् प्रकटनमेव कालकृतम् । "रूपं रूपं प्रतिरूपः" (५।६) इति श्रुतिः "रूपं रूपम्" इत्यनेन कालकृतरूपप्रकटनं "प्रतिरूपः" इत्यनेन चिन्मात्रतया नित्यस्थितं तत् कारणं दर्शयति । यत्रोपनिषद्धि पुरुषरूपं परिकल्प्यते तत्र "रूपं रूपं प्रतिरूपः" इत्युभयमेवैकत्र सा निर्देशयति । अत "एष सर्व्वभूतान्तरात्मा" इति निर्वचनं "एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" (५।६) इत्यनयान्वयं सूचयति । कथमेवं करोतीति जिज्ञासा निष्फला, यतो भवति इक[illegible]तानां कार्य्याणां दर्शनेन दृगतीतानां कारणानां प्रतीतिः । अतएव हि साधनकाले "तज्जलान्" इति प्रक्रमात् (६।४[२३०पृ]) कार्य्यत्रयेण तस्यापृथग्भावतया स्थापनेन वा साक्षाद्ब्रह्मदर्शनम् । ततएव च पुरुषादन्यादुत्पत्तिकथनान्तरं "पुरुषएवेदं विश्वम्" इत्युक्त्वा सर्व्वं ब्रह्मण्यन्तर्भूय हृदि तद्दर्शनेनाविद्याग्रन्थिच्छेदनमुपदिशति ।

४ । 'तस्माद्वा एतस्मादात्मनः' इत्यत्र 'तदेतत्पदयोः परोक्षापरोक्षपरयोर्ब्रह्मजीवपरत्वम्' इति निर्णीय मिताक्षरब्रह्मसूत्रविवृतौ यदुक्तं—"अखण्डार्थस्यैव पुरुषा पर्य्यवसायित्वेन प्रकृतोपनिषदः—केवलसृष्टिपरत्वे पुरुषार्थपरत्वायोगात्, ईशात् प्रवृत्तामेव जगत्सृष्टिं मानान्तरेण निश्चदीकृतामुपादायानायासेनात्मतत्त्वं बोधयितुमखण्डार्थं पुरस्कृत्यैव—प्रवर्त्तितत्वात्, यद्यपि केवलादेव ईशाज्जगत्प्रवृत्तिर्भवति, तथापीहेशस्यापि भूमाधिष्ठानकत्वेन भूम्नः सर्व्वादिमूलत्वात् तमेव भूमानं जीवेशाश्रयमखण्डार्थभूतमाश्रित्य सृष्टिमवलम्ब्यात्मतत्त्वं पुरुषार्थपर्य्यवसायीह निरूपितमिति विवेक्तव्यम्" इति,—तत् साधु । तदेवात्रासञ्जनीयम् ।

५। 'सोऽकामयत' 'बहु स्यां प्रजायेय' 'तपोऽतप्यत' इत्यादिकं परात्मन: काले सृष्ट्यभिलाष:, बहुभवनं, पर्य्यालोचनञ्चाभिधाय तस्मिन् विकारमापादयति। वदसि चेत् मायिकमेतत् सर्व्वं, तदपि रहस्यान्तरमुद्भावयति, यदुद्घाटने विफलप्रयास एव भवे:। न खलु जगत् तत्क्रियाशक्तिमनपेक्ष्योदेति। क्रियाशक्ते: कालस्याभ्युदय: (८।१६)। अभ्युत्थानेनास्य परात्मक्रियाप्रकाशो भवति। सुतराम् 'अकामयत' 'स्यां' 'प्रजायेय' 'अतप्यत' इत्यादिकं तदेव सूचयति। बहुभवनन्त्वात्मनि विद्यमानं नामरूपयोर्व्यक्तीकरणम्। अतएव भूमत्वं तस्य श्रुतौ प्रसिद्धम्। तयोर्व्यक्तीभवनन्तु न तत: स्वातन्त्र्यमुद्भावयतीति तदनुप्रवेशाभिवचनमन्तर्य्यामित्वविद्यमानस्य। एवमनुप्रवेशेऽपि दृश्यमानेऽदृश्यमानत्वेन वचनीयेऽनिर्व्वचनीयत्वेन, आश्रितेऽनाश्रितत्वेन सोऽतिष्ठत्। भवतु तावत्तत्तथा। "विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च" इति न घटते तस्मिन्। घटते पुनर्व्युत्क्रमेण—अविज्ञाने विज्ञानम्, अनृते सत्यमिति। अचेतनानां चेतनवत् क्रिया तदधिष्ठानेन, अस्थिराणामस्थिरत्वेऽपि रूपान्तरेण स्थितिस्तत्सत्तामूलकत्वेन।

६। "त्रयं वा इदं नाम रूपं कर्म्म" (८।१४) इत्यत्र जगति प्राधान्येन प्रकाशमाना क्रियाशक्तिरुच्यते। तत्र सन्देह उपतिष्ठते "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (६।११) इति क्रियात्वेन यस्या उल्लेखो सैषा नैव। परन्तु "निष्कलं निष्क्रियं शान्तम्" (६।१२) इत्यत्र क्रियाविरहितत्वश्रवणात् 'अस्य शक्ति:' इति भेदनिर्देशे नेयं स्वरूपभूता किन्तु मायिकीति भवितुमर्हति। शक्तौ क्रिया, स तु परात्मा स्वयं निष्क्रिय इति सिद्धान्तमनुसृत्य क्रियाया जगन्निष्ठत्वमिति "त्रयं वा नाम रूपं कर्म्म" इति प्रतिपादयति। यद्येवं यदवोक्तं "तदात्मानं स्वयमकुरुत। तस्मात्तत् सुकृतमुच्यत इति" तन्न सिद्ध्यति। निष्क्रियं कथमात्मानं कर्त्तुं शक्नुयात्, सुकृतनामभाजनं वा स्यात्। सक्रियत्वेऽपि शान्तत्वेन यदि निष्क्रियत्वं सम्भवति सर्व्वविधतरङ्गशून्यत्वात् तदेव परे नान्यस्मिन्। अनन्तशक्तेस्तरङ्गवर्ज्जितत्वेऽपि तत: क्रियासंक्रमणेन तच्चमितचाञ्चल्यं जगति प्रकाशते, सुतरां तदधिकृत्य "त्रयं वा इदं नाम रूपं कर्म्म"। तरङ्गवर्ज्जितानन्तशक्तिमभिप्रेत्य "निष्कलं निष्क्रियं शान्तम्" "तदात्मानं स्वयमकुरुत" इत्युभयं सिद्ध्यति।

७।८। सप्तमे (७) सर्व्वातीतस्वतन्त्र: परात्मा एक एवासीत्, यदिदं किञ्च दृश्यते तत्ततोऽभूदिति सर्व्वजनानुमोदितं रूपमिदमाश्रित्य सृष्टिप्रकरणं न्यबध्नात्। न पुन: स्थितिस्थानमनुद्धृत्य जीवस्यागम: सम्भवत्यतस्तदुद्भावनात् प्रागत्र अपां सृष्ट्युपादानम्, तेज:, पृथिवीम्, अपश्च लोकतया सोऽसृजदित्युक्ति:। एवं विषयसर्ज्जनानन्तरं विषयशायिनं विषयिणं स तेषु प्रथमाभ्योऽद्भ्य एवोदभावयत्। एवं विषयविषयिणोर्नियतमेकत्र स्थितिर्जीवबुद्धौ जगत्प्रीडासनं, शक्तिशक्तिमतोरभिन्नत्वं भगवच्छक्तिरूपत्वञ्च दर्शयति। विषयविषयिणोरेवं नित्ययोगमनुभूय जीवस्य शरीरेन्द्रियवत्त्वेन प्रथमत एव वर्णनमुपलभ्यते। शरीरस्योपापगमे वाक्शक्ते: पुन:स्फुरणसम्भावना तिरोधत्ते, अतो वागिन्द्रियस्याग्निर्दैवतत्वेन निर्णीत:। घ्राणेन्द्रियस्य वायु:, चक्षुरिन्द्रियस्यादित्य:, श्रवणेन्द्रियस्य दिक् इत्यादय: सम्बन्धा: प्रत्यक्षेणोपलभ्या इति तयोर्भौ स्वाभाविकत्वमेव दृश्यते। पञ्चभ्य: पुरुष एवैषां प्रकाश: स्फुटतर इति तस्मिंस्तेषामादरेणात्मसन्निवेशश्रवणं न चित्रम्। अन्नपानादिविषये यत्किञ्चिदुक्तं तत्स्वाभाविकक्रममपेक्ष्यैव। इन्द्रियाणामात्मापेक्षित्वमात्मनस्तेषाञ्च परात्मापेक्षित्वं

सुस्पष्टमुक्तम् । सृष्टिप्रकरणे जाग्रदवस्थायाः प्राधान्यात् प्रमयस्याधिष्ठितस्य चैतन्यस्याविर्भावः । अष्टमे (८) पुनरिदं यजुस्तत्त्वावधारणायोदाहर्त्तव्यम्—"पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन्" (४।१।१५) इति । प्रतिदिनं स्वपतो मनआदयोऽपक्रामन्ति ( श, प, ब्रा, ३।२।२।२६ ) ; सूर्य्योदये पुनर्नवीभूतास्तं प्रविशन्तीति नित्यसृष्टिप्रक्रियाऽऽदित्यादेवोपलभ्यत इति नित्यसृष्टिक्रियाद्योतनाय तं ब्रह्मात्मतयोपदिशति ।

९—१२ । नवमे (९) पुनस्तं जक्षन्तोऽपि प्रश्नार्थोत्पत्तिविरुद्धतया प्रत्यभात्यन्यथान्यथा प्रतिपादनादिति चेत्, "एकेन वाऽऽभ्यां त्रिभिश्चतुर्भिर्वा (८।१६) इत्युक्त्या ज्ञातव्यं नात्यन्त बाहुल्यनिर्बन्धः । दशमे (१०) मर्त्यः सृष्टिविस्तारः सृष्टेर्भोगविषयत्वात् जीवस्य च भोक्तृत्वादित्याकारे प्रतिपादितम् । न खलु परमात्मसम्बन्धं विना भवितुमर्हतीति सेत्यारम्भे तद्दर्शनं स्पष्टमुक्तम् । अत्रापि तेजस्तत्त्वस्य प्राधान्यं लक्ष्यते । अन्यद्यत् पूर्व्वमुक्तं तेनैव समम् । एकादशे (११) पुनरात्मनः 'सोऽहमस्मि' इति ज्ञानं ब्रह्मणः 'अहं ब्रह्मास्मि' इति ज्ञानेन न विरुद्ध्यतेऽस्यापूर्णत्वात् । कथं ज्ञायतेऽयमपूर्ण इति । "अस्मात् सर्व्वस्मात् सर्व्वान् पाप्मन उषेत्" "मर्त्यः सन्नमृतानसृजत" इति पापविद्धत्वात् पापपरिहारेणामृतत्वलाभात् । एकस्यात्मनो द्वेधाभवनं स्त्रीपुंस्त्वे नेति तयोरखण्डत्वं प्रतिपादयति । यच्च नामरूपव्याकरणं न तत् परात्मनिरपेक्षमिति ज्ञेयम् । द्वादशे (१२) 'अहं ब्रह्मास्मि' इति ज्ञानं 'अवेत्' इति क्रियया न जातु काले समुत्पन्नमिति बोध्यम् । स्वप्रकाशस्य तस्य स्वस्मिन् स्वस्य नित्यप्रकाशएव सिद्ध्यति । जीवबुद्ध्यपेक्षया सर्व्वत्र वेदान्तेष्वेवंविधाः प्रयोगा इति न कोऽपि दोषः । 'अहमस्मि' इति ज्ञानस्यान्तर्भूतं ज्ञानवैचित्र्यमिति तत्प्रकाशएव "तत् सर्व्वमभवत्" इति वचनस्य मूलम् । "किं पुनस्तत् कर्म्म यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति । तत्त्वान्यत्वाभ्यामनिर्व्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः" (१।१।५) इति भाष्यकारोक्तिस्तदेव दर्शयति । "यस्य हि सर्व्वविषयावभासलक्षणं ज्ञानं नित्यमस्ति" तस्य पुनर्ज्ञानावभास्यं तद्वैचित्र्यं विना किं वाऽन्यत् भवितुमर्हति । जीवबुद्धौ तदेव यदा तनोति परात्मा तदा सृष्टिः प्रवर्त्तते । स पुनर्जीवः प्रतिबुद्धः कारणेन तेनाभिन्नं सर्व्वमात्मानञ्च पश्यत्यतएवोक्तम्—"यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम्" इति । देवेषु ब्रह्मादिवर्णविभागः—"प्रजया पशुभिर्ब्रह्मवर्चसा सुवर्गे लोके" ( तै, ब्रा, १।२।१ ) "तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमाः" (अनु, गी, १७।४१) इत्यादीनां मूलम् । धर्मस्य सत्यस्य चैकत्वं—"एकस्य सत्यस्य विविधोपाधियोगाद्विविधाकारेण प्रकाशो धर्म्मः" (३।२ [१३५१]) इति यत् पूर्व्वमुक्तं न तेन विरुध्यते ।

१३—१६ । त्रयोदशे (१३) सकामत्वमात्मनः प्रदर्श्य कामनानपेक्षया ज्ञानस्य कृतकृत्वं तदेव दर्शयति । वाङ्मनसोत्पन्नेन प्रयत्नेन लब्धबलः चक्षुषा भगवदैश्वर्य्यदर्शनं, श्रोत्रेण तद्गुणवर्णनश्रवणं, कायेन च तत्कर्म्मानुष्ठानमपहरति तस्य सर्व्वविधविषयाभिलाषमित्यालङ्कारिकरीत्या भणति "मन एवास्यात्मा वाग्जाया" इत्यादि । चतुर्दशे (१४) नामरूपं कर्म्मेति तत्त्रयं निरूपयति । वागिन्द्रिययोगान्नाम्नः, चक्षुरिन्द्रिययोगाद्रूपस्य, देहयोगाच्च कर्म्मणो भवत्यभिव्यक्तिरिति तेषां तत्त्रयाणां प्राकट्यं स्थितिश्च प्राणाश्रि । प्राणमूलकं हि सर्व्वम्, असौ नामरूपात्मकं सर्व्वं

सत्यमित्यभिख्ययाऽऽख्यातम्, कर्म्म पुनः प्राणः, ततएव नामरूपात्मकानां चेष्टोत्पत्तेः। नामरूपे एवेन्द्रियगोचरे प्राणस्तु ताभ्यां प्रच्छन्नः। योऽसौ प्रच्छन्नः स एव नित्यत्वमृतम्। यस्मिन् सर्व्वमन्तर्भूतं तदेव ब्रह्मेति नामादिषु यद्यदन्तर्भावकं तत्तद्ब्रह्मतया दृष्टम्। पञ्चदशे (१५) सर्व्वेषामप्यान्तरतत्त्वानां मूलं विवेचितम्। यत् पुनः सर्व्वमन्तर्भूय विद्यमानं तद्ब्रह्म। अतोऽन्तर्भावकत्वमनुसृत्योक्तं "उद्गीतमेतत् परमन्तु ब्रह्म तस्मिंस्त्रयम्" (१२।११) इति। भोक्तुर्जीवस्य, भोग्यस्य प्रकृतेः, प्रेरितुः परात्मनो मधुब्राह्मणप्रदर्शितमार्गेण सर्व्वान्तर्भावके ब्रह्मण्येकत्वम्। "त्रिविधं ब्रह्ममेतत्" इत्यत्रत्या भोग्ये भोग्यस्य, जीवे भोग्यस्य जीवस्य च, भोग्यस्य जीवस्य च परात्मनि, ब्रह्मणि तु सर्व्वेषामित्यन्तर्भावनप्रक्रिया व्यक्तीभविष्यति तत्त्वमस्याम्। षोडशे (१६) स्वभावकालादिकं न जगत्कारणं किन्तर्हि तत्क्रियाशक्त्या प्रोद्भूतमिति निर्णीयापान्तरतत्त्वानां संख्याया अनित्यत्वमाख्याय जीवबुद्धिभेदात्तथा प्रतीतिर्भवतीति ध्वनितम्। तत् परतत्त्वमेकमेव कालादेर्हेतुः, तदेव सर्व्वं नियोजयति, तेनैव सर्व्वं विवर्त्तते, तत्क्रियाशक्त्युपसंहारे तदेव सर्व्वविलक्षणमित्युपलभ्यत इत्यत्र समासात् प्रदर्शितम्।

## इति प्रकृतिवल्ली अष्टमोऽध्यायः।

---

# नवमोऽध्यायः।

## देवतावल्ली।

१। सुकेशा च भारद्वाजः शैव्यश्च सत्यकामः सौर्य्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाएष ह वै तत् सर्व्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः।

तान् ह ऋषिरुवाच भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्व्वं ह वो वक्ष्याम इति।

आदित्यादयो वैदिकदेवा एवोपनिषदि गृह्यन्ते न पुनः पौराणिकाः। तत्तद्देवेषु ब्रह्मदृष्टिः, तेषां सहायत्वं, तेषां परस्परसम्बन्धश्चास्मिन्नध्याये दृश्यन्ते। न कुत्रचित् ब्रह्म त्वमिति पदेन सम्बुध्यते। प्राणादिषु तदन्तर्भावकत्वं पश्यता त्वत्पदेन स्तुतिर्वैदिकरीत्यनुसरणमात्रम्। वेदवेदान्तयोरेकत्वे पुराणस्याभ्युदयः। तत्रास्या बहुलप्रचारः। श्वेताश्वतरोपनिषदि त्वम्पदस्य प्रयोगो लीलामयत्वेनैव, न पुनर्ब्रह्मणि सर्व्वातीते, तत्र तदसम्भवात्।

१। आदित्यं चन्द्रञ्च प्रथमं देवतया गृह्णात्याख्यायिकयारभ्य। भारद्वाजः भरद्वाजस्यापत्यं सुकेशा च, शैव्यः शिवेरपत्यं सत्यकामः च, सौर्य्यायणी—सौर्य्यायणिः—सूर्य्यस्यापत्यं गार्ग्यः गर्गगोत्रोत्पन्नः, आश्वलायनः अश्वलस्यापत्यं कौशल्यः, भार्गवः भृगोरपत्यं वैदर्भिः, कात्यायनः कतस्यापत्यं कबन्धी, ते एते ब्रह्मपराः वेदपरायणाः ब्रह्मनिष्ठाः वेदनिष्ठाः परं ब्रह्म अन्वेषमाणाः, तदधिगमाय—एष पुनः तत् सर्व्वं वक्ष्यति इति समित्पाणयः भगवन्तं पिप्पलादम् उपसन्नाः उपजग्मुः।

तान् उपसन्नान् स पिप्पलादः पुनः उवाच—भूयः एव पुनरेव

अथ कबन्धी कात्यायनउपेत्य पप्रच्छ। भगवन्, कुतो ह वा इमाः प्रजाः प्रजायन्त इति।

तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते। रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति।

आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्व्वा एतत् सर्व्वं यन्मूर्त्तञ्चामूर्त्तञ्च तस्मान्मूर्त्तिरेव रयिः।

अथादित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते। यद्दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्द्ध्वं यदन्तरा दिशो यत् सर्व्वं प्रकाशयति तेन सर्व्वान् प्राणान् रश्मिषु सन्निधत्ते।

तपसा, ब्रह्मचर्य्येण, श्रद्धया संवत्सरं संवत्सरकालं संवत्स्यथ सम्यग्गुरुशुश्रूषापराः सन्तः वत्स्यथ। यथाकामं यो यस्य कामः तम् अनतिक्रम्य प्रश्नान् पृच्छथ, यदि विज्ञास्यामः सर्व्वं पुनः वः युष्मभ्यम् वक्ष्यामः इति।

अथ अनन्तरं कात्यायनः कबन्धी उपेत्य पप्रच्छ—हे भगवन्, इमाः प्रजाः कुतः पुनः प्रजायन्ते इति।

स पिप्पलादः तस्मै पृष्टवते उवाच—स प्रजापतिः पुनः प्रजाकामः तपः अतप्यत, स तपः तप्त्वा, स रयिं च प्राणं च मिथुनं द्वन्द्वम् उत्पादयते उत्पादितवान्। कथम्? एतौ मे बहुधा प्रजाः करिष्यते इति।

के ते? प्राणः पुनः आदित्यः, रयिः एव चन्द्रमाः। एतत् सर्व्वं यत् मूर्त्तं च अमूर्त्तं च तत् वा रयिः अन्नम्। तस्मात् मूर्त्तिः एव रयिः।

अथ आदित्यः उदयन् उद्गच्छन् यत् प्राचीं दिशं प्रविशति तेन

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते। तदेतदृचाऽभ्युक्तम्।

विश्वरूपं हरिणं जातवेदसं
परायणं ज्योतिरेकं तपन्तम्।
सहस्ररश्मिः शतधा वर्त्तमानः
प्राणः प्रजानामुदयत्येष सूर्य्यः॥

प्र, १।१—८।

२। अथ हैनं भार्गवो वैदर्भिः प्रपच्छ। भगवन्, कत्येव देवाः प्रजां विधारयन्ते कतर एतत् प्रकाशयते कः पुनरेषां वरिष्ठ इति।

प्राच्यान् तद्दिग्गतान् प्राणान् प्राणिनः रश्मिषु स्वकिरणेषु सन्निधत्ते आत्मभूतान् करोति। यत् स दक्षिणां, यत् स प्रतीचीं, यत् स उदीचीं, यत् स अधः, यत् स ऊर्द्ध्वं, यत् स अन्तरा दिशः कोणदिशः अवान्तरदिशः, यत् च स अन्यत् सर्व्वं प्रविशति, तत् सर्व्वं प्रकाशयन्ति, तेन सर्व्वान् सर्व्वदिक्स्थान् प्राणान् प्राणिनः स रश्मिषु सन्निधत्ते आत्मभूतान् करोति।

स एष प्राणः आदित्यरूपी वैश्वानरः सर्व्वात्मा, विश्वरूपः विश्वानि रूपाणि यस्मिन्, अग्निः ज्वलनः—रात्रौ तस्मिन् निहिततेजस्त्वात्— उदयति। तत् एतत् वस्तु ऋचा मन्त्रेण अभ्युक्तम्।

सहस्ररश्मिः, शतधा वर्त्तमानः, प्रजानां प्राणः य एष सूर्य्यः उदेति, तं विश्वरूपं सर्व्वरूपं, हरिणं रश्मिमन्तं, जातवेदसं सञ्जातप्रज्ञानं, परायणं सर्व्वप्राणाश्रयं, ज्योतिरेकं सर्व्वप्राणिनां चक्षुर्भूतमद्वितीयं, तपन्तं तापक्रियां कुर्व्वाणं वदन्ति।

२। अथ अनन्तरम् एनं पिप्पलादं पुनः भार्गवः वैदर्भिः पप्रच्छ

तस्मै स होवाचाकाशोऽह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च। ते प्रकाश्याभिवदन्ति वय-मेतद्बाणमवष्टभ्य विधारयामः।

तान् वरिष्ठः प्राण उवाच। मा मोहमापद्यथाऽह-मेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारया-मीति।

तेऽश्रद्दधाना बभूवुः। सोऽभिमानादूर्द्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व्वएव प्रातिष्ठन्ते। तद्यथा मक्षिका मधु-

पृष्टवान्। हे भगवन्, कति एव देवाः प्रजां विधारयन्ते, कतरः एतत् शरीरं प्रकाशयते, कः पुनः एषां वरिष्ठः श्रेष्ठः इति।

तस्मै वैदर्भये स पिप्पलादः उवाच—आकाशः पुनः एष देवः। न केवलमाकाशः किन्तर्हि—वायुः, अग्निः, आपः, पृथिवी—इति पञ्चभूतानि; वाक्, मनः, चक्षुः श्रोत्रं च। ते देवाः प्रकाश्य स्व-सामर्थ्यम् आविष्कृत्य अभिवदन्ति—वयम् एतत् वाणं शरीरम् अवष्टभ्य अशिथिलभावेन अवरुध्य विधारयामः।

वरिष्ठः मुख्यः प्राणः तान् उवाच—मा मोहम् आपद्यथ ह्यथाभि-मानं मा कुरुत। अहम् एव एतत् वागादिरूपेण पञ्चधा आत्मानं विभज्य एतत् वाणं शरीरम् अवष्टभ्य अशिथिलभावेन अवरुध्य विधा-रयामि इति।

ते वागादयः अश्रद्दधानाः अप्रत्ययवन्तः बभूवुः। स मुख्यप्राणः अभिमानात् ऊर्द्ध्वम् उत्क्रामते इव। तस्मिन् उत्क्रामति इतरे सर्व्वे उत्क्रामन्ते, तस्मिन् च प्रतिष्ठमाने सर्व्वे एव प्रातिष्ठन्ते। तत् यथा उत्क्रामन्तं मधुकरराजानं प्रति सर्व्वाः एव मक्षिकाः उत्क्रामन्ते,

मरराजानमुत्क्रामन्तं सर्व्वाएवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुःश्रोत्रञ्च ते प्रीताः प्राणं स्तुवन्ति।

एषोऽग्निस्तपत्येष सूर्य्य एष पर्ज्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत्।

अराइव रथनाभौ प्राणे सर्व्वं प्रतिष्ठितम्।

ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे।

तुभ्यं प्राण: प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि॥

तस्मिन् च मधुकरराज्ञि प्रतिष्ठमाने सर्व्वाः एव प्रातिष्ठन्त, एवं तद्दृष्टान्तानुसरणेन वाक्, मनः, चक्षुः, श्रोत्रं च ते प्रीताः श्रद्दधानाः प्राणं स्तुवन्ति।

एष प्राणः अग्निः सन् तपति, एष प्राणः सूर्य्यः, एष प्राणः पर्ज्जन्यः, एष प्राणः मघवान् इन्द्रः, एष प्राणः वायुः,—तत्तत्कर्म्म निर्व्वहति। पृथिवी, देवः रयिः, यत् सत् मूर्त्तम् असत् अमूर्त्तम् अमृतं च—तत् सर्व्वम् एष प्राणः एव।

रथनाभौ अराः इव, प्राणे ऋचः, यजूंषि, सामानि, यज्ञः, क्षत्रं सर्व्वस्य पालयितृ, ब्रह्म च यज्ञादिकर्म्मकर्त्तृ सर्व्वं प्रतिष्ठितम्।

त्वम् एव प्रजापतिः गर्भे चरसि, प्रतिजायसे पितुः मातुः च प्रतिरूपः सन् जायसे। यः त्वं प्राणैः चक्षुरादिभिः प्रतितिष्ठसि, हे प्राण, इमाः प्रजाः तस्मै तुभ्यं बलिं हरन्ति।

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा।
ऋषीणां चरितं सत्यमथर्व्वाङ्गिरसामसि॥
इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता।
त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषाम्पतिः॥
यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति॥
व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः॥
या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि।
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः॥

त्वं देवानां वह्नितमः श्रेष्ठाग्निः असि; पितॄणां प्रथमा स्वधा—देवानामग्रे नान्दीमुखश्राद्धे दीयमानं प्रथमम् अन्नम्—महर्षीणाम् अथर्व्वाङ्गिरसां सत्यं चरितम् असि।

हे प्राण, त्वम् इन्द्रः, त्वं तेजसा परिरक्षिता परिपालकः रुद्रः असि, त्वम् अन्तरिक्षे चरसि, त्वं ज्योतिषां पतिः सूर्य्यः।

हे प्राण, यदा त्वम् अभिवर्षसि तदा इमाः ते तव प्रजाः—कामाय अभिलाषाय यथेष्टमिति यावत् अन्नं भविष्यति इति—आनन्दरूपाः सुखं प्राप्ता इव तिष्ठन्ति।

हे प्राण, त्वं व्रात्यः—प्रथमजत्वात् संस्कर्त्तुरभावादसंस्कृतः—स्वभावतः शुद्धः, एकऋषिः—आथर्व्वणां प्रसिद्धः एकर्षिनामा अग्निः, विश्वस्य अत्ता भोक्ता, सत्पतिः। वयम् आद्यस्य अदनीयस्य दातारः, मातरिश्वनः वायोः त्वं पिता।

या च वाचि, या च श्रोत्रे, या च चक्षुषि, या च मनसि ते तव तनूः सन्तता अविच्छिन्ना प्रतिष्ठिता तां तनूं शिवां शान्तां कुरु, मा उत्क्रमीः मा उत्क्रान्तो भूः।

प्राणस्येदं वशे सर्व्वं त्रिदिवे यत् प्रतिष्ठितम्।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञाञ्च विधेहि न इति॥
प्र २।१—१३।

३। अथ हैनं कौशल्यश्चाश्वलायनः पप्रच्छ। भगवन् कुतएष प्राणो जायते कथमायात्यस्मिञ्छरीरे आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं वाह्य-मभिधत्ते कथमध्यात्ममिति।

तस्मै स होवाचातिप्रश्नान् पृच्छसि। ब्रह्मिष्ठो-सीति तस्मात्तेऽहं ब्रवीमि।

आत्मनएष प्राणो जायते यथैषा पुरुषे छायैतस्मि-न्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे।

त्रिदिवे तृतीयस्यां दिवि यत् इदं प्रतिष्ठितं तत् सर्व्वं प्राणस्य वशे। हे प्राण, माता इव पुत्रान् अस्मान् त्वं रक्षस्व, श्रीः श्रियः च प्रज्ञां च नः अस्मभ्यं विधेहि विधत्स्व।

३। अथ अनन्तरं पुनः एनं पिप्पलादम् आश्वलायनः कौशल्यः प्रप्रच्छ पृष्टवान्। हे भगवन्, एष प्राणः कुतः जायते? अस्मिन् शरीरे कथम् आयाति? आत्मानं वा प्रविभज्य कथं प्रातिष्ठते प्रति-तिष्ठति? केन वृत्तिविशेषेण उत्क्रमते देहात् निर्गच्छति? कथं वाह्यम् अभिधत्ते धारयति? कथम् अध्यात्मं धारयति?

स पिप्पलादः तस्मै पृष्टवते पुनः उवाच—अतिप्रश्नान् विषमप्रश्नान्—प्राणस्य दुर्व्विज्ञेयत्वात्—पृच्छसि। त्वं ब्रह्मिष्ठः असि इति। तस्मात् ते तुभ्यम् अहं ब्रवीमि। यद्यब्रह्मिष्ठः सन्नेवं दुर्व्विज्ञेयं प्रश्न-मकार्षीः, श्रवणानधिकारित्वात् नाहं तदुत्तरमदामिति भावः।

आत्मनः परात्मनः एष प्राणः जायते। यथा पुरुषे एषा छाया,

यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ।

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ।

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाड़ीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाड़ीसहस्राणि भवन्त्यासु व्यानश्चरति ।

तथा एतस्मिन् परात्मनि एतत् प्राणतत्त्वम् आततं विस्तृतम् । मनोकृतेन मनःकृतेन सङ्कल्पेन—परात्मेच्छया—अस्मिन् शरीरे आयाति ।

सम्राट् एव यथा एतान् ग्रामान् एतान् ग्रामान् अधितिष्ठस्व इति अधिकृतान् अधिकारिपुरुषान् विनियुङ्क्ते एवम् एव एष परात्मनः उद्भूतः प्राणः इतरान् तदधीनाम् प्राणान् चक्षुरादीन् पृथक् पृथक् एव सन्निधत्ते नियुङ्क्ते ।

तेषां स्थानानि निर्द्दिशति—पायूपस्थे अपानं, मुखनासिकाभ्यां विचरन् चक्षुःश्रोत्रे स्वयं प्राणः, मध्ये तु समानः प्रतिष्ठते । एष समानः हि एतत् हुतं भुक्तम् अन्नं समं नयति देहोपयोगितां प्रापयति । तस्मात् भुक्तान्नेन्धनात् अन्तरस्याग्नेः एताः सप्त अर्चिषः भवन्ति ।

हृदि हृदयस्थाने हि एष आत्मा । अत्र हृदि एतत् नाड़ीनाम् एकशतम् एकोत्तरशतम् । तासाम् एकोत्तरशतसंख्यकप्रधाननाड़ीनाम् एकैकस्यां शतं शतं शाखानाड्यः । प्रतिशाखानाड़ी एकैकशाखानाड़ीं प्रति द्वासप्ततिः द्वासप्ततिः सहस्राणि नाड्यः भवन्ति सन्ति । आसु नाड़ीषु व्यानः चरति ।

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्।

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः। पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः।

तेजो ह वा उदानस्तस्मादुपशान्ततेजाः। पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः।

यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः। सहात्मना यथासङ्कल्पितं लोकं नयति।

अथ एकया प्रधाननाड़ीगतया सुषुम्नाख्यया नाड्या ऊर्द्धः ऊर्द्धगतः सन् उदानः पुण्येन पुण्यं लोकं, पापेन पापं लोकम्, उभाभ्यां पापपुण्याभ्यां मनुष्यलोकं नयति।

आदित्यः पुनः प्रसिद्धः वाह्यः प्राणः। हि यतः एनं चाक्षुषं प्राणम् अनुगृह्णानः एष उदयति। पृथिव्यां या देवता अस्ति सा पुरुषस्य जीवस्य अपानम् अवष्टभ्य अशिथिलभावेन अवरुध्य अनुगृह्णानः वर्त्तते। अन्तरा मध्ये यदाकाशः यः आकाशः स समानः तदभिन्नः तमनुगृह्णानः वर्त्तमानः ; यः वायुः स व्यानः तदभिन्नः तमनुगृह्णानः विद्यमानः।

यत् पुनः प्रसिद्धं वाह्यं तेजः तत् उदानः तदभिन्नं तमनुगृह्णानं विद्यमानम्। तस्मात् उपशान्ततेजाः भवति मुमूर्षुः। कथम्? मनसि सम्पद्यमानैः एकीभावापन्नैः इन्द्रियैः वागादिभिः पुनर्भवं पुनर्जन्म प्राप्नोति।

तदा यच्चित्तः यादृक्सङ्कल्पवान् तेन सङ्कल्पेन एष जीवः प्राणं मुख्यवृत्तिम् आयाति। स प्राणः तेजसा युक्तः सन् आत्मना सह यथासङ्कल्पितं लोकं नयति।

य एवं विद्वान् प्राणं वेद। न हास्य प्रजा हीयते-ऽमृतो भवति तदेष श्लोकः।

उत्पत्तिमायतिं स्थानं विभुत्वञ्चैव पञ्चधा।
अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते
विज्ञायामृतमश्नुत इति॥

प्र ३।१—१२।

४। देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्या-स्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति।

यः विद्वान् प्राणम् एवं वेद, न पुनः अस्य प्रजा हीयते, स अमृतः अमरणधर्म्मा भवति। तत् तस्मिन् अर्थे एष श्लोकः।

प्राणस्य उत्पत्तिं—परात्मन इति; आयतिम् आगमनं—मनः-कृतेन सङ्कल्पवशात्; स्थानं स्थितिं—पायूपस्थादिषु; विभुत्वं—स्वाम्यं सम्राड़िव प्राणवृत्तिभेदानां पञ्चधा स्थापनम्; अध्यात्मं—वाह्यम् आदित्यादिरूपेण अध्यात्मं चक्षुरादिरूपेण अवस्थानं विज्ञाय ज्ञात्वा अमृतम् अश्नुते। द्विर्व्वचनं प्रश्नपरिसमाप्त्यर्थम्।

४। देवासुरसंग्रामाख्यायिकया पापपुण्यतत्त्वमुद्भावयति देवा-सुरा इति। ह वै ऐतिह्ये—देवासुराः देवाः च असुराः च—"देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इन्द्रियवृत्तयः, असुरास्तद्विपरीताः। स्वेष्वेवासुषु विष्वग्विषयासु प्राणक्रियासु रमणात् स्वाभाविकयस्तम आत्मिका इन्द्रियवृत्तय एव" इति भाष्यकारः—यत्र यस्मिन्निमित्ते—इतरेतरविषयापहारलक्षणे—संयेतिरे संग्रामं कृतवन्तः। उभये प्राजा-पत्याः—प्रजापतेः अपत्यानि; तत् तत्र तस्मिन् विषये—उत्कर्षापकर्ष-लक्षणनिमित्ते—उद्गीथम् आजह्रुः आहृतवन्तः। कथम्? अनेन उद्गीथेन उद्गातृकर्म्मणा एनान् असुरान् अभिभविष्यामः पराजेष्या-मह इति।

ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः।

अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यञ्चानृतं च पाप्मना ह्येषा विद्धा।

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयं च पाप्मना ह्येतद्विद्धम्।

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयञ्चाश्रवणीयञ्च पाप्मना ह्येतद्विद्धम्।

ते देवाः पुनः नासिक्यं प्राणम् उद्गीथकर्त्तारम् उद्गीथं तद्रूपेण उपासाञ्चक्रिरे। तं नासिक्यं प्राणं पुनः असुराः पाप्मना विविधुः विद्धवन्तः। हि यस्मात् एष पाप्मना विद्धः, तस्मात् तेन पाप्मना सुरभि च दुर्गन्धि च जिघ्रति।

अथ अनन्तरं देवाः पुनः वाचम् उद्गीथम् उपासाञ्चक्रिरे, असुराः तां पुनः पाप्मना विविधुः विद्धवन्तः। हि यस्मात् पाप्मना एषा वाक् विद्धा, तस्मात् तया सत्यं च अनृतं च वदति।

अथ अनन्तरं देवाः पुनः चक्षुः उद्गीथम् उपासाञ्चक्रिरे, तत् पुनः असुराः पाप्मना विविधुः विद्धवन्तः। हि यस्मात् पाप्मना एतत् चक्षुः विद्धं, तस्मात् तेन दर्शनीयं च अदर्शनीयं च पश्यति।

अथ अनन्तरं देवाः पुनः श्रोत्रम् उद्गीथम् उपासाञ्चक्रिरे असुराः पुनः तत् पाप्मना विविधुः। हि यस्मात् एतत् श्रोत्रं पाप्मना विद्धं, तस्मात् तेन श्रवणीयं च अश्रवणीयं च उभयं शृणोति।

अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं सङ्कल्पयते सङ्कल्पनीयञ्चासङ्कल्पनीयं च पाप्मना ह्येतद्विद्धम्।

अथ ह एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेत।

एवं यथाश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः।

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति। एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति।

अथ अनन्तरं देवाः पुनः मनः उद्गीथम् उपासाञ्चक्रिरे, असुराः तत् पुनः पाप्मना विविधुः। हि यस्मात् एतत् मनः पाप्मना विद्धं तस्मात् तेन मनसा सङ्कल्पनीयं च असङ्कल्पनीयं च उभयं सङ्कल्पयते।

अथ अनन्तरं य एव अयं मुख्यः प्राणः तं पुनः देवाः उद्गीथम् उपासाञ्चक्रिरे। असुराः तं पुनः ऋत्वा प्राप्य—आखणं खनितुम् अशक्यम् अश्मानं प्रस्तरम् ऋत्वा प्राप्य यथा विध्वंसेत विदीर्य्येत, तथा —विध्वंसुः ध्वंसं प्राप्तवन्तः।

प्राणः एवम्—असुरैरधर्षितत्वात् विशुद्धः। यः एवंविदि यथोक्तप्राणविदि पापं कामयते, यः च एनं प्राणविदम् अभिदासति हिनस्ति, स यथा आखणम् अश्मानम् ऋत्वा विध्वंसते एवं पुनरेव स विध्वंसते। स एव प्राणवित् आखणः अश्मा—स इव अधर्षणीयः।

एतेन मुख्यप्राणेन न एव सुरभि न दुर्गन्धि विजानाति लोकः। हि यस्मात् एव अपहतपाप्मा पाप्मना न विद्धः। तेन मुख्यप्राणेन

तं ह्यङ्गिरा उद्गीथमुपासांचक्र एतमु एवाङ्गिरसं मन्यन्ते। अङ्गानां यद्रसः।

तेन तं ह बृहस्पतिरुद्गीथमुपासांचक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्धि बृहती तस्या एष पतिः।

तेन तं हाऽऽयास्यमुद्गीथमुपासांचक्र एतमु एवाऽऽयास्यं मन्यन्त आस्याद्यदयते।

तेन तं ह वको दाल्भ्यो विदांचकार। स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामाना-गायति।

यत् अश्नाति, यत् पिबति लोकः, तेन अश्नितेन पीतेन इतरान् प्राणान् अवति पालयति। अन्ततः मरणकाले एतं मुख्यप्राणम् एव पुनः अविन्त्वा अप्राप्य उत्क्रामति, अन्ततः मरणकाले व्याददाति आस्य-विदारणं करोति एव—अन्नालाभे—प्राणादिप्राणसमुदायः।

अङ्गिराः तं मुख्यप्राणम् उद्गीथम् उपासाञ्चक्रे। यत् यस्मात् अङ्गानां रसः सारः धारयिता तस्मात् एतं मुख्यप्राणं पुनः आङ्गिरसं मन्यन्ते तत्त्वविदः।

बृहस्पतिः तं मुख्यप्राणं पुनः उद्गीथम् उपासांचक्रे। हि यस्मात् बृहती वाक् तस्याः एष पतिः, तेन एतं मुख्यप्राणं पुनः बृहस्पतिं मन्यन्ते तत्त्वविदः।

आयास्यः तं मुख्यप्राणं पुनः उद्गीथम् उपासाञ्चक्रे। यत् यस्मात् आस्यात् अयते निर्गच्छति तेन एतं मुख्यप्राणम् एव आयास्यं मन्यन्ते तत्त्वविदः।

तेन हेतुना दाल्भ्यः दल्भस्यापत्यं वकः तं मुख्यप्राणं पुनः विदा-ञ्चकारे। स पुनः नैमिषीयाणां सत्रिणाम् उद्गाता बभूव। स पुनः एभ्यः नैमिषीयेभ्यः कामान् आगायति स्म।

आगाता ह वै कामानां भवति य एतदेवं विद्वान-क्षरमुद्गीथमुपास्त इत्यधात्मम्।

छा, १।३।२।१—१४।

५। अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच।

स होवाच भगवन्तं वा अहमेभिः सर्व्वैरार्त्विज्यैः पर्य्यैषिषं भगवतो वा अहमवित्त्यान्यानवृषि।

भगवाꣳस्त्वेव मे सर्व्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति स यजमान उवाच।

यः एतत् एवं विद्वान् अक्षरम् उद्गीथम् उपास्ते स पुनः निश्चितं कामानाम् आगाता भवति। इत्याध्यात्मम्।

५। अत्र प्राणस्य ब्रह्मलिङ्गात् यद्यपि ब्रह्मत्वमुद्दिष्टं (३।१०) अथाप्यत्रान्यत्र च देवतयास्य ग्रहणं दृश्यते एवमादित्यादीनाम्। अत-एव देवतावल्ल्यां पुनरुल्लेखस्तस्य। अथ अनन्तरं ह एनम् उषस्तिं यजमानः राजा उवाच— अहं भगवन्तं पुनः विविदिषाणि ज्ञातुम् इच्छामि इति। स उषस्तिः उवाच—उषस्तिः चाक्रायणः अस्मि इति।

स राजा पुनरुवाच—एभिः सर्व्वैः आर्त्विज्यैः भगवन्तं पुनः अहं पर्य्यैषिषम् अन्विष्टवान् अस्मि। भगवतः पुनः अवित्त्या अलाभेन अहम् अन्यान् आवृषि वृतवान् अस्मि।

भगवान् एव तु मे मम सर्व्वैः आर्त्विज्यैः ऋत्विक्कर्म्मार्थम् अस्तु इति। उषस्तिः—तथा इति। अथ तर्हि एते एव ऋत्विजः समति-सृष्टाः सम्यक् प्रसन्नेन मया अनुज्ञाताः स्तुवताम्। एभ्यः यावत् तु धनं त्वं दद्याः, तावत् धनं मम मह्यं त्वं दद्याः इति। यजमानः राजा पुनः उवाच—तथा इति।

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति। मा भगवानवोचत् कतमा सा देवतेति।

प्राण इति होवाच सर्व्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत् तथोक्तस्य मयेति।

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति।

अथ प्रस्तोता एनम् उषस्तिम् उपससाद विनयेन उपजगाम। उषस्तिः—हे प्रस्तोतः, या देवता प्रस्तावं साम्नः प्रथमभागम् अनु आयत्ता निर्द्दिष्टः तां चेत् अविद्वान् अविदित्वा प्रस्तोष्यसि ते तव मूर्द्धा विपतिष्यति महत् अनिष्टं भविष्यति इति। प्रस्तोता—कतमा सा देवता इति भगवान् मा माम् अवोचत्।

एवं पृष्ट उषस्तिराह—प्राणः इति। कथम्? सर्व्वाणि ह वै इमानि भूतानि प्राणम् एव अभिसंविशन्ति तस्मिन् लीनानि भवन्ति, प्राणम् अभि लक्ष्यीकृत्य उज्जिहते उद्गच्छन्ति जन्मकाले, सा एषा देवता प्रस्तावम् अनु आयत्ता। तां चेत् अविद्वान् प्रास्तोष्यः "मूर्द्धा ते विपतिष्यतीति" मया उक्तस्य ते तव तथा मूर्द्धा व्यपतिष्यत्।

अथ अनन्तरम् उद्गाता एनम् उषस्तिम् उपससाद विनयेन उपजगाम। उषस्तिः—हे उद्गातः, या देवता उद्गीथं साम्नः द्वितीयभागम् अनु आयत्ता, तां चेत् अविद्वान् उद्गास्यसि, मूर्द्धा ते विपतिष्यति इति। उद्गाता—कतमा सा देवता इति भगवान् मा माम् अवोचत्।

आदित्य इति होवाच सर्व्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति।

अथ हैनं प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति।

अन्नमिति होवाच सर्व्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति।

छा, १।३।११।१—९।

स पुनरुवाच—आदित्यः इति। कथम्? सर्व्वाणि ह वै इमानि भूतानि उच्चैः ऊर्द्ध्वं सन्तम् आदित्यं गायन्ति स्तुवन्ति। सा एषा देवता उद्गीथम् अनु आयत्ता। तां चेत् अविद्वान् उदगास्यः "मूर्द्धा ते विपतिष्यतीति" मया उक्तस्य ते तव तथा मूर्द्धा व्यपतिष्यत्।

अथ अनन्तरं प्रतिहर्त्ता एनम् उषस्तिम् उपससाद। उषस्तिः—हे प्रतिहर्त्तः, या देवता प्रतिहारं साम्नः तृतीयभागम् अनु आयत्ता, तां चेत् अविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यति इति। प्रतिहर्त्ता—कतमा सा देवता इति भगवान् मा माम् अवोचत्।

स पुनरुवाच—अन्नम् इति। कथम्? सर्व्वाणि ह वै इमानि भूतानि अन्नम् एव प्रतिहरमाणानि जीवन्ति, सा एषा देवता प्रतिहारम् अनु आयत्ता। तां चेत् अविद्वान् प्रत्यहरिष्यः "मूर्द्धा ते विपतिष्यतीति" मया उक्तस्य ते तव मूर्द्धा तथा व्यपतिष्यत्। द्विराहृत्तिः समाप्त्यर्था।

६ । तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ।

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ।

अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ।

अथ योऽस्योदङ्सुषिः समानस्तन्मनः स पर्ज्जन्यः

६ । स्वर्गलोकद्वाराधिष्ठातृदेवा उच्यन्ते तस्येति । तस्य पुनः एतस्य हृदयस्य पञ्च देवसुषयः देवैः रक्ष्यमाणानि स्वर्गलोकप्राप्तिद्वारच्छिद्राणि । अस्य हृदयस्य यः प्राङ् सुषिः प्राग्गतं छिद्रं स प्राणः, तत् चक्षुः, स आदित्यः । तत् एतत् चक्षुः आदित्यस्वरूपेण तेजोऽन्नाद्यम् इति गुणाभ्याम् उपासीत । यः एवं वेद स तेजस्वी अन्नादो भवति ।

अथ अस्य हृदयस्य यः दक्षिणः सुषिः, स व्यानः, तत् श्रोत्रं, स चन्द्रमाः, तत् एतत् श्रोत्रं चन्द्रमःस्वरूपेण श्रीः च यशः च इति गुणाभ्याम् उपासीत । यः एवं वेद स श्रीमान् यशस्वी भवति ।

अथ अस्य हृदयस्य यः प्रत्यङ् सुषिः, स अपानः, सा वाक्, सः अग्निः । तत् एतत् वागिन्द्रियम् अग्निस्वरूपेण ब्रह्मवर्चसम् अन्नाद्यम् इति गुणाभ्याम् उपासीत । यः एवं वेद स ब्रह्मवर्चसी अन्नादः भवति ।

अथ अस्य हृदयस्य यः उदङ् सुषिः स समानः, तत् मनः, स पर्ज्जन्यः । तत् एतत् मनः पर्ज्जन्यस्वरूपेण कीर्त्तिः च व्युष्टिः देह-

तदेतत् कीर्त्तिश्च व्युष्टिश्चेत्युपासीत कीर्त्तिमान् व्युष्टि-मान् भवति य एवं वेद।

अथ योऽस्योर्द्ध्वः सुषिः स उदानः स वायुः स आका-शस्तदेतदोजश्च महश्चेत्युपासीत ओजस्वी महस्वान् भवति य एवं वेद।

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः। स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एता-नेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद।

छा, ३।१३।१—६।

७। यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणोवाव ज्येष्ठश्च श्रेष्ठश्च।

कान्तिः च इति गुणाभ्याम् उपासीत। य एवं वेद स कीर्त्तिमान् व्युष्टिमान् कान्तिमान् भवति।

अथ अस्य हृदयस्य यः ऊर्द्ध्वः सुषिः स उदानः, स वायुः, स आकाशः। तत् एतत् वायुतत्त्वम् आकाशस्वरूपेण ओजः च महः च इति गुणाभ्याम् उपासीत। य एवं वेद स ओजस्वी महस्वान् भवति।

ते पुनः एते पञ्च ब्रह्मपुरुषाः हार्द्दस्य ब्रह्मणः पुरुषाः, स्वर्गस्य हार्द्दस्य लोकस्य द्वारपाः द्वारपालाः। स यः एतान् पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् एवं वेद अस्य कुले वीरः पुत्रः जायते। यः एतान् पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् एवं वेद स स्वर्ग-लोकं प्रतिपद्यते।

७। उपनिषत्सु प्राणस्यैव श्रेष्ठत्वमिति पुनस्तदेव विशदीकर्त्तुमाख्या-यिकाच्छलेन वदति। यो ह वै ज्येष्ठं च—वयसा प्रथमं, श्रेष्ठं च—

योह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः।

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा।

यो ह वै सम्पदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च सꣳहास्मै कामाः पद्यन्ते दैवाश्च मनुष्याश्च श्रोत्रं वाव सम्पत्।

गुणैरभ्यधिकं वेद, स पुनः ज्येष्ठः च श्रेष्ठः च भवति। यद्येवं कोऽसौ पुनः ज्येष्ठश्च श्रेष्ठश्च? प्राणो वाव ज्येष्ठः च वयसा वागादिभ्यः,—"गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः पूर्व्वं लब्धात्मिका भवति। यथा गर्भोविवर्द्धते चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति" इति भाष्यकारः,—श्रेष्ठश्च वागादीनां प्राणाधीनस्थितिकत्वात्।

यो ह वै वसिष्ठम् आच्छादयितृतमं वेद, स पुनः स्वानां ज्ञातीनां वसिष्ठः आच्छादयितृतमः—दोषाद्यावरणेन—भवति। वाक् च वाव वसिष्ठः—वाग्मितायाः दोषाद्यावरणकर्म्मसाधिकात्वात्।

यो ह वै प्रतिष्ठां वेद, अस्मिन् च लोके अमुष्मिन् च लोके स पुनः प्रतितिष्ठति स्थितिं लभते। का सा प्रतिष्ठा? चक्षुः वाव प्रतिष्ठा—'चक्षुषा हि पश्यन् समे च दुर्गे च प्रतितिष्ठति यस्मात् अतः'।

यो ह वै सम्पदं वेद, अस्मै पुनः दैवाः च मानुषाः च कामाः सम्पद्यन्ते। कासौ सम्पत्? श्रोत्रं वाव सम्पत्—'यस्मात् श्रोत्रेण वेदाः गृह्यन्ते तदर्थविज्ञानञ्च, ततः कर्म्माणि क्रियन्ते ततः कामसम्पदित्येवं कामसम्पद्धेतुत्वात्।'

योह वा आयतनं वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनम्।

अथ ह प्राणा अहꣳ श्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् कोनः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ इति।

सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक्।

यो ह वै आयतनं वेद, स पुनः स्वानां ज्ञातीनाम् आयतनं भवति। किन्तदायतनम्? मनः—'इन्द्रियोपहृतानां विषयाणां भोक्तर्थानां प्रत्ययरूपाणां मनः आयतनम् आश्रयः, अतो मनो ह वा आयतनमित्युक्तम्।'

अथ अनन्तरं प्राणाः एवं गुणवन्तः श्रेयसि अहम्, श्रेयान् अस्मि अहम्, श्रेयान् अस्मि अहम् इति ते व्यूदिरे नानाविरुद्धं च जदिरे उक्तवन्तः। एवं विवदमानाः ते पुनः पितरं प्रजापतिम् एत्य ऊचुः—हे भगवन्, को नः अस्माकं मध्ये श्रेष्ठः इति। तान् पुनः प्रजापतिः उवाच—वः युष्माकं मध्ये यस्मिन् उत्क्रान्ते शरीरं पापिष्ठतरम् अस्पृश्यतरं दृश्यते, स वः युष्माकं मध्ये श्रेष्ठः इति।

सा पुनः वाक् उच्चक्राम उज्जगाम। सा संवत्सरं संवत्सरकालं प्रोष्य अन्यत्र उषिला—स्वव्यापारात् निवृत्य—पर्य्येत्य पुनरागम्य उवाच इतरान् प्राणान्—कथं मत् ऋते विना जीवितुम् अशकत यूयम् इति। ते पुनरूचुः—यथा कलाः मूकाः अवदन्तः वाचम् अनुदीरयन्तः प्राणेन

चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्त्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः।

श्रोत्रꣳहोच्चक्राम तत् संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्त्ते मज्जीवितुमिति यथा वधिराः अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम्।

मनो होच्चक्राम तत् संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्त्ते मज्जीवितुमिति यथा वाला अमनसः

प्राणन्तः, चक्षुषा पश्यन्तः, श्रोत्रेण शृण्वन्तः, मनसा ध्यायन्तः जीवितुं शक्नुवन्ति, एवम् इति। सा वाक् पुनः प्रविवेश देहम्।

चक्षुः पुनः उच्चक्राम। तत् संवत्सरं प्रोषत्र पर्य्येत्य उवाच इतरान् प्राणान्—कथं मत् ऋते जीवितुम् अशकत यूयम् इति। ते पुनरूचुः—यथा अन्धाः अपश्यन्तः प्राणेन प्राणन्तः, वाचा वदन्तः, श्रोत्रेण शृण्वन्तः, मनसा ध्यायन्तः जीवितुं शक्नुवन्ति, एवम् इति। चक्षुः पुनः प्रविवेश देहम्।

श्रोत्रं पुनः उच्चक्राम। तत् संवत्सरं प्रोषत्र पर्य्येत्य उवाच इतरान् प्राणान्—कथं मत् ऋते जीवितुम् अशकत यूयम् इति। ते पुनरूचुः—यथा वधिराः अशृण्वन्तः प्राणेन प्राणन्तः, वाचा वदन्तः, चक्षुषा पश्यन्तः, मनसा ध्यायन्तः जीवितुं शक्नुवन्ति, एवम् इति। श्रोत्रं पुनः प्रविवेश देहम्।

मनः पुनः उच्चक्राम। तत् संवत्सरं प्रोषत्र पर्य्येत्य उवाच इतरान् प्राणान्—कथं मत् ऋते जीवितुम् अशकत यूयम् इति। ते पुनरूचुः—यथा वालाः अमनसः अप्ररूढ़मनसः प्राणेन प्राणन्तः, वाचा

प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः।

अथ ह प्राण उच्चिक्रमिष्यन् स यथा सुह्यः पड्वीश-शङ्कून् संखिदेदेवमितरान् प्राणान् समखिदत्तꣳ हाभि-समेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति।

अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्वं तद्वसि-ष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत् प्रतिष्ठासीति।

अथ हैनꣳ श्रोत्रमुवाच यदहꣳ सम्पदस्मि त्वं तत् सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति।

वदन्तः, चक्षुषा पश्यन्तः, श्रोत्रेण शृण्वन्तः जीवितुं शक्नुवन्ति एवम् इति। मनः पुनः प्रविवेश देहम्।

अथ पुनः प्राणः मुख्यप्राणः उच्चक्रमिषन् उत्क्रान्तुमिच्छन्—यथा सुह्यः शोभनोऽश्वः पड्वीशशङ्कून्—'पदनशीलाः पादाः तेषां संहतिः पड्विः तस्याः ईशाः नियामकाः शङ्कवः'—पादबन्धनकीलान् संखिदेत् युगपत् उत्पाटयेत्—एवम् इतरान् प्राणान् वागादीन् समखिदत् समुद्धृतवान्। ते प्राणाः—एवं विचालिताः—अभिसमेत्य तं मुख्य-प्राणं पुनः ऊचुः—भगवन्, एधि भव नः स्वामी, त्वं नः अस्माकं मध्ये श्रेष्ठः असि, मा उत्क्रमीः उद्गमः।

अथ पुनः एनं मुख्यप्राणं वाक् उवाच—अहं यत् वसिष्ठा अस्मि, तत् त्वं वसिष्ठः असि इति हेतोः—तव वसिष्ठतया मम वसिष्ठत्वं न पुनस्त्वत्स्वातन्त्र्येण। अथ पुनः एनं चक्षुः उवाच—अहं यत् प्रतिष्ठा अस्मि तत् त्वं प्रतिष्ठा असि इति हेतोः।

अथ पुनः एनं मुख्यप्राणं श्रोत्रम् उवाच—अहं यत् सम्पत् अस्मि,

न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसी-त्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्व्वाणि भवति। छा, ५।७।१।१—१५। वृह, ८।१।१—१४।

तत् त्वं सम्पत् असि इति हेतोः। अथ पुनः एनं मनः उवाच—अहं यत् आयतनम् अस्मि तत् त्वम् आयतनम् असि इति हेतोः।

न हि वाचः, न चक्षूंषि, न श्रोत्राणि, न मनांसि इति आचक्षते तत्त्वविदः, किन्तर्हि प्राणाः इति एव आचक्षते। कथम्? हि यस्मात् सर्व्वाणि एतानि वागादीनि करणजातानि प्राणः एव।

तथा च वृहदारण्यके,—

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद।

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद।

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद।

यो ह वै सम्पदं वेद संहास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पत् श्रोत्रे हीमे सर्व्वे वेदा अभिसम्पन्नाः संहास्मै पद्यते यं कामं कामयते य एवं वेद।

यो ह वा आयतनं वेदायतनँ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनँ स्वानां भवत्यायतनं जनानां य एवं वेद।

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभीरेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद।

ते हेमे प्राणाः अहं श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तान् होवाच यस्मिन्व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति।

वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक्।

चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथान्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः।

८। द्वया ह प्राजापत्या देवाश्चासुराश्च। ततः कानीयसा एव देवा ज्यायसा असुराः। त एषु लोकेष्वस्पर्द्धन्त। ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति।

श्रोत्रं होच्चक्राम तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम्।

मनो होच्चक्राम तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वांसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः।

रेतो होच्चक्राम तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसैवमजीविष्मेति प्रविवेश ह रेतः।

अथ ह प्राण उत्क्रमिष्यन् यथा महा सुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवं हैवेमान् प्राणान् संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति।

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहं सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनः यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं मे वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नान्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते। बृह, ६।१।१—१४।

अत्र प्रजातिसंज्ञकस्य जननेन्द्रियस्याधिक्यं तदनुरूपं वचनाधिक्यञ्च। सर्व्वान्नभक्षणादिकमनन्तरमपि छान्दोग्ये प्रसङ्गान्तरयुक्तम्। (१०।२८)

८। देवासुराणां विरोधं प्रदर्श्य प्राणस्य श्रेष्ठत्वं छान्दोग्ये यदभिहितं तदेव प्राणोपासनाविधानाय विस्तारेण विवृणोति—द्वया हेति। ह ऐतिह्ये। प्राजापत्याः प्रजापतेः अपत्यानि—'प्रजापतेः प्राणा वागादयः'—द्वया द्विप्रकाराः—देवाः च असुराः च—"शास्त्रजनितज्ञानकर्म्मभाविता द्योतनात् देवाः; तएव स्वाभा-

**ते ह वाचमूचुस्त्वं न उद्गायेति, तथेति तेभ्यो वागुद्गायत्। यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा।**

विकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्म्मज्ञानभाविता असुराः" इति भाष्यकारः। ततः द्विप्रकारतः देवाः कानीयसाः कनीयांसः अल्पाः एव, असुराः ज्यायसः ज्यायांसः—"स्वाभाविकी हि कर्म्मज्ञानप्रवृत्तिर्महत्तरा; प्राणानां शास्त्रज्ञानजनितायाः कर्म्मज्ञानप्रवृत्तेर्दृष्टप्रयोजनत्वात्। अतएव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात्। अत्यन्तयत्नसाध्या हि सा" इति भाष्यकारः। ते देवाः असुराश्च एषु लोकेषु अस्पर्द्धन्त स्पर्द्धां कृतवन्तः—"देवानाञ्चासुराणाञ्च वृत्त्युद्भवाभिभवौ स्पर्द्धा। कदाचित् शास्त्रजनिता कर्म्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति। यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्म्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्य्यभिभूयते। स देवानां जयोऽसुराणां पराजयः। कदाचित्तद्विपर्य्ययेण देवानां वृत्तिरभिभूयते आसुर्य्या उद्भवः। सोऽसुराणां जयो देवानां पराजयः। एवं देवानां जये धर्म्मभूयस्त्वादुत्कर्ष आप्रजापतित्वप्राप्तेः। असुरजयेऽधर्म्मभूयस्त्वादपकर्ष आस्थावरत्वप्राप्तेः। उभयसाम्ये मनुष्यत्वप्राप्तिः" इति भाष्यकारः। कनीयस्त्वादभिभूयमानाः ते देवाः पुनः ऊचुः—हन्त, यज्ञे ज्योतिष्टोमे उद्गीथेन असुरान् अत्ययाम अतिगच्छाम इति।

ते देवाः पुनः वाचम् ऊचुः—त्वं नः अस्मभ्यम् उद्गाय औद्गात्रं कर्म्म कुरुष्व इति। तथा इति तथा अस्तु इति वाक् तेभ्यः देवेभ्यः उदगायत् औद्गात्रं कर्म्म अकरोत्। वाचि यः भोगः वाङ्निमित्तोपकारः तं देवेभ्यः आगायत् उद्गानेन असाधयत्; यत् कल्याणं शोभनं वदति—वर्णान् अभिनिष्पादयति—तत् आत्मने स्वार्थमेव

अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायत्। यः प्राणे भोगस्तं देवेभ्य आगायत् यत् कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै उद्गात्रा-त्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा।

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुद-गायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायत् यत् कल्याणं

आगायत्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति अतिगमिष्यन्ति इति। किं ते ऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य अभिगम्य पाप्मना अविध्यन् विद्धवन्तः। स यः—स प्रजापति यः यत्स्वरूपः—पाप्मा स तत्स्वरूपः। कथमेतत् ज्ञायते? यत् एव इदम् अप्रतिरूपं शास्त्रप्रतिषिद्धं वदति प्रजा, स एव—अप्रतिरूपवद-नेनानुमितः स—प्रजापतेर्वाचि गतः—पाप्मा। कारणानुविधायि कार्य्यमिति न्यायेन प्रजासु प्राकट्यं भजते यदप्रतिरूपवदनं, तत् प्रजापतेर्वाचि तदस्तित्वं ज्ञापयति।

अथ अनन्तरं प्राणं पुनः ऊचुः देवाः—त्वं नः अस्मभ्यम् उद्गाय इति। तथा इति प्राणः तेभ्यः उदगायत्। प्राणे यः भोगः तन्निमि-त्तोपकारः तं देवेभ्यः आगायत्, यत् कल्याणं शोभनं जिघ्रति, तत् आत्मने स्वार्थमेव आगायत्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति इति। किन्तेऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य पाप्मना अविध्यन्। स यः पाप्मा सः। कथमेतत् ज्ञायते? यत् एव इदम् अप्रतिरूपं शास्त्रप्रतिषिद्धं जिघ्रति, स एव स प्रजापतिघ्राणगतः पाप्मा।

अथ अनन्तरं चक्षुः पुनः ऊचुः देवाः—त्वं नः अस्मभ्यम् उद्गाय इति। तथा इति चक्षुः तेभ्यः उदगायत्। चक्षुषि यः भोगः तन्निमि-

पश्यति तदात्मने। ते विदुरनेनैव न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मना अविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा।

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायत्। यः श्रोत्रे भोगस्तं देवेभ्य आगायत् यत् कल्याणꣳ शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा।

अथ ह मनऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन

त्रोपकारः तं देवेभ्यः आगायत्, यत् कल्याणं शोभनं पश्यति तत् आत्मने स्वार्थमेव आगायत्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति इति। किन्तेऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य पाप्मना अविध्यन्। स यः पाप्मा सः। कथमेतत् ज्ञायते? यत् एव इदम् अप्रतिरूपं शास्त्रप्रतिषिद्धं पश्यति स एव स प्रजापतिचक्षुर्गतः पाप्मा।

अथ अनन्तरं श्रोत्रं पुनः ऊचुः देवाः—त्वं न अस्मभ्यम् उद्गाय इति। तथा इति श्रोत्रं तेभ्यः उदगायत्। श्रोत्रे यः भोगः तन्निमित्तोपकारः तं देवेभ्यः आगायात्, यत् कल्याणं शोभनं शृणोति तत् आत्मने स्वार्थमेव आगायात्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति इति। किं तेऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य पाप्मना अविध्यन्। स यः पाप्मा सः। कथमेतत् ज्ञायते? यत् एव इदम् अप्रतिरूपं शास्त्रप्रतिषिद्धं शृणोति, स एव स प्रजापतिश्रोत्रगतः पाप्मा।

अथ अनन्तरं मनः पुनः ऊचुः देवाः—त्वं नः अस्मभ्यम् उद्गाय इति। तथा इति मनः तेभ्यः उदगायत्। मनसि यः भोगः तन्निमि-

उद्गायत्। यो मनसि भोगस्तं देवेभ्य आगायत् यत् कल्याणꣳ सङ्कल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मा। एवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन्।

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् पराऽसुरा भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति य एवं वेद।

सोपकारः तं देवेभ्यः आगायात्, यत् कल्याणं शोभनं सङ्कल्पयति तत् आत्मने स्वार्थमेव आगायात्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति इति। किं तेऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य पाप्मना अविध्यन्। स यः पाप्मा सः। कथमेतत् ज्ञायते? यत् एव इदम् अप्रतिरूपं शास्त्रप्रतिषिद्धं सङ्कल्पयति, स एव स प्रजापतिमनोगतः पाप्मा। एवं पुनः खलु एताः देवताः अनुक्ताः त्वगादिदेवताः वागादिवत् पाप्मभिः उपासृजन् संसर्गं कृतवन्तः, एवम् एनाः त्वगादिदेवताः पाप्मना अविध्यन् विद्धवन्तः।

अथ अनन्तरम् इमम् आसन्यम् आस्ये भवं मुखान्तर्विलस्थं प्राणम् ऊचुः देवाः—त्वं नः अस्मभ्यम् उद्गाय इति। तथा इति एष प्राणः तेभ्यः उदगायत्। ते असुराः विदुः—अनेन उद्गात्रा नः अस्मान् अत्येष्यन्ति इति। किं तेऽकुर्व्वन्? तम् उद्गातारम् अभिद्रुत्य पाप्मना

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाᳩं हि रसः।

सा वा एषा देवता दूर्नाम दूरᳩं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद।

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत् पाप्मानं मृत्युमन्ववायानीति।

अविधयन्। स दृष्टान्तः—यथा लोके लोष्टः मृत्पिण्डः अश्मानम् ऋत्वा प्राप्य विध्वंसेत एवं ह एव विध्वंसमानाः विष्वञ्चः विविधगतयः असुराः विनेशुः विनाशं प्राप्ताः। ततः देवाः द्योतनशीलाः अभवन्, असुराः परा अभवन् पराभूताः बभूवुः। यः एवं वेद—प्राणस्यात्मत्वेन परिग्रहात्; तस्य अस्य द्विषन् भ्रातृव्यः—प्रजापतिप्रतिपक्षभूतः पाप्मा—भवति, आत्मना—प्रजापतिस्वरूपेण—स च परा भवति विशीर्य्यते—लोष्टवत् प्राणपरिष्वङ्गात्।

ते देवाः पुनः ऊचुः—क्व नु कस्मिन् नु स अभूत्, यः नः अस्मान् इत्थम् असंक्त सञ्जितवान् देवभावमात्मत्वेनोपगमितवान् इति। एवमनुसन्धाय निर्णीतवन्तः—अयम् आस्ये मुखे अन्तः इति। स मुख्यप्राणः अयास्यः—वागाद्यात्मत्वेन विशेषभावमनाश्रित्य वर्त्तमानः—आङ्गिरसः। कथम्? हि यस्मात् अङ्गानां रसः सारः—तं विना अङ्गानां शोषप्राप्तेः।

हि यस्मात् अस्याः प्राणदेवतायाः मृत्युः दूरम्—पापासुरविध्वंसनात्; तस्मात् एषा देवता पुनः दूर् नाम—दूरित्येवं ख्याता। यः एवं वेद, तस्मात् अस्मात् दूरं पुनः मृत्युः भवति।

सा पुनः एषा देवता एतासां वागादीनां देवतानां पाप्मानं स्वाभा-

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्यु-मपहत्याथैना मृत्युमत्यवहत्।

स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते।

अथ प्राणमत्यवहत् स यदा मृत्युमत्यमुच्यत स वायु-रभवत् सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते।

विकाशानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितं मृत्युम् अपहत्य विनाश्य यत्र आसां दिशम् अन्तः, तत् तत्र गमयाञ्चकार। तत् तत्र आसां देवतानां पाप्मनः पापानि विन्यदधात् विविधेन न्यग्भावेन अदधात् स्थापितवती। तस्मात् जनम् अन्तं न इयात् न गच्छेत्, अन्तं जन-शून्यमपि न इयात्। कथम्? नेत्—इत्थं जनसंसर्गे—नेद गति-कर्मसु, ततः क्लिवव्ययम् तादृग्जनाश्रिकगमनव्यापारे—पाप्मानं मृत्युम् अन्ववायानि अनुगच्छेयम् इति हेतोः।

सा वा एषा देवता एतासां वागादीनां देवतानां पाप्मानं मृत्युम् अपहत्य विनाश्य, अथ एनाः मृत्युम् अत्यवहत् अतीत्य प्रापयत् स्वस्वा-न्याादिदेवतास्वरूपत्वम्।

स प्राणः पुनः प्रथमां वाचम् एव अत्यवहत्। सा यदा मृत्युं पाप्मानम् अत्यमुच्यत अतीत्य मुक्ता बभूव, तदा स अग्निः अभवत्। सोऽयं अग्निः परेण मृत्युं मृत्योः परस्तात् अतिक्रान्तः दीप्यते दीप्ति-मान् भवति। पापराहित्येनैव वाचां दीप्तिमत्ता।

अथ स प्राणः प्राणं घ्राणम् अत्यवहत्। स प्राणः घ्राणः यदा मृत्युम् अत्यमुच्यत अतीत्य मुक्तो बभूव तदा स वायुः अभवत्। सोऽयं वायुः परेण मृत्युं मृत्योः परस्तात् अतिक्रान्तः पवते वहति।

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति।

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत तादिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः।

अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद।

अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति।

अथ अनन्तरं स चक्षुः अत्यवहत्। तत् यदा मृत्युं पाप्मानम् अत्यमुच्यत, तदा स आदित्यः अभवत्, सोऽसौ आदित्यः परेण मृत्युं मृत्योः परस्तात् अतिक्रान्तः तपति तेजस्वित्वं भजते पापराहित्यात्।

अथ अनन्तरं स श्रोत्रम् अत्यवहत्। तत् यदा मृत्युम् अत्यमुच्यत, तदा ताः दिशः अभवन्। ताः इमाः दिशः परेण मृत्युं मृत्योः परस्तात् अतिक्रान्ताः तदतीताः। अतिक्रान्ता इत्येतस्यात्रकथनात्तदुद्भूतानां ध्वनिमात्राणां प्राणात्मविदे पापराहित्यं सूच्यते विकाराानुत्पादकत्वञ्च।

अथ अनन्तरं स मनः अत्यवहत्। तत् यदा मृत्युम् अत्यमुच्यत, तदा स चन्द्रमाः अभवत्। सोऽसौ चन्द्रः परेण मृत्युं मृत्योः परस्तात् अतिक्रान्तः भाति दीप्तिमान् भवति—पापराहित्येनैव मनसो दीप्तिमत्ता। यः एवं वेद—प्राणेन वागादीनां पाप्माभिहननव्यापारं, तम् एनम् एषा देवता मृत्युं पाप्मानम् अतिवहति अतीत्य प्रापयति तत्तद्देवभावम्।

वागादिभिरात्मार्थमागानं कृतमिति स्पष्टमुक्तं न तु प्राणेन। तदिह प्रस्तूयते अथात्मने इति। आत्मने अन्नाद्यम्—अन्नं च तत्

ते देवा अब्रुवन्नेतावद्वा इदꣳ सर्व्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त। तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्त्ता स्वानाꣳ श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदꣳ स्वेषु प्रतिप्रतिर्बुभूषति न हैवालं भार्य्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्य्यान् बुभूर्षति स हैवालं भार्य्येभ्यो भवति।

आद्यं च—अदनीयम् अन्नम् आगायात् उद्गानेन असाधयत् आत्मसात् अकरोत्, हि यस्मात् यत् किञ्च अन्नम् अद्यते अनेन प्राणेन एव तत् अद्यते। इह तेन अन्नाद्येन प्राणः प्रतितिष्ठति।

ते वागादयः देवाः—स्वविषयद्योतनात् देवाः—अब्रुवन्—एतावत् वै यत् इदं सर्व्वम् अन्नं, तत् आत्मने आत्मार्थम् आगासीः आगीतवान् आगानेन आत्मसात् कृतमित्यर्थः। अनु पश्चात् आत्मसात्करणानन्तरम् अस्मिन् अन्ने नः अस्मान् आभजस्व आभाजयस्व अस्मांश्च अन्नभागिनः कुरु इति। प्राण आह—ते यूयं वै मा माम् अभिसंविशत आभिमुख्येन समन्ततः निविशत इति। इतरे प्राणाः—तथा इति, तथा अस्तु इति। तं मुख्यप्राणं समस्तं परिण्यविशन्त समन्तात् परिवेष्ट्य निविष्टवन्तः। तस्मात् अनेन प्राणेन यत् अन्नम् अत्ति लोकः, तेन एताः वागादिदेवताः तृप्यन्ति। यः एवं वेद—वागाद्याश्रयं प्राणम्; तम् एनं स्वाः ज्ञातयः अभिसंविशन्ति, स्वानां स भर्त्ता भरणकर्त्ता भवति, श्रेष्ठः भवति, पुरः अग्रतः एता गन्ता भवति, अन्नादः—प्राणवत् स्वयं पुष्टोऽन्येषां पोष्टा—भवति, अधिपतिः भवति, एवंविदं प्रति स्वेषु ज्ञातीनां मध्ये यः प्रतिपन्तिः प्रतिकूलः बुभूषति भवितुम् इच्छति, न स पुनः भार्य्येभ्यः भरणीयेभ्यः अलं पर्य्याप्तो

सोऽयास्य आङ्गिरसोऽङ्गानाᳬ हि रसः प्राणो वा अङ्गानाᳬ रसः प्राणो हि वा अङ्गानाᳬ रसस्तस्माद्यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाᳬ रसः।

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः।

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पति.।

एष उ एव साम वाग्वै सामैष सा चामश्चेति तत् साम्नः सामत्वम्। यद्वेव समः प्लुषिणा समोमशकेन

भवति, अथ ज्ञातीनां मध्ये यः एव एवम् अनुभवति अनुगतो भवति, यो वै तम् अनु अनुवर्त्त्य भार्य्यान् भरणीयान् बुभूर्षति भर्त्तुम् इच्छति, स पुनः निश्चितं भार्य्येभ्यः भरणीयेभ्यः अलं पर्य्याप्तः भवति।

स मुख्यप्राणः अयास्यः—वागाद्यात्मत्वेन विशेषभावमनाश्रित्य वर्त्तमानः—आङ्गिरसः। कथम्? हि यस्मात् अङ्गानां रसः सारः, प्राणः वै निश्चितम् अङ्गानां रसः। रसत्वमस्य साधयति—हि यस्मात् प्राणो वै अङ्गानां रसः, तस्मात् यस्मात् कस्मात् अङ्गात् प्राणः उत्क्रामति अपसर्पति, तत् एव तत्र एव तत् अङ्गं शुष्यति। एष प्राणः हि वै निश्चितम् अङ्गानां रसः।

एष प्राणः उ पुनः एव बृहस्पतिः। वाक् वै बृहती छन्दोविशिष्टा ऋक्, तस्या एष पतिः पालकः—तं विना तदुच्चारणासामर्थ्यात्। तस्मात् पुनः बृहस्पतिः।

एष प्राणः उ पुनः एव ब्रह्मणस्पतिः। वाक् वै ब्रह्म यजूरूपं तस्याः एष पतिः पालकः। तस्मात् पुनः ब्रह्मणस्पतिः।

एष प्राणः उ पुनः एव साम। वाक् वै साम। एष प्राणः सा

समोनागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां य एव-मेतत् साम वेद ।

एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदꣳ सर्व्व-मुत्तब्धं वागेव गीथोच्चगीथा चेति स उद्गीथः ।

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचा-यन्त्यस्य राजा मूर्द्धानं विपातयताद्यदितोऽयास्य आङ्गि-रसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोद-गायदिति ।

च—वाक् अमश्च—प्राणः—निखिलस्त्रीशब्दाभिधेयवस्तुविषयः सा, निखिलपुंशब्दाभिधेयवस्तुविषयः अमः—तस्मात् साम्नः गीतिरूपस्य स्वरादिसमुदायस्य सामत्वम् । प्रकारान्तरे—यत् यस्मात् उ एव प्लुषिणा पुत्तिकाशरीरेण समः, मशकेन मशकशरीरेण समः, नागेन हस्तिशरीरेण समः, एभिः त्रिभिः लोकैः समः, अनेन सर्व्वेण समः, तस्मात् उ एव साम । यः एवम् एतत् साम वेद स अश्नुते व्याप्नोति तादृङ्महत्त्वलाभेन, साम्नः सायुज्यं—सयुग्भावं समानदेहेन्द्रियाभि-मानित्वं सलोकतां समानलोकतां जयति आयत्तीकरोति ।

एष उ वै प्राणः उद्गीथः । कथम् ? हि यस्मात् प्राणः वै उत्प्रा-णेन ऊर्द्ध्वगतप्राणेन इदं सर्व्वम् उत्तब्धम् उत्तम्भितं विधृतम् । वाक् एव गीथा । उत् च प्राणः गीथा च वाक् इति स उद्गीथः ।

तद्धापि—तत् तत्र अर्थे ह आख्यायिका अपि । चैकितानः चिकितानस्यापत्यं ब्रह्मदत्तः राजानं सोमं भक्षयन् उवाच—अयं राजा सोमः त्वस्य परोक्षगतस्य तस्य मूर्द्धानं विपातयतात् विस्पष्टं पातयतु यदि इतः अस्मात् प्रकृतात् प्राणात् अन्येन देवतान्तरेण अयास्यः आङ्गिरसः इति उदगायत्—अयास्यः आङ्गिरसः प्राणएव,

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वरएव स्वं तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्य्यात् तस्मात् यज्ञे स्वरवन्तं दिदृच्चन्त एव। अथो यस्य स्वम्भवति भवति हास्य स्वं य एवमेतत् साम्नः स्वं वेद।

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वरएव सुवर्णं भवति हास्य सुवर्णं य एवमेतत् साम्नः सुवर्णं वेद।

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत् प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः।

तस्य यदि अन्यदेवत्वेन उद्गानं कृतवान् महान् अपराधोऽभूदिति निर्गलितोऽर्थः। वाचा च प्राणेन च हि एव स अयास्यः आङ्गिरसः उद्गाता उदगायत् इति।

तस्य एतस्य साम्नः पुनः यः स्वं धनं वेद, तस्य अस्य भवति पुनः स्वं धनम्। तस्य साम्नः किं धनम्? तस्य साम्नः स्वरः एव स्वं धनम्। तस्मात् आर्त्विज्यम् ऋत्विक्कर्म्मोद्गानं करिष्यन् वाचि स्वरम् इच्छेत। तया स्वरसम्पन्नया वाचा आर्त्विज्यं कुर्य्यात्। तस्मात् यज्ञे स्वरवन्तम् उद्गातारं दिदृच्चन्तः द्रष्टुम् इच्छन्तः एव लौकिकाः, अथो अपि च यस्य स्वं धनं भवति तं धनिनं दिदृक्षन्तः इति। एवं साम्नः एतत् स्वं यः वेद, तस्य अस्य पुनः स्वं भवति।

तस्य एतस्य साम्नः यः पुनः सुवर्णं वेद, तस्य अस्य पुनः सुवर्णं भवति। तस्य साम्नः स्वरः एव सुवर्णम्। यः एवं साम्नः एतत् सुवर्णं वेद तस्य अस्य सुवर्णं भवति।

तस्य एतस्य साम्नः यः पुनः प्रतिष्ठां वेद, स पुनः प्रतितिष्ठति।

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात् तदेतानि जपेत्। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत् सदमृतं मृत्यो र्माऽमृतं गमयामृतं मा कुर्व्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत् सामवेद।　　　　बृह ३।३।१—२८।

तस्य साम्नः वाक् एव प्रतिष्ठा। कथम्? हि यस्मात् वाचि खलु एष प्राणः प्रतिष्ठितः एतत् गानं गीयते—गीतिभावमापद्यते, एके अन्ने प्रतिष्ठितः इति पुनः आहुः।

अथ अनन्तरं यस्मात् जपकर्म्म देवभावायाभ्यारोहफलम् अतः पवमानानां—ज्योतिष्टमसिद्धानां द्वादशस्तोत्राणां यजमानार्थमुद्गीतानां त्रयाणां पवमानाख्यानां स्तोत्राणां—एव तदारम्भएव अभ्यारोहः जपकर्म्म। स वै खलु प्रस्तोता साम प्रस्तौति। स यत्र यस्मिन् काले साम प्रस्तुयात् प्रारभेत तत् तस्मिन् काले एतानि जपेत्—"असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मामृतं गमय" इति। जप्यानां त्रयाणामेकार्थत्वेऽपि शब्दान्तरैस्तिरोहितार्थत्वादर्थाभिबोधनाय स्वयमेव मन्त्रार्थं व्याचष्टे—यदा प्रस्तोता आह—असतो मा सद्गमय इति मृत्युः

८। त्रयो लोका एतएव वागेवायं लोकोमनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः।

त्रयो वेदा एतएव वागेवर्ग्वेदो मनो यजुर्व्वेदः प्राणः सामवेदः।

देवाः पितरो मनुष्या एतएव वागेव देवा मनः पितरः प्राणो मनुष्याः।

वा असत्, सत् अमृतं, मृत्योः मा अमृतं गमय, अमृतं मा मां कुरु इति एव। यदा स एतत् आह—तमसो मा ज्योतिर्गमय इति मृत्युः वै तमः, ज्योतिः अमृतं, मृत्योः मा अमृतं गमय, अमृतं मा मां कुरु इति एव। मृत्योः मा अमृतं गमय इति न अत्र तिरोहितम् इव अस्ति यथाश्रुत एवार्थः। अथ यानि इतराणि स्तोत्राणि नवसंख्यकानि तेषु आत्मने आत्मार्थम् अन्नाद्यम् आगायत्। तस्मात् तेषु स्तोत्रेषु यं कामं कामयेत तं वरं वृणीत। स एष एवंविद् उद्गाता आत्मने आत्मार्थं यजमानाय यजमानार्थं वा यं कामं कामयते, तम् आगायति उद्गानेन साधयति। तत् पुनः एतत् कर्म्म लोकजित् एव। य एवम् एतत् साम वेद, न हि पुनरेव तस्य अलोक्यतायै अलोकार्हत्वाय [illegible] आ अस्ति। तल्लाभो निश्चय इति न तादृशं शंसनम्।

८। मनोवाक् प्राण इति त्रितयारब्ध आत्मेत्युक्तम् (७।११) सम्प्रति तेषां लोकत्वादिकमुच्यते त्रयइति। एते वाङ्मनःप्राणाः एव त्रयः लोकाः भूर्भुवःस्वरित्याख्याः। वाक् एव अयं लोकः भूर्लोकः, मनः अन्तरिक्षलोकः भुवोलोकः, प्राणः असौ लोकः स्वर्लोकः।

एते वाङ्मनःप्राणाः एव त्रयः वेदाः। वाक् एव ऋग्वेदः, मनः यजुर्व्वेदः, प्राणः सामवेदः।

एते वाङ्मनःप्राणाः एव देवाः पितरः मनुष्याः। वाक् एव देवाः मनः पितरः, प्राणः मनुष्याः।

पिता माता प्रजैतएव मनएव पिता वाङ्माता प्राणः प्रजा।

विज्ञातं विजिज्ञास्यमविज्ञातमेतएव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति।

यत् किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति।

यत् किञ्चाऽविज्ञातं प्राणस्य तद्रूपं प्राणोह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति।

एते मनोवाक्प्राणाः एव पिता माता प्रजा। मनः एव पिता, वाक् माता, प्राणः प्रजा।

एते वाङ्मनःप्राणाः एव विज्ञातं, विजिज्ञास्यम्, अविज्ञातम्। यत् किञ्च विज्ञातं विस्पष्टं ज्ञातं वाचः तद्रूपम्—विज्ञातविषयो हि वाग्रूपेण विज्ञातरि तिष्ठति; वाक् हि विज्ञाता—विज्ञातविषयविज्ञापनकाले वाचैव तत् सिद्ध्यति, एवं तस्यामेव विज्ञातृत्वं विभाति, अतएव तस्याएव तत्त्वम्; तत् विज्ञातं भूत्वा वाक् एनं वाग्विदम् अवति पालयति—वाक्तिरोधाने तेन च विज्ञातविषयस्य भवेत् तिरोधानं वाग्विदो विपत्पातश्च।

यत् किञ्च विजिज्ञास्यं मनसः तद्रूपम्। मनो हि विजिज्ञास्यम्; मनसः सन्दिह्यमानाकारत्वात्। तत् विजिज्ञास्यं भूत्वा मनः एनं मनोविदम् अवति पालयति—विजिज्ञास्याभावे व्याख्यानसम्पदोऽभावः।

यत्किञ्च अविज्ञातं प्राणस्य तद्रूपम्—ज्ञातविषयो वाचि, सन्दिह्यमानविषयो मनसि, अज्ञातविषयः प्राणे तदाकारेण तिष्ठति न वाङ्मनसयोर्गोचरो भवति। कथमेवं भवति? प्राणो हि अविज्ञातः—

तस्याएव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्त-द्यावत्येव वाक् तावती पृथिवी तावानयमग्निः।

अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्य-स्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथु-नꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद।

अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्त-

अनिर्व्वचनीयत्वात्। तत् अविज्ञातं भूत्वा एनं प्राणविदम् अवति पालयति—सर्व्वस्मिन् विज्ञाते विज्ञातव्याभावे विज्ञातुर्विलोप आप-तति, अतएवाविज्ञातमेव तं विलोपाद्रक्षति।

वाङ्मनःप्राणानामाधिभौतिकविस्तारमुक्ताधिदैविकविस्तार उप-स्थाप्यते तस्यैवेति। तस्याः एव—तस्याः वाचः पृथिवी शरीरं आधार-भूतम् अयम् अग्निः ज्योतीरूपं करणं, तत् तस्मात् यावती एव वाक् तावती एव पृथिवी तावान् अयम् अग्निः।

अथ एतस्य मनसः द्यौः शरीरम् आधारभूतम्, असौ आदित्यः ज्योतीरूपं करणम्। तत् तस्मात् यावत् एव मनः तावती द्यौः, तावान् असौ आदित्यः। तौ अग्न्यादित्यौ वाङ्मनसे मातापितरौ—आदित्यस्य मनसः पितृत्वं वाचश्चाग्नेश्च मातृत्वम्, 'सावित्रं पाकमाग्नेयञ्च प्रकाश-मृते कर्मसिद्ध्यदर्शनात्तयोः सिद्धं जनकत्वम्।'—मिथुनं मैथुन्यम् इतरेतरसंसर्गं द्यावापृथिव्योरन्तराले समैतां सङ्गच्छेतां ततः प्राणः वायुः अजायत। यः जातः स इन्द्रः विश्वः (३।२३) स एष असपत्नः प्रति-पक्षविरहितः। कथम्? द्वितीयः वै सपत्नः—यत्र द्वितीयो विद्यते तत्र सपत्नत्वं सम्भवति नात्र तथा। यः एवंवेद—प्राणस्य इन्द्रस्यासपत्नत्वं, तस्य अस्य न सपत्नः प्रतिपक्षः भवति।

अथ एतस्य प्राणस्य आपः शरीरम्, असौ चन्द्रः ज्योतीरूपम्, तत्

द्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्तत्र ते सर्व्व-
एव समाः सर्व्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्तं
स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं
जयति। बृह ३।५।४—१३।

१०। यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ
सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि।
अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं
प्रत्याधानं प्राणाः स्थूणान्नं दाम।

तस्मात् यावान् एव प्राणः तावत्यः आपः, तावान् असौ चन्द्रः। तत्र ते एते वाङ्मनःप्राणाः सर्व्वे एव समाः सर्व्वे अनन्ताः। स यः पुनः एतान् अन्तवतः परिच्छिन्नान् उपास्ते स अन्तवन्तं लोकं जयति, अथ यः एतान् अनन्तान् अपरिच्छिन्नान् उपास्ते स अनन्तं लोकं जयति।

१०। "प्राणा वै सत्यं तेषामेष सत्यम्" (२।५ [५०पृ]), अतएव परात्मा "सत्यस्य सत्यम्" इति यदुक्तं तत्र प्राणतत्त्वनिर्णयायाह अय-मिति। यः पुनः साधानं साधारं, सप्रत्याधानं सप्रत्याधारं—यत्र आधेयस्य साक्षात् संसर्गः तत् प्रत्याधानं; सस्थूणं सस्तम्भं सदामं सरज्जुं शिशुं प्राणं वेद स सप्त सप्तसंख्यकान् द्विषतः भ्रातृव्यान्—'भ्रातृव्या हि द्विविधा भवन्ति द्विषन्तोऽद्विषन्तश्च तत्र द्विषन्तो ये तान्' —विरोधिनः अवरुणद्धि। 'सप्त ये शीर्षण्याः प्राणाः (८।२) विषयोप-लब्धिद्वाराणि तत्प्रभवा विषयरागाः सहजत्वात् भ्रातृव्याः' इति भाष्य-कारः। यः अयं मध्यमः प्राणः शरीरमध्यस्थः प्राणः लिङ्गात्मा अयं पुनः शिशुः—'विषयेष्वितरकरणवदपटुत्वात् शिशुः'। तस्य इदं शरीरम् एव आधानम्, इदं शिरः प्रत्याधानं—तत्रास्य साक्षात्संसर्गात्, प्राणाः करणानि स्थूणा, अन्नं दाम—अन्नपानजनितबलेन देहेऽस्यावष्ट-म्भमानत्वात्।

तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनᳬ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्ज्जन्यो या कनीनका तयादित्यो यत् कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्त्तन्या पृथिव्यान्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद।

तदेष श्लोको भवति—अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्। तथासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति॥ अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपमिति प्राणा वै यशोनिहितं

एताः सप्त अक्षितयः—'क्षयवासावपि क्षितौ' इति—अक्षयहेतवः तं प्राणम् उपतिष्ठन्ते अनुगताः भवन्ति—'यद्यपि मन्त्रकरणे तिष्ठतिरुपपूर्व्वः (पा, १।३।२५) आत्मनेपदी भवति इहापि सप्तदेवताभिधानानि मन्त्रस्थानीयानि करणानि, तिष्ठतेरतोऽप्यात्मनेपदं न विरुद्धम्" इति भाष्यकारः। तत् तत्र याः इमाः अक्षन् अक्षिणि लोहिन्यः लोहिताः राजयः रेखाः ताभिः राजिभिः रुद्रः एनं प्राणम् अन्वायत्तः अनुगतः उपतिष्ठतइत्यर्थः। अथ अक्षन् अक्षिणि याः आपः ताभिः पर्ज्जन्यः एनम् अन्वायत्तः, या कनीनका कनीनिका नेत्रतारका तया आदित्यः एनम् अन्वायत्तः, यत् कृष्णं चक्षुषि तेन अग्निः एनम् अन्वायत्तः, यत् शुक्लं चक्षुषि तेन इन्द्रः एनम् अन्वायत्तः, अधरया वर्त्तन्या पक्ष्मणा एनं पृथिवी अन्वायत्ता, उत्तरया वर्त्तन्या द्यौः अन्वायत्ता, यः एवं वेद, तस्य अस्य अन्नं न क्षीयते।

तत् तस्मिन् अर्थे एष श्लोकः मन्त्रः भवति। मन्त्रमुक्त्वा स्वयं श्रुतिः तदर्थमाचष्टे—"'अर्व्वाग्बिलश्चमसऊर्द्ध्वबुध्नः' इति इदं तच्छिरः, एष हि अर्व्वाग्बिलश्चमस ऊर्द्ध्वबुध्नः"—इदं तच्छिरः चमसाकारम् मुखस्य

विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्ततीरइति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते।

इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्व्वमस्यान्नं भवति य एवं वेद।

बृह ४।२।१—४।

बिलरूपत्वात् शिरसः बुध्नाकारत्वात्" ; "'तस्मिन् यशो निहितं विश्वरूपम्' इति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह"—तस्मिन् शिरसि विश्वरूपं नानारूपं यशः निहितं स्थितं भवति। किन्तद्यशः? प्राणाः। किन्तद्विश्वरूपम्? प्राणाः श्रोत्रादयः वायवश्च ; "'तस्यासत ऋषयः सप्त तीरे' इति प्राणा वा ऋषयः प्राणानेतदाह"—तस्य चमसस्य तीरे समीपवर्त्तिनि देशे सप्त ऋषयः आसते प्राणाः परिस्पन्दात्मकाः ते एव च ऋषयः ; "'वागष्टमी ब्रह्मणा संविदाना' इति वाक् हि अष्टमी ब्रह्मणा संवित्ते"—छिद्राणां सप्तत्वेन सप्तेन्द्रियाणि तत्र रसना तु सप्तमी अष्टमी वाक् तया ब्रह्मणा वेदेन संवादं कुरुते।

के पुनस्ते चमसस्य तीरे ऋषयः? इमौ एव गौतमभरद्वाजौ कर्णौ अयमेव दक्षिणः कर्णः गौतमः अयमेव उत्तरः कर्णः भरद्वाजः। इमौ एव विश्वामित्रजमदग्नी चक्षुषी—अयमेव विश्वामित्रः दक्षिणं चक्षुः, अयमेव जमदग्निः उत्तरं चक्षुः, इमौ एव वसिष्ठकश्यपौ नासिकापुटौ—अयमेव वसिष्ठः दक्षिणनासापुटः, अयमेव काश्यपः उत्तरनासापुटः ; वाक् एव अत्रिः। वाचा हि अन्नम् अद्यते—यत् अत्रिरिति तत् अत्तिः ह वै प्रसिद्धं नाम—अत्तिरिति वक्तव्ये अत्रिरित्युक्तमिति भावः।

११। अथ हैनं विदग्धः शाकल्यः प्रपच्छ कति देवा याज्ञवल्क्येति। स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति।

य एवं वेद, स सर्व्वस्य अत्ता भोक्ता भवति, सर्व्वम् अस्य अन्नं भवति।

११। वैदिकदेवसंख्यासङ्कोचद्वारेण प्राणे तत् सर्व्वं पर्य्यवस्यति अथेति। अथ अनन्तरं ह किल जनकसभागतम् एनं याज्ञवल्क्यं शाकल्यः शकलस्यापत्यं विदग्धः पप्रच्छ पृष्टवान्—हे याज्ञवल्क्य, कति देवाः इति। स याज्ञवल्क्यः पुनः एतयाएव निविदा—वक्ष्यमाण देवतासंख्यावाचकमन्त्रपदेन—प्रतिपेदे उत्तरं ददौ। वैश्वदेवस्य शस्त्रस्य निविदि यावन्तः देवाः उच्यन्ते तावन्तः देवाः इति। काऽसौ निवित्—"त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा" इति। त्रयश्च त्रयश्च त्रीणि च शतानि त्रीणि च सहस्राणि—षडुत्तरत्रिशताधिक-त्रिसहस्राणि देवाः इति। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति। याज्ञवल्क्य आह—त्रयस्त्रिंशत् इति। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति।

स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति।

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्व्वं हितमिति तस्माद्वसव इति।

याज्ञवल्क्य आह—षट् इति। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति। याज्ञवल्क्यः—त्रय इति। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति, याज्ञवल्क्यः—द्वौ इति। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति। याज्ञवल्क्यः—अध्यर्द्धः अर्द्धाधिकः एकः। ओमिति पुनः शाकल्य उवाच। पुनः स संख्यासङ्कोचज्ञापनाय—हे याज्ञवल्क्य, कति एव देवाः इति। याज्ञवल्क्यः—एकः इति। ओमिति पुनः शाकल्य उवाच। शाकल्यः कतमे ते 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा'? इति।

स याज्ञवल्क्यः पुनः उवाच—त्रयस्त्रिंशत् तु एव देवाः, एते षडुत्तरत्रिशताधिकत्रिसहस्रदेवाः एषां त्रयस्त्रिंशद्देवानां महिमानः विभूतयः एव इति। शाकल्यः—कतमे ते त्रयस्त्रिंशत् इति। याज्ञवल्क्यः—अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः—ते एकत्रिंशत्, इति। इन्द्रः च प्रजापतिः च त्रयस्त्रिंशौ त्रयस्त्रिंशतां पूरणौ इति।

शाकल्यः—कतमे वसवः इति। अग्निः च, पृथिवी च, वायुः च, अन्तरिक्षं च, आदित्यः च, द्यौः च, चन्द्रमाः च, नक्षत्राणि च, एते वसवः। हि यस्मात् एतेषु इदं सर्व्वं हितं स्थितम् इति, तस्मात्

कतमे रुद्रा इति दशमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति।

कतम आदित्याइति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदᳫं सर्व्वमाददाना यन्ति ते यदिदᳫं सर्व्वमाददाना यन्ति तस्मादादित्या इति।

कतमइन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति,कतमस्तनयित्नुरित्यशनिरिति कतमो यज्ञइति पशव इति।

वसव इति। वसतेरुः—वसुः। 'यस्माद्वासयन्ते तस्माद्वसवः' इति भाष्यकारः।

शाकल्यः—कतमे रुद्राः इति। याज्ञवल्क्यः—पुरुषे प्राणाः इन्द्रियाणि दश, आत्मा मनः च एकादशः एकादशानां पूरणः। ते यदा अस्मात् मर्त्त्यात् शरीरात् उत्क्रामन्ति, अथ तदा रोदयन्ति। तत् तत्र उत्क्रमणे यत् यस्मात् रोदयन्ति, तस्मात् रुद्राः इति।

शाकल्यः—कतमे आदित्याः इति। द्वादश वै मासाः, संवत्सरस्य एते आदित्याः, कथम्? हि यस्मात् एते इदं सर्व्वम् आददानाः गृह्णन्तः यन्ति गच्छन्ति। यस्मात् इदं सर्व्वम् आददानाः यन्ति, तस्मात् आदित्याः इति।

शाकल्यः—कतमः इन्द्रः कतमः प्रजापतिः इति। याज्ञवल्क्यः—स्तनयित्नुः एव इन्द्रः, यज्ञः प्रजापतिः इति। शाकल्यः—कतमः स्तनयित्नुः इति। याज्ञवल्क्यः—अशनिः इति। शाकल्यः—कतमः यज्ञः इति। याज्ञवल्क्यः—पशवः इति—'यज्ञस्य हि साधनानि पशवः। यज्ञस्यारूपत्वात् पशुसाधनाश्रयत्वाच्च पशवो यज्ञइत्युच्यते' इति भाष्यकारः।

कतमे षड़ित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्चैते षड़ेते हीदꣳ सर्व्वꣳ षड़िति।

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्व्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नञ्चैव प्राणश्चेति कतमोऽध्यर्द्ध इति योऽयं पवत इति।

तदाहुर्यदयमेकइवैव पवतेऽथ कथमध्यर्द्ध इति यदस्मिन्निदꣳ सर्व्वमध्यार्ध्नोत्तेनाध्यार्द्ध इति कतम एकोदेव इति प्राण इति स ब्रह्म त्यदित्याचक्षते।

बृह, ५।६।१—६।

शाकल्यः—कतमे षट् इति। याज्ञवल्क्यः—अग्निः च, पृथिवी च, वायुः च, अन्तरिक्षं च, आदित्यः च, द्यौः च एते षट्। एते षट् इदं सर्व्वम् इति।

शाकल्यः—कतमे ते त्रयो देवाः इति। इमे त्रयः लोकाः एव—पृथिव्याम् अग्निं, अन्तरिक्षे वायुं, दिवि आदित्यं पुनरन्तर्भूय लोकास्त्रय इति। शाकल्यः—कतमौ तौ देवौ इति। अन्नं च एव प्राणः च एव। शाकल्यः—कतमः अध्यर्द्धः इति योऽयं पवते वायुः।

तत् तत्र आहुः—यत् यस्मात् अयम् एकः इव एव पवते, अथ कथम् अध्यर्द्धः इति। यत् यस्मात् अस्मिन् वायौ इदं सर्व्वम् अध्यार्ध्नोत् अधि आर्ध्नोत् अधि ऋद्धिं प्राप्नोत्, तेन अध्यर्द्धः इति। शाकल्यः—कतमः एकः देवः इति। प्राणः इति। कथम्? स प्राणः ब्रह्म त्यत् इति आचक्षते। परोक्षाभिधायकेन त्यच्छब्देन परोक्षत्वेन। प्राणे ब्रह्मदर्शनं परोक्षं न तु साक्षात्।

*

* *

वैदिकदेवानां यद्यप्येकत्वं प्राणे साधितं, तथापि न तद्दृश्यत ऋक्संहितायां किन्तु सुव्यक्तमथर्व्वणि। जीवनधारणाय मनसः प्राधान्यं दृश्यत ऋक्संहितायां, तद्यथा—

यत्ते यमं वैवस्वतं मनो जगाम दूरकम्।
तत्त आवर्त्तयामसीह क्षयाय जीवसे॥
यत्ते दिवं यत् पृथिवीम्—
यत्ते भूमिं चतुर्भृष्टिम्—
यत्ते चतस्रः प्रदिशो—
यत्ते समुद्रमर्णवम्—
यत्ते मरीचीः प्रवतो—
यत्ते अपो यदोषधीः—
यत्ते सूर्य्यं यदुषसं—
यत्ते पर्व्वतान् बृहतो—
यत्ते विश्वमिदं जगत्—
यत्ते पराः परावतो—
यत्ते भूतं च भव्यञ्च मनो जगाम दूरकम्।
तत्त आवर्त्तयामसीह क्षयाय जीवसे॥ ऋक् १०म ५८सू १—१२ ऋक्।
यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु॥
येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्व्वं यक्षमन्तः प्रजानां— ।
यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किञ्चन कर्म्म क्रियते— ।
येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्व्वम्।
येन यज्ञस्तायते सप्तहोता— ।
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः।
यस्मिँश्चित्तं सर्व्वमोतं प्रजानां— ।
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं— । यजुः ३४अ, १—६क।

वाग्विषयकं स्तोत्रं न पुनर्विरलमृक्संहितायाम्।
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्त्याँ आ विवेश॥
ऋक् ४म, ५८सू, ३ऋक्।

इत्यस्या यद्यपि श्रीमत्पतञ्जलिमहर्षिणैवं व्याख्यानं कृतम्—"महोदेवो मर्त्त्याँ आविवेशेति महान् देवः शब्दः मर्त्त्या मरणधर्म्माणो मनुष्याः तान् आविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्" इति, तथापि नैतदेकान्तं यतो निरुक्तकृताऽन्यथा व्याख्याता।

तद्यथा—"चत्वारि शृङ्गेति वेदा एव एतदुक्ताः, त्रयो अस्य पादा इति सवनानि त्रीणि, द्वे शीर्षे प्रायणीयोदनीये, सप्त हस्तासः सप्त छन्दांसि, त्रिधाबद्धः मन्त्रब्राह्मणकल्पैः, वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुभिः सामभिर्यदेनमृग्भिः शंसन्ति, यजुभिर्यजन्ति, सामभिः स्तुवन्ति। महोदेव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेश इत्येष हि मनुष्यान् आविशति यजनाय, तस्योत्तराभूयसे निर्व्वचनाय।" इति।

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम॥
देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु॥

ऋक् ८म, १००सू, १०।११ ऋक्।

एते दशममण्डलगतैकसप्ततितमसूक्तस्था एताश्च,—

बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः॥
सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥
यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते॥
उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥
यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे॥
हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो विचरन्त्यु त्वे॥
इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः॥
सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः।
किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय॥
ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः॥

ऋक् १०म, ७१सू, १—११ ऋक्।

यद्यपि वाचः प्रशस्यतरत्वं प्रथयन्ति, तथापि न तथा यथा प्राणस्याथर्व्वणि,

प्राणाय नमो यस्य सर्व्वमिदं वशे।
यो भूतः सर्व्वस्येश्वरो यस्मिन् सर्व्वं प्रतिष्ठितम्॥
नमस्ते प्राणक्रन्दाय नमस्ते स्तनयित्नवे।
नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते॥
यत् प्राण स्तनयित्नुनाभिक्रन्दत्योषधीः।
प्र वीयन्ते गर्भान् दधतेऽथो बह्वीर्व्वि जायन्ते।
यत् प्राण ऋतावागतेऽभिक्रन्दत्योषधीः।
सर्व्वं तदा प्रमोदते यत् किञ्च भूम्यामधि॥
यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम्।
पशवस्तत् प्रमोदन्ते महो वै नो भविष्यति॥
अभिवृष्टा ओषधयः प्राणेन समवादिरन्।
आयुर्वै नः प्रातीतरः सर्व्वाः नः सुरभीरकः॥
नमस्ते अस्त्वायते नमो अस्तु परायते।
नमस्ते प्राण तिष्ठत आसीनायोत ते नमः॥
नमस्ते प्राण प्राणते नमो अस्त्वपानते।
पराचीनाय ते नमः प्रतीचीनाय ते नमः सर्व्वस्मै त इदं नमः॥
या ते प्राण प्रिया तनूर्यो ते प्राणप्रेयसी।
अथो यद्भेषजं तव तस्य नो धेहि जीवसे॥
प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियम्।
प्राणो ह सर्व्वस्येश्वरो यच्च प्राणति यच्च न॥
प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते।
प्राणो ह सत्यवादिनमुत्तमे लोक आदधत्॥
प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व्व उपासते।
प्राणो ह सूर्य्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम्॥
प्राणापानौ व्रीहियवावनड्वान् प्राण उच्यते।
यवे ह प्राण आहितोऽपानो व्रीहिरुच्यते॥
अपानति प्राणति पुरुषो गर्भे अन्तरा।
यदा त्वं प्राण जिन्वस्यथ स जायते पुनः॥
प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते।
प्राणे ह भूतं भव्यञ्च प्राणे सर्व्वं प्रतिष्ठितम्॥
आथर्व्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत।
ओषधयः प्रजायन्ते यदा त्वं प्राण जिन्वसि॥

यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम्।
ओषधयः प्रजायन्तेऽथो याः काश्च वीरुधः॥
यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः।
सर्वे तस्मै बलिं हरानमुष्मिँल्लोक उत्तमे॥
यथा प्राणबलिहृतस्तुभ्यं सर्वाः प्रजा इमाः।
एवा तस्मै बलिं हरान् यस्त्वा शृणवत् सुश्रवः॥
अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः।
स भूतो भव्यं भविष्यत् पिता पुत्रं प्रविवेशा शचीभिः॥
एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्।
यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यात्।
न रात्री नाहः स्यान्न व्युच्छेत् कदाचन॥
अष्टाचक्रं वर्तत एकनेमि सहस्राक्षरं प्रपुरो नि पश्चा।
अर्द्धेन विश्वं भुवनं जजान यदस्यार्द्धं कतमः स केतुः॥
यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः।
अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोऽस्तु ते॥
यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः।
अतन्द्रो ब्रह्मणा धीरः प्राणो मानु तिष्ठतु॥
ऊर्द्ध्वः सुप्तेषु जागार ननु तिर्य्यङ् नि पद्यते।
न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन॥
प्राण मा मत् पर्य्यावृतो न मदन्यो भविष्यसि।
अपां गर्भमिव जीवसे प्राण बध्नामि त्वा मयि॥

अथ—११ का, २ अनु, २४ पु, १—२६ ऋक्।

शाकल्यप्रश्नोत्तरे वैदिकानखिलान् देवानुद्दिश्य "प्राण इति स ब्रह्म त्यदित्याचक्षते" इति यत् प्राणे तेषामेकत्वं साधितं महर्षियाज्ञवल्क्येन तदेवाथर्व्वोदितप्राणस्तोत्रेण दृढ़तामापत्। कथं वा प्राणत्वेन ब्रह्मदर्शनमन्येषु देवेषु घटते, स्फुटीभविष्यति तदनन्तरवल्लाम्। वेदान्ते मत्प्रणीतः प्राणस्य तत्त्वमाख्यायिकाच्छलेनोक्तं यत्तत्तत्त्ववल्लां विवेक्तव्यम्।

# इति देवतावल्ली नवमोऽध्यायः।

---

# दशमोऽध्यायः।

## विद्यावल्ली।

१। ईशावास्यमिदं सर्व्वं यत् किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥
कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे॥

ईश १।२।

विद्या चाविद्येति विभागो दृश्यते सर्व्वत्रोपनिषदि, कथं केवलं विद्यावल्लीत्यभिख्या। "अविद्यायां बहुधा वर्त्तमानाः" (१।८) इत्यादौ वैदिककर्म्माख्याचिख्यन्ते। तत्रैवाविद्येत्यभिख्या। उपनिषदि पुनरनुष्ठेयेषु सर्व्वत्र ज्ञानसम्बन्धोदृश्यते, सुतरां न तान्यविद्यासंज्ञामवगाहन्ते किन्तर्हि विद्यामेव। कथमत्र ज्ञानसम्बन्ध इति ज्ञायते? 'ईशावास्यमिदम्' इत्यारम्भवचनेन। इदमेव सर्व्वत्रानुपश्यते।

१। ईशेति। जगत्यां ब्रह्माण्डे इदं यत् किञ्च जगत्—गमनशीलमित्युपलक्षणं—स्थावरजङ्गमं, तत् सर्व्वम् ईशा ईशित्रा ईश्वरेण वास्यम्—'तत्क्वलान्' इति प्रक्रियया (६।४[२२०पृ])—आच्छादनीयं त्वयेति शेषः। न केवलमेतत् कृत्वा कृतार्थता किन्तर्हि,—तेन ईशा त्यक्तेन विसृष्टेन विषयेण भुञ्जीथाः भोगं निर्व्वर्त्तयेथाः, कस्यस्वित् कस्यापि धनं—धनमित्युपलक्षणं धनजनगृहादिकं—मा गृधः मा काङ्क्षीः। तेन कारणेन त्यक्तेन त्यागेनेति नैष्कर्म्यमार्गावलम्बिनः, तेन ईशा त्यक्तेन विसृष्टेनेति कर्म्मार्पणवादिनः। अनन्तरवचनेनैक्यसंरक्षणायास्माभिरेकतरपक्षावलम्बनं कृतम्, अन्वयमुखेन व्याख्यायाः पक्षपातित्वाच्च।

इहेति। इह संसारे कर्म्माणि कुर्व्वन् एव शतं समाः संवत्सरान्

२। अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात्।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥
सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वासम्भूत्यामृतमश्नुते॥

ईश १३।१४।

पुरुषायुषशतवर्षपर्य्यन्तं जिजीविषेत् जीवितुम् इच्छेत्; इत्येष विधिः त्वयि एवम्—'ईशावास्यम्' इत्युक्तप्रकारेण—अस्ति वर्त्तते, इतः उक्त-प्रकारात् अन्यथा न। कथम्? तदनुसरणेन नरे मानवे न कर्म्म कर्म्मदोषः लिप्यते। एवं कर्म्मणा भगवदनुसरणं भवति, सुतरां तेन कर्म्मबन्धनोच्छेद एव। श्रुतिद्वयमिदं गीताशास्त्रस्य जीवातु।

२। "अन्धं तमः प्रविशन्ति" (१।१--४) इत्याद्यासु वैदिककर्म्मणः प्रकृतिपूजायाश्च फलमज्ञानता, देवाराधनाया ऐश्वर्य्यविशेषेऽनुरक्तिः पुन-स्ततोऽप्यधिकतरा सेत्युक्तम्। "विद्याञ्चाविद्याञ्च" (१।२) इत्यनया योऽसौ कर्म्मदेवाराधनयोः प्रतिप्रसवः स प्रदर्शितः। योऽसौ प्रकृति-पूजाया ऐश्वर्य्यविशेषानुरक्तेष, स पुनर्विद्यावल्ल्यां विशेषनियोगाय तत्र न विविक्तः। सोऽत्र प्रदर्श्यते अन्यदिति सम्भूतिञ्चेति। सम्भवात् ऐश्वर्य्यविशेषात् अन्यत् एव, असम्भवात् प्रकृतेः अन्यत् फलम् आहुः; इति ये नः अस्मभ्यः तत् विचचक्षिरे व्याख्यातवन्तः तेषां धीराणां शुश्रुम श्रुतवन्तः वयम्।

सम्भूतिम् असम्भूतिम्—अकारलोपश्छान्दसः—प्रकृतिं विनाशं नश्व-रम् ऐश्वर्य्यं च, तत् उभयं सह एकत्र यः वेद स विनाशेन ऐश्वर्य्येण मृत्युं तीर्त्वा असम्भूत्या प्रकृत्या अमृतम् अश्नुते प्राप्नोति। प्रकृतिः परात्मशक्तिः तेनाभिन्ना। अतएव "हिरण्मयेन पात्रेण" (२।१—४) इत्याद्याभिरनन्तराभिः श्रुतिभिरावरणविमोचनेन भेदग्रहणे यदासीद-ज्ञानकारणं तदपाकृतम्। अपाकृते पुनरज्ञानकारणे प्रकृतिः परेणा-भिन्ना शिवस्य तस्य शिवत्वं सच्चिदानन्दघनत्वं वा साधकानुभूतौ प्रत्यक्ष-

३। अथाध्यात्मम् यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः।

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभि हैनं सर्व्वाणि भूतानि संवाञ्छन्ति।

उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति।

तस्यै तपो दमः कर्म्मेति प्रतिष्ठा वेदाः सर्व्वाङ्गाणि सत्यमायतनम्।

विषयं करोति, तेन च तस्यामृतत्वलाभः। ऐश्वर्य्येण पुनर्मृत्व्यतिक्रमस्तत्र भगवदैश्वर्य्यप्रत्यक्षीकरणेन तदनुषक्तपापवासनानां तिरोधानेन भवति।

३। साक्षाद्ब्रह्मविद्यामुपदिशति अथेति। अथ अनन्तरम् अध्यात्मं परात्मविषयम् आदेशः। यत् यस्मात् मनः एतत् ब्रह्म गच्छति इव प्राप्नोति इव विषयीकरोति इव च, तत् तस्मात् अनेन मनसा एतत् ब्रह्म अभीक्ष्णं पुनः पुनः उपस्मरति च, सङ्कल्पः—एष सङ्कल्पः साधकस्येति शेषः।

तत् ब्रह्म ह खलु तद्वनं तस्य प्राणिजातस्य वनं वननीयं भजनीयं नाम प्रख्यातम्, सुतरां तद्वनम् इति नाम्ना उपासितव्यम्। स यः एतत् ब्रह्म एवं—प्राणिजातस्य भजनीयमिति प्रकारेण—वेद जानाति, सर्व्वाणि भूतानि पुनः एनं साधकं अभिसंवाञ्छन्ति। न केवलमेवमुपासनेन भूतद्वेषस्तिरोधत्ते किन्तर्हि प्रियत्वमेवोपतिष्ठते।

उपनिषदं भो ब्रूहि इति त्वया शिष्येणोक्तम्। मया ते तुभ्यम् उपनिषत् उक्ता। ब्राह्मीं ब्रह्मसम्पर्कीयां वाचं उपनिषदं रहस्यं ते तुभ्यम् अब्रूम उक्तवन्तः स्मः इति।

तपः—कर्म्मेन्द्रियमनसां समाधानं, दमः उपशमः, कर्म्म—'ईशा

यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति। तल ३०—३४।

४। पुरमेकादशद्वारमजस्यावक्रचेतसः।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते। एतद्वैतत्।
कठ ५।१।

५। तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ॥

वाक्यम्' इत्युक्तप्रकारेणानुष्ठीयमानं कर्म्म इति तस्यै उपनिषदे प्रतिष्ठा पादरूपा स्थितिहेतुः—तैः सा प्रतितिष्ठतीति भावः; वेदाः सर्व्वाङ्गानि शिरआदीनि अन्याान्याङ्गानि, सत्यम् आयतनम् आश्रयः श्रेष्ठत्ववशात्। ब्रह्मविद्यायां सर्व्वेषामन्तर्भावः।

यो वा एताम् उपनिषदम् एवं सर्व्वान्तर्भावकत्वेन वेद जानाति स पाप्मानम् अपहत्य विधूय ज्येये ज्यायसि सर्व्वमहत्तरे अनन्ते स्वर्गे लोके प्रतितिष्ठति नित्यकालं निवसति। द्विरभ्यास आदरार्थः।

४। सर्व्वप्राणिनां भजनीयत्वेन ब्रह्मोपदिश्य स्वदेहस्थं तदुपदिशति पुरमिति। अजस्य जन्मरहितस्य अवक्रचेतसः अवक्रम् अकुटिलं नित्यैकरूपं चेतः चैतन्यं यस्य तस्य एकादशद्वारं—'सप्तशीर्षण्यानि नाभ्या सह अर्व्वाञ्चि त्रीणि शिरसि एकम्'—पुरं नगरं शरीराख्यम् अनुष्ठाय तदधीनतया नियोज्य विमुक्तः इन्द्रियविकारशून्यः सन् न शोचति न दुःखमनुभवति, विमुच्यते च शरीरबन्धनात्। एतत् वै तत् ब्रह्म।

५। ब्रह्मयोगमभिदधाति तामिति। तां स्थिराम् अचलाम् इन्द्रियधारणां बाह्यान्तःकरणानां धारणां समाधानं योगम् इति मन्यन्ते विवेकिनः। तदा धारणाकाले योगी अप्रमत्तः प्रमादशून्यः भवति। कथं तदेत्युक्तम्—हि यस्मात् योगः प्रभवाप्ययौ उपजनापायी—योगो यथा उत्पद्यते तथा तिरोधत्ते च, सुतरामप्रमत्ततायै निरन्तरधारणायुक्तएव स्याद्योगाकाङ्क्षी।

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥

यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्त्योऽमृतो भवत्येतावदनुशासनम् ॥

कठ ६।११—१५।

ब्रह्मावलम्बनं विना न जातु सम्भवति निरवच्छेदेन्द्रियधारणा। कथं वा सा स्यात्तदाह नैवेति। सर्व्वातीतः परात्मा न वाचा, न मनसा, न चक्षुषा एव प्राप्तुं शक्यः। तत् सर्व्वान्तर्भावकं ब्रह्म अस्ति इति सर्व्वमात्मन्यन्तर्भूय विद्यमानम् इति ब्रुवतः वदतः अन्यत्र कथम् उपलभ्यते उपलब्धिविषयं भवेत्।

धारणाकालेऽन्तश्चक्षुषः सर्व्वस्य तिरोधानेऽपि यदस्तित्वमात्रमव-शिष्यते तद्ब्रह्मणएवेति निश्चये सर्व्वातीतपरात्मनोऽपि तेनैवोपलब्धिर्जायत इत्याह अस्तीति। उभयोः सर्व्वातीतसर्व्वान्तर्भावकयोः भावः तत्त्व-भावेन चिन्मात्रतया अस्ति इति एव उपलब्धव्यः। अस्ति इति एव उपलब्धस्य साधकस्य तत्त्वभावः चिन्मात्रतयोपलब्धिः प्रसीदति अभि-मुखीभवति।

कदा भवति कृतार्थता तदाह यदेति। अस्य मर्त्त्यस्य ये कामाः हृदि श्रिताः, यदा ते सर्व्वे प्रमुच्यन्ते विशीर्य्यन्ते, अथ तदा मर्त्त्यः अमृतः भवति, अत्र इहैव ब्रह्म समश्नुते प्राप्नोति।

यदेति। यदा इह हृदयस्य सर्व्वे ग्रन्थयः प्रभिद्यन्ते भेदम् उप-

६। तदेतत् सत्यम्,

मन्त्रेषु कर्म्माणि कवयो यान्यपश्यं-

स्तानि त्रेतायां बहुधा सन्ततानि।

तान्याचरथ नियतं सत्यकामा

एष वः पन्थाः सुकृतस्य लोके॥

यदा लेलायते ह्यर्च्चिः समिद्धे हव्यवाहने।

तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया हुतम्॥

यस्याग्निहोत्रमदर्शमपौर्णमास-

मचातुर्मास्यमनाग्रयणमतिथिवर्ज्जितञ्च।

यान्ति विनश्यन्ति, अथ तदा मर्त्त्यः अमृतः भवति। एतावत् एव अनुशासनम् उपदेशः सर्व्ववेदान्तानाम्।

६। "प्लवा ह्येते अदृढ़ा यज्ञरूपाः" इत्याद्याभिः (१।७—८) यत् सर्व्वमधःकृतं तदथोल्लिखति षड्भिः ब्रह्मविद्यायाः श्रेष्ठत्वप्रतिपादनाय तदेतदिति। तत् एतत् सत्यम्—इत्येतत् "परीक्ष्य लोकान् कर्म्म-चितान्" (७) इत्येताभ्यां सम्बध्यते परीक्षाविषयाणामयोल्लेखात्। मन्त्रेषु खलु कवयः वशिष्ठादयः यानि कर्म्माणि अपश्यन् दृष्टवन्तः तानि त्रेतायाम् अग्नित्रये—"ब्रह्माग्निर्गार्हपत्ये स्यादाहवनीयेऽग्निरीश्वरः। विष्णुराहवनीये स्यादग्निहोत्रे त्रयो मताः॥" इति—बहुधा सन्ततानि प्रवृत्तानि। सत्यकामाः यथाभूतकर्म्मफलकामाः सन्तः तानि कर्म्माणि नियतम् आचरथ निर्व्वर्त्तयथ। सुकृतस्य स्वनुष्ठितस्य लोके एष वः युष्माकं पन्थाः।

हव्यवाहने अग्नौ समिद्धे प्रज्वलिते यदा हि अर्च्चिः लेलायते चलति, तदा आज्यभागौ आज्यभागयोः अन्तरेण मध्ये आवापस्थाने आहुतीः प्रतिपादयेत् प्रक्षिपेत्। हुतं हवनं श्रद्धया स्यात्।

अश्रद्धया हवनं स्यादित्यस्य दुष्करत्वं विघ्नबहुलत्वं च दर्शयति

अहुतमवैश्वदेवमविधिनाहुत-
मासप्तमांस्तस्य लोकान् हिनस्ति ॥
काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्तजिह्वाः ॥
एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन्।
तन्नयन्त्येताः सूर्य्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥
एह्येहीति तमाहुतयः सुवर्च्चसः
सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति।

यस्येति। यस्य अग्निहोत्रिणः अग्निहोत्रम् अदर्शं दर्शाख्येन कर्म्मणा वर्ज्जितम्, अपौर्णमासं पौर्णमासकर्म्मवर्ज्जितम्, अचातुर्म्मास्यं चातुर्मास्य-कर्म्मवर्ज्जितम्, अनाग्रयणं शरदादिऋतुसमुचितकर्म्मवर्ज्जितम्, अतिथि-वर्ज्जितं च अहुतम् अप्रशस्तभावेन हुतं कालाद्युपेक्षया, अवैश्वदे-वैश्वदेवकर्म्मवर्ज्जितम्, अविधिना हुतं, तस्य तत् अग्निहोत्रम् आसप्तमान् सप्तमसहितान् लोकान् हिनस्ति।

काली, कराली, मनोजवा, सुलोहिता, सुधूम्रवर्णा, स्फुलिङ्गिनी, देवी विश्वरुची इति आहुतिग्रसनार्था अग्नेः सप्त जिह्वाः।

एतेषु भ्राजमानेषु दीप्यमानेषु जिह्वाभेदेषु यथाकालं यः चरति अग्निहोत्रं, तं यजमानम् आददायन् आददानाः एता आहुतयः सूर्य्यस्य रश्मयः भूत्वा तत् तत्र नयन्ति यत्र देवानाम् एकः पतिः इन्द्रः अधिवासः—सर्व्वानुपरि वसतीत्यधिवासः।

सुवर्च्चसः दीप्तिमत्यः आहुतयः—'एष वः युष्माकं सुकृतः कर्म्मफल-

प्रियां वाचमभिवदन्त्योऽर्च्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥
मु, १(२)। १—६।

७। परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो
निर्व्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥
तस्मै स विद्वानुपसन्नाय सम्यक्
प्रशान्तचित्ताय शमान्विताय।

एषः पुण्यः ब्रह्मलोकः एहि एहि' इति प्रियां वाचम् अभिवदन्त्यः अर्च्चयन्त्यः—तं यजमानं सूर्य्यस्य रश्मिभिः वहन्ति,—"एषा ह वा अस्याहुतिरमुष्मिन् लोके आत्मा भवति। स यदेवंविदस्माल्लोकात् प्रैति, अथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयते, अहं वै त इहात्मास्मीति। तदाह्वयति तस्मादाहुतिर्नाम।" (श, प, ब्रा, ११।२।२।६) इति।

७। "नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति" (१।८) इति कर्म्मचितानां लोकानामनित्यत्वात्, कर्म्मणां पुनर्विघ्नबाहुल्यनिपीड़ितत्वात्, गत्यवसादकत्वाच्च तत्र वैराग्यमुत्पाद्य ब्रह्मविद्योत्पादनाय प्रोत्साहयति परीक्ष्येति। कर्म्मचितान् कर्म्मार्ज्जितान् लोकान् परीक्ष्य तत्क्षयस्थायित्वादिकमवधार्य्य ब्राह्मणः ब्रह्मजिज्ञासुः निर्व्वेदं वैराग्यम् आयात् प्राप्नुयात्। किमवधार्य्य स्याद्वैराग्यम्? कृतेन कर्म्मणा अकृतः अनुत्पन्नः नित्यः पदार्थः न अस्ति। तद्विज्ञानार्थं तस्य नित्यपदार्थस्य विज्ञानार्थं समित्पाणिः श्रोत्रियम् अध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं ब्रह्मणि निष्ठा स्थितिः यस्य अपरोक्षज्ञानसम्पन्नं गुरुम् एव अभिगच्छेत् उपसीदेत्।

सम्यक् प्रशान्तचित्ताय उपरतदर्पादिदोषाय शमान्विताय बाह्ये-

येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥
मु १(२) ।१२।१३ ।

८। धनुर्गृहीत्वौपनिषदं महास्त्रं
शरं ह्युपासानिशितं सन्धीयीत ।
आयम्य तद्भावगतेन चेतसा
लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥
प्रणवो धनुः शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥
मु २(२) । ३।४ ।

९। नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।

न्द्रियोपरमेण च युक्ताय उपसन्नाय उपगताय तस्मै शिष्याय स विद्वान् गुरुः—येन विज्ञानेन अक्षरं सत्यं पुरुषं वेद—तां ब्रह्मविद्यां तत्त्वतः यथावत् प्रोवाच प्रोक्तवान् ।

८। कथं वा तदक्षरं ब्रह्मापरोक्षज्ञानविषयं भवेत्तदाह— रिति । औपनिषदम् उपनिषत्सम्भूतं धनुः गृहीत्वा उपासानिशितम् उपासया ध्यानाराधनादिना निशितं तीक्ष्णीकृतं महास्त्रं शरं हि सन्धीयीत—कर्मणि प्रयोग आर्षः—सन्दधीत । तद्भावगतेन तस्मिन् ब्रह्मणि भावः अभिनिवेशः तद्गतेन चेतसा आयम्य धनुः आकृष्य, हे सोम्य, तत् एव अक्षरं ब्रह्म लक्ष्यं विद्धि भिन्धि ।

प्रणवः ओङ्कारः धनुः, आत्मा हि शरः, तल्लक्ष्यं तस्य शरस्य लक्ष्यं ब्रह्म । तत् लक्ष्यम् अप्रमत्तेन वेद्धव्यम् । शरवत् तन्मयः भवेत् तस्मिन् मग्नः भवेत् ।

९। किमेतदक्षरं ब्रह्म पुरुषकारेण लभ्यम् ? न, किन्तर्हि तदनु-

यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा वृणुते तनूᳬ स्वाम् ॥

नायमात्मा बलहीनेन लभ्यो
न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वां-
स्तस्यैष आत्मा विशते ब्रह्मधाम ॥

सम्प्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्व्वगं सर्व्वतः प्राप्य धीरा
युक्तात्मानः सर्व्वमेवाविशन्ति ॥

ग्रहेण। यद्यनुग्रहेण किं साधनैः? अनुग्रहेण तत्स्वरूपज्ञानलाभः। कषायपरिपाकं विना न तेनैक्यम्। उक्तञ्चैतत् पञ्चमस्य तृतीये (५।३)। नायमात्मेत्येषा तत्रैव व्याख्याता। अत्र पुनर्ग्रहणमन्वय-प्रदर्शनाय।

नायमिति। अयम् आत्मा परात्मा बलहीनेन आत्मनिष्ठाजनित-वीर्य्यहीनेन न लभ्यः, न च प्रमादात् अनात्मविषयानुरागजनित-मोहात्, अलिङ्गात्—'निष्कामतारूपमोक्षलिङ्गरहितात् अशास्त्रीयात् वा' इति श्रीमद्भास्करानन्दः—तपसः वा न लभ्यः। एतैः बल-विषय-वासनात्याग-निष्कामतपोरूपैः उपायैः यः तु विद्वान् यतते तस्य एष आत्मा ब्रह्मधाम ब्रह्म एव धाम तत् विशते—"एषोऽस्य परमोलोकः" इति श्रौतन्यायात्।

संप्राप्येति। ऋषयः दर्शनवन्तः एवं परात्मानं प्राप्य ज्ञानतृप्ताः तज्ज्ञानेन तृप्ताः, कृतात्मानः निष्पन्नस्वरूपाः परमात्मस्वरूपेण स्वरूप-वन्तः सुतरां वीतरागाः विगतरागादिदोषाः, प्रशान्ताः उपरतेन्द्रियाः

वेदान्तविज्ञानसुनिश्चितार्थाः
सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्व्वे॥

मु ३(२)। ३—६।

१०। तदेतदृचाभ्युक्तम्,
क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वते एकर्षिं श्रद्धयन्तः।
तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद्यैस्तु चीर्णम्॥

भवन्ति। ते युक्तात्मानः नित्यसमाहितस्वभावाः धीराः विवेकिनः सर्व्वतः सर्व्वगं तं प्राप्य सर्व्वम् अखण्डाद्वैतं पूर्णम् एव आविशन्ति। सर्व्वगत्वेन दर्शनेन वस्तुसापेक्षत्वं मापैति, अतस्तद्दर्शनानन्तरं सर्व्वमाविशन्तीत्युक्तम्।

वेदान्तेति। वेदान्तविज्ञानसुनिश्चितार्थाः वेदान्तसिद्धसाक्षाज्ज्ञानेन सुनिश्चितः अर्थः प्रतिपाद्यविषयः ब्रह्म यैः ते, सन्न्यासयोगा, सर्व्वसमर्पणलक्षणयोगात् शुद्धसत्त्वाः शुद्धान्तःकरणाः ते सर्व्वे यतयः यत्नशीलाः परामृताः परम् अमृतं येषां ते ब्रह्मभूताः सन्तः परान्तकाले देहपरित्यागकाले ब्रह्मलोकेषु ब्रह्मणि विद्यमानेषु लोकेषु—"साधकानां बहुत्वात् ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद्दृश्यते प्राप्यते च। अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्मणीत्यर्थः" इति भाष्यकारः—परिमुच्यन्ति परिमुच्यन्ते समन्तात् मुक्ताः भवन्ति।

१०। ब्रह्मविद्यासम्प्रदानविधानमुच्यते तदेतदिति। तत् एतत् विद्यासम्प्रदानविधानम् ऋचा अभ्युक्तम्—क्रियावन्तः यथोक्तकर्म्मानुष्ठानरताः श्रोत्रियाः वेदज्ञाः ब्रह्मनिष्ठाः परब्रह्मानुभूत्सवः स्वयम्

तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥

मु, ३(२)। १०।११।

११। सह नौ यशः। सह नौ ब्रह्मवर्च्चसम्। अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्योतिषमधिविद्यमधिप्रजमध्यात्मम्।—

अथाधिलोकम्। पृथिवी पूर्व्वरूपम्। द्यौरुत्तर-

एकर्षिम् तत्संज्ञकाग्निं श्रद्धयन्तः श्रद्दधानाः सन्तः जुह्वते जुह्वति, यैः तु विधिवत् शिरोव्रतं शिरस्यग्निधारणरूपं व्रतं चीर्णम् अनुष्ठितं तेषाम् एव एतां ब्रह्मविद्यां वदेत।

तत् एतत् सत्यम् अक्षरपरब्रह्मविज्ञानरूपम् ऋषिः अङ्गिराः पुरा पूर्व्वम् उवाच शौनकाय। न एतत् विज्ञानम् अचीर्णव्रतः अननुष्ठितशिरोव्रतः अधीते। परमऋषिभ्यः—येभ्यः परमार्थक्रमेण ब्रह्मविद्या सम्प्राप्ता तेभ्यः—नमः। द्विर्व्वचनमत्यन्तादरार्थम्।

११। इतः परम् 'ईशावास्यम्' इत्युपायस्य सर्व्वत्रनियोगं दर्शयति। 'यत् किञ्च जगत्यां जगत्' इत्यनेन स्थावरजङ्गमं सर्व्वमायाति न तु वर्णाः। तेषां संश्लेषे पुनर्नामोदयः? सुतरां नामद्योतकेषु तेषु लोकाद्यारोपे सम्भवति तत्र ब्रह्मदर्शनम्। अतस्त एव तेष्वारोप्यन्ते। वर्णेषु शब्दवाक्याद्युत्पत्तिनिमित्तभूतायाः संहितायाः प्राधान्यात् तत्रैव तेषामारोपः।

ओँ शिक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शिक्षाध्यायः।

इत्यत्र वर्णः अकारादिः। स्वरः उदात्तादिः। मात्राः ह्रस्वाद्याः। बलं प्रयत्नः स्पृष्टाद्याभ्यन्तरः विवारादिवाह्यः। साम समता एक-

रूपम्। आकाशः सन्धिः। वायुः सन्धानम्। इत्यधि-
लोकम्। १।

श्रुतिसंज्ञकमुदात्तादीनामविभागेनोच्चारणम्। सन्तानः सन्ततिः संहिता। एवं शिक्षाध्यायमुक्त्वा तत्र संहितामेवोपनिषद्विषयं करोति सह नाविति। संहिताद्युपनिषत्परिज्ञाननिमित्तं यत् यशः तत् नौ आवयोः शिष्याचार्य्ययोः सह एकत्र अस्तु; तथा तन्निमित्तञ्च ब्रह्मवर्च्चसं ब्रह्मतेजः नौ आवयोः सह एकत्र अस्तु।—सर्व्वत्र विद्यायां प्रार्थना श्रूयते, 'तेन त्यक्तेन' इति वचनादीशविसृष्टविषयप्रार्थनायां न ब्रह्मदर्शनं विच्छिद्यते तत्सन्निधौ तद्विज्ञापनात्। यशस्तेजश्चात्र ज्ञानविस्तारे सहायौ सुतरां न विघ्नौ ज्ञानविच्छेदकरौ। सति स्वार्थे स्यातां ते ज्ञानप्रतिरोधिनौ।—अथ अनन्तरं संहितायाः उपनिषदं संहिताविषयं दर्शनं पञ्चसु अधिकरणेषु ज्ञानविषयेषु व्याख्यास्यामः। कानि तानि? अधिलोकम् लोकेषु अधि यत् दर्शनं तत् अधिलोकम्; अधिज्योतिषम् ज्योतिस्सु अधि यत् दर्शनं तदधिज्योतिषम्; अधिविद्यम् विद्यासु अधि यत् दर्शनं तत् अधिविद्यम्; अधिप्रजम् प्रजासु अधि यत् दर्शनं तत् अधिप्रजम्; अधात्मम् आत्मनि अधि यत् दर्शनं तत् अध्यात्मम्। ताः एताः पञ्चमहासंहिताः लोकादिमह-वस्तुविषयत्वात् संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिताः इति आचक्षते कथयन्ति वेदविदः। अथ—दर्शनक्रमविवक्षार्थः अथशब्दः सर्व्वत्र—अधिलोकं लोकविषयकं दर्शनम्। तद्यथा पृथिवी पूर्व्वरूपं—पूर्व्वोवर्णः पूर्व्वरूपम्—संहितायाः पूर्व्वे वर्णे पृथिवीदृष्टिः कर्त्तव्या; द्यौः उत्तररूपम्—उत्तरोवर्णः उत्तररूपम्, तस्मिन् स्वर्गलोकदृष्टिः कर्त्तव्या; आकाशः अन्तरिक्षलोकः सन्धिः पूर्व्वोत्तरवर्णयोर्मध्यदेशः, तत्रान्तरिक्षलोकदृष्टिः कर्त्तव्या; वायुः सन्धानं—सन्धीयतेऽनेनेति सन्धानं पूर्व्वोत्तरवर्णौ येन सन्धीयेते तत्। उपनिषत्प्रसादे श्रीमद्भास्करानन्दस्वामिना विषदतयैवं व्याख्यातम्—"'इषेत्वोर्ज्जे'

अथाधिज्योतिषम्। अग्निः पूर्व्वरूपम्। आदित्य उत्तररूपम्। आपः सन्धिः। वैद्युतः सन्धानम्। इत्यधिज्योतिषम्। २।

अथाधिविद्यम्। आचार्य्यः पूर्व्वरूपम्। अन्तेवास्यु-

इति मन्त्र थकारान्तरो य एकारः पूर्व्वरूपं पूर्व्ववर्णः सा पृथिवी; उत्तररूपं उत्तरो वर्णो य एकारात् तकारः सा द्यौः स्वर्गलोकः; यत्र पूर्व्वोत्तररूपे सन्धीयेते स सन्धिर्मध्यदेशस्तयोर्वर्णयोः स आकाशोभुवर्लोकोऽन्तरिक्षम्। येन च पूर्व्वोत्तरवर्णौ सन्धीयेते तत् सन्धानं तयोर्मध्ये ह्रित्वसिद्धोऽन्यस्तकारः स वायुरिति भावना लोकसम्बन्ध्युपासनम्। एवमग्रेऽपीदमेवोदाहरणं चतुर्षूपासनेषु।" इति। नेयं संहिता वर्णसंश्लेषसिद्धा, किन्तर्हि पदानां सन्निधिमात्रज्ञापिकेति 'इषेत्त्वोर्ज्जेत्वा' इति दृष्टान्तेन स्फुटम्। मन्त्रार्थविज्ञाने पदविभागोऽवश्यकर्त्तव्यः। विना हि पदवर्णघटितां संहितां न स सम्भवति। अतः "परः सन्निकर्षः संहिता" "पदप्रकृतिः संहिता" इत्युभयमेव निरुक्ते (१।६।१) परिगृहीतम्। उक्तोदाहरणे पुनः स्वराणां स्वराधिरूढ़ानाञ्च व्यञ्जनानां परस्परेण संश्लेषमपरिगृह्य पदानां संश्लेषएव परिगृहीतः। उभयविधसंहितायाः परिग्रहे न वयं कञ्चिद्विरोधमुत्पश्यामः। दध्यत्रेत्यत्र (दधि + अत्र) इकारः पूर्व्वरूपम्, अकारः उत्तररूपम्, तयोर्मध्यदेशः सन्धिः, यकारः सन्धानम्। अध्ययनारम्भे पुनरुभयविधसंहिताज्ञानं विना पदविभागेनार्थपरिग्रहो न सम्भवति। सुतरां तदुभयमवलम्ब्यैवोपासनमुक्तमिति ज्ञेयम्।

अथ अधिज्योतिषम्। अग्निः पूर्व्वरूपं पूर्व्ववर्णः, आदित्यः उत्तररूपम् उत्तरवर्णः, आपः सन्धिः मध्यदेशः, वैद्युतः विद्युत्प्रकाशः सन्धानम्। इति अधिज्योतिषम्।

अथ अधिविद्यम्। आचार्य्यः पूर्व्वरूपं पूर्व्ववर्णः, अन्तेवासी

त्तररूपम् । विद्या सन्धिः । प्रवचनं सन्धानम् । इत्यधि-
विद्यम् । ३ ।

अथाधिप्रजम् । माता पूर्व्वरूपम् । पितोत्तररूपम् ।
प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् । ४ ।

अथाध्यात्मम् । अधरा हनुः पूर्व्वरूपम् । उत्तरा
हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्य-
ध्यात्मम् । ५ ।

इतीमा महासंहिताः । य एवमेता महासंहिता
व्याख्याता वेद, सन्धीयते प्रजया पशुभिर्ब्रह्मवर्च्चसेनान्ना-
द्येन सुवर्गेण लोकेन । ३ अनु ।

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्

शिष्यः उत्तररूपम् उत्तरवर्णः, विद्यासन्धिः मध्यदेशः, प्रवचनम् उच्चा-
रणं सन्धानम् । इति अधिविद्यम् ।

अधिप्रजम् । माता पूर्व्वरूपं पूर्व्ववर्णः, पिता उत्तररूपम् उत्तर-
वर्णः, प्रजा सन्धिः मध्यदेशः, प्रजननम् उत्पादनम् सन्धानम् । इति
अधिप्रजम् ।

अथ अध्यात्मम् । अधरा हनुः पूर्व्वरूपं पूर्व्ववर्णः, उत्तरा हनुः
उत्तररूपम् उत्तरवर्णः, वाक् सन्धिः मध्यदेशः, जिह्वा सन्धानम् । इति
अध्यात्मम् ।

इति इमाः पञ्च महासंहिताः । यः एवं प्रोक्तानुरूपं व्याख्याताः
एताः महासंहिताः वेद जानाति मननविषयं करोति, स प्रजया
पशुभिः ब्रह्मवर्च्चसेन अन्नाद्येन व्रीहियवादिभिः सुवर्गेण लोकेन स्वर्ग-
लोकेन सन्धीयते युज्यते । ३ ।

संहिताघटितोपासनकथनानन्तरं ज्ञानवितरणसामर्थ्यं प्रार्थयत्युपा-
सनान्तरमारब्धुं यश्छन्दसामिति । यः छन्दसां वेदानाम् ऋषभः

संबभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो-भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय। आवहन्ती वितन्वाना। कुर्व्वाणा चीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्व्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा। आ मा यन्तु ब्रह्मचारिणः स्वाहा। वि मा यन्तु ब्रह्मचारिणः स्वाहा। प्र मा यन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु

श्रेष्ठः, विश्वरूपः—"ओमित्येदक्षरमिदं सर्व्वम्" (३।५[६८पृ]) इति—सर्व्वरूपः, छन्दोभ्यः वेदेभ्यः उद्भूतात् सारिष्ठात् अमृतात् अधिसंबभूव उत्पन्नवान्, स इन्द्रः जागरितस्थानाधिष्ठाता ऐश्वर्य्यपूर्णः मा मां मेधया प्रज्ञया—'धारणाशक्तिबुद्धा'—स्पृणोतु पालयतु समर्थं करोतु। हे देव, अमृतस्य अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य धारणः धारयिता भूयासं भवेयम्। शरीरं मे मम विचर्षणं विचरणयोग्यं कर्म्मक्षमं भूयात्। जिह्वा मे मम मधुमत्तमा भूयात्। कर्णाभ्यां भूरि बहु विश्रुवम्—लेट्—श्रोता भूयासम्। मेधया बुद्धा पिहितः आच्छन्नः अविदितः त्वं ब्रह्मणः कोशः पिधानम् असि त्वयि निगूढ़ं ब्रह्म उपलभ्यते इति भावः। श्रुतं श्रवणपूर्व्वकम् आत्मज्ञानादिकं मे मम गोपाय रक्ष। इमे प्रार्थनामन्त्रा जपार्थाः। होममन्त्रास्त्वाह—आत्मनो मम वासांसि गावः च अन्नपाने च सर्व्वदा अचीरं शीघ्रम् आवहन्ती आनयन्ती, वितन्वाना विस्तारयन्ती, कुर्व्वाणा निर्व्वर्त्तयन्ती श्रीः यतः, ततः तस्मात्, हे देव, लोमशां बहुलोमयुक्ताम् अजाव्यादिरूपां श्रियं मे मम समीपे पशुभिः अजाव्याद्यतिरिक्तैरन्यैः सह आवह आनय। स्वाहा—इदं हविस्ते ददे। ब्रह्मचारिणः शिष्यार्थिनः मा माम्

ब्रह्मचारिणः स्वाहा। यशोजनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा। तस्मिन् सहस्रशाखे। नि भगाहं त्वयि मृजे स्वाहा। यथापः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मा ब्रह्मचारिणः। धातरायान्तु सर्व्वतः स्वाहा। प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व। ४ अनु।

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासा-

आयन्तु आगच्छन्तु। स्वाहा। ब्रह्मचारिणः मा वियन्तु मत्तः मा वियुक्ताः भवन्तु। स्वाहा। ब्रह्मचारिणः मा मां प्रयन्तु प्राप्नुवन्तु। स्वाहा। ब्रह्मचारिणः दम् दमम् आयन्तु आप्नुवन्तु। ब्रह्मचारिणः शम् शमम् आयन्तु आप्नुवन्तु। स्वाहा। जने जनसमूहे यशः यशस्वी असानि भवानि। स्वाहा। वसः वसीयसः निरतिशयेन वसुमतः अहं श्रेयान् प्रशस्यतरः असानि भवानि। स्वाहा। हे भग भजनीय, तं ब्रह्मकोशभूतं त्वां प्रविशानि त्वया एकत्वम् अहम् आप्नवानि। स्वाहा। हे भग, स त्वं मा मां प्रविश मया एकत्वम् आप्नुहि। स्वाहा। हे भग, तस्मिन् सहस्रशाखे बहुभेदे त्वयि अहं निमृजे नितरां शोधयामि आत्मानम्। यथा आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति, यथा मासाः अहर्जरं संवत्सरम्—अहानि जीर्यन्ति अन्तर्भवन्ति अस्मिन् इति अहर्जरः तम्—यन्ति, एवं, हे धातः सर्व्वस्य विधातः, ब्रह्मचारिणः सर्व्वतः सर्व्वदिग्भ्यः माम् आयन्तु आगच्छन्तु। स्वाहा। त्वं प्रतिवेशः एतत्सन्निहितश्रमापनयनस्थानम् असि, त्वं मा मां प्रभाहि ज्ञानेन दीप्तिमन्तं कुरु, त्वं मा मां प्रपद्यस्व आत्मसात् कुरु। ४।

ओङ्कारेणैकत्वमुक्ता तच्छाखाभूतासु व्याहृतिषु ब्रह्मतदङ्गदेवता आदी-

सु ह स्मैतां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुवइत्यन्तरिक्षम्। सुव इत्यसौ लोकः। मह इत्यादित्यः। आदित्येन वाव सर्व्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्व्वाणि ज्योतींꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूꣳषि। मह इति ब्रह्म। ब्रह्मणा वाव सर्व्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुवइत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्व्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्व्वेऽस्मै देवा बलिमावहन्ति।

५ अनु।

पासनार्थम् भूर्भुवरिति। भूः भुवः सुवः इति एताः तिस्रः व्याहृतयः —वै— स्मर्यन्ते। तासां व्याहृतीनाम् उ एव महः इति एतां चतुर्थीं व्याहृतिं माहाचमस्यः महाचमसस्य अपत्यं ह किल प्रवेदयते स विदितवान्। तत् महः ब्रह्म, स आत्मा; अन्याश्च व्याहृतयः देवताः—देवतादयुपलक्षणं, लोका देवा वेदाः प्राणाः—अङ्गानि। भूः इति वै अयं लोकः, भुवः इति अन्तरिक्षम्, सुवः इति असौ लोकः स्वर्लोकः —एते अवयवभूताः। महः इति आदित्यः व्याहृत्यात्मा। आदित्येन व्याहृत्यात्मना वाव पुनः सर्व्वे लोकाः व्याहृतिस्वरूपाः महीयन्ते वर्द्धन्ते। भूः इति वै अग्निः, भुवः इति वायुः सुवः इति आदित्यः—अवयवभूताः, महः इति चन्द्रमाः व्याहृत्यात्मा, चन्द्रमसा व्याहृत्यात्मना वाव

स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्त्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ। सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनस्पतिम्। वाक्पतिश्चक्षुस्पतिः श्रोत्रपतिर्विज्ञानपतिः। ६ अनु।

सर्व्वाणि ज्योतींषि व्याहृतिस्वरूपाणि महीयन्ते। भूः इति वै ऋचः, भुवः इति सामानि, सुवः इति यजूंषि, महः इति ब्रह्म, ब्रह्मणा वाव सर्व्वे वेदाः महीयन्ते। भूः इति वै प्राणः, भुवः इति अपानः, सुवः इति व्यानः, महः इति अन्नम्। अन्नेन वाव सर्व्वे प्राणाः महीयन्ते। ताः एताः वै चतस्रः व्याहृतयः, चतस्रः चतस्रः सत्यः चतुर्द्धा। यः ताः प्रोक्तस्वरूपाः व्याहृतीः वेद, स ब्रह्म वेद। अस्मै जनाय सर्व्वे देवाः बलिम् आवहन्ति आनयन्ति। ५।

ब्रह्मप्रवेशसोपानपरम्परां तत्स्वरूपेणैक्यञ्च वर्णयति स य एष इति। स यः एष अन्तर्हृदये आकाशः तस्मिन् अयं मनोमयः, अमृतः अमरणधर्म्मा, हिरण्मयः ज्योतिर्म्मयः पुरुषः अस्ति। तालुके अन्तरेण तालुकयोः मध्ये स्तनः इव य एष मांसखण्डः अवलम्बते लम्बमानः सन् वर्त्तते, स इन्द्रयोनिः इन्द्रस्य जागरितस्थानाधिष्ठातुः आत्मनः योनिः स्वरूपानुभवप्रदेशः। यत्र असौ केशान्तः केशानाम् अन्तः मूलं विवर्त्तते विभागेन वर्त्तते, तत्र सोऽयं मनोमयः शीर्षकपाले शिरसः कपाले शिरोऽस्थिखण्डे व्यपोह्य विभज्य—येन मार्गेण प्रविष्टः (८।७[२७८पृ]) तेन निष्क्रम्य भूः इति अग्नौ प्रतितिष्ठति अग्न्यात्मना तल्लोकं व्याप्नोति, भुवः इति वायौ प्रतितिष्ठति, सुवः इति आदित्ये

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयः वनस्पतयः। आकाश आत्मा इत्यधिभूतम्, अथाध्यात्मम्। प्राणोऽपानो व्यान उदानः समानः। चक्षुः श्रोत्रं मनो वाक् त्वक्। चर्म्म माꣳसꣳस्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳ सर्व्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति। ७ अनु।

तै १।३—७।

प्रतितिष्ठति, महः इति ब्रह्मणि प्रतितिष्ठति। ततः ब्रह्मभूतः सन् स्वाराज्यम् अङ्गभूतानां देवानाम् आधिपत्यम् आप्नोति, मनसस्पतिं मनसां पतिं हिरण्यगर्भम् आप्नोति। ततः भवति स वाक्पतिः वाचां पतिः, श्रोत्रपतिः श्रोत्राणां पतिः, विज्ञानपतिः विज्ञानानां पतिः। भवति तदनन्तरं ब्रह्मणा स्वरूपैक्यञ्च (६।२)। ६।

प्राक् ब्रह्मणा स्वरूपैक्यात् अग्न्यादिभिर्हिरण्यगर्भेण चैकता भवतीत्युक्तम् सम्प्रति कथमेकात्मता भवति सर्व्वस्येत्युच्यते पृथिवीति। पृथिवी अन्तरिक्षं द्यौः, दिशः, अवान्तरदिशः इति पञ्च लोकाः; अग्निः, वायुः, आदित्यः, चन्द्रमाः, नक्षत्राणि इति पञ्च देवताः; आपः, ओषधयः, वनस्पतयः, आकाशः, आत्मा विराट् इति पञ्च भौतिकाः। इति अधिभूतम् पञ्चभिः निष्पन्नं पांक्तम्। अथ अध्यात्मं पांक्तं पुनः —प्राणः, अपानः, व्यानः, उदानः, समानः इति पञ्च वायवः; चक्षुः, श्रोत्रं, मनः, वाक्, त्वक् इति पञ्च इन्द्रियाणिः; चर्म्म, मांसं, स्नायुः, अस्थि, मज्जा इति पञ्च धातवः। एतत् पञ्चभिः निष्पन्नं पांक्तम् अधिविधाय परिकल्प्य ऋषिः कश्चित् वेदद्रष्टा अवोचत्—पांक्तं वै इदं सर्व्वम्। पांक्तेन आध्यात्मिकेन पांक्तं बाह्यं भूतरूपं स्पृणोति पालयति एकात्मतया उपलभ्यते इति। ७।

१२। ऋतञ्च स्वाध्यायप्रवचने च। सत्यञ्च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषञ्च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजापतिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः। ९ अनु।

१२। ओङ्कारस्य सर्व्वात्मकत्वमुक्ता (१।२[३६१]) कर्त्तव्यान्याह ऋतञ्चेति। ऋतं सत्यं च व्यवहारे स्वाध्यायप्रवचने च स्वाध्यायः अध्ययनम् प्रवचनम् अध्यापनं च; सत्यं च भाषणे, स्वाध्यायप्रवचने च; तपः कृच्छ्रसाधनं च, स्वाध्यायप्रवचने च; दमः वाह्येन्द्रियोपशमः च, स्वाध्यायप्रवचने च; शमः अन्तरिन्द्रियोपशमः, स्वाध्यायप्रवचने च; अग्नयः च दक्षिणादयः आधानार्थम्, स्वाध्यायप्रवचने च; अग्निहोत्रं होमकर्म्म च स्वाध्यायप्रवचने च; अतिथयः च अतिथिसेवा, स्वाध्यायप्रवचने च; मानुषं च लौकिकसंव्यवहारः, स्वाध्यायप्रवचने च; प्रजा च पुत्रार्थं यत्नः, प्रजनः पुत्रोत्पादनक्रिया; प्रजातिः पौत्रार्थं पुत्रस्य निवेशः, स्वाध्यायप्रवचने च। सत्यम् इति सत्यवचाः सत्यं वचः यस्य स राथीतरः रथीतरस्यापत्यं; तपः इति तपोनित्यः नित्यतपःपरायणः पौरुशिष्टिः पुरुशिष्टस्यापत्यम्, स्वाध्यायप्रवचने एव नाकः मौद्गल्यः मुद्गलस्यापत्यम्? कथम्? हि यस्मात् तत् स्वाध्यायप्रवचनं तपः। "स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते" इतिहेतोः। पुनरुक्तिरादरार्था। ९।

अहं वृक्षस्य रेरिवा। कीर्त्तिः पृष्ठं गिरेरिव। ऊर्द्ध्वपवित्रोवाजिनीव स्वमृतमस्मि। द्रविणꣳ सुवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम्।

१० अनु॥

वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति। सत्यं वद, धर्म्मञ्चर, स्वाध्यायान्मा प्रमदः। आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः, सत्यान्न प्रमदितव्यम्। धर्म्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्य्याभ्यां न प्रमदितव्यम्। मातृदेवो भव।

एवं कर्त्तव्यानुष्ठानेन तत्फलं ब्रह्मैक्येन संसारजयादिकं भवतीति त्रिशङ्कुवाक्येन दर्शयति अहमिति। अहं वृक्षस्य संसारवृक्षस्य रेरिवा प्रेरयिता तदन्तर्यामिणैकात्मतया, कीर्त्तिः मम गिरेः पर्व्वतस्य पृष्ठम् इव, ऊर्द्ध्वं सर्व्वातीतं ब्रह्म तदिव पवित्रः शुद्धः अहम्, वाजः वेगः सोऽस्यास्तीति वाजी—रश्मयभिधायकाः वाजिन इति सुस्थानदेवतामध्ये पाठात्—सविता तस्मिन् इव स्वमृतं शोभनम् अमृतम् अस्मि अविवर्त्तधर्म्मा अस्मीतिभावः, सुवर्चसं दीप्तिमत् द्रविणं धनं ज्ञानरूपं मम, सुमेधाः शोभनमेधायुक्तः बुद्धेर्नैर्म्मल्यात्, अमृतः अमरणधर्म्मा, अक्षितः अक्षीणः अस्मि इति त्रिशङ्कोः ऋषेः वेदानुवचनम् आत्मतत्त्वलाभानन्तरमुक्तिः। त्रिशङ्कुवचनानुरूपं शिष्यार्थिनि सर्व्वं भविष्यतीति प्रत्ययोत्पादनायास्योक्तिः। १०।

वेदाध्ययनसमापनानन्तरं कर्त्तव्यान्याह वेदमिति। वेदम् अनूच्य अध्याप्य आचार्य्यः अन्तेवासिनं शिष्यम् अनुशास्ति—सत्यं यथाप्रमाणावगतं वक्तव्यं वद, धर्म्मं चर, स्वाध्यायात् मा प्रमदः मा अनवहितो भूः, आचार्य्याय प्रियं धनं विद्यानिष्क्रयार्थम् आहृत्य दत्त्वा समावृत्य

पितृदेवो भव। आचार्य्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्म्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकꣳ सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि। ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः। तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्म्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्म्मकामाः स्युः। यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्त्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः अलूक्षा धर्म्मकामाः स्युः यथा ते तेषु वर्त्तेरन्। तथा तेषु वर्त्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्। ११ अनु।

तै, १।९—११।

प्रजातन्तुं वंशवृद्धिं मा व्यवच्छेत्सीः तदुच्छेदं मा कार्षीः। सत्यात् न प्रमदितव्यं न प्रमादः कर्त्तव्यः। धर्म्मात् न प्रमदितव्यम्। कुशलात् कल्याणात् न प्रमदितव्यम्। भूत्यै आत्मोन्नत्यै तद्धेतोः न प्रमदितव्यं कुतश्चित् अपि कल्याणानुष्ठानात्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्, देवपितृकार्य्याभ्यां न प्रमदितव्यम्, मातृदेवः माता एव देवः यस्य तादृशः भव, पितृदेवः पिता एव देवः यस्य तादृशः भव, आचार्य्यदेवः आचार्य्यः एव देवः यस्य तादृशः भव, अतिथिदेवः अतिथिः एव देवः यस्य तादृशः भव। यानि अनवद्यानि अनिन्दनीयानि कर्म्माणि तानि सेवितव्यानि कर्त्तव्यानि, नो न इतराणि अवद्यानि

१३। भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं

निन्दनीयानि, अस्माकं यानि सुचरितानि शोभनवृत्तानि तानि त्वया उपास्यानि नियमेन आत्मसात्करणीयानि, नो न इतराणि तद्विपरीतानि। ये के च ब्राह्मणाः ब्रह्मज्ञाः अस्मत् मत्तः श्रेयांसः प्रशस्यतराः त्वया आसनेन तेषां प्रश्वसितव्यम्—प्रश्वासः श्रमापनयः—श्रमः त्वया अपनेतव्यः। आसने न इति व्यवच्छेदे—तेषाम् आसने उपवेशनभूमौ न प्रश्वसितव्यम् श्वासत्यागोऽपि न कर्त्तव्यः, केवलं तदुक्तिसारग्राहिणा भवितव्यम्। श्रद्धया देयं यत् किञ्चित् देयं तत् श्रद्धया एव देयम्। अश्रद्धया अदेयं न देयम्। श्रिया शोभनरीत्या देयम्। ह्रिया लज्जया अगर्व्वितभावेन देयम्। भिया भयेन धर्म्मभीरुतया देयम्। संविदा च सद्वानुभूत्या च देयम्। अथ यदि कर्म्मविचिकित्सा कर्म्मणि विचिकित्सा किं कर्त्तव्यमित्यत्र वा संशयः स्यात्, वृत्तविचिकित्सा वृत्ते आचरणे विचिकित्सा संशयः वा स्यात्, तदा ये तत्र सम्मर्शिनः विचारक्षमाः, युक्ताः स्वयं यागादौ निरताः, आयुक्ताः अपरैः तत्र नियुक्ताः, अलूक्षाः अरूक्षाः अक्रूरमतयः, धर्म्मकामाः ब्राह्मणाः ब्रह्मज्ञाः स्युः, ते यथा तत्र संशयितविषये वर्त्तेरन्, त्वमपि तथा तत्र वर्त्तेथाः। अथ अभ्याख्यातेषु दोषख्यापनेन अपरैः उत्पादितसन्देहेषु ये तत्र सम्मर्शिनः, युक्ताः, आयुक्ताः, अलूक्षाः, धर्म्मकामाः ब्राह्मणाः स्युः यथा ते तेषु वर्त्तेरन्, तथा तेषु त्वं वर्त्तेथाः। एष आदेशः विधिः, एष उपदेशः, एषा वेदोपनिषत् वेदरहस्यम्, एतत् अनुशासनम् ईश्वरवचनम्। एवम् उपास्यम् उपासितव्यम् यथायोग्यं नियमेन कर्त्तव्यम्। पुनर्व्वचनमादरार्थम्।

१३। "सत्यं ज्ञानमनन्तं ब्रह्म" (४।११) इत्यारभ्य "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन (११।१३) इत्यन्तेऽध्याये ब्रह्मविद्यां परिसमाप्याधुना तत्साधनं कथयति, तत्र यदुक्तं तदेव तद्विषयत्वेन

प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳहोवाच। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मेति। स तपोऽतप्यत स तपस्तप्त्वा—। १अनु।

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳहोवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा—। २अनु।

स्त्वह्नो भृगुरिति। वैशब्दः प्रसिद्धानुस्मारकः। भृगुरिति नाम्ना प्रसिद्धः वारुणिः वरुणस्यापत्यं पितरं वरुणं—हे भगवः भगवन्, ब्रह्म अधीहि अध्यापय इति उपससार उपगतवान् ब्रह्मजिज्ञासुः। तस्मै पुत्राय स पिता—अन्नं प्राणं चक्षुः श्रोत्रं मनः वाचम् इति—एतत् ब्रह्मोपलब्धौ द्वारभूतं प्रोवाच। कथं भवति तेषां द्वारत्वं तत् तं पुत्रं पुनः स उवाच—यतो वा इमानि भूतानि जायन्ते इत्यादि (४।१३)। द्वारभूतत्वमेषां दर्शयति श्रुत्यन्तरम् "प्राणस्य प्राणं मनसो मनः" इत्यादिना माध्यन्दिनीयपाठेन। स भृगुः तपः अतप्यत मननम् अकरोत् स तपः तप्त्वा मननं कृत्वा—। १।

अन्नं ब्रह्म इति व्यजानात् विज्ञातवान्। कथमन्नम्? इमानि भूतानि खलु अन्नात् हि एव जायन्ते, जातानि अन्नेन जीवन्ति, अन्नं प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते भूतविलये इति हेतोः। न हि अन्नादुत्पत्त्यादिकं तदन्तर्यामिप्रेरणां विना सम्भवति। सुतरामुत्पत्त्यादिषु तत्प्रेरणामनुभूय भृगुरन्तर्यामिणो ब्रह्मचैतन्यात्मत्वेन ब्रह्मैवापश्यत्। उपाधिसम्बन्धतानुसारेण दर्शनस्योत्त-

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा—। ३ अनु।

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं

रोत्तरौज्ज्वल्यं भवति, अतः प्राणादिषु तादृग्दर्शनानन्तरमानन्दे साक्षादुज्ज्वलतरब्रह्मदर्शनमभूदिति तत्रैव परिसमाप्तिः। तत् अन्नं ब्रह्म इति विज्ञाय पुनः एव पितरं वरुणम् उपससार उपगतवान्—भगवः हे भगवन् अधीहि अध्यापय ब्रह्म इति। तं पुत्रं पुनः स उवाच तपः ब्रह्म इति हेतोः तपसा बाह्यान्तःकरणसमाधानप्रधानेन मननेन ब्रह्म विजिज्ञासस्व विज्ञातुम् इच्छस्व। "यस्य ज्ञानमयं तपः" (८।१) इति तपसो ज्ञानस्वरूपत्वम्। तपसा ज्ञानस्वरूपेणोद्भूतज्ञानेन ब्रह्मविज्ञानं सम्भवतीति तथोक्तम्। स तपः अतप्यत स तपः तप्त्वा—। २।

प्राणः ब्रह्म इति व्यजानात्। कथम्? इमानि भूतानि खलु प्राणात् हि एव जायन्ते, जातानि प्राणेन जीवन्ति, अन्ते प्राणं प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते इति हेतोः। तत् विज्ञाय पुनः एव पितरं वरुणम् उपससार—अधीहि भगवः ब्रह्म इति। तं पुत्रं स पुनः उवाच—तपः ब्रह्म इति तपसा ब्रह्म विजिज्ञासस्व। स तपः अतप्यत, स तपः तप्त्वा—। ३।

मनः ब्रह्म इति व्यजानात्। कथम्? इमानि भूतानि खलु मनसः हि एव जायन्ते, जातानि मनसा जीवन्ति, अन्ते मनः प्रयन्ति

पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा—। ४अनु।

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्मविजिज्ञासस्व। तपोब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा—। ५अनु।

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी

प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते इति हेतोः। तत् विज्ञाय पुनः एव पितरं वरुणम् उपससार—अधीहि भगवः ब्रह्म इति। तं पुत्रं पुनः स उवाच—तपः ब्रह्म इति तपसा ब्रह्म विजिज्ञासस्व। स तपः अतप्यत, स तपः तप्त्वा—। ४।

विज्ञानं ब्रह्म इति व्यजानात्। कथम्? इमानि भूतानि खलु विज्ञानात् हि एव जायन्ते, जातानि विज्ञानेन जीवन्ति, विज्ञानं प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते इति हेतोः। तत् विज्ञाय पुनः एव स पितरं वरुणम् उपससार—अधीहि भगवः ब्रह्म इति। तं पुत्रं पुनः स उवाच—तपः ब्रह्म इति तपसा ब्रह्म विजिज्ञासस्व। स तपः अतप्यत, स तपः तप्त्वा—। ५।

आनन्दः ब्रह्म इति व्यजानात्। कथम्? इमानि भूतानि खलु आनन्दात् हि एव जायन्ते, जातानि आनन्देन जीवन्ति, अन्ते आनन्दं

विद्या परमे व्योमन् प्रतिष्ठिता। स य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या। ६ अनु।

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणोवान्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या। ७ अनु।

प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते इति हेतोः। सा एषा भार्गवी भृगुणा विदिता वारुणी वरुणेन प्रोक्ता विद्या परमे व्योमन् हृद्याकाशगुहायां प्रतिष्ठिता परिसमाप्ता, तत्रैव जीवपरिष्वक्तुरानन्दमयस्योपलब्धेः। स यः एवं वेद प्रतितिष्ठति आनन्दे ब्रह्मणि स्थितिं लभते। एवं ब्रह्मणि स्थितौ तत्स्थितिमाहात्म्येन न त्वाकाङ्क्षावशात्—अन्नवान् अन्नादः भवति,प्रजया पुत्रादिना पशुभिः गवाश्वादिभिः ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा महान् भवति। कीर्त्त्या ख्यात्या शुभप्रचारनिमित्तया महान् भवति। ६।

एवमानन्दे प्रतिष्ठितस्य साधकस्य न जातु भवति व्रतहीनता, अतः किं भवति तस्य व्रतं तदेव व्यनक्ति। अन्नम् एवं ब्रह्माविर्भावपूर्णं न निन्द्यात् इति व्रतम्। यदि निन्दोपतिष्ठते भवत्याविर्भावतिरोधानम्। अतः एवं नियतचित्तेन भवितव्यं यदुपस्थितं कदन्नमपि न निन्दनीयत्वेनावलोक्येत। अन्नरसेन पुनः प्राणशक्तिरुद्भूयते तया च देहस्य शक्तिसम्पन्नत्वं देहेन च प्राणशक्तेरनवच्छेदः। अतस्तयोरन्नत्वं परिकल्प्य अन्नानिन्दनव्रतस्य तत्र विस्तारमभिदधाति प्राणचेष्टायां देहचेष्टायां तद्भावमारोप्य—प्राणः वै अन्नं शरीरम् अन्नादं

अन्नं न परिचक्षीत। तद्व्रतम्, आपो वा ऽन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्च्चसेन। महान् कीर्त्त्या। ८अनु।

अन्नं बहु कुर्व्वीत। तद्व्रतम्। पृथिवी वाऽन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स

प्राणाद्यभोजि, तस्मिन् प्राणस्य स्थितिस्तदन्नत्वं तस्य—"यद्यस्यान्तः-प्रतिष्ठितं भवति तत्तस्यान्नं भवति" इति भाष्यकारः। एवं सति ब्रह्मणि सर्व्वस्य सर्व्वस्मिंश्च ब्रह्मणः स्थितेस्तस्मिन्नन्नत्वान्नादत्वपरिकल्पनमिति तत्त्वम्—प्राणे शरीरं प्रतिष्ठितं शरीरे प्राणः प्रतिष्ठितः, तत् तस्मात् एतत् अन्नम् अन्ने प्रतिष्ठितम्। अन्ने अन्नं प्रतिष्ठितं यः एतत् वेद स प्रतितिष्ठति अन्ने प्राणे च ब्रह्माविर्भावपूर्णे स्थितिं लभते। एवं स्थितौ अन्नवानन्नादो भवतीत्यादि पूर्व्ववत्। ७।

अन्नं न परिचक्षीत परिहरेत तत् व्रतम्। भोजने चेष्टायाश्च यथा तथा स्नानपानावलोकनादौ ब्रह्माविर्भावदर्शनार्थमाह—आपः ई अन्नं, ज्योतिः अन्नादम्, अप्सु ज्योतिः प्रतिष्ठितं ज्योतिषि आपः प्रतिष्ठिताः, तत् तस्मात् एतत् अन्नं अन्ने प्रतिष्ठितम्। अन्ने अन्नं प्रतिष्ठितं स यः एतत् वेद प्रतितिष्ठति अप्सु ब्रह्माविर्भावपूर्णासु च ज्योतिषि च तादृशि स्थितिं लभते। एवं स्थितौ अन्नवान् भवतीत्यादि पूर्व्ववत्। ८।

अन्नं बहु कुर्व्वीत तस्य प्राचुर्य्यं साधयेदपरेषां सेवार्थं तत् व्रतम्। अन्नस्य प्राचुर्य्यसाधने कृष्यादिकर्म्मणि नियतत्वमनयावापि एवं पृथिव्या

य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या। ९ अनु।

न कञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नं राध्यते एतद्वै मध्यतोऽन्नꣳराध्यते। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते।

च सम्बन्धः, अत आह पृथिवी वा अन्नम् आकाशः अन्नादः पृथिव्याम् आकाशः प्रतिष्ठितः आकाशे पृथिवी प्रतिष्ठिता, तत् तस्मात् एतत् अन्नम् अन्ने प्रतिष्ठितम्। अन्ने अन्नं प्रतिष्ठितं स य एतत् वेद प्रतितिष्ठति पृथिव्यां ब्रह्माविर्भावपूर्णायाम् आकाशे च तादृशि स्थितिं लभते। शिष्टं पूर्ब्ववत्। ८।

एवमन्नप्राचुर्य्यसाधनेन सम्पन्नः—न कञ्चन वसतौ वसतिनिमित्तं समागतं परिचक्षीत निवारयेत्, तत् व्रतम्। अस्मै अभ्यागताय अन्नम् अराधि सिद्धम् अभावि इति विद्वांसः आचक्षते, अन्नं नास्तीति वदन्तो न प्रत्याख्यानं कुर्व्वन्ति यतः, तस्मात् यया कया च विधया धर्म्माविरुद्धया बहु अन्नं प्राप्नुयात् तत्संग्रहं कुर्य्यात्। एतत् पुनः अन्नं मुखतः प्रथमतः प्रथमे वयसि राद्धं संसिद्धम् अभ्यागताय। किमस्य फलम्? अस्मै अन्नदाय मुखतः प्रथमे वयसि अन्नं राध्यते संसिध्यति। तत् पुनः अन्नः मध्यतः मध्यमे वयसि अन्नं राद्धं संसिद्धम् अभ्यागताय। किमस्य फलम्? अस्मै अन्नदाय मध्यतः मध्यमे वयसि अन्नं राध्यते संसिध्यति। एतत् अन्नं पुनः अन्ततः चरमे वयसि राद्धं

य एवं वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्म्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति।

यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजापतिरमृतमानन्द इत्युपस्थे। सर्व्वमित्याकाशे। तत् प्रतिष्ठेत्युपासीत। प्रतिष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मनइत्युपासीत। मानवान् भवति।

तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मे-त्युपासीत। ब्रह्मवान् भवति। तद्ब्रह्मणः परिमर इत्यु-पासीत। पर्य्येनं म्रियन्ते द्विषन्तः सपत्नाः, परि येऽप्रिया भ्रातृव्याः। १० अनु। तै, ३।१—१०।

संसिद्धम् अभ्यागताय। किमस्य फलम्? अस्मै अन्नदाय अन्ततः चरमे वयसि अन्नं राध्यते संसिद्ध्यते।

य एवम् अन्नमाहात्म्यं वेद तस्य प्रोक्तं फलं भवति। क्षेम कल्याणं वाचि, योगक्षेम अप्राप्तस्य प्राप्तिस्तद्रक्षणं च इति प्राणापानयोः—ताभ्यामुद्यमधारणप्रसरणात्, कर्म्म इति हस्तयोः, गतिः इति पादयोः, विमुक्तिः विसर्गः इति पायौ इति मानुषीः मनुष्यसम्बन्धिन्यः समज्ञाः विज्ञानानि पञ्च। अथ अनन्तरं दैवीः देवसम्पर्कीयाः समज्ञाः—तृप्तिः इति वृष्टौ, बलम् इति विद्युति, यशः इति पशुषु, ज्योतिः इति नक्षत्रेषु, प्रजातिः पुत्रोत्पत्तिः अमृतम् अनुच्छेदसाधनात् आनन्दः प्राप्तालिङ्गनस्योद्बोधनात् इति उपस्थे, सर्व्वम् एतत् आकाशे ब्रह्मणि, तत् ब्रह्म प्रतिष्ठा सर्व्वस्य स्थितिस्थानम् इति उपासीत।

१४ । अथाधिदैवतम् । य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति । उद्यंस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ।

समान उ एवायञ्चासौ चोष्णोऽयमुष्णोऽसौ स्वर इती-

यागादिसाधनं वेदादिकं सर्व्वं ब्रह्मणि प्रतिष्ठितमिति तत्र तत्र ब्रह्मैव तत्तत्कारणतयोपास्यमुपलब्धव्यञ्च । फलञ्च—प्रतिष्ठावान् ब्रह्मणि स्थितिमान् भवति । तत् ब्रह्म महः महत्त्वगुणवत् इति उपासीत ; फलं—महान् भवति । तत् ब्रह्म मनः मननम् इति उपासीत । फलम्—मानवान् मननसमर्थः भवति । तत् ब्रह्म नमः नमनगुणवत् इति उपासीत, फलम्—अस्मै उपासकाय कामाः नम्यन्ते प्रह्वीभवन्ति तदधीनाः भवन्ति । तत् ब्रह्म ब्रह्म बृहत्तमम् इति उपासीत ; फलम्—ब्रह्मवान् तद्गुणः भवति । तत् ब्रह्म ब्रह्मणः वेदस्य तदभिहितानाम् अग्न्यादिदेवानां परिमरः तिरोधानस्थानम् इति उपासीत, फलम्—एनम् उपासकं द्विषन्तः सपत्नाः परिम्रियन्ते, ये च अप्रियाः भ्रातृव्याः ते परिम्रियन्ते । १० ।

१४ । करणविषयकोद्गीथोपासनकथनानन्तरं ( ८।७ ) तदधिष्ठातृदेवपरं तत् कथयति अथेति । अथ अनन्तरम् अधिदैवं देवताविषयम् उद्गीथोपासनम् । यः एव असौ आदित्यः तपति तम् उद्गीथम् उपासीत । कथं तस्योद्गीथत्वम् ? उद्यन् उद्गच्छन् वै एष आदित्यः प्रजाभ्यः उद्गायति अन्नोत्पत्त्यर्थं, न विना सामगानं तदुत्पद्यते, अनहुदिते तस्मिन् न व्रीह्यादिपरिपाकः सम्भवति । न केवलमनेनोपकारं साधयति किन्तर्हि उद्यन् तमः च भयं च तज्जनितमपहन्ति । य एवं वेद स भयस्य तमसः अज्ञानस्य च अपहन्ता नाशयिता ह वै निश्चितं भवति ।

"एकं सद्विप्रा बहुधा वदन्ति" ( ऋक् १म, १६४सू ४६ऋक् )

समाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमि-
ममसुञ्चोद्गीथमुपासीत।

अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः। अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक्। तस्मादप्राणन्नपानन् वाचमभिव्याहरति।

इति वैदिकवाक्येन सवितुर्वायोस्साभिन्नत्वम्, तदेव दर्शयन्नाह— समानः उ एव तुल्यः पुनः एव अयं च प्राणः असौ च आदित्यः। कथम्? उष्णः अयं प्राणः उष्णः असौ आदित्यः, स्वरः इति इमं प्राणम् आचक्षते, स्वरः इति प्रत्यास्वरः इति असुम् आदित्यम् आचक्षते—स्वृगतौ स्वरति गच्छति इति स्वरः प्रतिस्वरति प्रत्यागच्छति इति प्रत्यास्वरः। प्राणो हि स्वरति देहादपैति, न पुनरागच्छति, आदित्यस्तु स्वरम् पुनरागच्छति, इत्येष भेदो न भेदसाधकः गमनव्यापारे तुल्यत्वात्। तस्मात् वै एतम् इमं प्राणम् असुं च आदित्यम् उद्गीथम् उपासीत।

अथ अनन्तरं व्यानं प्राणवृत्तिविशेषम् एव उद्गीथम् उपासीत। कोऽयं व्यानः? यत् वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं वहिर्निःसारयति स प्राणः, यत् अपानिति अपश्वसिति सः अपानः, अथ यः प्राणापानयोः सन्धिः तयोः अन्तरा वृत्तिविशेषः स व्यानः। यः व्यानः सा वाक्। कथमस्य वाक्त्वं प्रतिभाति? यस्मात् व्याननिर्वर्त्या वाक् तस्मात् अप्राणन् अनपानन् प्राणक्रियाम् अपानक्रियाञ्च अकुर्वन् वाचम् अभिव्याहरति उच्चारयति लोकः। मुखाभ्यन्तरेऽवस्थेन वायुना भवति वागुच्चारिता, भवति च यदस्य वहिर्निःसरणं तत् वर्णोच्चारणानन्तरमेव। अतः प्राणापानक्रियामकुर्वन्निति वचनं साध्वेव।

या वाक् सर्क् तस्मादप्राणन्ननपानन्नृचमभिव्याहरति सर्क् तत् साम तस्मादप्राणन्ननपानन् साम गायति, यत् साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति।

अतो यान्यन्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढ़स्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत।

अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत् प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षते ऽन्नं थमन्ने हीदꣳ सर्व्वꣳ स्थितम्।

द्यौरेवोदन्तरीक्षं गीः पृथिवी थमादित्यएवोद्वायुर्गीरग्निस्थꣳ सामवेद एवोद्यजुर्व्वेदोगीः ऋग्वेदस्थꣳ

या वाक् सा ऋक्, तस्मात् अप्राणन् अनपानन् ऋचम् अभिव्याहरति। या ऋक् तत् साम—ऋच्यधूढत्वात् साम्नः—तस्मात् अप्राणन् अनपानन् साम गायति। यत् साम स उद्गीथ, तस्मात् अप्राणन् अनपानन् उद्गायति।

अतः यानि अन्यानि वीर्य्यवन्ति कर्म्माणि—यथा अग्नेः मन्थनम् अरण्योः उत्पादनम्, आजेः संग्रामस्य सरणं धावनं प्रतिद्वन्द्विनां, दृढ़स्य धनुषः आयमनम् आकर्षणं, तानि अप्राणन् अनपानन् करोति, एतस्य हेतोः वीर्य्यवत्कर्म्मार्थं व्यानम् एव उद्गीथम् उपासीत।

अथ खलु उद्गीथाक्षराणि उपासीत। तत्र प्राणः एव उत्। कथम्? प्राणेन उत्तिष्ठति—अप्राणस्योत्थानादर्शनात्; वाक् गीः। कथम्? वाचः—ह प्रसिद्धे—गिरः इति आचक्षते; अन्नं थम्, हि यस्मात् अन्ने हि इदं सर्व्वं स्थितम्।

द्यौः एव उत्, अन्तरिक्षं गीः, पृथिवी थम्; आदित्यः एव उत्, वायुः गीः, अग्निः थम्; सामवेदः एव उत्, यजुर्व्वेदः गीः, ऋग्वेदः

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः अन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ।

अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात् तत् सामोपधावेत् ।

यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात् तां देवतामुपधावेत् ।

येन च्छन्दसा स्तोष्यन् स्यात् तच्छन्द उपधावेत् येन स्तोमेन स्तोष्यमाणः स्यात् तꣳस्तोममुपधावेत् ।

यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेत् ।

यम् । उद्गीथोपासनस्य फलम्—यः वाचः दोहः दोहनव्यापारः, अस्मै उपासकाय स्वयं वाक् तं दोहं दुग्धे दोग्धि । यः एवं विद्वान् एतानि उद्गीथाक्षराणि उद्गीथ इति उपास्ते स अन्नवान् अन्नादः च भवति ।

अथ खलु आशीःसमृद्धिः आशिषः कामस्य समृद्धिः सा उ एव यथा भवेत् तत् उच्यते इति शेषः । उपसरणानि उपगन्तव्यानि चिन्तनीयविषयाणि इति एवंप्रकारेण उपासीत । दर्शयन्ति तानि—येन साम्ना स्तोष्यन् स्तुतिं करिष्यन् स्यात् तत् साम उपधावेत् उपस्मरेत् चिन्तयेत् ।

यस्याम् ऋचि तत् साम तां च ऋचम् उपधावेत्, यदार्षेयं यस्य ऋषेः प्रोक्तं साम तम् ऋषिम् उपधावेत्, यां देवताम् अभिष्टोष्यन् स्यात् तां देवताम् उपधावेत् ।

येन छन्दसा गायत्र्यादिना स्तोष्यन् स्यात् तत् छन्दः उपधावेत्, येन स्तोमेन—स्तूयते स्ताव्यते नाप्नोति मः स्तोत्रविशेषः, त्रिवृत् पञ्चदश सप्तदश एकविंश इति प्रसिद्धः सोमयागे स्तोमः—स्तोष्यमाणः स्यात् तं स्तोमम् उपधावेत् ।

यां दिशम् अभिष्टोष्यन् स्यात् तां दिशम् उपधावेत् ।

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत् कामः स्तुवीतेति यत् कामः स्तुवीतेति। छा १।३।३।१—१२।

१५। ओमित्येतदक्षरमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम्।

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिरच्छादयन् यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम्।

तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्य्यपश्यदृचि साम्नि यजुषि। ते नु विदित्वोर्द्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन्।

अन्ततः एतेषां चिन्तनान्ते उद्गाता अप्रमत्तः सन् उपासृत्य कामम् अभिलषितविषयं ध्यायन् चिन्तयन् आत्मानं स्वस्वरूपं स्तुवीत। यत् यत्र यत्कामः सन् स्तुवीत स कामः अस्मै एवंविदे समृध्येत समृद्धिं प्राप्नुयात्। यत्कामः स्तुवीत यत्कामः स्तुवीतेति द्विरुक्तिरादरार्था।

१५। अक्षरोपासने प्रधानत्वमोङ्कारस्य तस्यैवोद्गीथोपासनस्य जीवनीभूतस्योपादानमोमिति। ओम् इत्येतत् अक्षरम् उपासीत। ओम् इति हि उद्गायति गानविषयं करोति, तस्य उपव्याख्यानम् आख्यायिकाच्छलेन तस्यामृतत्वफलप्रदर्शनम्।

मृत्योः बिभ्यतः देवाः वै त्रयीं विद्यां वेदविहितं कर्म प्राविशन्। ते छन्दोभिः आत्मानम् अच्छादयन् छादितवन्तः, यत् यस्मात् एभिः छन्दोभिः अच्छादयन् तत् तस्मात् छन्दसां छन्दस्त्वम्।

मत्स्यं यथा उदके परिपश्येत् एवं तत्र ऋचि साम्नि यजुषि तान् देवान् मृत्युः पर्य्यपश्यत्। ते नु विदित्वा मृत्योः चिकीर्षितं विदित्वा ऋचः यजुषः साम्नः ऊर्ध्वाः तत्कर्मभ्यः ताभ्यः प्रतिनिवृत्य तदूर्ध्वगताः स्वरम् एव प्राविशन्।

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत् प्रविश्य देवा अमृता अभया अभवन्।

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति तत् प्रविश्य यदमृता देवास्तदमृतो भवति। छा, १।३।४।१—५।

१६। अथ खलु य उद्गीथः स प्रणवः यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथएष प्रणव ओमिति ह्येष स्वरन्नेति।

यदा वा ऋचम् आप्नोति अध्ययनाय अधिकरोति, तदा ओम् इति एव अतिस्वरति निरतिशयेनादरेण उच्चारयति ; एवं साम एवं यजुः—तत्तदध्ययनकाले ओमित्युच्चारणानन्तरं तत् करोति। एष उ स्वरः ओङ्कारः। कोऽसौ ? यत् एतत् अक्षरम् एतत् अमृतम् अभयम्। तत् अक्षरं प्रविश्य देवाः अमृताः अभयाः अभवन्।

स यः एतत् एवं विद्वान् अक्षरं प्रणौति स्तौति, तदर्थचिन्तनादिना तत्तत्त्वमनुभवति, स एतत् एव अमृतम् अभयम् अक्षरं स्वयम् प्रविशति, तत् प्रविश्य यदमृताः यादृशः अमृताः देवाः अभवन् तदमृतः तादृक् अमृतः साधकः भवति।

१६। उद्गीथस्य जीवनीभूत ओङ्कार इति स्पष्टमभिदधाति तदुभयोरेकत्वमुद्गीथ अधेति। अथ खलु यः उद्गीथः, स प्रणवः यः प्रणवः स उद्गीथः इति—बह्वृचानां योऽसौ प्रणवः छन्दोगानां सोऽसावुद्गीथ इति तत्त्वम्। असौ वै आदित्यः उद्गीथः। एष प्रणवः ओम् इति। कथम् ? हि यस्मात् एष आदित्यः स्वरन् गच्छन् ओमिति उच्चारयन् वा एति।

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्य्यावर्त्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम्।

अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतो-मिति ह्येष स्वरन्नेति।

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणꣳस्त्वं भूमानमभिगायता-द्बहवो मे भविष्यन्तीति।

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमा-हरतीति। छा, १।३।५।१—५।

एतम् उ आदित्यम् एव अहम् अभ्यगासिषम् आभिमुख्येन गीत-वान् अस्मि; तस्मात् त्वम् एकः पुत्रः असि इति ह कौषीतकिः कुषीत-कस्यापत्यं पुत्रम् उवाच उक्तवान्, त्वं रश्मीन् आदित्यं च पर्य्यवर्त्तयात् पर्य्यावर्त्तय, बहवः पुत्राः ते तव भविष्यन्ति इति। इति अधिदैवम्।

अथ अध्यात्मम्। यः एव अयं मुख्यः प्राणः, तम् ओम् इति उद्गीथः उपासीत, हि यस्मात् एष वागादिप्रवृत्त्यर्थं स्वरन् ओमिति अनुज्ञां कुर्व्वन् एति।

एतम् उ एव प्राणम् अहम् अभ्यगासिषम् तस्मात् त्वं मम एकः पुत्रः असि इति त्वं कौषीतकिः पुत्रम् उवाच बहवो मे मम पुत्राः भविष्यन्ति इति अभिप्रेत्य त्वं प्राणं भूमानं तद्गुणविशिष्टम् अभि-गायतात्।

अथ खलु यः उद्गीथः स प्रणवः य प्रणवः स उद्गीथः इति दुरुद्गीतं दुष्टम् उद्गीतं होतृषदनात् ह एव अपि—होता यत्रस्थः शंसति तत्-

**१७। अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वै मैत्रेयः स्वाध्यायमुद्वव्राज ।**

ग्लानं होढवदन् तस्मात्—ततः अनुसमाहरति प्रतिसन्दधाति तत्-प्रतिविधानं करोति ।

१७। अन्नालाभजनितकष्टप्रख्यापनानन्तरं, तद्यथा—

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । १ । स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे तं होवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति । २ । एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति होवाच । ३ । न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति । ४ । स ह खादित्वाऽतिशेषान् जायाया आजहार साग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ । ५ । स ह प्रातः संजिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति । ६ । तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेयाय । ७ । तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश, स ह प्रस्तोतारमुवाच । ८ । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । ९ । एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति । १० । एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे । ११ ।

छा, १।१।१० ।

मटची वर्षोपलः तया हतेषु शस्यशून्येषु कुरुषु इभ्यग्रामे हस्तिपकाधिष्ठितग्रामे चाक्रायणः चक्रायणस्यापत्यम् उषस्तिः ह आटिक्या अप्राप्तयौवनया जायया सह प्रद्राणकः दुर्गतिं प्राप्तः उवास । १ । स पुनः कुल्माषान् कुत्सितमाषान् खादन्तम् इभ्यं हस्तिपकं बिभिक्षे याचे । तम् उषस्तिं स इभ्यः पुनः उवाच—यत् यच्च ये इमे मे मम कुल्माषाः उपनिहिताः प्रक्षिप्ताः उच्छिष्टभूताः, इतः भक्ष्यमाणात् कुल्माषात् अन्ये कुल्माषा न विद्यन्ते । २ । स उषस्तिः पुनः उवाच—एतेषाम् एतान् मे मह्यं देहि इति । अस्मै उषस्तये तान् प्रददौ । स हस्तिपकः उवाच—हन्त उच्छिष्टं पानावशिष्टं मे मम अनुपानं समीपगतं पानीयं पीतं स्यात् ? इति । ३ । न स्वित् वेत् न,

**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्यो-चुरन्नं नो भगवानागायत्वशनायाम वा इति।**

एते कुल्माषाः अपि उच्छिष्टाः इति। उषस्तिः पुनः उवाच—इमान् अखादन् न खलु अजीविष्यम् इति। कामः कामतः मे मम उदपानम् इति—यत्र तत्र तत्र प्राप्स्यामीति भावः। ४। स पुनः खादित्वा अतिशेषान् अवशिष्टान् कुल्माषान् जायायाः समीपे आजहार आनीत-वान्, सा अग्रे एव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव, पश्चात् तान् शिष्टान् प्रतिगृह्य निदधौ स्थापितवती। ५। स उषस्तिः पुनः प्रातः सञ्जिहानः शय्यां परित्यजन् उवाच जायां लक्ष्योकृत्य—यत् यदि वत हन्त अन्नस्य मात्रां स्तोकं लभेमहि धनमात्रां धनस्य अल्पं लभेमहि। कथम्? असौ नातिदूरवर्त्ती राजा यक्ष्यते यज्ञानुष्ठानं करिष्यति। स राजा सर्व्वैः आर्त्त्विज्यैः ऋत्विक्कर्म्मभिः मा मां वृणीत इति। ६। तं जाया उवाच—हन्त पते इमे एव कुल्माषाः इति। तान् कुल्मा-षान् खादित्वा अमुं विततं यज्ञं स इयाय गतवान्। ७। तत्र आस्तावे स्तोत्रोच्चारणस्थाने स्तोष्यमानान् उद्गातॄन् उप समीपे उप-विवेश उपवेशनं कृतवान्। स पुनः प्रस्तोतारम् उवाच। ८। हे प्रस्तोतः, या देवता प्रस्तावं प्रस्तावभक्तिम् अन्वायत्ता अनुगता तां चेत् अविद्वान् सन् प्रस्तोष्यति मूर्द्धा ते तव विपतिष्यति इति। ९। एवम् एव उद्गातारम् उवाच—हे उद्गातः, या देवता उद्गीथम् अन्वा-यत्ता तां चेत् अविद्वान् सन् स्तोष्यसि मूर्द्धा ते तव विपतिष्यति इति। १०। एवम् एव प्रतिहर्त्तारम् उवाच—हे प्रतिहर्त्तः, या देवता प्रतिहारम् अन्वायत्ता, तां चेत् अविद्वान् सन् प्रतिहरिष्यसि मूर्द्धा ते तव विपतिष्यति इति। ते उद्गात्रादयः पुनः समारताः कर्म्मणः उपरताः सन्तः तूष्णीम् आसाञ्चक्रिरे। ११।

—प्रचुरान्नलाभार्थमुद्गीथोपासनमाह अथेति। अथ अनन्तरम् अतः अन्नकष्टानन्तरं शौवः श्वभिः दृष्टः उद्गीथः उद्गानं प्रस्तूयते। तत् तत्र

तान् होवाचेहैव मा प्रातरुपसमीयातेति तद्ध वको दाल्भ्यो ग्लावो मैत्रेयः प्रतिपालयाञ्चकार।

ते ह यथैवेह बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिञ्चक्रुः।

ॐ३मदा३मों पिबा३मों देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ ऽहरद२ऽन्नपते३ऽन्नमिहा२हरा२ऽऽहरो३मिति। छा, १।१२।१—५।

ह किल दाल्भ्यः दल्भस्यापत्यं मैत्रेयः मित्रायाश्चापत्यं वकः ग्लावः वा—नामान्तरे—स्वाध्यायं स्वाध्यायं कर्त्तुम् उद्व्राज ग्रामात् बहिः उद्गतवान्।

तस्मै ऋषये श्वेतः श्वा प्रादुर्बभूव—स्वाध्यायतोषिता देवता श्वरूपेणात्मानं प्रकाशितवती। तं श्वेतश्वानम् अन्ये श्वानः उपसमेत्य ऊचुः—भगवान् नः अन्नमन्यम् अन्नम् आगायतु गानेन निष्पादयतु अशनयाम अशाम वयं वै इति।

तान् शुनः स श्वेतश्वा पुनरुवाच—इह एव मा मां प्रातः उपसमीयात उपागच्छेत इति। तत् तत्र पुनः दाल्भ्यः मैत्रेयः वकः ग्लावः वा प्रतिपालयाञ्चकार प्रतीक्षां कृतवान्।

यथा एव इह कर्म्मणि बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः उद्गातृपुरुषाः संरब्धाः अन्योन्यलग्नाः सर्पन्ति, एवं ते पुनः श्वानः आससृपुः परिभ्रमणं कृतवन्तः, समुपविश्य पुनः ते हिंचक्रुः गानारम्भकाले सर्व्वे मिलित्वा हुङ्कारध्वनिं कृतवन्तः। हिङ्काररूपमाह—ओम् अदाम अन्नम्, ॐ पिबाम् जलम्, ॐ देवः वरुणः प्रजापतिः सविता अन्नम् इह आहरत्—लेट्—आहरतु। हे अन्नपते, अन्नम् इह आहर आहर ॐम् इति।

१८। अयं वाव लोको हा उकारो वायुर्हा इकार श्चन्द्रमा अथकारः। आत्मेहकारोऽग्निरीकारः।

आदित्य ऊकारः निहव एकारो विश्वे देवा औहोइकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट्।

अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः।

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद।

छा, १।३।१३।१—४।

१८। हा उ, हाइ, अथ, इह, ई, ऊ, ए, औहोइ, हिं, स्वरः, या वाक्, हुम्, इत्येतानि त्रयोदशसंख्यकानि गानसिद्धये यान्यनर्थकान्यक्षराणि मध्ये मध्ये समुपादीयन्ते तानि स्तोभसंज्ञकानि भूलोकादिदृष्ट्योपासनाविषयाणि क्रियन्ते अयमिति। अयं वाव लोकः हाउकारः, वायुः हाइकारः, चन्द्रमाः अथकारः आत्मा इहकारः, अग्निः ईकारः।

आदित्यः ऊकारः, निहवः आह्वानम् एकारः, विश्वदेवा औहोइकारः, प्रजापतिः हिङ्कारः, प्राणः स्वरः, अन्नं या, विराड् वाक्।

अनिरुक्तः—अव्यक्तत्वात् इदमेदमेति अनिर्व्वाच्यः कारणात्मा, सञ्चरः—कार्य्यरूपेणानेकधा सञ्चरतीति सञ्चरः हुङ्कारः त्रयोदशः स्तोभः।

उपासनफलमाह—यः वाचः दोहः दोहनव्यापारः, अस्मै उपासकाय स्वयं वाक् तं दोहं दुग्धे दोग्धि। यः एतां साम्नाम् उपनिषदं रहस्यम् एवं वेद स अन्नवान् अन्नादः भवति। उपनिषदं वेद, उपनिषदं वेद इति द्विरभ्यासोऽध्यायसमाप्त्यर्थः।

१९। समस्तस्य खलु साम्नउपासनꣳ साधु यत् खलु साधु तत् सामेत्याचक्षते यदसाधु तदसामेति।

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः।

अथोताप्याहुः साम नो बतेति यत् साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः।

स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्म्मा आ च गच्छेयुरुप च नमेयुः।

छा, २।१।१—४।

१९। सामावयवविशिष्टस्योद्गीथस्य स्तोभाक्षराणाञ्चोपासनमुक्त्वा सम्प्रति समस्तसाम्न उपासनं विदधाति समस्तस्येति। समस्तस्य सर्व्वावयवविशिष्टस्य [illegible] साम-भक्तिकस्य च—साम्नः उपासनं खलु साधु। यत् खलु साधु तत् साम इति आचक्षते, यत् असाधु तत् असाम इति।

तत् तत्र साध्वसाधुविवेके उत अपि आहुः। किम्? यत् यत्र साधु भवति, तत् तत्र साधु बत—सन्तोषे—इति हेतोः एव साम नः अस्माकं बत इति आहुः। यत् यत्र असाधु भवति, तत् तत्र असाधु—बत—खेदे "[illegible]"—इति एव असाम नः अस्माकं बत इति आहुः।

यः एतत् एवं विद्वान् स साम साधु इति उपास्ते। यत् यतः उपासनात्: एनम् उपासकम् अभ्याशं क्षिप्रं साधवः धर्म्माः आगच्छेयुः च उपनमेयुः भोग्यत्वं प्राप्नुयुः च—द्वौ चकारावविलम्बज्ञापकौ।

२०। लोकेषु पञ्चविधꣳ सामोपासीत, पृथिवी हिङ्कारः, अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्द्ध्वेषु।

२०। सम्प्रति लोकादिषु समस्तावयवविशिष्टसामोपासनं प्रस्तूयते तेषां प्राणाभिव्यञ्जितत्वात्। "समस्तस्य साम्नउपासनं साधु" इत्यतः साधुदृष्ट्यनुवृत्तेः लोकादिदृष्टिर्विरुद्धेति भाष्यकारेणोक्तं—"साधुशब्दवाच्योऽर्थो धर्म्मो ब्रह्म वा सर्व्वथा लोकादिकार्य्येष्वनुगतम्। अतो यथा यत्र घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा, तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः धर्म्मादिकार्य्यत्वाल्लोकानाम्।" इति। अपि च तेनोक्तम्—"यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्म्मयोः धर्म्म एव साधुशब्दवाच्य इति युक्तं 'साधुकारी साधुर्भवति' इति धर्म्मविषये साधुशब्दप्रयोगात्" इति। किमिदं सामेति प्रश्ने तदुत्तरम्—"एष सामस्वेति तत् साम्नः सामत्वम्" इति (८।८[३४४पृ]) वागारब्धजगद्व्यापिप्राणरूपत्वमस्य। "स ब्रह्म त्यदित्याचक्षते" (८।११[३५७पृ]) इति प्राणस्यापरोक्षब्रह्मत्वम्। एवं सति सर्व्वत्र प्राणक्रिययाऽभिव्यक्तेषु लोकादिषु साधुदृष्ट्या "ब्रह्मणि तु परमानन्दे साधुशब्दोभक्त्या गमयितव्यः" इति भाष्यव्याख्यातुरुक्तिं गौणाभिधायिनीं मुख्यत्वेन परिणमय्य साधुत्वं शोभनत्वमानन्दघनस्यैवेति तेषु ब्रह्मस्तुत्युपलब्धिरेव समस्तावयवविशिष्टसामोपासनस्य मुख्योऽभिप्राय इति वेदितव्यम्; कार्य्येषु कारणानुगमेन वेदान्तेषु सर्व्वत्रोपासनस्य विहितत्वात्। फलान्तरश्रवणन्तु ब्रह्मविदि स्वतस्तत्प्रवृत्तेः। लोकेष्विति। लोकेषु पृथिव्यादिषु हिङ्कारादिभक्तिकं पञ्चविधं साम उपासीत। तद्यथा—पृथिवी हिङ्कारः गानारम्भकाले सर्व्वैः उद्गातृपुरुषैः मिलित्वा हुङ्कारध्वनिः; अग्निः प्रस्तावः प्रस्तोत्रा गेयः—अग्नौ हि कर्म्माणि प्रस्तूयन्तेऽतः प्रस्तावः; अन्तरिक्षम् उद्गीथः उद्गात्रा गेयः—'अन्तरिक्षं हि गगनं गकारविशिष्टश्चोद्गीथः'; आदित्यः प्रतिहार, प्रतिहर्त्रा गेयः—'प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति',

अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम्।

कल्पन्ते हास्मै लोका ऊर्द्ध्वाश्चावृत्ताश्च य एतदेवं विद्वांल्लोकेषु पञ्चविधं सामोपास्ते। १—३।

वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः।

द्यौ निधनं पञ्चभिर्युगपद्गेयम्—'दिवि निधीयन्ते हि इतो गता इति''; इति ऊर्द्धेषु ऊर्द्धं गतेषु लोकेषु ब्रह्मकार्य्येषु सामोपासनं तत्र ब्रह्मस्तुतिगानोपलम्भनम्।

अथ आवृत्तेषु अवाङ्मुखेषु लोकेषु सामोपासनम्। द्यौः हिङ्कारः प्राथम्यात्, आदित्यः प्रस्तावः—'उदिते हि आदित्ये प्रस्तूयन्ते कर्म्माणि प्राणिनाम्'; अन्तरिक्षम् उद्गीथः; अग्निः प्रतिहारः—प्राणिभिः प्रतिहरणात् इतस्ततो नयनात् अग्नेः, पृथिवी निधनम्—'तत आगतानामिह निधनात्'।

फलम्—यः एवंविद्वान् पञ्चविधं साम उपास्ते, अस्मै उपासकाय ऊर्द्ध्वाः च आवृत्ताः च लोकाः कल्पन्ते आयत्तीभवन्ति।

वृष्टौ वर्षणे पञ्चविधं साम उपासीत। पुरोवातः वर्षणस्य पूर्व्वं प्रवर्त्तितः वायुः हिङ्कारः प्राथम्यात्; मेघः जायते घनीभूतावाष्पा यत् मेघाकारेण परिणमन्ते स प्रस्तावः—'प्रावृषि मेघोपजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः'; वर्षति स उद्गीथः श्रेष्ठ्यात्; विद्योतते विद्युत् प्रकाशते स्तनयति गर्ज्जति स प्रतिहारः—वर्षणानन्तरं विद्युत्प्रकाशेन गर्ज्जनेन च प्रतिहृतत्वात्।

उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते । १।२ ।

सर्व्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत् संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ।

न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवं विद्वान् सर्व्वास्वप्सु पञ्चविधꣳ सामोपास्ते । २।१ ।

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ।

उद्गृह्णाति पुनर्वाय्वाकारेण यत् परिणमन्ते तत् निधनं समाप्तिसामान्यात् । फलम्—यः एतत् एवं विद्वान् वृष्टौ पञ्चविधं साम उपास्ते अस्मै पुनः वर्षति इच्छातः, असत्याम् अपि वृष्टौ वर्षयति वर्षणं प्रवर्त्तयति ।

सर्व्वासु अप्सु पञ्चविधं साम उपासीत । मेघः यत् संप्लवते एकीभावेनेतरेतरं घनीभवति स हिङ्कारः अपाम् आरम्भात् ; यत् वर्षति स प्रस्तावः—'आपः सर्व्वतो व्याप्तुं प्रस्तुताः' ; याः प्राच्यः नद्यः गङ्गाद्याः स्यन्दन्ते स उद्गीथः श्रैष्ठ्यात् ; याः प्रतीच्यः नद्यः नर्मदाद्याः स्यन्दन्ते स प्रतिहारः प्रतिहारसामान्यात् ; समुद्रः निधनम् तैत्तापां निधानात् ।

फलम्—यः एतत् एवं विद्वान् सर्व्वासु अप्सु पञ्चविधं साम उपास्ते स पुनः अप्सु न प्रैति जलमज्जनेन न मृतो भवति, अप्सुमान् मरुस्थलेऽपि उदकवान् भवति ।

ऋतुषु पञ्चविधं साम उपासीत । वसन्तः हिङ्कारः प्राथम्यात् ; ग्रीष्मः प्रस्तावः—'यवादिसंग्रहः प्रस्तूयते हि प्रावृड्र्थम्' ; वर्षा उद्गीथः

कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते । ११ ।

पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गावउद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ।

भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधꣳ सामोपास्ते । १२ ।

प्राणेषु पञ्चविधꣳ परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो-निधनं परोवरीयाꣳसि वैतानि ।

प्राधान्यात्; शरत् प्रतिहारः—'रोगिणां मृतानाञ्च प्रतिहरणात्'; हेमन्तः निधनम् ऋतुपरिसमाप्तेः ।

फलम्—यः एतत् एवं विद्वान् ऋतुषु पञ्चविधं साम उपास्ते अस्मै पुनः ऋतवः कल्पन्ते भोग्यत्वेन, अयम् ऋतुमान् तदुपयोगिविषयैः सम्पन्नः भवति ।

पशुषु पञ्चविधं साम उपासीत । अजाः हिङ्कारः प्राधान्यात्, अवयः प्रस्तावः—'साहचर्य्यदर्शनादजावीनाम्'; गावः उद्गीथः श्रैष्ठ्यात्, अश्वाः प्रतिहारः—पुरुषाणां प्रतिहरणात्; पुरुषो निधनं—पुरुषाश्रयत्वात् पशूनाम् ।

फलम्—यः एतत् एवं विद्वान् पशुषु पञ्चविधं साम उपास्ते अस्य पुनः पशवः भवन्ति, अयं पशुमान् भवति ।

प्राणेषु पञ्चविधं परोवरीयः उत्तरोत्तरश्रेष्ठं साम उपासीत । प्राणः—घ्राण इति भाष्यकारः मुख्यप्राणव्यावर्त्तनार्थम्—हिङ्कारः प्राथम्यात्; वाक् प्रस्तावः—वाचा हि सर्व्वं प्रस्तूयते, घ्राणाद्वाग्वरीयसी घ्राणविषयाद्वाग्विषयस्य बाहुल्यात्; चक्षुः उद्गीथः—बहुतरविषयं प्रकाशयति चक्षुरतो वाचो वरीयः; श्रोत्रं प्रतिहारः—चक्षुषो वरीयः

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य। १।२।

अथ सप्तविधस्य। वाचि सप्तविधꣳ सामोपासीत, यत्किंच वाचो हुं इति स हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिः।

यदुदिति स उद्गीथो यत् प्रतीति स प्रतिहारो यदुपेति स उपद्रवः यन्नीति तन्निधनम्।

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते। १—३।

सर्वेतः श्रवणात्; मनो निधनं—सर्व्वेन्द्रियाहृतविषयाणां निधानत्वात् वरीयः सर्व्वेभ्य इन्द्रियेभ्यः। एतानि वा प्राणादीनि परोवरीयांसि।

फलम्—यः एतत् एवं विद्वान् प्राणेषु पञ्चविधं साम उपास्ते अस्य पुनः जीवनं परोवरीयः उत्तरोत्तरश्रेष्ठं भवति, परोवरीयसः उत्तरोत्तरश्रेष्ठान् लोकान् जयति। इति पञ्चविधस्य।

अथ सप्तविधस्य। वाचि सप्तविधं साम उपासीत। यत्किञ्च वाचः हुं इति स हिङ्कारः, यत्किञ्च प्र इति स प्रस्तावः, यत्किञ्च आ इति स आदिः ओङ्कारः।

यत् किञ्च उत् इति स उद्गीथः, यत् किञ्च प्रति इति स प्रतिहारः, यत्किञ्च उप इति स उपद्रवः—पुनरुक्तावा गेयः, यत् किञ्च नि इति तत् निधनम्।

यः वाचः दोहः दोहनव्यापारः अस्मै उपासकाय स्वयं वाक् तं

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्व्वदा समस्तेन साम मां प्रति मां प्रतीति सर्व्वेण समस्तेन साम।

तस्मिन्निमानि सर्व्वाणि भूतान्यन्वायत्तानीति विद्यात् तस्य यत् पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिंकुर्व्वन्ति हिङ्कारभाजिनोह्येतस्य साम्नः।

अथ यत् प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः।

दोहं मुग्धे दोग्धि। यः एतत् एवं विद्वान् वाचि सप्तविधं साम उपास्ते स अन्नवान् अन्नादः भवति।

अथ खलु अमुम् आदित्यं सप्तविधसामावयवत्वेनाध्यस्य सप्तविधं साम उपासीत। कथमादित्यस्य सामत्वम्? सर्व्वदा समः वृद्धिक्षया-भावात्, तेन हेतुना साम, मां प्रति मां प्रति इति सर्व्वेण समः— अयं मत्सन्निधौ मत्सन्निधाविति सर्व्वेषां सन्निधौ समभावेन प्रकाशमानः, तेन हेतुना साम।

तस्मिन् इमानि वक्ष्यमाणानि सर्व्वाणि भूतानि अन्वायत्तानि अनुगतानि इति विद्यात्। कथम्? तस्य आदित्यस्य उदयात् पुरा पूर्व्वं यत् तद्रूपं स हिङ्कारः। तत् तत्र पशवः गवादयः अस्य आदित्यस्य अन्वायत्ताः अनुगताः, तस्मात् ते हिङ्कुर्व्वन्ति। हि अतएव ते एतस्य आदित्याख्यस्य साम्नः हिङ्कारभाजिनः भवन्ति हिङ्कारभजन-शीलत्वात् ते तथा वर्त्तन्ते।

अथ प्रथमोदिते यत् तद्रूपं स प्रस्तावः, तत् तत्र मनुष्याः अस्य आदित्यस्य अन्वायत्ताः, तस्मात् ते प्रस्तुतिकामाः कर्म्मारम्भाभिलाषिणः

अथ यत् सङ्गववेलायाᳬ स आदिस्तस्य वयांस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ।

अथ यत् सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ।

अथ यदूर्द्धं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ।

प्रशंसाकामाः स्तुतिवन्दनाभिलाषिणः भवन्ति । हि अतएव अस्य आदित्याख्यस्य साम्नः प्रस्तावभाजिनः भवन्ति ते ।

अथ सङ्गववेलायां गवां रश्मीनां जगन्मण्डलेन यत् सङ्गमनं तस्यां वेलायां—"प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तःस्यात्" इति मुहूर्त्तत्रयात्मकस्य दिवसपञ्चभागस्य द्वितीयभागः सङ्गवः—यत् तद्रूपं स आदिः ओङ्कारः । तत् तत्र वयांसि पक्षिणः अस्य आदित्यस्य अन्वायत्तानि, तस्मात् तानि अन्तरिक्षे अनारम्बणानि अनालम्बनानि आत्मानम् आदाय परिपतन्ति गच्छन्ति । हि अतएव एतस्य आदित्याख्यस्य साम्नः आदिभाजीनि भवन्ति तानि ।

अथ सम्प्रति मध्यन्दिने यत् तद्रूपं स उद्गीथः । तत् तत्र देवाः अस्य आदित्यस्य अन्वायत्ताः, तस्मात् ते देवाः प्राजापत्यानां प्रजापत्यपत्यानां सत्तमाः विशिष्टतमाः । हि अतएव एतस्य आदित्याख्यस्य साम्नः उद्गीथभाजिनः भवन्ति ते ।

अथ मध्यन्दिनात् ऊर्द्धम् अपराह्णात् प्राक् यत् तद्रूपं स प्रतिहारः । तत् तत्र गर्भाः अस्य आदित्यस्य अन्वायत्ताः । तस्मात् ते प्रतिहृताः

अथ यदूर्द्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षᳬ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः।

अथ यत् प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्नः एवं खल्वमुमादित्यᳬ सप्तविधᳬ सामोपास्ते। १—८।

अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधᳬ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत् समम्।

ऊर्द्ध्वं नीताः सन्तः न अवपद्यन्ते न स्रंसन्ते। हि अतएव एतस्य आदित्याख्यस्य साम्नः प्रतिहारभाजिनः भवन्ति।

अपराह्णात् ऊर्द्ध्वम् अस्तमयात् प्राक् यत् तद्रूपं स उपद्रवः। तत् तत्र आरण्याः पशवः अस्य आदित्यस्य अन्वायत्ताः। तस्मात् ते पुरुषं दृष्ट्वा कक्षम् अरण्यान्तर्भागं श्वभ्रं बिलतुल्यं भयशून्यम् इति उपद्रवन्ति उपगच्छन्ति। हि अतएव एतस्य आदित्याख्यस्य साम्नः उपद्रवभाजिनः भवन्ति ते।

अथ प्रथमास्तमिते अदर्शनं जिगमिषति सवितरि यत् तस्य रूपं तत् निधनम्। तत् तत्र पितरः अस्य आदित्यस्य अन्वायत्ताः ? तस्मात् तान् पितॄन् निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति। हि अतएव एतस्य आदित्याख्यस्य साम्नः निधनसम्बन्धात् ते निधनभाजिनः भवन्ति, एवं खलु अमुम् आदित्यं सप्तविधं साम उपास्ते।

अहोरात्रादिकालेन जगतः प्रमापयितृत्वादादित्यो मृत्युः। तस्यातितरणायेदं सामोपासनमुपदिश्यते श्रुतिरिति। अथ खलु आत्मसम्मितं—सप्तविधभक्तिनामाक्षराणि समाहृत्य तदवयवतुल्यतया मितम्

आदिरिति द्वाक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत् समम्।

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभि-स्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम्।

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि।

एकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसा-वादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्वि-शोकम्।

—अतिमृत्यु—मृत्युम् अतिक्रान्तम् अतिरिक्तात्तरेण—नामाक्षराणि द्वाविंशतिः श्रुत्यनुसारतः द्वादशमासाः, पञ्च ऋतवः, त्रयो लोकाः, असौ आदित्यः इति एकविंशतिः ततो वियोगात् शिष्यतेऽक्षरैकं तेन मृत्यु-तिक्रम इति अतिमृत्यु—सप्तविधं साम उपासीत। त्र्यक्षरत्र्यक्षर-नामाक्षरसंख्यया समत्वेन सामत्वं सम्पाद्य शिष्टनैकेन मृत्युतिक्रम इति तद्दिहणोति—हिङ्कारः इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत् समं पूर्व्वेण।

आदिः इति द्व्यक्षरं प्रतिहारः इति चतुक्षरं, ततः चतुर-क्षरात् एकं गृहीत्वा इह आदेरक्षरद्वये प्रक्षिप्य तेन तत् समम्।

उद्गीथः इति त्र्यक्षरं उपद्रव इति चतुरक्षरं, त्रिभिः त्रिभिः समं भवति अक्षरम् एकम् अतिशिष्यते, सुतरां तत्परिहाय त्र्यक्षरं तत् समम्।

निधनम् इति त्र्यक्षरं, तत् समम् एव भवति। तानि ह वा एतानि द्वाविंशतिः अक्षराणि।

एकविंशत्या आदित्यम आप्नोति। कथम्? इतः अस्मात् लोकात् द्वादशमासादिगणनया असौ आदित्यः एकविंशः। द्वाविंशेन शिष्टेन

आप्नोति ह्यादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधं सामोपास्ते सामोपास्ते । १—६ ।

मनो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ।

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या महामनाः स्यात्तद्व्रतम् । १।२ ।

अन्तरेण आदित्यात् मृत्योः परं जयति । यत् च आदित्यात् परं किं तत् ? तत् नाकम्—कमिति सुखं तस्य प्रतिषेधः अकम्, तत् न भवतीति नाकं कमेवेत्यर्थः । तत् विशोकम् विगतशोकं मानसदुःखरहितम् ।

यः एतत् एवं विद्वान् आत्मसम्मितम् अतिमृत्यु सप्तविधं साम उपास्ते स इह एकविंशतिसंख्यया आदित्यस्य जयम् आप्नोति, आदित्यजयात् द्वाविंशत्यक्षरसंख्यया परः जयः भवति । सामोपास्ते सामोपास्ते इति द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः ।

अनन्तरं गायत्रादिनामग्रहणपूर्व्वकं सामोपासनान्युच्यन्ते मन इति । मनः हिङ्कारः प्राथम्यात्, वाक् प्रस्तावः तदानन्तर्य्यात्, चक्षुः उद्गीथः श्रेष्ठत्वात्, श्रोत्रं प्रतिहारः प्रतिहृतत्वात्, प्राणो निधनं—स्वापकाले यथोक्तानां प्राणे निधानात् । एतत् गायत्रं साम प्राणेषु प्रोतं प्रतिष्ठितम् ।

स यः एवम् एतत् गायत्रं साम प्राणेषु प्रोतं वेद प्राणी अविकलकरणः भवति, सर्व्वम् आयुः—शतवर्षाणि—एति प्राप्नोति, ज्योक् उज्ज्वलं जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति । महामनाः अक्षुद्रचेताः स्यात् तत् व्रतं गायत्रोपासकस्य ।

अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम्।

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् तद्व्रतम्। १।२।

उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम्।

अभिमन्थति अरण्विद्वयघर्षणेन स हिङ्कारः, धूमः जायते स प्रस्तावः, ज्वलति स उद्गीथः, अङ्गाराः भवन्ति स प्रतिहारः, उपशाम्यति अग्नेः उपशमो भवति तत् निधनम्। एतत् रथान्तरं साम अग्नौ प्रोतम् प्रतिष्ठितम्।

स य एवम् एतत् रथान्तरं अग्नौ प्रोतं वेद स ब्रह्मवर्चसो तेजस्वी अन्नादः दीप्ताग्निः भवति, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति। प्रत्यङ्ङग्निम् अग्नेरभिमुखं न आचामेत् न भक्षयात्, न निष्ठीवेत् श्लेष्मनिरसनञ्च न कुर्य्यात् तत् व्रतम्।

उपमन्त्रयते सङ्केतं करोति स हिङ्कारः, ज्ञपयते माल्यचन्दनादिभिरभिप्रायमाविष्करोति प्रीणयति वा स प्रस्तावः, स्त्रिया सह शेते स उद्गीथः, प्रति आभिमुख्येन स्त्री सह मिलितभावेन शेते स प्रतिहारः, कालं गच्छति तत् निधनं, पारं समाप्तिं गच्छति तत् निधनम्, एतत् वामदेव्यं साम मिथुने प्रोतं प्रतिष्ठितम्।

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग् जीवति, महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या न काञ्चन परिहरेत्तद्व्रतम्। ११२।

उद्यन् हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम्।

स यः एवं वामदेव्यं मिथुने प्रोतं वेद स मिथुनीभवति नियतस्त्रीसम्पर्कवान् भवति, मिथुनात् मिथुनात् प्रजायते अमोघरेताः भवति, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति, न काञ्चन प्रजार्थिनीं परिहरेत् प्रत्याख्यायात् तत् व्रतम्। पुरा वैदिककाले दस्यूपद्रुतत्वात् प्रजापत्याभावाद्विपन्ना आसन्नार्य्याः। अतः प्रजोत्पादनेन तासामापन्निवारणं महान् धर्म्म इति बुद्ध्वा केचन तद्व्रतरता अभूवन्। एतस्यास्य विपरीतार्थं सम्पाद्य घृण्यवामाचाररूपव्यभिचारं प्रतिष्ठितवन्तः केचित् भ्रष्टाचाराः। ततोऽस्य महत् पार्थक्यम्; यदस्मिन् प्रजोत्पादनं, तस्मिन् पुनः प्रजाजन्मप्रतिरोधेन यथेच्छभोगसाधनमुद्देश्यम्। दस्मान्नाद्रुतेऽस्मिन् काले "अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः" इत्यस्य नियोगनिन्दाविषयत्वेऽपि व्रतेऽस्मिन्नपि योज्यमेतत् "अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यास्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः॥" इति निषेधदर्शनात्; अनेकधर्म्मत्युक्तः सम्भोगान्दोलितिका अपि व्रतधारिण आसन्निति प्रतिपत्तेः। ये पुनः श्रौतमार्त्तयोर्व्यवहारभेदं स्वीकृत्य श्रुत्युक्तमिति धर्म्मत्वेनाद्यापि व्रतमिदं निषेधकर्त्तां नावगाहत इति मन्यन्ते ते कथं विविधान् वैदिकाचारान् युगभेदे निषिध्यमानान् परिहरन्ति तत्तन्निषेधबलादिति विवेक्तव्यम्।

उद्यन् सविता हिङ्कारः प्राथम्याद्दर्शनस्य, उदितः प्रस्तावः प्रस्तवन-

स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या तपन्तं न निन्देत् तद्व्रतम्। ११२।

अभ्राणि संप्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्ज्जन्ये प्रोतम्।

स य एवमेतद्वैरूपं पर्ज्जन्ये प्रोतं वेद विरूपांश्च सुरूपांश्च पशूनवरुन्धे सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या वर्षन्तं न निन्देत् तद्व्रतम्। ११२।

हेतुत्वात् कर्म्मणः, मध्यन्दिनः मध्यन्दिनम् उद्गीथः श्रेष्ठत्वात्; अपराह्णः प्रतिहारः पश्वादीनां गृहान् प्रति हरणात्, अस्तं निधनं रात्रौ गृहे निधानात् प्राणिनां। एतत् बृहत् साम आदित्ये प्रोतं प्रतिष्ठितं तद्दैवतत्वात्।

स यः एवम् एतत् बृहत् आदित्ये प्रोतं वेद, स तेजस्वी अन्नादः भवति, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति। तपन्तं सवितारं न निन्देत् तत् व्रतम्।

अभ्राणि—अपो बिभर्त्ति इति अभ्रं तानि—अघनीभूतवाष्पाकारेण विद्यमानानि संप्लवन्ते आकाशपथे सञ्चरन्ति स हिङ्कारः, मेघः जायते घनीभूततया परिणमते स प्रस्तावः, वर्षति स उद्गीथः, विद्योतते विद्युत् प्रकाशते स्तनयति गर्ज्जति स प्रतिहारः, उद्गृह्णाति पुनर्वाष्पाकारेण परिणमते तत् निधनम्। एतत् वैरूपं साम पर्ज्जन्ये प्रोतं प्रतिष्ठितम्।

स यः एवम् एतत् वैरूपं पर्ज्जन्ये प्रोतं वेद, स विरूपान् च

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् [illegible]रो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम्।

स य एवमेतद्वै[illegible] वेद विराजति प्रजया पशुभिर्ब्रह्मवर्च्चसेन सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्यर्त्तून्न निन्देत्तद्व्रतम्। १।२।

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्य्यो लोकेषु प्रोताः।

स य एवमेताः शक्वर्य्यो लोकेषु प्रोता वेद लोकी भवति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या लोकान्न निन्देत्तद्व्रतम्। १।२।

सुरूपान् च अजाविप्रभृतीन् पशून् अवरुन्धे प्राप्नोति सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति। वर्षन्तं पर्ज्जन्यं न निन्देत् तत् व्रतम्।

वसन्तः हिङ्कारः प्राथम्यात्। ग्रीष्मः प्रस्ताव इत्यादि पूर्व्वाव्याख्यानुरूपम्। एतत् वैराजं वैराजस्य साम्नः युक्तम् ऋतुषु प्रोतम्।

स यः एवम् एतत् वैराजम् साम ऋतुषु प्रोतं वेद प्रजया पशुभिः ब्रह्मवर्च्चसेन विराजति ऋतुवत् सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति। ऋतून् शीतग्रीष्मादीन् न निन्देत् तत् व्रतम्।

पृथिवी हिङ्कारः, अन्तरिक्षं प्रस्तावः, द्यौः उद्गीथः, दिशः प्रतिहारः, समुद्रः निधनम्। एताः शक्वर्य्यः—एकस्यैव साम्नो नामधेयत्वेऽपि नित्य बहुवचनतया बहुवचनम्—लोकेषु प्रोताः प्रतिष्ठिताः।

स यः एवम् एताः शक्वर्य्यः लोकेषु प्रोताः वेद लोकी भवति लोकफलेन युज्यते, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेतारेवत्यः पशुषु प्रोताः ।

स य एवमेतारेवत्यः पशुषु प्रोताः वेद पशुमान् भवति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या पशून्न निन्देत्तद्व्रतम् । १।२ ।

लोम हिङ्कारस्त्वक् प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ।

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्च्छति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या संवत्सरं मज्जो नाश्नीयात्तद्व्रतं मज्जोनाश्नीयादिति वा । १।२ ।

महान् भवति, कीर्त्त्या महान् भवति। लोकान् न निन्देत् तत् व्रतम् ।

अजाः हिङ्कारः, अवयः प्रस्तावः, गावः उद्गीथः, अश्वाः प्रतिहारः, पुरुषः निधनम् । एताः रेवत्यः—प्रकार्थे इव नित्यबहुवचनम्—पशुषु प्रोताः प्रतिष्ठिताः ।

स यः एवम् एताः रेवत्यः पशुषु प्रोताः वेद, स पशुमान् भवति सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति, पशून् न निन्देत् तत् व्रतम् ।

लोम हिङ्कारः प्राथम्यात्, त्वक् प्रस्तावः आनन्तर्य्यात्, मांसम् उद्गीथः श्रैष्ठ्यात्, अस्थि प्रतिहारः प्रतिहृतत्वात्, मज्जा निधनं निधानात् । एतत् यज्ञायज्ञीयं नाम साम अङ्गेषु प्रोतं प्रतिष्ठितम् ।

स यः एवम् एतत् यज्ञायज्ञीयम् अङ्गेषु प्रोतं वेद अङ्गी भवति समग्राङ्गः भवति, न अङ्गेन विहूर्च्छति कुटिलो भवति, न पङ्गुः कुब्जः

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम्।

स य एतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानां सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्व्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या ब्राह्मणान्न निन्देत्तद्व्रतम्। १२।

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयांसि मरीचयः स प्रतिहारः सर्पा गन्धर्व्वाः पितरस्तन्निधनमेतत् साम सर्व्वस्मिन् प्रोतम्।

कुणिः वा भवति, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति। संवत्सरं मज्जः न अश्नीयात्, मज्जः न अश्नीयात् चिरजीवनम् इति वा तत् व्रतम्।

अग्निः हिङ्कारः, वायुः प्रस्तावः आदित्यः उद्गीथः, नक्षत्राणि प्रतिहारः चन्द्रमाः निधनम् कर्म्मिणां तन्निधनात्। एतत् राजनं साम देवतानां दीप्तिमत्त्वात् देवतासु प्रोतं प्रतिष्ठितम्।

स यः एवम् एतत् राजनं देवतासु प्रोतं वेद, एतासां देवतानां स लोकतां समानलोकतां सार्ष्टितां समानैश्वर्य्यतां गच्छति प्राप्नोति, सर्व्वम् आयुः एति, ज्योक् जीवति, प्रजया पशुभिः महान् भवति, कीर्त्त्या महान् भवति। ब्राह्मणान् न निन्देत् तत् व्रतम्।

त्रयी विद्या हिङ्कारः, त्रयः इमे लोकाः स प्रस्तावः, अग्निः वायुः आदित्यः स उद्गीथः, नक्षत्राणि वयांसि मरीचयः स प्रतिहारः, सर्पाः गन्धर्व्वाः पितरः तत् निधनम्। एतत् साम सामसमुदायः सर्व्वस्मिन्—त्रयीविद्यादि सर्व्वं तस्मिन्—प्रोतं प्रतिष्ठितम्।

स य एवमेतत् साम सर्व्वस्मिन् प्रोतं वेद सर्व्वꣳह भवति।

तदेष श्लोकः—यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति। यस्तद्वेद स वेद सर्व्वꣳ सर्व्वा-दिशो बलिमस्मै हरन्ति॥ सर्व्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम्। १।२।

विमर्द्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदि-

स यः एवम् एतत् साम सर्व्वस्मिन् प्रोतं वेद, स पुनः सर्व्वं सर्व्व-सम्पन्नः भवति।

तत् तस्मिन् अर्थे एष श्लोकः—यानि पञ्चधा पञ्चप्रकारेण हिङ्का-रादिविभागैः प्रोक्तानि त्रीणि त्रीणि त्रयीविद्यादीनि तेभ्यः पञ्चत्रि-केभ्यः ज्यायः महत्तरं परं व्यतिरिक्तं च अन्यत् न अस्ति। यः तत् सर्व्वात्मकं साम वेद स सर्व्वं वेद सर्व्वज्ञ भवति; अस्मै सर्व्वाः दिशः बलिं हरन्ति प्रापयन्ति। सर्व्वम् अस्मि इति उपासीत। तत् व्रतं तत् व्रतम्। द्विरुक्तिः सामोपासनसमाप्त्यर्था। साम्नो वागारब्धजग-द्व्यापिप्राणरूपत्वं प्राणस्य च परोक्षब्रह्मत्वं यत् पूर्व्वमुक्तं तदत्राऽहङ्ग्रहस-र्व्वोपासनविधानेन सुष्ठु प्रतिपन्नम्। "ब्रह्मविद्यया सर्व्वं भविष्यन्तो मनुष्यामन्यन्ते" (८।१२) इति यदन्यत्रोक्तं तस्यात्र विनियोगेन निखिलसामोपासनं ब्रह्मविद्यायामन्तर्भूतम्। फलान्तरश्रवणन्तु "तेन त्यक्तेन भुञ्जीथाः" (१०।१) इति नियमात् विद्यावतो विना प्रयत्नं परानुग्रहेण स्वतःप्रवृत्तफलप्राप्तिवशादिति सर्व्वमनवद्यम्। अन्यत्राप्येवं ज्ञेयम्।

सामोपासनप्रसङ्गेन गानविशेषादिसम्पदुन्नातुरुपदिश्यते विम-र्द्दीति। पशव्यं पशुभ्यः हितम् इति हेतोः विनर्द्दि—विशिष्टः नर्द्दः

इन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्व्वानेवोपसेवेत वारुणं त्वेव वर्ज्जयेत्।

अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत।

सर्व्वे स्वरा इन्द्रस्यात्मानः सर्व्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात्।

स्वरविशेषः ऋषभकूजितसमोऽस्यास्तीति विनर्द्दि—अग्नेः अग्निदेवत्यम् साम्नः साम सम्बन्धि यत् उद्गानं तत् अहं वृणे; उद्गीथः अनिरुक्तः अमुकसम इत्यविशेषितः, अतएव प्रजापतेः प्राजापत्यः; निरुक्तः सुस्पष्टः सोमस्य सोमदैवत्यः उद्गीथः; मृदु श्लक्ष्णं स्निग्धं वायोः वायुदैवत्यं गानम्; श्लक्ष्णं स्निग्धं बलवत् इन्द्रस्य इन्द्रदैवत्यं गानं; क्रौञ्चं क्रौञ्चपक्षिनिनादसमं बृहस्पतेः बृहस्पतिदैवत्यं गानम्; अपध्वान्तं भिन्नकांस्यस्वरसमं वरुणस्य वरुणदैवत्यं गानम्। एतान् सर्व्वान् एव उपसेवेत, वारुणं तु एव वर्ज्जयेत्।

अमृतत्वं देवेभ्यः आगायानि साधयानि इति आगायेत्; स्वधां पितृभ्यः, आशां मनुष्येभ्यः, तृणोदकं पशुभ्यः, स्वर्गलोकं यजमानाय, अन्नम् आत्मने आगायानि साधयानि इति एतानि मनसा ध्यायन् चिन्तयन् अप्रमत्तः सन् स्तुवीत।

सर्व्वे स्वराः अचः इन्द्रस्य प्राणस्य आत्मानः देहावयवस्थानीयाः, सर्व्वे उष्माणः श-ष-स-हाः प्रजापतेः आत्मानः देहावयवस्थानीयाः, सर्व्वे स्पर्शाः कादयः व्यञ्जनानि मृत्योः आत्मानः देहावयवस्थानीयाः। तम् एवंविदम् उद्गातारं यदि कश्चित् स्वरेषु उपालभेत स्वराः त्वया

अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवम् स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात्।

सर्व्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं ददानीति सर्व्वे स्पर्शा लेशेनानभिनिहितावक्तव्या मृत्योरात्मानं परिहराणीति। १—५।

छा, १।२।१—२२।

दुष्प्रयुक्ताः इति निन्देत्, स उद्गाता एनम् उपालब्धारं ब्रूयात्—अहम् इन्द्रं शरणं प्रपन्नः अभूवम्, स त्वा त्वां प्रतिवक्ष्यति स एव देव उत्तरं दास्यति इति।

अथ यदि एनम् उद्गातारम् ऊष्मसु उपालभेत, स एनम् उपालब्धारं ब्रूयात्—अहं प्रजापतिं शरणं प्रपन्नः अभूवम्, स त्वा त्वां प्रतिपेक्ष्यति मम विनिमयेन चूर्णयिष्यति इति। अथ यदि एनम् उद्गातारं स्पर्शेषु उपालभेत, स एनम् उपालब्धारं ब्रूयात्—अहं मृत्युं शरणं प्रपन्नः अभूवम् स त्वा त्वां प्रतिधक्ष्यति मम विनिमयेन भस्मीकरिष्यति।

अहम् इन्द्रे बलं ददानि इति ध्यात्वा सर्व्वे स्वराः घोषवन्तः बलवन्तः वक्तव्याः ; प्रजापतेः आत्मानं परिददानि प्रयच्छानि इति ध्यात्वा सर्व्वे ऊष्माणः अग्रस्ताः अन्तरप्रवेशिताः अनिरस्ताः अवहिराक्षिप्ताः विवृताः विवृतप्रयत्नोपेताः वक्तव्याः ; मृत्योः आत्मानं परिहराणि इति ध्यात्वा सर्व्वे स्पर्शा लेशेन शनैः अनभिनिहिताः अनभिनिक्षिप्ताः वक्तव्याः।

२१। त्रयो धर्म्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचर्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन् सर्व्वएते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति।

प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति।

तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् तद्यथा शङ्कुना सर्व्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण

२१। "ओमित्येतदक्षरमिदं सर्व्वम्" (३।५[६ष्ठ]) इत्योङ्कारस्य सर्व्वात्मकत्वं सामोपासनस्य जीवनीभूतमिति वक्तुमारभ्यते त्रय इति। यज्ञः अध्ययनं दानम् इति त्रयः धर्म्मस्कन्धाः धर्म्मस्य प्रविभागाः। स्कन्धत्रयविशिष्टो धर्म्मएव प्रथमः, तपः एव द्वितीयः, आचार्य्यकुले आत्मानम् अत्यन्तं यावज्जीवम् अवसादयन् आचार्य्यकुलवासी ब्रह्मचारी तृतीयः; सर्व्वे एते—यज्ञाध्ययनदाननिरताः, तापसाः, नैष्ठिकब्रह्मचारिणश्च—पुण्यलोकाः पुण्योलोको येषां ते इमे—पुण्यार्ज्जितलोकभाजः भवन्ति; ब्रह्मसंस्थः ब्रह्मणि सम्यक् स्थितः अमृतत्वम् अमृतं ब्रह्म तद्भावापन्नत्वम् एति प्राप्नोति।

प्रजापतिः प्रथमजः लोकान् अभ्यतपत् अभितप्तवान् सारजिघृक्षया तपोविषयान् कृतवान् अनुचिन्तितवानिति भावः। तेभ्यः अभितप्तेभ्यः अनुचिन्तितेभ्यः त्रयी कर्म्मप्रधाना विद्या सम्प्रास्रवत्—'प्रजापतेर्मनसि प्रत्यभात्' इति भाष्यकारः। तां त्रयीविद्याम् अभ्यतपत्; तस्याः अभितप्तायाः भूः भुवः स्वर इति एतानि अक्षराणि सम्प्रास्रवन्त व्याहृतीः लोकसारतया तन्मनसि प्रादुरभवन्।

तानि अक्षराणि अभ्यतपत् आलोचितवान्, तेभ्यः अभितप्तेभ्यः

सर्व्वा वाक् संतृणा ओङ्कार एवेदꣳ सर्व्वमोङ्कार एवेदꣳ सर्व्वम्। छा, २।४।२३।१—३।

२२। ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां च विश्वेषाञ्च देवानां तृतीयसवनम्।

क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्य्यादथ विद्वान् कुर्य्यात्।

ओङ्कारः सम्प्रास्रवत्—सर्व्वान्तर्भावकस्य ब्रह्मणः प्रतीकतया तन्मनसि प्रत्यभात्। स ओङ्कारः तत् ब्रह्म। कथम्? सर्व्वाणि पर्णानि यथा शङ्कुना पर्णनालेन सन्तृणानि निबद्धानि व्याप्तानि तथा सर्व्वा वाक् ओङ्कारेण सन्तृणा व्याप्ता। इदं सर्व्वं नामधेयमात्रम् ओङ्कारः एव। द्विरभ्यास आदरार्थः। सामशब्दस्य सा वाङ्मात्राभिधायिका, ओङ्कारः पुनर्नामधेयमात्रात्मकः। सुतरां साम्नः सांशमोङ्कारेणैकीकृत्य प्राणाभिधायिनाऽमेन "प्राणस्य प्राणः" इति गृहीत्वा सप्रतीकं ब्रह्म अतएव जगति जीवे च नित्यप्रकाशमानं सामोपासने ग्राह्यमित्यत्र प्रतिपादितम्।

२२। पञ्चविधं सप्तविधं च सामोपासनं, यज्ञाङ्गीभूतञ्च तत्, तत्सर्व्वसारभूतमोङ्कारञ्च मात्रात्रयेण ब्रह्मसम्पुटकं प्रोक्ता सम्प्रति प्रस्तुतयज्ञाङ्गभूतसामादिविज्ञानविधानार्थमाह ब्रह्मवादिन इति। ब्रह्मवादिनः वदन्ति। यत् प्रातःसवनं तत् वसूनाम्, यत् माध्यन्दिनं सवनं तत् रुद्राणां, यत् तृतीयसवनं तत् आदित्यानां च विश्वेषां देवानां च।

तैस्तैर्देवैः स स लोकः वशीकृतः। कुतो वा यजमानस्य लोक इत्यपेक्षयाह,—क्व तर्हि यजमानस्य लोकः इति। स यः यजमानः

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्यो-दङ्मुख उपविश्य स वासवꣳ सामाभिगायति।

लोक३द्वारमपावा३र्णू ३३ पश्येम त्वा वयꣳ रा३३३ ३३ हुं३ आ३३ ज्या३ यो३ मा३२१११ इति।

अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मेऽथ यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि।

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघ-मित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छति।

तं लोकं न विद्यात् न विजानीयात्, स कथं कुर्य्यात् कर्म्म। अथ विद्वान् वक्ष्यमाणसामाद्युपायज्ञः कुर्य्यात्।

प्रातः अप्रगीतत्वेन अनुवाकस्य शस्त्रसंघ्नकगीतिरहितस्य: उपाकर-णात् आरम्भात् पुरा पूर्व्वं गार्हपत्यस्य अग्नेः जघनेन पृष्ठतः उपविश्य उदङ्मुखः सन् स यजमानः वासवं वसुदेवताकं साम अभिगायति।

'लोकद्वारमपावृणु पश्येम त्वा वयं राज्याय'—हे अग्ने, लोकद्वारं पृथिवीलोकप्राप्तिद्वारं त्वम् अपावृणु उन्मोचय, तेन द्वारेण त्वां वयं पश्येम राज्याय राज्यार्थम् प्रभविष्णुत्वलाभाय।

अथ अनन्तरं जुहोति अनेन मन्त्रेण—पृथिवीक्षिते पृथिवी-निवासाय लोकक्षिते लोकनिवासाय अग्नये नमः। लोकं मे मह्यं यजमानाय विन्द लभस्व। एष वै यजमानस्य लोकः। एतास्मि गन्तास्मि।

कुत्र? तदाह—अत्र अस्मिन् लोके अहं यजमानः आयुषः पर-स्तात् ऊर्द्ध्वं मृत्यनन्तरं। स्वाहा। परिघं लोकद्वारार्गलं अपजहि अपनय इति उक्त्वा उत्तिष्ठति। तस्मै यजमानाय वसवः प्रातःसवनं संप्रयच्छन्ति।

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नी-ध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ।

लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं वैरा३३३ ३३ हुं३ आ३३ ज्या३ यो३ आ ३२१११ इति ।

अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानाय लोक एतास्मि ।

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघ-मित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ।

माध्यन्दिनस्य सवनस्य उपाकरणात् आरम्भात् पुरा पूर्व्वम् आग्नी-ध्रीयस्य अग्नेः जघनेन पृष्ठतः उपविश्य उदङ्मुखः सन् स रौद्रं रुद्र-दैवत्यं साम अभिगायति ।

'लोकद्वारमपावृणु पश्येम त्वा वयं वैराज्याय'—हे अग्ने, लोक-द्वारम् अन्तरिक्षलोकप्राप्तिद्वारं त्वम् अपावृणु उन्मोचय, तेन द्वारेण त्वां वयं पश्येम वैराज्याय विराट्त्वं विपुलत्वं तल्लाभाय ।

अथ अनन्तरं जुहोति अनेन मन्त्रेण—अन्तरिक्षक्षिते अन्तरिक्ष-निवासाय लोकक्षिते लोकनिवासाय वायवे नमः, यजमानाय मे मह्यं लोकं विन्द लभस्व । एष वै यजमानस्य लोकः । एतास्मि गन्तास्मि ।

कुत्र तदाह—अत्र अहं यजमानः आयुषः परस्तात् । स्वाहा । परिघम् अपजहि इति उक्त्वा उत्तिष्ठति । तस्मै यजमानाय रुद्राः माध्य-न्दिनं सवनं सम्प्रयच्छन्ति ।

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति।

लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳ स्वारा३ ३३३३ हुं३ आ३३ ज्या३ यो३ आ३२१११ इति।

आदित्यमथ वैश्यदेवं लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳ साम्रा३३३३३हुं३ आ३३ ज्या३ यो३ आ३२ १११ इति।

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत।

तृतीय सवनस्य उपाकरणात् आरम्भात् पुरा पूर्व्वम् आहवनीयस्य अग्नेः जघनेन पृष्ठतः उदङ्मुखः सन् उपविश्य स आदित्यं स वैश्वदेवं साम अभिगायति।

'लोकद्वारम् अपावृणु पश्येम त्वा वयं स्वाराज्याय'—हे अग्ने, लोकद्वारं द्युलोकप्राप्तिद्वारम् अपावृणु वयं त्वा त्वाम् पश्येम स्वाराज्याय स्वराट्त्वं स्वस्मिन् विराजमानत्वं तल्लाभाय।

आदित्यं साम गायन् वैश्वदेवं साम गायति—'लोकद्वारम् अपावृणु पश्येम त्वा वयं साम्राज्याय'—हे अग्ने, लोकद्वारं विविधलोकप्राप्तिद्वारं अपावृणु वयं त्वा त्वां पश्येम साम्राज्याय सर्व्वत्राधिकारप्राप्त्यर्थम्।

अथ अनन्तरं जुहोति अनेन मन्त्रेण—दिविक्षिद्भ्यः लोकक्षिद्भ्यः आदित्येभ्यः च विश्वेभ्यः च देवेभ्यः नमः लोकं मे मह्यं यजमानाय विन्दत।

एष वै यजमानाय लोक एतास्मात्र यजमानः परस्तादायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्तिष्ठति।

तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ सम्प्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद।

छा, २।४।२४।१—१६।

२३। असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशो अन्तरिक्षमपूपो मरीचयः पुत्राः।

तस्य ये प्राञ्ची रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः। ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः।

एष वै यजमानस्य लोकः। एतास्मि अत्र अहं यजमानः आयुषः परस्तात्। स्वाहा। परिघम् अपहत इति उक्त्वा उत्तिष्ठति।

तस्मै यजमानाय आदित्याः च विश्वे च देवाः तृतीयं सवनं सम्प्रयच्छन्ति। यः एवं वेद, एष ह वै यज्ञस्य मात्रां यज्ञयाथात्म्यं वेद। द्विरुक्तिरध्यायपरिसमाप्त्यर्था।

२३। आदित्योपास्तिरभिधीयत ऋगाद्यारोपेण असाविति। असौ वा आदित्यः देवमधु देवानां मोदनात् मधु इव मधु। तस्य आदित्यस्य द्यौः एव तिरश्चीनवंशः—यत्र संलग्नः सन् लम्बते इव; अन्तरिक्षम् अपूपः मधुक्रम इव—मधुनः सवितुः आश्रयत्वात्; मरीचयः पुत्राः—मधुक्रमस्थाः मधुकरवीजभूताः पुत्रा इव पुत्राः।

तस्य ये प्राञ्चः रश्मयः, ताः एव अस्य प्राच्यः मधुनाड्यः मध्वाधारच्छिद्राणि; ऋचः एव मधुकृतः भ्रमराः, ऋग्वेदः तद्विहितं कर्म्म एव पुष्पं—यतो मधुसंग्रहः; ताः अमृताः अत्यन्तरसवत्यः आपः—कर्म्मणि प्रयुक्ताः सोमाज्यपयोरूपाः। ताः वा एताः ऋचः मधुकृतः तद्रसान् आदाय—

एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ।

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् । १—४ ।

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्व्वेदएव पुष्पं ता अमृता आपः ।

तानि वा एतानि यजूꣳष्येतं यजुर्व्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ।

—एतं पुष्पस्थानीयम् ऋग्वेदम् ऋग्वेदविहितं कर्म्म अभ्यतप… अभितप्तवन्तः समाचूषन्निव, अभितप्तस्य तस्य ऋग्वेदस्य रसः अजाय… —रसं विवृणोति—यशः विश्रुतत्वं, तेजः देहगता दीप्तिः, इन्द्रि… सामर्थ्योपेतैः इन्द्रियैः अवैकल्यम्, वीर्य्यं बलम्, अन्नाद्यं व्रीह्यादिकम्

तत् यशआदि व्यक्षरत् विशेषेण अक्षरत् चरितवत् तत् आदित्यम् अभितः पार्श्वतः सवितुः पूर्व्वभागम् अश्रयत् आश्रितवत् । यत् एतत् आदित्यस्य रोहितं रूपम् उदयकाले तत् वा एतत् यशआदिकं मधु । १ ।

अथ अस्य ये दक्षिणाः रश्मयः, ताः एव अस्य मधुनाड्यः, यजूंषि एव मधुकृतः, यजुर्व्वेदः तद्विहितं कर्म्म एव पुष्पम्, ताः अमृताः आपः—सोमाद्याः ।

तानि वा एतानि यजूंषि एतं पुष्पस्थानीयं यजुर्व्वेदं तद्विहितं कर्म्म अभ्यतपन् ; अभितप्तस्य तस्य यजुर्वेदस्य रसः अजायत—रसं विवृणोति—यशः, तेजः, इन्द्रियम्, वीर्य्यं अन्नाद्यम् ।

तद्यशस्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम्। १—३।

अथ येऽस्य प्रत्यञ्चोरश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः साम वेद एव पुष्पं ता अमृता आपः।

तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत।

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपम्। १—३।

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यो-

तत् यशआदि व्यक्षरत् विशेषेण क्षरितवत्, तत् आदित्यम् अभितः अश्रयत्। यत् एतत् आदित्यस्य शुक्लं रूपं तत् वा एतत् यश आदिकं मधु। २।

अथ अस्य ये प्रत्यञ्चः रश्मयः ताः एव अस्य प्रतीच्यः मधुनाड्यः; सामानि एव मधुकृतः, सामवेदः तद्विहितं कर्म्म एव पुष्पं, ताः अमृताः आपः—सोमाद्याः।

तानि वा एतानि सामानि एतं पुष्पस्थानीयं सामवेदं तद्विहितं कर्म्म अभ्यतपन्; अभितप्तस्य तस्य सामवेदस्य रसः अजायत—रसं विवृणोति—यशः तेजः, इन्द्रियं वीर्य्यम् अन्नाद्यम्।

तत् यशआदि व्यक्षरत् विशेषेण क्षरितवत्, तत् आदित्यम् अभितः आश्रयत् यत् एतत् आदित्यस्य कृष्णं रूपं तत् वा एतत् यशआदिकं मधु। ३।

अथ ये अस्य उदञ्चः रश्मयः ताः एव अस्य उदीच्यः मधुनाड्यः;

ऽथर्व्वाङ्गिरसएव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः।

ते वा एते ऽथर्व्वाङ्गिरस एतदितिहासपुराणमभ्यतप९ंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्य९ंरसोऽजायत।

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परः कृष्ण९ं रूपम्। १—३।

अथ येऽस्योर्द्ध्वा रश्मयस्ता एवास्योर्द्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः।

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतप९ंस्तस्याभितप्तस्य यश इन्द्रियं वीर्य्यमन्नाद्य९ंरसोऽजायत।

अथर्व्वाङ्गिरसः एव कर्म्मणि प्रयुक्ताः मधुकृतः, इतिहासपुराणं पुष्पं, ताः अमृताः आपः—सोमाद्याः।

ते वा एते अथर्व्वाङ्गिरसः एतत् पुष्पस्थानीयम् इतिहासपुराणम् अभ्यतपन्, तस्य अभितप्तस्य रसः अजायत, रसं विवृणोति—यशः तेजः इन्द्रियं, वीर्य्यम्, अन्नाद्यम्।

तत् यशआदि व्यचरत्, तत् आदित्यम् अभितः अश्रयत्, यत् एतत् आदित्यस्य कृष्णं रूपं, तत् वै एतत् यशआदिकं मधु। ४।

अथ ये अस्य ऊर्द्ध्वाः रश्मयः ताः एव अस्य ऊर्द्ध्वाः मधुनाड्यः, गुह्याः रहस्याः एव आदेशाः मधुकृतः, ब्रह्म एव—शब्दाधिकारात् प्रणवाख्यमिति भाष्यकारः—पुष्पम्; ताः अमृताः आपः—सोमाद्याः।

ताः वा एताः गुह्याः आदेशाः, एतत् पुष्पस्थानीयं ब्रह्म अभ्यतपन्। तस्य अभितप्तस्य रसः अजायत—रसं विवृणोति—यशः, इन्द्रियं वीर्य्यम्, अन्नाद्यम्।

तद्वाक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव।

ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि। १—४।

तद्यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति।

त एतदेवरूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति।

तत् यश आदि व्यक्षरत्, तत् आदित्यम् अभितः अश्रयत, यत् एतत् आदित्यस्य मध्ये क्षोभते इव चलनं भजते इव, तत् वै एतत् यशआदिकं मधु।

ते वा एते यथोक्ताः रोहितादिरूपविशेषाः रसानां रसाः। केषां रसानाम्? वेदाः हि रसाः तेषाम् एते रसाः, तानि वा एतानि रोहितादिरूपाणि अमृतानाम् अमृतानि। केषाम् अमृतानाम्? वेदाः हि अमृताः तेषाम् एतानि अमृतानि। ५।

तत् तत्र यत् प्रथमम् अमृतं रोहितरूपलक्षणं तत् वसवः प्रातःसवनेशानाः अग्निना मुखेन—"अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः" (८।११) इति अग्निप्रधानाः सन्तः उपजीवन्ति। कथम्? न वै देवाः अश्नन्ति न पिबन्ति किन्तर्हि एतत् एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति। यशआदिकस्य सर्व्वस्यास्य अमृतत्वात् सर्व्वेन्द्रियतृप्तिरिति भाष्यकारः।

एतत् एव रूपम् अभि लक्षीकृत्य ते वसवः संविशन्ति उदासते भोगावसरकालं प्रतीक्षन्ते, तदवसरे एतस्मात् रूपात् उद्यन्ति उत्साहवन्तः भवन्ति।

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति।

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता। १—४।

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति।

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति।

स य एतदेव अमृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव

स यः एवम् ऋङ्मधुकरतादिक्रमेण एतत् वसूनाम् अमृतं वेद, स वसुभिः एकः भूत्वा अग्निना एव मुखेन एतत् एव अमृतं दृष्ट्वा तृप्यति, स यः एतत् एव रूपम् अभि लक्षीकृत्य संविशति, तस्मात् रूपात् उदेति।

यावत् आदित्यः पुरस्तात् उदेता पश्चात् अस्तमेता तावत् एव वसूनाम् आधिपत्यम्। स तावन्तं कालं स्वाराज्यं स्वराट्त्वम् पर्य्येता परितो गन्ता आप्ता भवति। ६।

अथ यत् द्वितीयम् अमृतं शुक्ररूपलक्षणं तत् रुद्राः—"दशेमे पुरुषे प्राणा आत्मैकादश" (८।११) इति दशेन्द्रियाणि मनश्च—उपजीवन्ति, इन्द्रेण मुखेन—विश्वत्वात् (३।२३) इन्द्रस्येन्द्रियेषु प्राधान्यात्। कथम्? न वै देवाः अश्नन्ति न पिबन्ति, किन्तर्हि एतत् एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति।

एतत् एव रूपम् अभि लक्षीकृत्य ते रुद्राः संविशन्ति, एतस्मात् रूपात् उद्यन्ति।

स यः एवं यजुर्मधुकरत्वादिक्रमेण एतत् रुद्राणाम् एव अमृतं वेद, स रुद्रैः एकः भूत्वा इन्द्रेण एव मुखेन एतत् एव अमृतं दृष्ट्वा

मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेवरूपमभिसंविश-
त्येतस्माद्रूपादुदेति।

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्ताव-
द्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधि-
पत्यꣳ स्वाराज्यं पर्य्येता। १।४।

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन
मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा
तृप्यन्ति।

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति।

तृप्यति, स एतत् एव रूपम् अभि लक्षीकृत्य संविशति, एतस्मात्
रूपात् उदेति।

यावत् आदित्यः पुरस्तात् उदेता पश्चात् अस्तमेता द्विस्तावत्
ततोद्विगुणं कालं दक्षिणतः उदेता उत्तरतः अस्तमेता रुद्राणाम् एव
आधिपत्यं—वसूनां यावत् भोगकालः ततोरुद्राणां भोगकालो द्विगुण
इति फलितार्थः। स द्विगुणकालं स्वाराज्यं स्वराड्भावं पर्य्येता। ७।

अथ यत् तृतीयम् अमृतं कृष्णरूपलक्षणं तत् आदित्याः—
"द्वादश वै मासाः संवत्सरस्यैव आदित्याः" (८।११) इति वर्षात्मका-
देवाः—उपजीवन्ति वरुणेन मुखेन—"वि ये दधुः शरदं मासमादह-
र्यज्ञमक्तुं चाहचम्। अनाप्यं वरुणो मित्रो अर्य्यमा क्षत्रं राजान
आशत॥" (ऋक् ७म, ६६सू, ११ऋक्) इति वर्षमासादिविधातृ-
त्वात्तस्य। कथम्? न वै देवाः अश्नन्ति न पिबन्ति, किन्तर्हि एतत्
एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति।

एतत् एव रूपम् अभि लक्षीकृत्य ते आदित्याः संविशन्ति, एत-
स्मात् रूपात् उद्यन्ति।

स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति।

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता। १—४।

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति।

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति।

स यः एवं साममधुकरतादिक्रमेण एतत् आदित्यानाम् एव अमृतं वेद, स आदित्यैः एकः भूत्वा वरुणेन एव मुखेन एतत् एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति। स एतत् एव रूपम् अभिसंविशति, एतस्मात् रूपात् उदेति।

यावत् आदित्यः दक्षिणतः उदेता उत्तरतः अस्तमेता द्विस्तावत् ततोद्विगुणं कालं पश्चात् उदेता पुरस्तात् अस्तमेता आदित्यानाम् एव तावत् आधिपत्यम्। स तावन्तं कालं स्वाराज्यं पर्य्येता। ८।

अथ यत् चतुर्थम् अमृतं कृष्णरूपलक्षणं तत् मरुतः—"अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः" (ऋक् १म, १३४सू, ४ऋक्) इति वायोरन्तर्भूताः सुतरां देवसंख्यायामुपनिषदि वायुरेव रश्मीतो निरुक्तकता च स एव प्राधान्येन—उपजीवन्ति सोमेन मुखेन तेषां बलविधायकत्वात्। न वै देवाः अश्नन्ति, न पिबन्ति, किन्तर्हि एतत् एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति।

एतत् एव रूपम् अभि लक्षीकृत्य ते मरुतः संविशन्ति, एतस्मात् रूपात् उद्यन्ति।

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेन नैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति।

स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳस्वाराज्यं पर्य्येता।

अथ यत् पञ्चममममृतं तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति।

स यः एवम् अथर्व्वाङ्गिरसमधुकृतादिक्रमेण एतत् मरुताम् एव अमृतं वेद। स मरुद्भिः एकः भूत्वा सोमेन एव मुखेन एतत् एव अमृतं दृष्ट्वा तृप्यति, स एतत् एव रूपम् अभिसंविशति एतस्मात् रूपात् उदेति।

यावत् आदित्यः पश्चात् उदेता पुरस्तात् अस्तमेता द्विस्तावत् ततो द्विगुणं कालम् उत्तरतः उदेता दक्षिणतः अस्तमेता, मरुताम् एव तावत् आधिपत्यं, स तावन्तं कालं स्वाराज्यं प्रर्य्येता। ८।

अथ यत् पञ्चमम् अमृतम् अनिरूप्यरूपलक्षणं तत् साध्याः उपजीवन्ति ब्रह्मणा मुखेन—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः॥" (ऋक् १म, १६४सू, ५०ऋक्)। रश्मिनामसु "सप्तऋषयः। साध्याः" पठिताः। "तेषामिष्टानि समिषा मदन्ति यत्र सप्तऋषीनूपरएकमाहुः" (१०म, ८२सू, २ऋक्) इत्यत्र यथा व्याख्यातृभीरश्मय इत्यर्थो न गृहीतः "साध्याः सन्ति देवाः" इत्यत्रापि तथा भवितुमर्हति। "मनो मन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान्।

स एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ।

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ।

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्द्धम् उदेताऽर्व्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता । १—४ ।

निर्भयोनरकश्चैव दंशो नारायणो वृषः । प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः ॥" इति । अन्यत्र "मनोऽनुमन्ता विष्णुश्च मनुर्नारायणस्तथा । तपोनिधिर्निमिश्चैव हंसो धर्म्मश्च कीर्त्तिताः । रिपुश्चैव प्रसूश्चापि साध्या द्वादश कीर्त्तिताः ॥" इति पौराणिकैः । मनोमन्ता प्राणा इत्यादीनां साध्येषु ग्रहणात् प्राणमनइत्यादीनां देवेभ्यः श्रेष्ठत्वात् ऋगर्थस्वारस्यात् "साध्यन्ते आराध्यन्ते साध्याः" इति क्षीरस्वामिकृतव्युत्पत्त्या देवानामाराध्यास्ते इत्यायाति । के पुनस्ते इति जिज्ञासायां "ब्रह्मणा मुखेन" इत्युक्तत्वात् ब्रह्माविर्भावकृतार्थो मनआदय एव गृह्यन्ते साध्येष्विति तत्त्वं प्रतिभाति ।—न वै देवाः अश्नन्ति न पिबन्ति किन्तर्हि एतत् एव अमृतं दृष्ट्वा उपलभ्य तृप्यन्ति ।

ते एतत् एव रूपम् अभिसंविशन्ति, एतस्मात् रूपात् उद्यन्ति ।

स यः एवं गुह्यादेशादिक्रमेण एतत् साधयानाम् अमृतं वेद साध्यैः एकः भूत्वा ब्रह्मणा एव मुखेन एतत् एव अमृतं दृष्ट्वा तृप्यति । स एतत् एव रूपम् अभिसंविशति एतस्मात् रूपात् उदेति ।

यावत् आदित्यः उत्तरतः उदेता दक्षिणतः अस्तमेता द्विस्तावत् ततो द्विगुणं कालम् ऊर्द्धम् उदेता अर्व्वाक् अस्तमेता, साधयानां तावत् आधिपत्यम् । स तावन्तं कालं स्वाराज्यं पर्य्येता ।

पूर्व्वस्मात् पूर्व्वस्मात् द्विगुणोत्तरोत्तरेण कालेनोदेता चास्तमेतेति

अथ तत ऊर्द्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः।

न वै तत्र न निम्लोच नोदियाय कदाचन।

देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणेति।

यदत्र निरूपितं तत् पुराणविरुद्धम्। तत्र तूदयास्तमयकालस्य तुल्यत्वं मेरोर्मूर्द्धनि संलग्नस्य चक्राख्यस्य सवितुर्मेरोः प्रदक्षिणावर्त्ते-स्तुल्यत्वात्। इन्द्रयमवरुणसोमपुरीष्विह तस्योदयास्तमयकालो निरूपितः। तद्यथा—यदा ऐन्द्रे मध्याह्नः, तदा ऐशान्ये तृतीययामः, आग्नेये प्रथमयामः, संयमिन्याम् उदयः। यदा याम्ये मध्याह्नः, तदा ऐन्द्रे अस्तमयः, आग्नेये तृतीययामः, नैर्ऋतिकोणे प्रथमयामः, वारुण्ये उदयः। यदा वारुण्ये मध्याह्नः, तदा याम्ये अस्तमयः, नैर्ऋतिकोणे तृतीययामः, वायव्ये प्रथमयामः, सौम्ये उदयः। यदा च सौम्ये मध्याह्नः, तदा वारुणे अस्तमयः, वायव्ये तृतीययामः, ऐशान्ये प्रथमयामः, ऐन्द्रे उदयः। अत्रैवं समाधानं कृतम् व्याख्यातृभिः—न हि सवितुरुदयास्तमयौ स्तः नियतविद्यमानत्वात्तस्य। तौ पुनर्द्रष्टुरपेक्षया वर्ण्येते। सुतरां श्रुतौ सवितृगतेराधिक्यापेक्षया भोगकालद्वैगुण्यं नोच्यते किन्तर्हि अमरावत्यादीनां पुरीणां दैत्योपद्रुतानां पूर्व्वपूर्व्वापेक्षया द्विगुणेन कालेनोत्तरोत्तरपुरीणामुद्वासहेतोर्द्रष्ट्रभावात् तदपेक्षयोत्तरोत्तरस्थानेषु भोगकाले द्वैगुण्यमिति तदभिप्रायः। १०।

प्राणिदृष्टिगतावेवोदयास्तमयौ स्वयन्तु तद्वर्ज्जित इति प्रदर्शयति अथेति। अथ ततः प्रोक्ताद्भोगकालादनन्तरम् ऊर्द्ध्वः तदूर्द्ध्वगतः सन् उदेत्य आत्मनि उद्गम्य न एव उदेता न अस्तमेता एकलः अद्वितीयः एव मध्ये स्वात्मनि स्थाता। तत् तस्मिन् अर्थे एष श्लोकः।

किन्तत्र उदयास्तमयव्यापारेण सविता प्राणिनामायुर्हरतीत्यस्य प्रश्नस्योत्तरे आह—न वै तत्र—आयुर्हरणव्यापारोऽस्ति। कथम्? कदाचन न निम्लोच—छान्दसः प्रयोगः—न न्यम्लोचीत् अस्तमगमत्,

न ह वा अस्मा उदेति न निम्लोचति सकृत्।

दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच।

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वान्तेवासिने।

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति। १—६। छा, ३।५।१—११।

न उदियाय न उद्गतवान्। हे देवाः, तेन सत्येन—नोदेति नास्तमेतीति सत्यवचनेन—अहं ब्रह्मणा मा विराधिषि मा विरुधे—सुतरां ब्रह्मणोऽप्राप्तिर्माभूत्।

फलमाह—यः एतां ब्रह्मोपनिषदम् एवं वेद, अस्मै ब्रह्मविदे सविता न उदेति, न निम्लोचति, अस्मै पुनः सकृत् सदा एव दिवा भवति। उदयास्तमयविरहात् न भवति तस्यायुर्हरणम्।

तत् एतत् ह किल ब्रह्मा हिरण्यगर्भः प्रजापतये विराजे उवाच, प्रजापतिः मनवे, मनुः प्रजाभ्यः। तत् एतत् मधुज्ञानं ब्रह्म ब्रह्मविज्ञानं ह किल पिता ज्येष्ठाय पुत्राय उद्दालकाय आरुणये प्रोवाच।

इदं वाव तत् ब्रह्म ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय पिता प्रब्रूयात्, प्रणाय्याय योग्याय अन्तेवासिने शिष्याय वा।

यद्यपि अस्मै आचार्य्याय अद्भिः पूर्णां समुद्रवेष्टितां धनस्य पूर्णाम् इमां पृथिवीं दद्यात् तथापि अन्यस्मै कस्मैचन न दद्यात्। कथम्? एतत् एव विज्ञानं ततो भूयः इति हेतोः। द्विरभ्यास आदरार्थः।१।

२४। अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्य्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष कोशो वसुधानस्तस्मिन् विश्वमिदꣳ श्रितम्।

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेव वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम्।

२४। अथ दीर्घायुष्ट्वसाधकं कोशविज्ञानमारभते अन्तरिक्षेति। अन्तरिक्षोदरः—अन्तरिक्षम् उदरम् अन्तःसुषिरं यस्य सः—भूमिबुध्नः—भूमिः बुध्नः मूलं यस्य सः—कोशः न जीर्य्यति न विनश्यति त्रैलोक्यात्मकत्वात्। अस्य कोशस्य दिशः हि स्रक्तयः कोणाः, द्यौः अस्य उत्तरम् ऊर्द्ध्वं बिलम्। स एष कोशः वसुधानः वसुसाधनसम्पत् धीयतेऽस्मिन् इति—निखिलसाधनसम्पदाधारः। तस्मिन् कोशे विश्वं समस्तम् इदं साधनैश्वर्य्यं श्रितं स्थितम्।

तस्य अस्य कोशस्य प्राची दिक् प्रागन्तभागः जुहूः—जुह्वति अस्यां दिशि कर्म्मिणः प्राङ्मुखाः सन्तः इति जुहूर्नाम; सहमाना—सहन्ते अस्यां पापकर्म्मफलानि यमपुर्य्यां प्राणिनः इति—सहमाना नाम दक्षिणा दिक्; राज्ञी नाम—राज्ञा वरुणेनाधिष्ठिता—प्रतीची पश्चिमा दिक्; सुभूता नाम—भूतिमद्भिः कुवेरादिभिरधिष्ठिता—उदीची उत्तरा दिक्। तासां दिशां वायुः वत्सः—पुरोवातस्याकारेण ताभ्य उद्भूतत्वात् तस्य। स यः एवम् एतं वायुं दिशां वत्सं वेद न पुत्ररोदं पुत्रनिमित्तरोदनं रोदिति। सोऽहं एतं वायुम् एवं दिशां वत्सं वेद पुत्ररोदं मा रुदम्—पुत्रनिमित्तरोदनं मम माभूत्।

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना।

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदं सर्व्वं भूतं यदिदं किञ्च तमेव तत् प्रापत्सि।

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम्।

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम्।

अथ यदवोचꣳ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्व्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम्।१–७।

जपमन्त्रः—असुना असुना असुना इति त्रिः पुत्रस्य नाम गृहीत्वा तस्य दीर्घायुष्ट्वाकाङ्क्षी जपति—अरिष्टम् अविनाशिनं कोशं यथोक्तं प्रपद्ये ; असुना असुना असुना प्राणं प्रपद्ये ; असुना असुना असुना भूः प्रपद्ये ; असुना असुना असुना भुवः प्रपद्ये ; असुना असुना असुना स्वः प्रपद्ये।

जपस्यार्थं व्याचष्टे—सोऽहं प्राणं प्रपद्ये इति यत् अवोचम्—तत् तस्मात् प्राणः वा इदं सर्व्वं भूतं यत् इदं किञ्च, तम् एव प्राणं प्रापत्सि प्रपन्नः अभूवम्।

अथ भूः प्रपद्ये इति यत् अवोचम्—तत् पृथिवीं प्रपद्ये, अन्तरिक्षं प्रपद्ये, दिवं प्रपद्ये इति एव अवोचम्।

अथ भुवः प्रपद्ये इति यत् अवोचम्—तत् अग्निं प्रपद्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये इति एव अवोचम्।

अथ स्वः प्रपद्ये इति यत् अवोचम्—तत् ऋग्वेदं प्रपद्ये, यजुर्व्वेदं प्रपद्ये, सामवेदं प्रपद्ये इति एव अवोचम्, द्विरभ्यासः आदरार्थः।१५।

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंꣳशतिवर्षाणि तत् प्रातःसवनं, चतुर्विंꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्व्वं वासयन्ति।

तञ्चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनꣳ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदोह भवति।

अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ

पुरुषायुषजीवनाय पुरुषमेव यज्ञत्वेन कल्पयति—पुरुषः वाव यज्ञः। तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनम्। गायत्री चतुर्व्विंशत्यक्षरा। तत् तत्र पुरुषयज्ञे गायत्रं गायत्रीच्छन्दस्कं स्तोत्रादि प्रातःसवनम्; अस्य पुरुषयज्ञस्य वसवः देवाः अन्वायत्ता अनुगताः। प्राणाः वाव वसवः। कथम्? एते प्राणाः हि इदं सर्व्वं वासयन्ति—तेषु देहे वसत्सु सर्व्वमिदं वसति नान्यथा।

एतस्मिन् वयसि तं चेत् किञ्चित् रोगादि उपतपेत् स ब्रूयात् इमं मन्त्रम्—'हे प्राणाः वसवः, इदं मे प्रातःसवनम् माध्याह्निकं सवनम् अनुसन्तनुत—एतत् प्रातःसवनं माध्याह्निकसवनेन एकीभूतं कुरुत। अहं यज्ञः—यज्ञभूतोऽहम्—प्राणानां वसूनां प्रातःसवनेशानां मध्ये मा विलोप्सीय मा विलुप्येयं न विच्छेद्येयम् इति। ततः उपतापात् एव पुनः उदेति उद्गच्छति। उद्गतः सन् अगदः अनुपतापः पुनः भवति।

अथ यानि चतुश्चत्वारिंशत् वर्षाणि, तत् माध्यन्दिनं सवनम्। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। तत् तत्र यज्ञे त्रैष्टुभं त्रिष्टुप्छन्दस्कं

सवनं तदस्य रुद्रा अन्वायत्ताः प्राणावाव रुद्रा एते हीदं सर्व्वंꣳ रोदयन्ति।

तञ्चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनꣳ सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदोह्भवति।

अथ यान्यष्टचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयꣳ सवनं तदस्यादित्या अन्वयत्ताः प्राणा वावादित्या एते हीदꣳ सर्व्वमाददते।

तञ्चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा-

स्तोत्रादि माध्यन्दिनं सवनम्, अस्य यज्ञस्य रुद्राः देवाः अन्वायत्ताः, प्राणाः वाव रुद्राः। कथम्? एते प्राणाः हि इदं सर्व्वं रोदयन्ति —ततो विच्छेदे रोदनात्।

तस्मिन् वयसि तं चेत् किञ्चित् रोगादि उपतपेत् स ब्रूयात्— प्राणाः रुद्राः, इदं मे माध्यन्दिनं सवनं तृतीयसवनम् अनुसन्तनुत इति। अहं यज्ञः प्राणानां रुद्राणां मध्ये मा विलोप्सीय इति। ततः उपतापात् एव पुनः उदेति। उद्गतःमन् अगदः पुनः भवति।

अथ यानि अष्टचत्वारिंशत् वर्षाणि तत् तृतीयं सवनम्। अष्टचत्वारिंशदक्षरा जगती। तत् तत्र जागतं जगतीच्छन्दस्कं स्तोत्रादि तृतीयसवनम्। अस्य यज्ञस्य आदित्याः देवाः अन्वायत्ताः। प्राणाः वाव आदित्याः। कथम्? एते प्राणाः इदं सर्व्वं शब्दादिजातम् आददते।

एतस्मिन् वयसि तं चेत् किञ्चित रोगादि उपतपेत् स ब्रूयात्—

आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति।

एतद्ध स्म वै तद्विद्वानाह महीदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोड़शं वर्षशतमजीवत् प्र ह षोड़शं वर्षशतं जीवति य एवं वेद। १—७।

स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षा।

अथ यदश्नाति यत् पिबति यद्रमते तदुपसदैरेति।

हे प्राणाः आदित्याः, इदं तृतीयसवनम् आयुः—षोड़शोत्तरवर्षशतम् —अनुसन्तनुत इति। अहं यज्ञः प्राणानाम् आदित्यानां मध्ये मा विलोप्सीय, तत उपतापात् एव पुनः उदेति। उद्गतः सन् अगदः एव पुनः भवति।

निश्चितफलेयं विद्येत्युदाहरणेन दर्शयति। एतत् यज्ञदर्शनं ह स्म वै किल निश्चितफलम्। तत् तस्मात् विद्वान् ऐतरेयः इतरायाः अपत्यं महीदासः आह—स त्वं रोगः किं कस्मात् मे मम एतत् उपतपनम् उपतपसि योऽहम् अनेन उपतापेन न प्रेष्यामि न मरिष्यामि इति। स पुनः षोड़शं वर्षशतं षोड़शोत्तरवर्षशतम् अजीवत्। यः एवं वेद स पुनः षोड़शं वर्षशतं प्रजीवति। १६।

स यज्ञरूपी पुरुषः यत् अशिशिषति अशितुम् इच्छति, यत् पिपासति पातुम् इच्छति, यत् न रमते न सुखम् अनुभवति ता तानि अस्य दीक्षा—दुःखरूपत्वात् तस्याः।

अथ यत् अश्नाति, यत् पिबति, यत् रमते तत् उपसदैः अभोज-

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति।

अथ यत्तपोदानमार्ज्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणा।

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः।

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचाऽपिपास एव स बभूव। सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति तत्रैते द्वे ऋचौ भवतः।

मीयदिनावसानसूचनात् मितभोजनादिभिः सुखकरैः समताम् एति प्राप्नोति।

अथ यत् हसति, यत् जक्षति भक्षयति, अथ मैथुनं चरति तत् स्तुतशस्त्रैः एव—तत्र तत्र शब्दवत्त्वमत्रापि तथेति—समानत्वम् एति।

अथ यत् तपः दानम् आर्ज्जवम् ऋजुत्वम्, अहिंसा, सत्यवचनम् इति ताः अस्य दक्षिणाः—धर्म्मपुष्टिकरत्वसामान्यात्।

तस्मात् पुनः अस्य पुरुषस्य उत्पादनं जन्म एव सोष्यति असोष्ट इति—जन्मपक्षे षूङ् प्राणिप्रसवे यज्ञपक्षे षुञ् अभिषवे धातुरूपैक्यम्। अस्य पुरुषस्य तत् मरणम् अवभृथः—समापकात्।

ह किल तत् एतत् दर्शनं नामतः घोरः गोत्रतः आङ्गिरसः कृष्णाय देवकीपुत्राय उक्त्वा—व्यवहितं "एतत् त्रयम्" इत्यादि—उवाच—स कृष्णस्तु अपिपासः विद्यान्तरस्पृहाशून्यः एव बभूव। यदासीत् व्यवहितं तत् उपस्थाप्यते—स यज्ञवित् अन्तवेलायां मरणकाले एतत् त्रयं मन्त्रत्रयं प्रतिपद्येत जपेत जपार्थम्—अक्षितम्

आदित् प्रत्नस्य रेतसः। उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्म पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति। १—७।

छा, ३।५।१५—१७।

२५। वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्य्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति।

अक्षीणम् असि त्वं प्राणतत्त्वमितिशेषः, अच्युतं स्वरूपात् अविच्युतम् असि, प्राणसंशितं प्राणस्य संशितं सम्यक् तनूकृतं च सूक्ष्मं तत्त्वम् असि इति।

एते द्वौ ऋचौ भवतः—आत् इत् इत्यत्र आकारस्यानुबन्धस्तकारोऽनर्थकश्छन्दसि। तमसः परि तमसः परस्तात् देवत्रा देवेषु उत्तरम् उत्कृष्टतरं देवं द्योतनशीलं सूर्य्यम् आ सम्यक् न तु लौकिकवत् पश्यन्तः सन्तः उत्तरं तदुत्तरं प्रत्नस्य चिरन्तनस्य रेतसः बीजभूतस्य कारणस्य ज्योतिः चिच्छक्तिं वयम् उत्पश्यन्तः स्मः। तेन किमभवत्? उत्तमं ज्योतिः ज्ञानस्वरूपं ब्रह्म अगन्म अगमाम प्राप्तवन्तः स्मः चिरजीवनाय—क्रियाप्रबन्धे लुङ्। द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थः। १७।

२५। अथ संवर्गविद्यारभ्यते; तत्रेयमाख्यायिका :—

जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्व्वतः आवसथान् मापयाञ्चक्रे सर्व्वत एव मे ऽत्स्यन्तीति। १।

अथ ह हंसा निशायामतिपेतुस्तद्धैवं ह सौहं समभ्युवाद हो होयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति। २।

तमु ह परः प्रत्युवाच कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्कमात्थेति यो नु कथं स युग्वा रैक्क इति। ३।

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्व्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्व्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति। ४।

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्व इति। ५।

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्व्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्व्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति। ६।

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति। ७।

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यराꣳ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय। ८। १।

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तं हाभ्युवाद। १।

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति। २।

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्राम। ३।

तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति। ४।

तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास स तस्मै होवाच। ५। २।

ह ऐतिह्ये। जानश्रुतिः जनश्रुतस्यापत्यं पौत्रायणः पुत्रस्य पौत्रः श्रद्धादेयः श्रद्धया देयम् अस्येति श्रद्धया दानशीलः, बहुदायी—बहु प्रभूतं दातुं शीलम् अस्येति बहुदायी, बहुपाक्यः—बहु पक्तव्यम् अन्नन्यहानि गृहे यस्य असौ बहुपाक्यः अस्य गृहे भोजनार्थिभ्यः बहु अन्नं पच्यते इत्यर्थः—आस बभूव। स पुनः सर्व्वतः सर्व्वासु दिक्षु आवसथान् अभ्यागतवासगृहान् मापयाञ्चक्रे कारितवान्। कथम् ? सर्व्वतः सर्व्वदिग्भ्यः एव मे मम अन्नम् अत्स्यन्ति भोक्ष्यन्ते अभ्यागता इति।

अथ ह किल हंसाः अभिपेतुः पतितवन्तः जानश्रुतेर्दर्शनगोचरे। तत् तस्मिन् काले हंसः हंसम् एवं समभ्युवाद अभ्युक्तवान्—हो होयि भोभो भल्लाक्ष भल्लाक्ष—भल्लवत् अक्षिणी यस्य स त्वम्—दिवा द्युलोकेन समं तुल्यं जानश्रुतेः पौत्रायणस्य ज्योतिः—अन्नदानादिजनितप्रभास्वरम्—आततं व्याप्तं, तत् तत्र मा प्रसाङ्क्षीः प्रसक्तिं तेन ज्योतिषा

सम्बन्धं मा कार्षीः। कथम्? तत् ज्योतिः त्वा त्वां मा प्रधाक्षीः— पुरुषव्यत्ययेन—मा दहतु। परः अपरः तं पुनः किल प्रत्युवाच— काम्बरे—अनादरे—कम् उ अरे एनं जानश्रुतिं—अयोग्यमिति यावत् —सन्तं साधुगुणयुक्तं सयुग्वानं—युगं वहतीति युग्यः बलीवर्द्दः अश्वः वा अस्यास्तीति युग्यः शकटः तेन सह वर्त्तते इति सयुग्वानं—शकटिनं —रैक्कम् इव एतत् वचनं गुणवर्णनयोग्यम्—आत्थ इति। प्रथम आह—यः नु त्वया उच्यते कथं स युग्वा रैक्कः इति।

यथा कृतायविजिताय—कृतः नाम्ना उल्लिखितः अयः द्यूतसमये प्रसिद्धः चतुरङ्कः स विजितः येन तस्मै अधरेयाः त्रिद्व्येकाङ्काः संयन्ति सङ्गच्छन्ति अन्तर्भवन्ति एवम् एनं रैक्कं सर्व्वं तत् अभिसमेति अन्तर्भवति यत्किञ्च प्रजाः साधु कुर्व्वन्ति। स रैक्कः यत् वेद, तत् यः वेद—तमपि सर्व्वं समेतीति शेषः। एतत् विजानन् स रैक्कः मया उक्तः।

तत् हंसवाक्यं ह पुनः जानश्रुतिः पौत्रायणः उपशुश्राव श्रुतवान्। स जानश्रुतिः सञ्जिहानः शय्यां परित्यजन् एव क्षत्तारं द्वारपालं सारथिं वा उवाच—अङ्ग क्षिप्रं अरे अहो द्वारपाल सयुग्वानम् इव तल्लक्षणेन लक्षितं रैक्कम् आत्थ मदभिप्रायं ज्ञापय। द्वारपाल आह यः नु—वितर्के—सयुग्वा रैक्कः कथं स—तदभिप्रायज्ञापनयोग्य इति भावः।

जानश्रुतिर्हंसवाक्यं तत्सन्निधौ वाचयति—यथाकृतायविजितायेत्यादि पूर्व्ववत्।

स क्षत्ता पुनः अन्विष्य न अविदं न व्यज्ञासिषं नाहं ज्ञातवान् इति प्रत्येयाय प्रत्यागतवान्। तं क्षत्तारं जानश्रुतिः पुनः उवाच— अरे यत्र अरण्यनदीतटादौ ब्राह्मणस्य ब्रह्मविदः अन्वेषणा अनुमार्गणा, तत् तत्र एनं रैक्कम् अर्च्छ गच्छ मार्गणाय।

स क्षत्ता शकटस्य अधस्तात् पामानं—"सूक्ष्मा वक्राः पौण्ड्रकाः स्रावबत्यः पामेत्युक्ताः कण्डुमत्यः सदाहकाः" इति लक्षणाक्रान्तं खर्ज्ज-

रोगविशेषं कषमाणं कण्डूयमानं रैक्कम् दृष्ट्वा उप समीपे उपविवेश उपविष्टवान्। तं रैक्कं ह पुनः स अभ्युवाद उक्तवान्—हे भगवः भगवन्, त्वं नु सयुग्वा रैक्कः इति। अहं हि अरा३अरे इति ह पुनः स रैक्कः प्रतिजज्ञे दार्ढ्येन ज्ञापितवान्।

स ह क्षत्ता अविदं ज्ञातवानहम् इति प्रत्येयाय प्रत्यागतवान्।

तत् तत्र विदिततत्त्वे उ ह पुनरेव जानश्रुतिः पौत्रायणः गवां षट्शतानि, निष्कं कण्ठहारम्, अश्वतरीरथम् अश्वतरीभ्यां युक्तरथम् आदाय तदा प्रतिचक्रमे रैक्कं प्रतिगतवान्। तं रैक्कं पुनः अभ्युवाद अभ्युक्तवान्, हे रैक्क, इमानि गवां षट्शतानि, अयं निष्कः, अयम् अश्वतरीरथः विद्यानिष्क्रय इति शेषः। हे भगवः भगवन्, यां देवतां त्वम् उपास्से तान् एतां देवतां मे माम् अनुशाधि।

तं जानश्रुतिं पुनरेव परः रैक्कः प्रत्युवाच—अरे—अनादरे—शूद्र शोचनीय ( १।३।३४ ) हंसमुखात्तत्कीर्त्तिश्रवणेन जातिर्षत्वात्, गोभिः सह हारेत्वा हारेण सह इत्वा गन्त्वो गन्त्वीरथः—इत्येति पाठएव रुचिरः—तव एव अस्तु इति। तत् तस्मात् गवादिप्रत्याख्यानादेव पुनरेव जानश्रुतिः पौत्रायणः गवां सहस्रं, निष्कम्, अश्वतरीरथं, दुहितरम् आदाय तदा प्रतिचक्राम।

तं रैक्कं पुनः जानश्रुतिः अभ्युवाद—हे रैक्क, इदं गवां सहस्रं अयं निष्कः, अयम् अश्वतरीरथः, इयं जाया, यस्मिन् त्वम् आस्से तिष्ठसि सोऽयं ग्रामः विद्यानिष्क्रय इति शेषः। हे भगवः भगवन्, मा माम् अनुशाधि एव इति।

तस्याः जानश्रुतेर्दुहितुः मुखं—परिग्रहसूचनाय—उपोद्गृह्णन्—सार्धकोपसर्गद्वयप्रयोगात्—करेणाकृष्य उन्नमयन् उवाच—इमाः गावः आजहार आहृतवान् सम्पदभिमानवशादिति भावः। हे शूद्र, अनेन एव त्वदुहितुर्मुखेन—अभिमानादिलक्षणपरिशून्ये न—आलापयिष्यथाः आलापं कुर्वीथाः—तत्सहशविनयावनतः सन्निति भावः। अतएवाह महर्षिर्द्वैपायनः जनकनिवासाय गमनोद्यतं स्वतनयं शुकम् :—

यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्व्वान् संवृङ्क्ते इत्यधिदैवतम्।

अथाध्यात्मम्। प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणोह्येवैतान् सर्व्वान् संवृङ्क्ते इति।

उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः।
न प्रभावेण गन्तव्यमन्तरीक्षचरेण वै॥
आर्ज्जवेनैव गन्तव्यं न सुखार्त्तं यथा तथा।
मार्त्तं एव्या त्रिशेषास्तु विशेषा हि प्रसङ्गिनः॥
अहङ्कारो न कर्त्तव्यो याज्ये तस्मिन् नराधिपे।
स्थातव्यञ्च वशे तस्य स ते क्षेंत्स्यति संशयम्॥

शान्ति ३२५अ, ८—१० श्लो। इति।

महावृषेषु देशेषु यत्र स उवास, ते पुनः एते रैक्वकपर्णाः नाम इति प्रसिद्धाः अस्मै रैक्वाय ताम् अदात् इति शेषः। स रैक्वः तस्मै जानश्रुतये जातनिरभिमानाय पुनः उवाच।

वायुः वाव एव संवर्गः—संवर्ज्जनात् संग्रहणात् संग्रसनात् वा संवर्गः—वक्ष्यमाणानाम् अग्न्यादीनाम् आत्मभावापादनात्। एतद्गुणसम्पन्नो वाह्यवायुरेव ध्येयः आत्मसात्करणेन ब्रह्मगुणसम्पन्नत्वहेतोः। वायोः संवर्गत्वं दर्शयति—यदा यस्मिन् काले वै अग्निः उद्वायति उपशाम्यति, तदा असौ अग्निः वायुम् एव अप्येति तत्स्वाभाव्यम् अपिगच्छति। एवं यदा सूर्य्यः अस्तम् एति, तदा वायुम् एव अप्येति तज्ज्योतिषाम् अस्मिन् विलयात्। यदा चन्द्रः अस्तम् एति, तदा वायुम् एव अप्येति।

यदा आपः उच्छुष्यन्ति उच्छोषं प्राप्नुवन्ति तदा वायुम् एव अपियन्ति। वायुः हि एव एतान् सर्व्वान् अग्न्यादीन् संवृङ्क्ते संवृणक्ति आत्मसात्करोति। इत्यधिदैवतम्।

अथाध्यात्मम्। प्राणः मुख्यः वाव एव संवर्गः। कथम्? स

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु।**

**अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्ष-सेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः।**

**स होवाच—महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः तं कापेय नाभिपश्यन्ति मर्त्त्या अभिप्रता-रिन् बहुधा वसन्तं, यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति।**

पुरुषः यदा स्वपिति प्राणेन एकीभूय तिष्ठति—"यदा गृह्णात्यथ है-तत्पुरुषः स्वपिति नाम" (३।५।५० पृ) इति—तदा प्राणम् एव वाक् अप्येति, प्राणं चक्षुः अप्येति, प्राणं श्रोत्रम् अप्येति। प्राणो हि एव एतान् सर्व्वान् संवृङ्क्ते संवृणक्ति आत्मभावमापादयति।

तौ वै एतौ द्वौ वायुश्च प्राणश्च संवर्गौ—वायुः एव देवेषु संवर्गः, प्राणः मुख्यः प्राणेषु वागादिषु संवर्गः।

अथ—वायोः प्राणस्य च [illegible]र्गमाहात्म्यायिका[illegible]। [illegible] — ऐतिह्ये। शौनकञ्च शुनकस्यापत्यं कापेयं कपिगोत्रं, काक्षसेनिं कक्षसेनास्यापत्यम् अभिप्रतारिणं च भोजनाय उपविष्टौ सूपकारैः परिविष्यमाणौ ब्रह्मचारी बिभिक्षे भिक्षितवान्। तस्मै ब्रह्मचारिणे उ ह पुनः न तौ ददतुः भिक्षां न दत्तवन्तौ।

स ब्रह्मचारी पुनः उवाच—भुवनस्य भूरादिलोकस्य गोपाः गोप्ता रक्षयिता कः स एकः देवः यः चतुरः महात्मनः अग्न्यादीन् वागादीन् च जगार ग्रसितवान्। हे कापेय, हे अभिप्रतारिन्, बहुधा वसन्तं तं मर्त्त्याः न अभिपश्यन्ति न जानन्ति। यस्मै देवाय वै एतत् अन्नं, तस्मै देवाय एतत् अन्नं न दत्तम् इति।

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाह देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति।

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत् कृतं तस्मात् सर्व्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्व्वं दृष्टꣳ सर्व्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद।

छा, ४।३।१—८।

तत् ब्रह्मचारिवचनं पुनः प्रतिमन्वानः मनसा आलोचयन् शौनकः कापेयः ब्रह्मचारिणं प्रत्येयाय आजगाम, आगत्य आह—देवानाम् अग्न्यादीनां वायुरूपेण ग्रसनानन्तरं पुनरुत्पत्तौ जनिता उत्पादयिता, वागादीनां प्रजानां स्थावरजङ्गमानाञ्च प्राणरूपेण ग्रसनानन्तरं पुनरुत्पत्तौ जनिता उत्पादयिता स एकः देवः हिरण्यदंष्ट्रः अमृतदंष्ट्रः अभग्नदंष्ट्रः इति यावत् बभसः भक्षणशीलः, अनसूरिः न असूरिः सूरिरेवेत्यर्थः। अस्य देवस्य महान्तं महिमानम् आहुः ब्रह्मविदः। स्वयम् अन्यैः अनद्यमानः अभक्ष्यमाणः अनन्नम् अग्निवागादिदेवतारूपम् अत्ति आत्मसात्करोति इति वै एतल्लक्षणम् एव यत्, हे ब्रह्मचारिन्, तत् इदं सर्व्वान्तर्भावकं ब्रह्म वयम् आ सम्यक् उपास्महे। अस्मै ब्रह्मचारिणे भिक्षां दत्त, हे भृत्याः इति।

तस्मै ब्रह्मचारिणे पुनः ददुः भिक्षाम्, ते वै एते अग्न्यादयः चत्वारः वागादयश्च चत्वारः तेषां ग्रसिता वायुश्च प्राणश्च इति पञ्च। अतः वागादिभ्यः अन्ये पञ्च, अग्न्यादिभ्यः अन्ये पञ्च इति दश सन्तः तत् कृतं भवति—चतुरङ्काङ्कितः कृतसंज्ञकः, त्र्यङ्काङ्कितः त्रेतासंज्ञितः, द्व्यङ्काङ्कितः द्वापरसंज्ञितः, एकाङ्कितः कलिसंज्ञितः अयः इति दश

२६ । एष ह वै यज्ञो योऽयं पवत एष ह यन्निदꣳ सर्व्वं पुनाति यदेष यन्निदं सर्व्वं पुनाति तस्मादेष एव यज्ञस्तस्य वाक् च मनश्च वर्त्तनी ।

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होता-

सन्तः तत् कृतं भवतिः कृतस्य प्राधान्यात् त्रितयमन्यत् तस्मिन्नन्तर्भूय कृतमित्युक्तं, कृतायोपलक्षितं द्यूतं कृतमित्युच्यत इति टीकाकृत् । द्यूतस्य सर्व्वान्नात्तृत्वप्रसिद्ध्या तदारोपात् दशसंख्यावतां देवानामत्तृत्वं सिद्धम् । सम्प्रति तेषामन्नं साधयति—तस्मात् दशसंख्यकदेवानां कृतत्वात् सर्व्वासु दिक्षु—दशसंख्यासामान्यात्—अन्नम् एव दश— "विराडन्नम्" इति श्रुतेः दशदिकस्थं जगत् विराट्त्वेन गृहीत्वाऽन्नं दश तेषां दशसंख्यकानामत्तृणाम् । सा एषा विराट्—छन्दोरूपा दशाक्षरा—कृतम् अन्नरूपमपि कृतत्वेन अन्नादी अन्नादिनी । तया विराजा कृतसंख्याभूतया इदं सर्व्वं दृष्टम् —दशसु दिक्षु स्थितं जगत् न हि देवतादशकं हित्वा स्वतन्त्रमस्ति, सुतराम् अग्न्यादिषु कृतत्वेन अत्तृत्वं, विराट्त्वेन अन्नत्वं, विराज्यपि कृतत्वेन अत्तृत्वं संसाध्य देवतादशके कृतत्वविराट्त्वान्नत्वान्नादत्वभावेन दृष्टे सर्व्वं जगत् दृष्टं भवतीत्यर्थः । य एवं वेद तस्य अस्य इदं सर्व्वं दृष्टं भवति, अन्नादश्च भवति सः ।

२६ । यज्ञक्षतप्रतिविधानार्थमाह एष इति । यः अयं पवते वायुः एष—ह वै प्रसिद्धे—यज्ञः ;—वायुप्रतिष्ठितो हि यज्ञः प्रसिद्धः श्रुतिषु । एष ह यन् गच्छन् इदं सर्व्वं पुनाति । यत् यस्मात् एष यन् इदं सर्व्वं पुनाति, तस्मात् एष एव यज्ञः । तस्य एवम्भूतस्य यज्ञस्य वाक् च मनः च वर्त्तनी मार्गौ—ताभ्यां यज्ञः प्रवर्त्तते इति हेतोः ।

तयोः वर्त्तन्योः अन्यतरां मनोलक्षणां वर्त्तनीं ब्रह्मा ऋत्विक् मौनित्वात् मनसा मननेन ध्यानेन संस्करोति । अन्यतरां वाग्लक्षणां वर्त्तनीं

ऽध्वर्य्युरुद्गाताऽन्यतराᳬ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति।

अन्यतरामेव वर्त्तनीᳬ सᳬस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्नथो वैकेन चक्रेण वर्त्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञᳬ रिष्यन्तं यजमानोऽनु रिष्यति स इष्ट्वा पापीयान् भवति।

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्त्तनीᳬ सᳬस्कुर्व्वन्ति न हीयते-ऽन्यतरा।

स यथोभयपाद्व्रजन्नथोवोभाभ्यां चक्राभ्यां वर्त्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति स इष्ट्वा श्रेयान् भवति।

१—५।

अध्वर्य्युः उद्गाता वाचा मन्त्रोच्चारणेन संस्कुर्व्वन्ति। यत्र प्रातरनुवाके शस्त्रे उपाकृते प्रारब्धे स ब्रह्मा परिधानीयाय ऋचः पुरा पूर्व्वं व्यववदति मौनं परित्यजति—

अन्यतराम् एव वर्त्तनीं वाग्लक्षणां संस्करोति, सुतराम् अन्यतरा मनोवर्त्तनी हीयते छिद्रीभवति। यथा स एकपात् पुरुषः व्रजन् गच्छन्, रथः वा एकेन चक्रेण वर्त्तमानः गच्छन् रिष्यति क्षणोति एवम् अस्य यजमानस्य यज्ञः रिष्यति क्षतं प्राप्नोति। यज्ञं रिष्यन्तम् अनु यजमानः रिष्यति क्षणोति। स तं यज्ञम् इष्ट्वा पापीयान् भवति।

अथ यत्र प्रातरनुवाके उपाकृते परिधानीयायाः ऋचः पुरा ब्रह्मा न व्यववदति, उभे एव वर्त्तनीं वर्त्तन्यौ सर्व्वे ऋत्विजः संस्कुर्व्वन्ति, न अन्यतरा हीयते।

यथा स पुरुषः उभयपात् व्रजन् रथः वा उभाभ्यां चक्राभ्यां वर्त्त-

प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाꣳ रसान् प्राबृहदग्निं पृथिव्या, वायुमन्तरिक्षादादित्यं दिवः ।

स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाꣳ रसान् प्राबृहदग्नेर्ऋचो वायोर्यजूꣳषि सामादित्यात् ।

स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्राबृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ।

तद्यदृक्तो रिष्येत् भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्य्येणर्चां यज्ञस्य विरिष्टꣳ सन्दधाति ।

मानः प्रतितिष्ठति अविनश्यन् वर्त्तते, एवम् अस्य यज्ञः प्रतितिष्ठति । स यज्ञम् इष्ट्वा श्रेयान् भवति । १—५ ।

यज्ञरिष्टे व्याहृतिहोमः प्रायश्चित्तमतस्तदर्थं व्याहृतयो विधातव्या इत्याह—प्रजापतिः लोकान् अभ्यतपत्, तेषां तप्यमानानां लोकानां रसान् प्राबृहत् उद्धृतवान् । कान् रसान् । अग्निं रसं पृथिव्याः, वायुं रसम् अन्तरिक्षात्, आदित्यं रसं दिवः ।

स प्रजापतिः एताः तिस्रः देवताः अभ्यतपत्, तासां तप्यमानानां रसान् प्राबृहत् । कान् तान् ? अग्नेः ऋचः, वायोः यजूंषि, आदित्यात् साम ।

स प्रजापतिः एतां त्रयीं विद्याम् अभ्यतपत् । तस्याः तप्यमानायाः रसान् प्राबृहत् । कान् तान् । भूः इति ऋग्भ्यः, भुवः इति यजुर्भ्यः स्वर् इति सामभ्यः ।

तत् तत्र यज्ञे यदि ऋक्तः ऋङ्निमित्तं रिष्येत् क्षतं प्राप्नुयात् यज्ञः, भूः स्वाहा इति गार्हपत्ये अग्नौ जुहुयात् । तत् ततः ऋचाम्

अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् यजुषामेव तद्रसेन यजुषां वीर्य्येण यजुषां यज्ञस्य विरिष्टꣳ सन्दधाति।

अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्य्येण साम्नां यज्ञस्य विरिष्टꣳ सन्दधाति।

तद्यथा लवणेन सुवर्णꣳ सन्दध्यात् सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु चर्म्मणा।

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्य्येण यज्ञस्य विरिष्टꣳ सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति।

एव रसेन ऋचां वीर्य्येण ओजसा ऋचां यज्ञस्य ऋक्सम्बन्धिनो यज्ञस्य विरिष्टं क्षतं सन्दधाति प्रतिसन्धत्ते।

अथ यदि यजुष्टः रिष्येत्, भुवः स्वाहा इति दक्षिणाग्नौ जुहुयात्। तत् ततः यजुषाम् एव रसेन यजुषां वीर्य्येण यजुषां यज्ञस्य विरिष्टं सन्दधाति।

अथ यदि सामतो रिष्येत्, स्वः स्वाहा इति आहवनीये अग्नौ जुहुयात्, तत् ततः साम्नाम् एव रसेन साम्नां वीर्य्येण साम्नां यज्ञस्य विरिष्टं सन्दधाति।

तत् यथा लवणेन क्षारेण वह्नियोगात् द्रवीभूतं सुवर्णं सुवर्णेन सन्दध्यात्, रजतं रजतेन, त्रपु त्रपुणा, सीसं सीसेन, लोहं लोहेन, दारु चर्म्मणा सन्दध्यात्—

एवम् एषां लोकानाम्, आसां देवतानाम्, अस्याः त्रय्याः विद्यायाः

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदꣳ ह वा एषा ब्राह्मणमनु गाथा यतो यत आवर्त्तते तत्तद्गच्छति।

मानवो ब्रह्मैवैक ऋत्विक् कुरूनश्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्व्वाꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्व्वीत नानेवंविदं नानेवंविदम्। १—१०। छा, ४।६।१६।१७।

२७। स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चि-

वीर्य्येण ओजसा यज्ञस्य विरिष्टं सन्दधाति। यत्र यज्ञे एवंवित् ब्रह्मा ऋत्विक् भवति, तत्र यज्ञे एष वै यज्ञः भेषजकृतः भेषजेन औषधेन इव कृतः प्रतिकृतः संस्कृत इति यावत् भवति सुचिकित्सकेन इव ब्रह्मणा इति शेषः।

यत्र यज्ञे एवंविद् ब्रह्मा भवति, एष ह वै यज्ञः उदक्प्रवणः—"एतस्यां हि दिशि स्वर्गस्य लोकस्य द्वारम्" (श, प, ब्रा ६।६।२।४) —स्वर्गद्वारप्रवणः भवति। एवंविदं ब्रह्माणम् अनु यतः यतः कर्म्म प्रदेशात् एषा गाथा ब्रह्मणः स्तुतिपरा आवर्त्तते—तदनुरूपव्यापार ।। मूर्त्तिमती प्रकाशते, तत् तत् तत्र तत्र गच्छति प्राप्नोति परिपालयतीति यावत्—

मानवः—मौनाचरणात् मननात् ज्ञानवत्त्वात् वा—ब्रह्मा एव एकः ऋत्विक् कुरून् कर्तॄन् ऋत्विजः तैः साधितानां दोषाणाम् अपहाराय। अश्वा वड़वा योधान् आरूढ़ान् यथा अभिरक्षति, तथा एवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्व्वान् च ऋत्विजः अभिरक्षति; तस्मात् एवंविदम् एव ब्रह्माणं कुर्व्वीत, न अनेवंविदं न अनेवंविदम्। द्विरभ्यासोऽध्यायसमाप्त्यर्थः।

२७। वागादीनां संवादेन (८।७) प्राणस्य श्रेष्ठत्वं प्रतिपाद्य

दिदमाश्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति।

स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति।

तद्धैतत् सत्यकामो जावालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति।

तस्योपासनमाह सहेति। स ह मुख्यः प्राणः उवाच,—किं मे अन्नं भविष्यति इति। आश्वभ्यः आशकुनिभ्यः यत् किञ्चित् इदं—सर्व्वैः अद्यमानं सर्व्वं—तत् तव अन्नम् इति ह ऊचुः वागादयः। तत् वै एतत् सर्व्वम् अनस्य प्राणस्य अन्नम्। अनः इति—सर्व्वप्रकारचेष्टाव्याप्तिगुणदर्शनात्—प्राणस्य प्रत्यक्षं नाम। एवंविदि प्राणस्य सर्व्वात्मत्वज्ञानवति किञ्चन न ह वै अनन्नं भवति इति।

स च मुख्यप्राण उवाच—किं मे वासः भविष्यति इति। आपः इति ह ऊचुः वागादयः। तस्मात् अब्वासत्वात् एतत् अन्नम् अशिष्यन्तः भोक्ष्यमाणाः भुक्तवन्तः च पुरस्तात् भोजनात् पूर्व्वम् उपरिष्टात् भोजनात् ऊर्द्धं च अद्भिः वासस्थानीयाभिः परिदधति परिच्छिन्नं कुर्व्वन्ति। एतेन किं भवति ? वासः—कर्म्म (पा, २।२।६८)—लम्भुकः लम्भनशीलः भवति प्राणः ; एवं वासोलम्भनात् अनग्नः पुनः भवति—"भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं शुद्ध्यर्थं विज्ञातं तस्मिन् प्राणस्य वास इति दर्शनमात्रमिह विधीयते।"

तत् ह एतत् प्राणदर्शनं सत्यकामः जावालः वैयाघ्रपद्याय व्याघ्रपदस्यापत्याय गोश्रुतये उक्त्वा उवाच—यद्यपि एनत् एतत् प्राणदर्शनं

अथ यदि महज्जिगमिषेदमावस्यायां दीक्षित्वा पौर्णमास्याᳩ रात्रौ सर्व्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्याग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ।

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमोनामास्यमा हि ते सर्व्वमिदᳩ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स

शुष्काय स्थाणवे ब्रूयात् प्राणवित् जायेरन् उत्पद्येरन् एव, अस्मिन् स्थाणौ शाखाः प्ररोहेयुः पलाशानि पत्राणि च इति ।

अथ अनन्तरं यदि महत् महत्त्वं जिगमिषेत् गन्तुं प्राप्तुम् इच्छेत्, तदा अमावास्यायां दीक्षित्वा—दीक्षित इव भूमिशयनादिनियमं कृत्वा—पौर्णमास्यां रात्रौ सर्व्वौषधस्य ग्रामारण्यजातस्य मन्थं पि[illegible] दधिमधुनोः उपमथ्य पिष्ट्वा—ज्येष्ठाय श्रेष्ठाय स्वाहा इति अग्नौ आज्यस्य आवापस्थाने हुत्वा मन्थे पिष्टे सम्पातं स्रुवसंलग्नाज्यसंस्रवम् अवनयेत् अधःपातयेत् ।

वसिष्ठाय स्वाहा इति अग्नौ आज्यस्य हुत्वा मन्थे सम्पातम् अवनयेत्; प्रतिष्ठायै स्वाहा इति अग्नौ आज्यस्य हुत्वा मन्थे सम्पातम् अवनयेत्; सम्पदे स्वाहा इति अग्नौ आज्यस्य हुत्वा मन्थे सम्पातम् अवनयेत्; आयतनाय स्वाहा इति अग्नौ आज्यस्य हुत्वा मन्थे सम्पातम् अवनयेत् ।

अथ हवनानन्तरं प्रतिसृप्य अग्नेः ईषदपसृत्य अञ्जलौ मन्थं पिष्टम् आधाय जपति—"अमोनामाऽस्यमा हि ते सर्व्वमिदम्" इत्यादि ।

मा ज्यैष्ठ्यꣳ श्रेष्ठम् राज्यमाधिपत्यं समयत्वहमेवेदꣳ सर्व्व-मसानीति।

अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति। वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्व्वधातममित्याचामति तुरं भगस्य धीमहीति सर्व्वं पिबति।

अमः इति प्राणस्य नाम। हे मन्थ, त्वम् अमोनामा प्राणनामा असि। कथम्? हि यस्मात् ते तव अमा क्रियया सह एकत्र सम्बद्धं सर्व्वम् इदं जगत्। स हि प्राणभूतः मन्थः ज्येष्ठः श्रेष्ठः राजा अधिपतिः। स मा मां ज्यैष्ठ्यं श्रैष्ठ्यं राज्यम् आधिपत्यं समयतु प्रापयतु, अहम् एव इदं सर्व्वम् असानि भवानि तादात्म्येन।

अथ अनन्तरम् एतया ऋचा पच्छः पादशः—मन्त्रस्यैकैकेन पादेन एकैकग्रासम् आचामति भक्षयति। "तत् सवितुर्वृणीमहे"—इति आचामति—सवितुः सर्व्वकर्म्मणामभ्यनुज्ञातुः कल्याणप्रसवितुः—यो यदाऽपहततमस्का भवति तत्काले विकीर्णरश्मिरादित्यः सवितेति वैदिकाः—तत् भोजनं—धनमिति निरुक्तम्—मन्थरूपभोजनं वृणीमहे प्रार्थयेमहि इति मन्थम् आचामति भक्षयति; "वयं देवस्य भोजनम्" इति आचामति मन्थं भक्षयति—देवस्य द्योतनशीलस्य वयम् इति पूर्व्वेणान्वयः। "श्रेष्ठं सर्व्वधातमम्" इति आचामति भक्षयति—श्रेष्ठं प्रशस्यतमं सर्व्वधातमं सर्व्वस्य धारयितृतमम् इति परेणान्वयः। "तुरं भगस्य धीमहि" (५म, ८२सू, १ऋक्) इति सर्व्वं पिबति—भगस्य प्रातःकालीनतमोजेतुः आदित्यस्य तुरम्—"यमः तूर्णगतिः"—इति निरुक्तम्—तदधिष्ठितरिपुसंहरणसामर्थ्यं वयं धीमहि चिन्तयेमहि आत्मशुद्ध्यर्थमिति यावत्। एवं मन्थं पिबतो भवति पापहरणमित्यभिप्रायेण निरवशेषं मन्थं पिबति।

निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्म्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्म्मेति विद्यात्। तदेष श्लोकः,

यदा कर्म्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने तस्मिन्
स्वप्ननिदर्शने॥

छा, ५।७।२।१—८।

२८। प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसाञ्चक्रुः कोन आत्मा किं ब्रह्मेति।

कंसं पानपात्रं चमसं वा निर्णिज्य प्रक्षाल्य अग्नेः पश्चात् पश्चाद्भागे चर्म्मणि वा स्थण्डिले केवलायां भूमौ वा वाचंयमः वाग्यतः अप्रसाहः संयतचित्तः सन् संविशति स्वापं भजति। स यदि स्वप्ने स्त्रियं पश्येत् कर्म्म समृद्धम् इति जानीयात्।

तत् तस्मिन् अर्थे एष श्लोकः—यदा काम्येषु सकामेषु कर्म्मसु स्वप्ने स्त्रियं पश्यति, तस्मिन् स्वप्ननिदर्शने तत्र कर्म्मणि समृद्धिं सफलतां जानीयात्। द्विरुक्तिः कर्म्मसमाप्त्यर्था।

२८। वैश्वानरविद्यारभ्यते प्राचीनशाल इति। औपमन्यवः उपमन्योरपत्यं प्राचीनशालः, पौलुषिः पुलुषस्यापत्यं सत्ययज्ञः, भाल्लवेयः भल्लवेरपत्यम् इन्द्रद्युम्नः, शार्कराक्ष्यः शर्कराक्षस्यापत्यम् जनः, आश्वतराश्विः अश्वतराश्वस्यापत्यं बुडिलः, ते ह एते महाशालाः महागृहस्थाः, महाश्रोत्रियाः श्रुताध्ययनवृत्तसम्पन्नाः समेत्य सम्भूय मीमांसां विचारणां चक्रुः कृतवन्तः—को नः अस्माकम् आत्मा, किं ब्रह्म इति।

ते ह सम्पादयाञ्चक्रुरुद्दालकोवै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः।

स ह सम्पादयाञ्चकार प्रच्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्व्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति।

तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति, तꣳ हाभ्याजग्मुः।

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्य्यो

हे भगवन्तः, आरुणिः अरुणस्यापत्यम् उद्दालकः वै इमम् आत्मानं वैश्वानरम् अध्येति स्मरति जानाति। हन्त—वाक्यारम्भे—तम् अभ्यागच्छाम इति ते पुनः सम्पादयाञ्चक्रुः ऐकमत्येन निश्चितवन्तः। एवं निश्चित्य ते पुनः अभ्याजग्मुः।

स आरुणिः पुनः तान् दृष्ट्वैव सम्पादयाञ्चकार मन्त्रितवान्—इमे महाशालाः महाश्रोत्रियाः संप्रच्यन्ति, तेभ्यः आत्मानं सर्व्वं प्रश्नोत्तरसमग्रविषयज्ञम् इव न प्रतिपत्स्ये न स्वीकरिष्यामि। हन्त, अहम् अन्यम् उपदेष्टारम् अनुशासानि वक्ष्यामि इति।

तान् समागतान् पुनः स उवाच—हे भगवन्तः, कैकेयः केकयस्य अपत्यम् अश्वपतिः वै सम्प्रति इमम् आत्मानं वैश्वानरम् अध्येति। हन्त, तम् अभ्यागच्छाम इति। इत्युक्त्वा तम् अश्वपतिं ते अभ्याजग्मुः।

तेभ्यः पुनः प्राप्तेभ्यः आगतेभ्यः स अश्वपतिः पृथक् पृथक् अर्हाणि अर्हणानि कारयाञ्चकार भृत्यैः पुरोहितैश्च। स पुनः प्रातः सञ्जिहानः

न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ।

ते होचुर्येन हैवार्थेन पुरुषश्चरेत् तं हैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ।

तान् होवाच प्रातर्वो प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्व्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच । १—७ ।

शय्यां परित्यजन् उवाच परिग्रहादोषसंसूचनाय—मे मम जनपदे न स्तेनः परस्वापहर्त्ता, न कदर्य्यः अदाता, न मद्यपः, न अनाहिताग्निः, न अविद्वान्, न स्वैरी परदारेषु गन्ता कुतः स्वैरिणी दुष्टाचारिणी स्यात् । हे भगवन्तः, अहं वै यक्ष्यमाणः यज्ञं चिकीर्षुः अस्मि एकैकस्मै ऋत्विजे यावत् धनं दास्यामि भगवद्भ्यः तावत् धनं दास्यामि । भगवन्तः वसन्तु इति ।

ते पुनः ऊचुः—येन एव अर्थेन प्रयोजनेन पुरुषः चरेत् गच्छेत्, तं पुनः एव अर्थं वदेत् । न वयं धनार्थिनः किन्तर्हि वैश्वानरज्ञानार्थिनः, सुतराम्—आत्मानम् एव इमं वैश्वानरं सम्प्रति अध्येषि सम्यक् जानासि, तम् एव नः अस्मभ्यं ब्रूहि ।

तान् पुनः अश्वपतिः उवाच—प्रातः वः युष्मभ्यं प्रतिवक्तास्मि प्रतिवाक्यं दातास्मि । ते पुनः समित्पाणयः अपरेद्युः पूर्व्वाह्णे प्रतिचक्रमिरे गतवन्तः । तान् पुनः असम्यग्भावेन वैश्वानरोपासनशीलत्वात् अनुपनीय एव उपनयनमकृत्वैव एतत् वैश्वानरविज्ञानम् उवाच ।

१—७ ।

औपमन्यव, कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते।

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष आत्मन इति होवाच मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति। १—२।

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते।

हे औपमन्यव, कम् आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, दिवं द्युलोकम् एव आत्मानं पुनः इति औपमन्यव उवाच। एष वै अयं सुतेजाः शोभनतेजाः इति प्रसिद्धः वैश्वानरः आत्मा, तम् आत्मानं त्वम् उपास्से। तस्मात् तव कुले सुतम् अभिषुतं सोमरूपं लताद्रव्यं प्रसुतं प्रकर्षेण सुतम्, आसुतञ्च यज्ञीयदिनगणेषु दृश्यते।

अतएव त्वम् अन्नम् अत्सि प्रियं पश्यसि। अन्योऽपि य एतम् आत्मानं वैश्वानरम् एवम् उपास्ते, स अन्नम् अत्ति प्रियं पश्यति, अस्य कुले ब्रह्मवर्चसं भवति। एष तु वैश्वानरस्य आत्मनः मूर्द्धा इति पुनः अश्वपतिरुवाच—यत् यदि माम् न आगमिष्यः, मूर्द्धा ते व्यपतिष्यत् इति। असमग्रे समग्रबुद्ध्योपासनादिति भावः। १।२।

अथ स पुनः सत्ययज्ञं पौलुषिम् उवाच—हे प्राचीनयोग्य, कम्

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्योयन्मां नागमिष्य इति। १—२।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति।

आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, आदित्यम् एव इति स पुनः उवाच। एष वै अयं विश्वरूपः विविधरूपः आत्मा वैश्वानरः तम् आत्मानं त्वम् उपास्से। तस्मात् तव कुले बहु विविधं विश्वरूपम् इहामुत्रार्थमुपकरणं दृश्यते।

त्वामनु प्रवृत्तः अश्वतरीरथः दासीनिष्कः दासीभिर्युक्तः हारः अत्सि अन्नम् पश्यसि प्रियम्। अन्योऽपि यः एतम् आत्मानं वैश्वानरम् एवम् उपास्ते, स अन्नम् अत्ति प्रियं पश्यति, अस्य कुले ब्रह्मवर्चसं भवति। एतत् तु आत्मनः चक्षुः इति पुनः उवाच अश्वपतिः, यत् यदि मां न आगमिष्यः अन्धः अभविष्यः इति—असमग्रे समग्रबुद्ध्योपासनादिति भावः। १।२।

अथ इन्द्रद्युम्नं भाल्लवेयं स उवाच—हे वैयाघ्रपद्य, कम् आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, वायुम् एव इति स उवाच। एष वै अयं पृथग्वर्त्मा पृथक् नाना वर्त्मानि यस्य वायोः स इव पृथग्वर्त्मा विविधमार्गसञ्चरणशीलः आत्मा वैश्वानरः, तम् आत्मानं त्वम् उपास्से। तस्मात् त्वां पृथग्बलयः नानाविधवस्त्रान्नादयः आयन्ति आगच्छन्ति, पृथग्रथश्रेणयः अपि त्वाम् अनुयन्ति।

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति। १।२।

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च।

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्य्यद्यन्मां नागमिष्य इति। १—२।

अतएव अन्नम् अत्सि प्रियं पश्यसि त्वम्। अन्योऽपि य एतम् आत्मानं वैश्वानरम् एवम् उपास्ते, स अन्नम् अत्ति प्रियं पश्यति— अस्य कुले ब्रह्मवर्च्चसं भवति। एष तु आत्मनः प्राणः इति पुनः अश्वपतिः उवाच—यत् यदि मां न आगमिष्यः ते तव प्राणः उदक्रमिष्यत् इति। असमग्रे समग्रबुद्ध्योपासनादिति भावः। १।२।

अथ जनं पुनः स उवाच—हे शार्कराक्ष्य, कम् आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, आकाशम् एव इति पुनः स उवाच। एष वै अयं बहुलः सर्व्वगतत्वात् आत्मा वैश्वानरः। तम् आत्मानं त्वम् उपास्से, तस्मात् त्वं प्रजया च धनेन च बहुलः असि।

अतएव त्वम् अन्नम् अत्सि, प्रियं पश्यसि। अन्योऽपि यः एतम् आत्मानं वैश्वानरम् एवम् उपास्ते स अन्नम् अत्ति प्रियं पश्यति अस्य

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्त्वं रयिमान् पुष्टिमानसि।

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवाच वस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति। १।२।

कुले ब्रह्मवर्चसं भवति। एष तु आत्मनः सन्देहः मध्यमशरीरम् इति पुनः स उवाच; ते तव सन्देहः—उपचयसामान्यत्वात् दिहतेर्देहस्य सन्देहस्य चोत्पत्तेरुपसर्गस्य सार्थकत्वे सन्देहस्य संशयार्थत्वात् अत्र पुनर्निरर्थकत्वेन—शरीरं अशीर्य्यत् शीर्णः अभविष्यत्, यत् यदि मां न आगमिष्यः इति। असमग्रे समग्रबुद्ध्योपासनादिति भावः। १।२।

अथ पुनः बुडिलम् आश्वतराश्विं स उवाच—हे वैयाघ्रपद्य, कम् आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, अपः एव इति स पुनः उवाच। एष वै अयं रयिः धनस्वरूपः आत्मा वैश्वानरः तम् आत्मानं त्वम् उपास्से। तस्मात् त्वं रयिमान् धनवान् पुष्टिमान् असि।

अतएव त्वम् अन्नम् अत्सि प्रियं पश्यसि। अन्योऽपि यः एतम् आत्मानं वैश्वानरम् एवम् उपास्ते स अन्नम् अत्ति प्रियं पश्यति, अस्य कुले ब्रह्मवर्चसं भवति। एष तु आत्मनः वस्तिः इति पुनरुवाच अश्वपतिः, यत् यदि मां न आगमिष्यः, ते तव वस्तिः व्यभेत्स्यत् भिन्नोऽभविष्यत् इति। असमग्रे समग्रबुद्ध्योपासनादिति भावः। १।२।

अथ होवाचौद्दालकमारुणिं गौतम कं त्वमात्मान-मुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च।

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति। १।२।

तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमान-मात्मानं वैश्वानरमुपास्ते स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मस्वन्नमत्ति।

अथ पुनः स उवाच उद्दालकम् आरुणिम्—हे गौतम, कम् आत्मानं त्वम् उपास्से इति। हे भगवः भगवन् राजन्, पृथिवीम् एव स पुनः उवाच। एष वै अयं प्रतिष्ठा वैश्वानरपादरूपः आत्मा वैश्वानरः। तम् आत्मानं त्वम् उपास्से। तस्मात् त्वं प्रजया च पशुभिः च प्रतिष्ठितः असि।

अतएव त्वम् अन्नम् अत्सि प्रियं पश्यसि। अन्योऽपि यः एतम् आत्मानं वैश्वानरम् एवम् उपास्ते स अन्नम् अत्ति प्रियं पश्यति, अस्य कुले ब्रह्मवर्च्चसं भवति। एतौ तु आत्मनः पादौ इति उवाच अश्वपतिः। यत् यदि मां न आगमिष्यः ते तव पादौ व्यम्लास्येतां विम्लानौ शिथिलीभूतौ अभविष्येताम् इति। असमग्रे समग्रबुद्ध्योपा-सनादिति भावः।

तान् पुनः स उवाच—एते यूयं वै खलु इमम् आत्मानं वैश्वानरम्

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा-श्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्ति-रेव रयिः पृथिव्येव पादौ उरएव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः । १।२ ।

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमा-माहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राण-स्तृप्यति ।

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्य-त्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसेनेति । १।२ ।

एकमपि पृथगिव विद्वांसः जानन्तः अन्नम् अत्थ । यः तु पुनः एवम् वैश्वानरं प्रादेशमात्रम्—प्रादेशैः द्युमूर्द्धादिभिः पादास्तैः मीयते ज्ञायते इति प्रादेशमात्रः तद्रूपम्—अभिविमानं—अहम् अहमिति आभिमुख्येन विमीयते ज्ञायते इति अभिविमानः तम्—आत्मानं वैश्वानरम् उपास्ते, स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेषु आत्मसु अन्नम् अत्ति ।

तस्य ह वा एतस्यात्मन इति पूर्व्वं व्याख्यातम् ( २।१२ ) । १।२ ।

यत् यस्मात् उरःस्थलमेव स्थण्डिलं लोमान्येवास्तीर्णकुशा हृदयमनो-मुखान्येव गार्हपत्यान्वाहार्य्यपचनाहवनीयाग्नयः, तत् तस्मात् यत् भक्तम् अन्नं भोजनकाले प्रथमम् आगच्छेत् तत् होमीयं होतव्यम् । स भोक्ता यां प्रथमाम् आहुतिम् अवदानप्रमाणमन्नम् स्वमुखे जुहुयात्, तां "प्राणाय स्वाहा" इति जुहुयात् । तया प्राणः तृप्यति ।

प्राणे तृप्यति सति चक्षुः तृप्यति, चक्षुषि तृप्यति सति आदित्यः

अथ यां द्वितीयां जुहुयात् तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति।

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति। १।२।

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति।

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृ-

तृप्यति, आदित्ये तृप्यति सति द्यौः तृप्यति, दिवि तृप्यन्त्यां सत्यां द्यौः च आदित्यः च यत्किञ्च अधितिष्ठतः तत् तृप्यति, तस्य तृप्तिम् अनु भोक्ता प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति इति।१।२।

अथ यां द्वितीयाम् आहुतिं जुहुयात् तां "व्यानाय स्वाहा" इति जुहुयात्। तया व्यानः तृप्यति।

व्याने तृप्यति सति श्रोत्रं तृप्यति, श्रोत्रे तृप्यति सति चन्द्रमाः तृप्यति, चन्द्रमसि तृप्यति सति दिशः तृप्यन्ति, दिक्षुः तृप्यन्तीषु सतीषु दिशः च चन्द्रमाः च यत्किञ्च अधितिष्ठन्ति तत् तृप्यति, तस्य तृप्तिम् अनु भोक्ता प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति इति। १।२।

अथ यां तृतीयाम् आहुतिं जुहुयात् ताम् "अपानाय स्वाहा" इति जुहुयात्। तया अपानः तृप्यति।

अपाने तृप्यति सति वाक् तृप्यति, वाचि तृप्यन्त्यां सत्यां अग्निः तृप्यति, अग्नौ तृप्यति सति पृथिवी तृप्यति, पृथिव्यां तृप्यन्त्यां सत्यां

धायत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत् किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत् तृप्यति तस्यानु-तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसे-नेति। १।२।

अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति।

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्ज्जन्य-स्तृप्यति पर्ज्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत् किञ्च विद्युच्च पर्ज्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्या-नुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसे-नेति। १।२।

अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहे-त्युदानस्तृप्यति।

पृथिवी च अग्निः च यत्किञ्च अधितिष्ठतः तत् तृप्यति तस्य तृप्तिम् अनु भोक्ता प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्च्चसेन तृप्यति इति। १।२।

अथ यां चतुर्थीम् आहुतिं जुहुयात् तां "समानाय स्वाहा" इति जुहुयात्। तया समानः तृप्यति।

समाने तृप्यति सति मनः तृप्यति, मनसि तृप्यति सति पर्ज्जन्यः तृप्यति, पर्ज्जन्ये तृप्यति सति विद्युत् तृप्यति, विद्युति तृप्यन्त्यां सत्यां विद्युत् च पर्ज्जन्यः च यत्किञ्च अधितिष्ठतः तत् तृप्यति, तस्य तृप्तिम् अनु भोक्ता प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्च्चसेन तृप्यति। १।२।

अथ यां पञ्चमीम् आहुतिं जुहुयात् ताम् "उदानाय स्वाहा" इति जुहुयात्। तया उदानः तृप्यति।

उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत् किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत् तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसेनेति। १।२।

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत् स्यात्।

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मसु हुतं भवति।

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्व्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति।

उदाने तृप्यति सति वायुः तृप्यति, वायौ तृप्यति सति आकाशः तृप्यति, आकाशे तृप्यति सति वायुः च आकाशः च यत्किञ्च अधितिष्ठतः तत् तृप्यति, तस्य तृप्तिम् अनु भोक्ता प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्च्चसेन तृप्यति इति।

स यः इदं वैश्वानरदर्शनम् अविद्वान् सन् अग्निहोत्रं जुहोति अङ्गारान् आहुतियोग्यान् अपोह्य परिहाय भस्मनि यथा जुहुयात् तादृक् तत्तुल्यं तस्य तत् अग्निहोत्रं स्यात्। प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते।

श्रेष्ठत्वमस्य फलेन प्रतिपादयति—अथ यः एतत् वैश्वानराग्निहोत्रम् एवं विद्वान् अग्निहोत्रं साम्पादिकं जुहोति तस्य सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेषु आत्मसु हुतं भवति।

न केवलमिदमेव फलं किन्तर्हि—तद्यथा इषिकातूलम् अग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत, एवं पुनः अस्य सर्व्वे पाप्मानः प्रदूयन्ते दह्यन्ते, य एतत् एवं विद्वान् अग्निहोत्रं जुहोति।

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतᳪ स्यादिति तदेषश्लोकः।

यथेह क्षुधिता बाला मातरं पर्य्युपासते।

एवᳪ सर्व्वाणि भूतान्यग्निहोत्रमुपासते इत्यग्निहोत्रमुपासत इति। १—५। छा, ५।७।११—२४।

२९। उषा वा अश्वस्य मेध्यस्य शिरः। सूर्य्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सरआत्मा अश्वस्य मेध्यस्य। द्यौः पृष्ठमन्तरीक्षमुदरं पृथिवी पाजस्यम्। दिशः पार्श्वे अवान्तरदिशः पर्शवः ऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्व्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि

तस्मात् पुनः एवंवित् यद्यपि चण्डालाय उच्छिष्टान्नदाय उच्छिष्टं प्रयच्छेत् दद्यात् अस्य पुनरेव आत्मनि वैश्वानरे तत् उच्छिष्टं हुतं स्यात् इति। तत् तस्मिन्नर्थे एष श्लोकः।

यथा इहलोके क्षुधिताः बुभुक्षिताः बालाः मातरं पर्य्युपासते—कदा नो मातान्नं प्रदास्यतीति, एवं हि सर्व्वाणि भूतानि अन्यादीनि अग्निहोत्रं वैश्वानरविदः भोजनम् उपासते—कदा त्वसौ भोक्ष्यते इति। जगत् सर्व्वं विद्वद्भोजने तृप्तं भवतीत्यर्थः। द्विरुक्तिरध्यायसमाप्त्यर्था। १—४।

२९। अश्वमेधविज्ञानेऽश्वस्य प्राधान्यात् तद्विषयकमेव दर्शनमुच्यते। मेध्यस्य यज्ञीयस्य अश्वस्य उषा वै शिरः, सूर्य्यः चक्षुः, वातः प्राणः, व्यात्तं विवृतं मुखं वैश्वानरः अग्निः, संवत्सरः आत्मा। अश्वस्य मेध्यस्येति पुनर्व्वचनं सर्व्वत्रानुषङ्गार्थम्। द्यौः पृष्ठम्, अन्तरिक्षम् उदरं, पृथिवी पाजस्यं—पादासनस्थानमित्यर्थः—दिशः पार्श्वे, अवान्तरदिशः आग्नेयाद्याः पर्शवः पार्श्वास्थीनि, ऋतवः अङ्गानि, मासाः च अर्द्धमासाः च पर्व्वाणि सन्धयः, अहोरात्राणि प्रतिष्ठाः पादाः, नक्षत्राणि अस्थीनि,

नभो मांसानि। जवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्व्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन्नु पूर्व्वार्द्धो निम्लोचन् जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनते तत् स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक्।

अहर्वा अश्वं पुरस्तान्महिमान्वजायत तस्य पूर्व्वे समुद्रे योनी-रात्रिरेनम्पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुः। हयो भूत्वा देवानवहत् वाजी गन्धर्व्वानर्व्वासुरानश्वो मनुष्यान् समुद्रएवास्य बन्धुः समुद्रो योनिः।

बृह, ३।१।१।२।

नभः मांसानि। सिकताः जवध्यम् उदरस्थमर्द्धजीर्णमशनम्, सिन्धवः नद्यः गुदाः—गुद क्रीड़ायां कुञ्चनाकुञ्चनाभ्यां क्रीड़नस्वाभाव्यात्—नाड्यः, पर्व्वताः यकृत् च कालजं कुक्षेर्दक्षिणपार्श्वस्थम्, क्लमानः च—बहुवचनं दक्षिणादिविभागापेक्षं—क्लम पुप्फुसः च, ओषधयश्च वनस्पतयः च लोमानि, उद्यन् आदित्यः आमध्याह्नात् पूर्व्वार्द्धः अश्वस्य नाभेः ऊर्द्धम्, मध्याह्नात् निम्लोचन् अस्तंयन् आदित्यः जघनार्द्धः नाभेः अधः, यत् विजृम्भते गात्राणि विनामयति विक्षिपति तत् विद्योतते—जृम्भणं विद्योतनमिति यावत्। यत् विधूनते गात्राणि कम्पयति तत् स्तनयति—गात्रधूननं गर्ज्जनमिति यावत्। यत् मेहति मूत्रं करोति तत् वर्षति—मूत्रकरणं वर्षणमिति यावत्। वाक् एव अस्य अश्वस्य वाक् हेषितम्।

अश्वं पुरस्तात् महिमा—हवनीयद्रव्याधारः सौवर्णः—वै अहः दिनम् अन्वजायत अभवत्, तस्य आधारस्य योनिः स्थितिस्थानं पूर्व्वे समुद्रे—विभक्तिव्यत्ययेन—पूर्व्वः समुद्रः, एनम् अश्वं पश्चात् महिमा

३०। तदेतत् प्रेयः पुत्रात् प्रेयोवित्तात् प्रेयोऽन्यस्मात् सर्व्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियंब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति। बृ, ३।४।८।

—हवनीयद्रव्याधारः राजतः—रात्रिः अन्वजायत अभवत्, तस्य आधारस्य योनिः स्थितिस्थानं अपरे समुद्रे—विभक्तिव्यत्ययेन—अपरः पश्चिमः समुद्रः। एतौ सौवर्णरजतहवनीयद्रव्याधारौ [illegible]म् उभयतः—संज्ञपनात् पूर्व्वं पश्चाच्च स्थापितौ—महिमानौ संबभू[illegible] अश्वस्य महत्त्वज्ञापकत्वात्। अश्वो हि हयः भूत्वा देवान् अव[illegible] वाजी भूत्वा गन्धर्व्वान् अवहत्, अर्व्वा भूत्वा असुरान् अवहत्। [illegible] एव अस्य बन्धुः बन्धनशङ्कुः, समुद्रः एव अस्य योनिः कारणम् [illegible]पत्तिं प्रति। समुद्रः परमात्मेति भाष्यकारः, समुत्पद्य भूतानि [illegible] यस्मिन्निति व्युत्पत्त्येति टीकाकृत्।

३०। प्रियत्वं परमात्मनोऽन्तरतमत्वादतस्तस्योपासनयैव कृतार्थतेत्याह तदेतदिति। तत् एतत् आत्मतत्त्वं पुत्रात् प्रेयः प्रियतरं, वित्तात् प्रेयः प्रियतरम्, अन्यस्मात् सर्व्वस्मात् प्रेयः प्रियतरम्। कथम्? यत् यस्मात् अयम् आत्मा आत्मतत्त्वम् अन्तरतरं सन्निकृष्टम् प्राणादिभ्यः सर्व्वेभ्यः—सन्निकृष्टत्वं हि प्रियत्वे हेतुः। स यः कश्चित् साधकः अन्यं पुत्रादिकं प्रियं ब्रुवाणं जनं ब्रूयात् कथयेत् प्रियं ते रोत्स्यति प्राणसंरोधं विनाशं यास्यति इति ईश्वरः वक्तुं समर्थः। कथम्? तदेव स्यात् प्राणसंरोधम् एव यायात्। एवं सति किं कर्त्तव्यम्? आत्मानं परमात्मानम् एव प्रियम् उपासीत। स यः कश्चित् साधकः आत्मानं परमात्मानम् एव प्रियम् उपास्ते, न पुनः अस्य साधकस्य प्रियं प्रमायुकं मरणशीलं भवति।

३१। यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता। एकमस्य साधारणं द्वे देवानभाजयत्। त्रीख्यात्मनेऽकुरुत पशुभ्यएकं प्रायच्छत्। तस्मिन् सर्व्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। कस्मात् तानि न चीयन्तेऽद्यमानानि सर्व्वदा। यो वै तामच्चितिं* वेद सोऽन्नमत्ति प्रतीकेन। स देवानपि गच्छति स ऊर्ज्जमुपजीवतीति श्लोकाः।

यत् सप्तान्नानि मेधया तपसाऽजनयत् पितेति। मेधया हि तपसा ऽजनयत् पितैकमस्य साधारणमितीदमेवास्य तत् साधारणमन्नं यदिदमद्यते। स य एतदु-

३१। कार्य्यकारणात्मकमिदं सर्व्वं जगत् भोक्तृभोग्यरूपमुपास्तिविषयत्वेनोपस्थाप्यते यदिति। पिता प्रजापतिः मेधया प्रज्ञया विज्ञानेन तपसा कर्म्मणा क्रियाशक्त्या च सप्त अन्नानि यत् अजनयत्, तत् प्रकाशयिष्याम इति वाक्यशेषः। अस्य सप्तधा विभक्तस्य अन्नस्य एकं साधारणं सर्व्वप्राणिसाधारणम्, द्वे अन्ने देवान् स अभाजयत्, त्रीणि मनोवाक्प्राणरूपाणि (७।११) अन्नानि आत्मने अकुरुत, एकम् अन्नं पशुभ्यः प्रायच्छत्। यत् च प्राणिति यत् च न प्राणिति सर्व्वं तत् तस्मिन् पश्वन्ने प्रतिष्ठितम्। कस्मात् तानि अन्नानि सर्व्वदा अद्यमानानि न चीयन्ते? यो वै ताम् अच्चितिम् अक्षयकारणं वेद स प्रतीकेन मुखेन अन्नम् अत्ति, स ऊर्ज्जम् अमृतं उपजीवति, स देवान् अपि गच्छति—कायमनोवाक्चेष्टया प्रज्ञानेन च भोक्तृतया नित्यकालस्थितेरन्नानामप्यक्षयत्वमिति प्रश्नस्योत्तरम्। इति श्लोकाः।

एषां श्लोकानां व्याख्यानं स्वयं ब्राह्मणं विदधाति पादशो गृहीत्वा यदिति।

* "यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता" इति।

पास्ते न स पाप्मनो व्यावर्त्तते मिश्रᳪ ह्येतत्। देवानभाजयदिति हुतञ्च प्रहुतञ्च तद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपौर्णमासाविति। तस्मान्नेष्टियाजुकः स्यात् पशुभ्य एकं प्रायच्छदिति तत् पयः। पयोह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात् कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं जात-

'मेधया हि तपसा'—हि प्रसिद्धे—"जाया मे स्यात्" (८।१६) इत्यादिना प्रसिद्धोऽर्थोऽत्र प्रकाशित इति भाष्यकारः।

"एकमस्य साधारणम्"

यत् इदम् अद्यते प्राणिभिः तत् इदम् अस्य सप्तधा विभक्तस्य अन्नस्य साधारणम् अन्नम्। स यः एतत् साधारणम् अन्नम् उपास्ते भजते आत्मार्थम्, न स पाप्मनः पापात् व्यावर्त्तते। कथम्? हि यस्मात् एतत् साधारणम् अन्नं मिश्रम्—सर्व्वेषां स्वम्; अतएवान्येभ्योऽविभज्य स्वयं भोजने श्रुतिस्मृतिषु निन्दा श्रूयते।

"द्वे देवानभाजयत्" इति।

के द्वे हुतं च प्रहुतं च—हुतम् अग्नौ हवनम्, प्रहुतं हुत्वा बलिकरणं भूतयज्ञार्थम्। तत् अन्नं देवेभ्यः जुह्वति, प्रजुह्वति ततो बलिं हरन्ति च। अथ अपरे आहुः—द्वे अन्ने दर्शपौर्णमासौ इति। दर्शपौर्णमासयोरन्नत्वेऽपि साधारणेनैवैकाले न मनुष्याश्च पशवश्च यस्मात् जीवन्ति—तस्मात् न इष्टियाजुकः स्यात् केवलं कामनयैव यजनशीलो न स्यात्—साक्षात्सम्बन्धेन हवनं प्रहरणञ्च कर्त्तव्यमिति भावः, अन्यथा यज्ञशिष्टाशित्वं न सम्भवेत्।

"पशुभ्य एकं प्रायच्छत्" इति।

किं तत्? तत् पयः। कथं पय एवान्नं तत्कारणमाह—मनुष्याः च पशवः च अग्रे पयः हि एव उपजीवन्ति। तस्मात् जातं कुमारं मनुष्यतनयम् अग्रे घृतं प्रतिलेहयन्ति, स्तनं वा अनुधापयन्ति। अथ

मानुरत्रवाद इति तस्मिन् सर्व्वं प्रतिष्ठितम्। यच्च प्राणिति यच्च नेति पयसि ह्येदं सर्व्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्त् स सर्व्वं हि देवेभ्यो ऽन्नाद्यं प्रयच्छति। कस्मात्तानि न चीयन्तेऽद्यमानानि सर्व्वदेति पुरुषो वा अचितिः स हीदमन्नं पुनः पुनर्जनयते। यो वै तामचितिं वेदेति पुरुषो वा अचितिः स हीदमन्नं धिया धिया जनयते कर्म्मभिर्यद्वैतन्न कुर्य्यात् चीयते ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतस्य देवानपि गच्छति स ऊर्ज्जमुपजीवतीति प्रशंसा। बृह, ३।५।१।२।

पञ्चपक्षे—जातं वत्सम् आहुः जनाः—अतृणादः इति नाद्यापि तृणम् अत्ति अतिबालः इति।

"तस्मिन् सर्व्वं प्रतिष्ठितं यच्च प्राणिति यच्च न" इति—

यत् च प्राणिति यत् च न प्राणिति तत् सर्व्वं पयसि रससामान्यात् पञ्चान्ने प्रतिष्ठितम्। यत् ब्राह्मणान्तरेण इदम् आहुः—संवत्सरं पयसा जुह्वत् पुनः मृत्युम् अपजयति इति। न तत् तथा विद्यात्। कथम्? यत् अहः एव जुहोति तत् अहः पुनः मृत्युम् अपजयति इति एवं विद्वान् सर्व्वं—सर्व्वात्मा—भवति। हि यस्मात् देवेभ्यः सर्व्वेभ्यः स अन्नाद्यं प्रयच्छति, एवं हि सर्व्वदेवमयो भवति सः।

"कस्मात् तानि न चीयन्ते अद्यमानानि सर्व्वदा" इति—

पुरुषः वै अक्षितिः तन्नामा। स हि इदम् अन्नं सप्तविधं पुनः पुनः जनयते। एतत् पुनः श्लोकपादव्याख्यया प्रतिपादयति—

"यो वै तामचितिं वेद" इति।

३२। स एष संवत्सरः प्रजापतिः षोड़शकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोड़शी कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमावास्याᳫं रात्रिमेतया षोड़श्या कलया सर्व्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताᳫं रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै।

पुरुषः वै अचितिः। स हि इदम् अन्नं सप्तविधं धिया धिया तत्कालभाविन्या प्रज्ञया कर्म्मभिः च—मनःकायचेष्टितैः—जनयते उत्पादयति, यत् यदि वा एतत् अन्नं न कुर्य्यात्, क्षीयते पुनः तत्।

"सोऽन्नमत्ति प्रतीकेन" इति।

प्रतीकं मुखं प्रतीकेन मुखेन इति एतत् अन्नभोजनं भवति—भोक्तैव भवति न भोजनमिति भावः।

"स देवानपि गच्छति स ऊर्ज्जमुपजीवति"

इति प्रशंसा—नापूर्व्वार्थं इति भाष्यकारः, "देवभावं प्राप्नोति पिबति चामृतम्" इति श्रीमद्भास्करानन्दः। विषयविषयिसम्बन्धपरमिदं ब्राह्मणमित्याधुनिकाः।

३२। पांक्तस्य कर्म्मणः फलानि समाप्तानि। मनःप्राणदेहवित्तेन्द्रियैः पञ्चभिः पांक्तत्वं (८।१३) सिद्ध्यति। तत्र मनोवाक्प्राणरूपाण्यन्नान्यात्मनेऽकुरुत (७।११) इत्युक्तं वित्तकर्म्मणी नोक्ते ते उच्येते स एष इति। स एष संवत्सरः अन्नात्मा प्रजापतिः षोड़शकलः षोड़शकलाः अवयवाः यस्य सः। तस्य संवत्सरस्य रात्रयः अहोरात्राणि—तिथय इत्यर्थः—पञ्चदशकलाः। अस्य षोड़शी कला ध्रुवा नित्या एव। स रात्रिभिः तिथिभिः एव आपूर्य्यते च शुक्ले पक्षे, अपक्षीयते च कृष्णपक्षे। अमावास्यां रात्रिम् अमावस्यायां रात्रौ एतया षोड़श्या ध्रुवया कलया स इदं सर्व्वं प्राणभृत् प्राणिजातम् अनुप्रविश्य ततः प्रातः जायते द्वितीयया कलया संयुक्तः। तस्मात् एतां रात्रिम् एतस्यां रात्रौ

योवै संवत्सरः प्रजापतिः षोड़शकलोऽयमेव स योऽयमेवंवित् पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोड़शी कला स वित्तेनैवा च पूर्य्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्व्वंज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः।

बृ, ३।५।१४।१५।

२२। अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्म्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्द्धन्त वदिष्याम्यहमिति वागद्ध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्र-

अमावस्यायां कृकलासस्य वधार्हस्य अपि प्राणभृतः प्राणं न विच्छिन्द्यात् कुतोऽन्यस्य। कथम्? एतस्याः देवतायाः सोमस्य अपचित्यै पूजार्थं भवतीयमहिंसा।

यः वै स परोक्षः संवत्सरः प्रजापतिः षोड़शकलः, अयम् एव स अपरोक्षः। योऽयम् एवंवित् पुरुषः अस्य वित्तम् एव पञ्चदश कलाः, आत्मा देहः कर्म्मकारणम् एव अस्य षोड़शी कला ध्रुवस्थानीया। स पुरुषः वित्तेन एव आपूर्य्यते च अपक्षीयते च। यदयं योऽयम् आत्मा देहः, तदेतत् नभ्यं—नाभिः चक्रपिण्डिका तत्स्थानीयम्; वित्तं प्रधिः नेमिः। तस्मात् यद्यपि सर्व्वज्यानिं सर्व्वस्वहानिर्यथा स्यात् तथा जीयते क्षीयते, आत्मना देहेन चेत् जीवति प्रधिना हीनः नाभिः इव अगात् तादृगवस्थाम् आपत् इति एव आहुः जनाश्च।

२२। वाङ्मनःप्राणोपासनेन गतिमुक्त्वा (११।२२) तेषु कश्चिद्विशेषोऽप्यस्ति न वेति विचार्य्यते अयात इति। अथ अतः अतोऽनन्तरम् एतस्य उपासनस्य मीमांसा उपासनकर्म्मविचारणा—एषां प्राणानां कस्य कर्म्म व्रतत्वेन धारयितव्यमिति मीमांसा प्रवर्त्तते। प्रजापतिः किल कर्म्माणि—कर्म्मार्थानि हितानि करणानि वागादीनि—ससृजे

मेवमन्यानि कर्म्माणि यथाकर्म्म तानि मृत्युः श्रमोभूत्वो-
पयेमे तान्याप्नोत्तान्याप्ना मृत्युरवारुन्धत् तस्माच्छ्राम्यत्येव
वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं
मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे। अयं वै नः श्रेष्ठो यः
सञ्चरंश्चासञ्चरंश्च न व्यथते न रिष्यति हन्तास्यैव
सर्व्वे रूपमसामेति त एतस्यैव सर्व्वे रूपमभवंस्तस्मादेत
एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते
यस्मिन् कुले भवति य एवंवेद य उ हैवंविदा स्पर्द्धते-
ऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम्।

सृष्टवान्। सृष्टानि तानि अन्योन्येन अस्पर्द्धन्त स्पर्द्धां चक्रुः। अहं वदि-
ष्यामि इति वाग् दध्रे धृतवती निर्ब्बन्धं कृतवती, अहम् ईक्षामि ईक्षे
पश्यामि—भविष्यत् सामीप्ये वर्त्तमाना—इति चक्षुः, अहं श्रोष्यामि
इति श्रोत्रम्। एवम् अन्यानि कर्म्माणि करणानि यथाकर्म्म स्वस्व-
कर्म्मानुसारेण स्पर्द्धां चक्रुः। मृत्युः श्रमः श्रमरूपी भूत्वा तानि उपयेमे
सञ्जग्राह, तानि आप्नोत् व्याप्तवान्, आप्त्वा तानि अवारुन्धत् अवरुद्ध-
वान्। तस्मात् कारणात् वाक् श्राम्यति एव, चक्षुः श्राम्यति, श्रोत्रं
श्राम्यति। अथ योऽयं मध्यमः प्राणः इमम् एव मृत्युः न आप्नोत्।
तानि करणानि तं ज्ञातुं दध्रिरे धृतवन्ति मनश्चक्रुः। अयं वै नः
अस्माकं मध्ये श्रेष्ठः यः सञ्चरन् यः असञ्चरन् च न व्यथते, न रिष्यति
क्षीयते। हन्त—वाक्यारम्भे—इदानीं सर्व्वे वयम् अस्यैव प्राणस्य
रूपम् असाम प्रतिपद्येमहि इति निश्चित्य ते सर्व्वे एतस्य एव प्राणस्य
रूपम् अभवन्। यस्मात् ते प्राणात्मताम् आप्नुवन् तस्मात् एते चक्षुरा-
दयः प्राणा इति एतेन प्राणेन आख्यायन्ते। यः एवं वेद इन्द्रियाणां
प्राणात्मतां जानाति, तेन ह वाव तेन एव विदुषा तत् कुलम् आचक्षते
प्रथितं भवति। यः उ ह यः पुनः एवंविदा विदुषा स्पर्द्धते प्रतिपक्षो

अथाधिदैवतम्। ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः।

अथैष श्लोको भवति यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तन्देवाश्चक्रिरे धर्म्मꣳ स एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्व्वन्ति। तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्य चरेत् समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति।

बृ, ३।५।२१—२३।

भवति, स पुनः अनुश्रुष्य शोषं गत्वा अन्ततः अन्ते म्रियते। इति अध्यात्मम्।

अथ अधिदैवतम्। अहं ज्वलिष्यामि इति अग्निः दध्रे धृतवान्, अहं तप्स्यामि इति आदित्यः, अहं भास्यामि इति चन्द्रमाः, एवम् अन्याः देवताः यथादैवतं स्वस्वदेवत्वानुसारेण स्पर्द्धां चक्रुः, एषां प्राणानां यथा मध्यमः प्राणः, एवम् एतासां देवतानां वायुः। कथम्? अन्याः देवताः म्लोचन्ति अस्तं यन्ति न वायुः म्लोचति। यद्वायुः योऽसौ वायुः सा एषा देवता अनस्तमिता।

अथ एतदर्थप्रकाशकः एष श्लोकः भवति—"यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छति" इति—प्राणात् वा एष सूर्य्यः उदेति प्राणे अस्तम् एति। "तं देवाश्चक्रिरे धर्म्मꣳ स एवाद्य स उ श्वः" इति—प्राणात्

२४। अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्व्वान्तरः। कतमो याज्ञवल्क्य सर्व्वान्तरो योऽशनायापिपासे शोकं

उदयः प्राणे अस्तगमनम् इत्येवं धर्म्मं देवाः चक्रिरे कृतवन्तः। 'स एवाद्य स उ श्वः'—यद्वा यस्मात् पुनः अमुर्हि अमुष्मिन् काले एते वागादयः अग्न्यादयश्च तत् एव प्राणव्रतं वायुव्रतं च अद्य अपि अधियन्त कुर्व्वन्ति अनुवर्त्तन्ते, श्वः च। यस्मात् स्वापकाले प्राणम् एव चक्षुरादयः यन्ति गच्छन्ति प्रबोधकाले प्राणादेव पुनराविर्भवन्ति, वायुमेव अग्न्यादयः प्रविशन्ति पुनराविर्भावकाले वायोरेव प्रादुर्भवन्ति, तस्मात् एकम् एव व्रतं चरेत्। किन्तत्? प्राण्यात् च प्राणव्यापारं कुर्य्यात् च, अपान्यात् च अपानव्यापारं च कुर्य्यात्। कथम्? मा मां पाप्मा मृत्युः आप्नुयात् इति नेत् भयवशात्—"नेच्छब्दः परिभये"। यदि पुनः चरेत् व्रतं तदा समापिपयिषेत् समापयितुमिच्छेत्—प्राणादिपरिहारार्थम्; ऐहिकजीवनस्य चिरजीविताकाङ्क्षाया अदेयत्वात्। किं व्रतफलम्? तेन उ पुनः व्रतेन एतस्यै देवतायै एतस्याः प्राणदेवतायाः सायुज्यं सयुग्भावम् एकात्मत्वं सलोकतां समानलोकताम् एकस्थानत्वं जयति प्राप्नोति।

२४। सर्व्वविशेषणावर्ज्जनमेव ब्रह्मणि स्थितिरुपाय इति तदेव वक्ति अथेति। अथ अनन्तरम् एनम् जनकसभागतं याज्ञवल्क्यं कौषीतकेयः कुषीतकस्यापत्यम् कहोलः पप्रच्छ पृष्टवान्। हे याज्ञवल्क्य इति सम्बोध्य पुनः स उवाच—यत् एव ब्रह्म साक्षात् अव्यवहितम् अपरोक्षात् परोक्षाभावात् अगौणमिति यावत्, यः सर्व्वान्तरः आत्मा तं मे व्याचक्ष्व इति। उषस्तप्रश्नोत्तरानुरूपम् (५।१२) एवाह—एष ते तव आत्मा सर्व्वान्तरः। आत्मशब्दस्य संशयास्पदत्वात् कहोलः पुनराह—हे याज्ञवल्क्य, कतमः सर्व्वान्तरः। याज्ञ-

मोहं जरां मृत्युमत्येति। एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्य्यं चरन्ति याह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः। तस्माद्ब्राह्मणः पाण्डित्यं निर्व्विद्य बाल्येन तिष्ठासेत्। बाल्यञ्च पाण्डित्यञ्च निर्व्विद्याथ मुनिरमौनञ्च मौनञ्च निर्व्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्त्तं ततोह कहोलः कौषीतकेय उपरराम। बृ, ५।५।१।

वस्तुतस्त्वाह—अशनायापिपासे क्षुत्तृषे शोकं मोहं जराम् अत्येति अतिक्रम्य वर्त्तते। एवं वै तम् आत्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाः च—पुत्रं प्रति एषणा इच्छा दारसंग्रहः तस्मात्—वित्तैषणायाः गवादिसंग्रहात्; लोकैषणायाः—देवलोकादिप्राप्त्यभिलाषात् व्युत्थाय वैपरीत्येन उत्थानं कृत्वा अथ भिक्षाचर्य्यं भिक्षार्थं चरणं यत् तत् चरन्ति आचरन्ति। पुत्रेण च वित्तेन च लोकप्राप्तिर्भवति, अतः उच्यते—या हि एव पुत्रैषणा सा वित्तैषणा। लोको हि सम्पत्तेनाधिक्रियते, अत उच्यते या हि वित्तैषणा सा लोकैषणा। एवमेषणानामेकत्वेऽपि पुत्रवित्ताभ्यां लोकः साध्य इति तद्भेदं स्वीकृत्य उच्यते—उभे हि एते एषणे भवतः। यस्मात् एषणापरिहारेण भिक्षाचर्य्याचरणमेवाचारः, तस्मात् ब्राह्मणः पाण्डित्यं वेदान्ततात्पर्य्यावधारणं निर्व्विद्य निःशेषेण विदित्वा "बुधो बालकवत् क्रीड़ेत्" इति न्यायात् बाल्येन अप्रौढ़त्वादिबालभावेन तिष्ठासेत् स्थातुम् इच्छेत्। बाल्यं च पाण्डित्यं च निर्व्विद्य निःशेषेण विदित्वा मुनिः मननशीलः भवति। अमौनम्—आत्मज्ञानाविष्करणं पाण्डित्यं, मौनम्—आत्मज्ञानानाविष्करणं बाल्यं तदुभयं निर्व्विद्य निःशेषेण विदित्वा अथ ब्राह्मणः ब्रह्मविद् भवति। स

३५। स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः स न साधुना कर्म्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्व्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत् पूर्व्वे विद्वांसः प्रजां न कामयन्ते किं

ब्राह्मणः केन स्यात्? येन उपायेन स्यात् तेन ईदृशः एतल्लक्षणाक्रान्तः बालभावापन्नः—'तिष्ठासेत्' इति उक्तिबलात्—(३।४।५०)—एवस्यात्। अतः ब्राह्मण्यात् अन्यत् एषणारूपम् आर्त्तं दुःखकारणम्। ततः कहोलः कौषीतकेयः उपरराम प्रश्नान्तरात् निवृत्तोऽभवत् प्रतिबुद्धः।

३५। यदुक्तं तदेव विशेषोक्त्या द्रढ़यति स वा एष इति। य अयं विज्ञानमयः सन् प्राणेषु, यः एष अन्तर्हृदये आकाशः सन् तस्मिन् आकाशे शेते तिष्ठति, स एष महान् अजः, सर्व्वस्य वशी वशे स्थापयिता, सर्व्वस्य ईशानः ईशिता, सर्व्वस्य अधिपतिः अधिष्ठाय पालयिता, न स साधुना सुखदानरूपविहितकर्म्मणा भूयान् महत्तरः, न एव न च असाधुना दुःखदानरूपाविहितकर्म्मणा कनीयान् अल्पतरः। कथम्? एष सर्व्वेश्वरः सर्व्वेषां नियन्ता कर्म्मानुयायिसुखदुःखविधानेन, एष भूताधिपतिः भूतानां सुखदुःखविधानेन पालयिता अन्यथा तेषामुच्छेद एव स्यात्, एष भूतपालः भूतानां पोषयिता एषां लोकानाम् असम्भेदाय अभङ्गाय एष विधरणः सेतुः भेदनिवारणः। तम् एतं परमात्मानं वेदानुवचनेन नित्यस्वाध्यायेन ब्राह्मणाः विविदिषन्ति वेदितुम्

प्रजया करिष्यामः। येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्त्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः। स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इति। अतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः।

इच्छन्ति। न केवलं स्वाध्यायेन किन्तर्हि यज्ञेन, दानेन, अनाशकेन धातुवैषम्यानुत्पादकेन तपसा एतं परमात्मानं विदित्वा मुनिः मननशीलः भवति। एवं परमात्मानम् एव लोकम् स्वधाम इच्छन्तः प्रव्राजिनः प्रव्रजन्ति। एतत् एतस्मात् कारणात्—ह वै किल—पूर्व्वं विद्वांसः—येषां नः अस्माकम् अयम् आत्मा अयं लोकः ते वयं प्रजया किं करिष्यामः इति प्रजां न कामयन्ते स्म। ते किल पुत्त्रैषणायाः इत्यादिकायाः च व्युत्थाय भिक्षाचर्य्यं चरन्ति स्म। या हि एव पुत्रैषणा सा वित्तैषणा, या हि वित्तैषणा सा लोकैषणा, उभे हि एते एषणे भवतः। स एष इत्यारभ्य न रिष्यतीत्यन्तं पूर्व्वं व्याख्यातम् ( ३।२३[१४८पृ] )। एतं—नेति नेतीत्यादिना निर्द्धारितात्मविदम्—एते पापकल्याणे न तरतः न प्राप्नुतः इति, अतः अस्माद्धेतोः पापम् अकरवम्—आत्मवित्तलाभात् पूर्व्वम्—इति अतः अस्मात् हेतोः, कल्याणं शुभं पुण्यम् अकरवम्—आत्मवित्तलाभात् पूर्व्वम्—इति उभे उ पुनः एते पापकल्याणे एष आत्मवित् तरति तज्जनितहर्षविषादौ जहाति अभिमानाभावात्, न एनं कृताकृते कृतञ्च अकृतञ्च—आत्मवित्तलाभात् पूर्व्वम्—तपतः सन्तापं जनयतः—सम्मति। "न लिप्यते कर्म्मणा पापकेन"

तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्म्मणा नो कनीयान् तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्म्मणा पापकेनेति। तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्व्वमात्मानं पश्यति नैनं पाप्मा तरति सर्व्वं पाप्मानं तरति नैनं पाप्मा तपति सर्व्वं पाप्मानं तपति, विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राड़िति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि माञ्चापि सह दास्यायेति।

इत्यनेनात्मवित्त्वलाभादनन्तरं पापलेपाभावस्योक्तत्वात् भूतवर्त्तमाना-प्रयोगाच्च लभ्यत एषोऽर्थः।

तदेतत् ब्राह्मणेनोक्तम् ऋचा मन्त्रेण अभ्युक्तम् प्रकाशितम्। ब्राह्मणस्य तत्त्वविदः एष नित्यः स्थायी महिमा। कथम्? यतोऽसौ कर्म्मणा न वर्द्धते न कनीयान् भवति—बालवदभिमानविरहितत्वात्। तस्य महिम्नः एव पदवित् स्वरूपवेत्ता भवति। तं महिमानं विदित्वा पापकेन परात्मना विच्छेदसाधकेन कर्म्मणा न लिप्यते इति। तस्मात् कारणात् पापकर्म्मणा लेपो न भवेदिति हेतोः एवंवित् शान्तः—बाह्येन्द्रियव्यापारतः उपशान्तः, दान्तः—अन्तःकरणतृष्णातः निवृत्तः, उपरतः—सर्व्वैषणाविनिर्म्मुक्तः, तितिक्षुः—द्वन्द्वसहिष्णुः, समाहितः—एकाग्रचित्तः आत्मनि एव आत्मानं परात्मानं पश्यति, सर्व्वं—व्यापित्वेन निखिलात्मभूतम्—आत्मानं परात्मानं पश्यति। स य एवं पश्यति तम् एनं न पाप्मा तरति न आप्नोति, स एष सर्व्वं पाप्मानं तरति अतिक्रामति, एनं पाप्मा न तपति न दहति, सर्व्वं पाप्मानं स एष तपति दहति। एवं विपापः पापविमुक्तः, विरजः विगतकामः, विचिकित्सः छिन्नसंशयः ब्राह्मणो भवति। "येन

स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद।

स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद।

बृ, ६।४।२२—२५।

३६। त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्म-चर्य्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्य्यं देवा ऊचु-र्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति

स्यात्तेनेदृश एव" इत्येतदत्राप्यनुवर्त्तते—गार्हस्थ्याद्वनं वनात् प्रव्र-जनम्, गार्हस्थ्यास्वीकारेण परिव्रजनात् स्वरूपे स्थित्यनन्तरं गार्हस्थ्यं शुके तथा दर्शनादुपायस्यानैकान्तिकत्वम्। हे सम्राट्, एष ब्रह्मलोकः ब्रह्मैव लोकः ब्रह्मणि स्थितिः इति याज्ञवल्क्य उवाच। स जनक आह—सोऽहं जनकः भगवते विदेहान् मम राज्यं ददामि, तेन राज्येन सह मां च अपि दास्याय दासकर्म्मणे ददामि इति।

स वा एष महान् अजः आत्मा अन्नादः अन्नानां भूतमात्राणाम् अत्ता संहर्त्ता, वसुदानः वसूनां धनानां दाता। यः एवं एवंगुण-सम्पन्नं तम् आत्मानं वेद स वसु धनादि विन्दते लभते।

स वा एष महान् सर्व्वान्तर्भावकः अजरः अमरः अमृतः अभयः आत्मा ब्रह्म अभयं भयशून्यम् एव। हि यस्मात् ब्रह्म अभयं, तस्मात् यः एवं—ब्रह्म अभयम् इति—वेद वेत्ति स ब्रह्म भवति तद्गुणो भयशून्यः भवति—'ब्रह्म वेद ब्रह्मैव भवति' इति श्रौतन्यायात्।

३६। दमादि साधनत्रयमुच्यते त्रया इति। देवाः मनुष्याः असुराः त्रयः त्रिसंख्यकाः प्राजापत्याः प्रजापतेरपत्यानि प्रजापतौ पितरि शिष्यत्वेन ब्रह्मचर्य्यम् ऊषुः उषितवन्तः। ब्रह्मचर्य्यम् उषित्वा देवाः ऊचुः उक्तवन्तः—भवान् नः अस्मभ्यं ब्रवीतु कथयतु अनुशासन-

व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति।

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच दइति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति।

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति, तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳशिक्षेद्दमं दानं दयामिति। १—३।

मिति शेषः। तेभ्यः देवेभ्यः—दः इति अक्षरम् उवाच। उक्त्वा तान् पप्रच्छ पिता—व्यज्ञासिष्ट—किं इति। ते ऊचुः—व्यज्ञासिष्म इति। किं विज्ञातवन्त इति पृष्टास्ते ऊचुः—दाम्यत दान्ताः भवत इति नः अस्मान् आत्थ कथयसि इति। ओम् इति पुनः प्रजापतिः उवाच—व्यज्ञासिष्ट इति।

अथ अनन्तरम् एनं प्रजापतिं मनुष्याः ऊचुः—ब्रवीतु नः भवान् इति। स तेभ्यः पुनः दः इति एतत् एव अक्षरम् उवाच। उक्त्वा प्रपच्छ—व्यज्ञासिष्ट इति। ते ऊचुः—व्यज्ञासिष्म इति। दत्त दाननिरता भवत इति नः आत्थ। स पुनरुवाच—ओमिति व्यज्ञासिष्ट इति।

अथ अनन्तरम् एनं प्रजापतिम् असुराः ऊचुः—ब्रवीतु नः भवान् इति। स तेभ्यः पुनः दः इति एतत् एव अक्षरम् उवाच। उक्त्वा प्रपच्छ—व्यज्ञासिष्ट इति। ते पुनः ऊचुः—व्यज्ञासिष्ट इति दयध्वं दयां कुरुत इति नः आत्थ। स पुनः ओमिति उवाच—व्यज्ञासिष्ट

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत् सर्व्वं तदेतत्त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद। १।

तद्वैतदेतदेव तदास सत्यमेव स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमांल्लोकान् जित इन्न्वसावसद्य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म। १।

इति। तत् तस्मात् एतत् एतस्मात् एव कारणात् स्तनयित्नुः मेघगर्ज्जितं ददद इति दाम्यत दत्त दयध्वम् इति एषा दैवीवाक् अनुवदति। तत् तस्मात् दमं दानं दयाम् इति एतत् त्रयं शिक्षेत् कर्त्तव्यत्वेन गृह्णीयात्—दमेन जितेन्द्रियत्वं दानेन निर्लोभत्वं दयया पुनरहिंसत्वं सिध्यति। देवमानवदानवसुलभदान्तत्वलोभित्वहिंस्रत्वसाधारणानां जनानां त्रयमेवैकत्र साधनीयम्। १—३।

यत् हृदयं स एष प्रजापतिः, एतत् ब्रह्म, एतत् सर्व्वम्। तत् तस्मात् सर्व्वात्मकत्वात् हृदयमिति एतत् त्र्यक्षरम्। हृ इत्येकम् अक्षरं यः एवं सर्व्वात्मकं वेद अस्मै तद्विदे स्वयं ज्ञातयः अन्ये च अभिहरन्ति बलिमिति शेषः। द इति एकम् अक्षरम्, यः एवं सर्व्वात्मकं वेद अस्मै स्वाः च अन्ये च ददति। यम्—इन्-धातोः यम् इत्येतद्रूपम्—इत्येकम् अक्षरं यः एवं सर्व्वात्मकं वेद स स्वर्गं लोकम् एति। १।

तत् हृदयं वा एव सत्यम्—"प्राणा वै सत्यम्" (३।५०पृ)—प्राणः, न तु सच्च त्यच्च पञ्चाक्षरापत्त्या। एतत् सत्यम् एव तत् हृदयम् आस बभूव। स यः एतत् महत् यक्ष्यं पूज्यं प्रथमजं प्रथमोत्पन्नं सत्यं —"सत्यस्य सत्यं" इति—ब्रह्म वेद इमान् लोकान् जयति, हि यस्मात्

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवोपासते तदेतत् त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैनं विद्वाꣳसमनृतꣳ हिनस्ति।

तद्यत् तत् सत्यमसौ स आदित्यो यएष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणै-

सत्यम् एव ब्रह्म। तस्मात् जितः-इमं-एव असौ असत् तेन साधकेन यः सत्यं ब्रह्मेति एवं महत् यक्षं प्रथमजं वेद। १।

इदं जगत् अग्रे सृष्ट्यादौ आपः एव आसुः—"अम्भो मरीचिः" (८।७) इति—सूक्ष्मवाष्पाकारेण, ताः आपः सत्यं प्राणम्—तस्मात् तत् प्रथमजम्—असृजन्त; सत्यं—प्राणः—ब्रह्म व्याकृतं जगत्, ब्रह्म प्रजापतिं विराजं, प्रजापतिः देवान् असृजत। ते देवाः सत्यम् एव व्याकृतजगति प्रकाशमानं देवम् एव उपासते, तत् एतत् सत्यम् इति त्र्यक्षरम्। स इत्येकम् अक्षरं, ति—इकारानुबन्धः स्वरूपादप्रच्यवमानः—इति एकम् अक्षरम्, यम् इति एकम् अक्षरम्, प्रथमोत्तमे अक्षरे सकारयकारौ सत्यम्, मध्यतः तकारः अनृतं मृत्युरूपम् अभावरूपम्। तत् एतत् अनृतम् उभयतः सत्येन परिगृहीतम्। तत् सत्यभूयं सत्यबाहुल्यम् एव भवति। एनं सत्यप्राधान्याभिज्ञं विद्वांसम् अनृतं कदाचित् प्रमादोत्थं न हिनस्ति।

तत् प्रसिद्धं यत्, तत् सत्यम्; स असौ सत्यम् आदित्यः। एतस्मिन् आदित्यमण्डले यः एष पुरुषः, यः च अयं दक्षिणे अक्षन् अक्षिणि पुरुषः, तौ एतौ अन्योन्यस्मिन् इतरेतरस्मिन्—आदित्यः

रयममुष्मिन् स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति।

य एष एतस्मिन् मण्डलपुरुषस्तस्य भूरिति शिर एकꣳ शिरएकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद।

योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकꣳ

चाक्षुषे पुरुषे चाक्षुषः पुरुषः आदित्ये प्रतिष्ठितौ। कथं प्रतिष्ठितौ? एष आदित्यः रश्मिभिः अस्मिन् चाक्षुषे पुरुषे प्रतिष्ठितः अयं चाक्षुषः पुरुषः प्राणैः अमुष्मिन् आदित्ये प्रतिष्ठितः। स पुरुषः विज्ञानमयः यदा उत्क्रमिष्यन् भवति उत्क्रान्तुमुद्यतो भवति, तदा एतत् मण्डलं शुद्धं किरणजालवर्ज्जितं चन्द्रमण्डलमिव पश्यति। एनं पुरुषं प्रति रश्मयः न आयन्ति न आगच्छन्ति, तद्दृष्टिरोधं न कुर्व्वन्तीतिभावः।

एतस्मिन् मण्डले यः एष पुरुषः सत्यनामा, तस्य भूः इति व्याहृतिः शिरः, शिरः एकम्, अतः एतत् भूरिति एकम् अक्षरम्; भुवः इति व्याहृतिः तस्य बाहू, द्वे बाहू अतः एते द्वे अक्षरे; स्वर् इति व्याहृतिः प्रतिष्ठा पदद्वयं, द्वे प्रतिष्ठे, अतः द्वे एते अक्षरे। तस्य सत्यपुरुषस्य अहः इति उपनिषत् गूढ़तत्त्वम्। तत् तत्त्वं विवृणोति —पाप्मानं हन्ति इति अहः। यः एवं वेद स च पाप्मानं जहाति। यद्यपि नञ्योगात् जहातेः कनि कालं न जहातीति व्युत्पत्त्या अहन् इति पदं सिद्ध्यति तथाप्यत्र हन्तेर्जहातेश्च निरर्थकेनाड़ागमेन रहस्यो-द्घाटनाय व्युत्पादयति तत् श्रुतिः।

यः अयं दक्षिणे अक्षन् अक्षिणि पुरुषः तस्य भूरिति शिर इत्यादि पूर्व्ववत्।

शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद।

१—४। बृह, ७।२—५।

३७। मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्व्वस्येशानः सर्व्वस्याधिपतिः सर्व्वमिदं प्रशास्ति यदिदं किञ्च। १।

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म। १।

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च हन्तकारञ्च मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनोवत्सः। १।

३७। मनआद्युपाधित्वेनोपासनं मनइति। अयं पुरुषः मनोमयः भाःसत्यः भा एव सत्यं स्वरूपं यस्य। यथा व्रीहिः वा यवो वा तत्परिमाणः तस्मिन् अन्तर्हृदये स एष सर्व्वस्य ईशानः स्वामी सर्व्वस्य अधिपतिः अधिष्ठाय पालयिता, यत् इदं किञ्च तत् इदं सर्व्वं प्रशास्ति।

विद्युदिति। विद्युत् ब्रह्म इति आहुः। कथम्? विदानात् खण्डनात् तमोराशेरपाकरणात् विद्युत्। यः एवं वेद, स एनम् आत्मानं प्रति पाप्मनः पापानि विद्यति खण्डयति। विद्युत् ब्रह्म इति ज्ञानात् कथमेवं भवति? हि यस्मात् ब्रह्म विद्युत् खण्डयिता।

वाचमिति। वाचं धेनुं—धेनुरिव धेनुः—उपासीत। तस्याः वाचो धेन्वाः चत्वारः स्तनाः—स्वाहाकारः, वषट्कारः, हन्तकारः,

अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति, स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति। १। वृ, ७।६—८।

३८। एतद्वै परमं तपो यद्व्याहितस्तप्यते परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकं जयति य एवं वेदैतद्वै परमन्तपो यत् प्रेतमग्नावभ्यादधति परमꣳ हैव लोकं जयति य एवं वेद। १।

स्वधाकारः। तस्याः द्वौ स्तनौ देवाः उपजीवन्ति। कौ तौ? स्वाहाकारं च वषट्कारं च—आभ्यां हि हविर्दीयते देवेभ्यः; हन्तकारं च स्तनं मनुष्याः उपजीवन्ति;—हन्त इति मनुष्येभ्योऽन्नं हि प्रयच्छन्ति; स्वधाकारं स्तनं पितरः उपजीवन्ति—स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्ति। तस्याः वाचोधेन्वाः प्राणः ऋषभः—प्राणेन हि वाक् प्रसूयते, मनः वत्सः—मनसा हि प्रस्राव्यते। 'मनसा ह्यालोचितविषये वाक् प्रवर्त्तते तस्मान्मनो वत्सस्थानीयम्।'

अयमिति। अयम् अग्निः वैश्वानरः, यः अयम् अन्तः पुरुषे, येन अग्निना इदम् अन्नं पच्यते, यत् इदं पक्वम् अन्नं प्रजाभिः अद्यते भुज्यते। तस्य जाठराग्नेः एष घोषः भवति, यं घोषम् एतत्कर्णौ एतौ कर्णौ अपिधाय अङ्गुलिभ्याम् आच्छाद्य शृणोति। स पुरुषः यदा उत्क्रमिष्यन् भवति उत्क्रान्तुमुद्यतो भवति, तदा एनं घोषं न शृणोति।

३८। उपासनान्तराणि वक्तुमुपक्रमते एतदिति। व्याहितः व्याधिग्रस्तः सन् यत् तप्यते, एतत् वै परमं तपः। यः एवं—व्याधिजनितसन्तापएव तप इति—वेद, स पुनः परमम् एव लोकं जयति।

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात् प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किꣳस्विदेवैवं विदुषे साधु कुर्य्यां किमेवास्मा असाधु कुर्य्यामिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने हीमानि सर्व्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्व्वाणि भूतानि रमन्ते सर्व्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्व्वाणि भूतानि रमन्ते य एवं वेद। १।

प्रेतं मृतं यम् अरण्यं हरन्ति तत्र नयन्ति—एतत् वै परमं तपः। यः एवं—सत्कारार्थं ग्रामादरण्यनयनरूपं तपः—वेद, स पुनः परमम् एव लोकं जयति। प्रेतं मृतं यम् अग्नौ अभ्यादधति, एतत् वै परमंतपः, यः एवम्—अग्निप्रवेशरूपं तपः—वेद, स पुनः परमम् एव लोकं जयति।

अन्नमिति। एके अन्नं ब्रह्म इति आहुः, तत् न तथा। कथम्? प्राणात् ऋते प्राणसम्बन्धं विना पूयति वै अन्नम्। प्राणः ब्रह्म इति एके आहुः, तत् न तथा। कथम्? अन्नात् ऋते अन्नं विना प्राणः वै शुष्यति। एते अन्नप्राणरूपे देवते तु पुनः एकधाभूयं भूत्वा एकत्वमागत्य परमतां परमत्वं ब्रह्मत्वं गच्छतः, तत् तस्मात् ह—ऐतिह्ये—प्रातृदः तन्नामा ऋषिः पितरम् आह स्म—किंस्वित् एवंविदे—अन्नस्याब्रह्मत्वं प्राणस्याब्रह्मत्वं तयोर्मिलितभावे पुनर्ब्रह्मत्वमिति ज्ञानवते—साधु शोभनं सम्माननां कुर्य्याम्, किम् एव अस्मै अन्नब्रह्मविदे प्राणब्रह्मविदे असाधु अशोभनम् असम्माननां कुर्य्याम् इति। स

उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्व्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद।

यजुः प्राणो वै यजुः प्राणे हीमानि सर्व्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद।

पिता पुनः पाणिना वारयन् आह स्म—हे प्रातृद, कः तु अनयोः अन्नप्राणयोः एकधाभूयं भूत्वा एकत्वमागत्य परमतां परमत्वं ब्रह्मत्वं गच्छति इति हेतोः मा एवं कथाः। तस्मै प्रातृदाय उ ह पुनः एतत् उवाच पिता—अन्नं वै वि इति उच्यते, हि यस्मात् वि अन्ने विश्वरूपभूते अन्ने इमानि सर्व्वाणि भूतानि विष्टानि ; रम् इति प्राणः वै उच्यते, हि यस्मात् रम्प्राणे रम्स्वरूपभूते प्राणे इमानि सर्व्वाणि भूतानि रमन्ते। यः एवम्—अन्ने विशन्ति प्राणे रमन्ते इति—वेद, अस्मिन् विदुषि सर्व्वाणि पुनः भूतानि विशन्ति सर्व्वाणि भूतानि रमन्ते। "अन्नप्राणयोर्गुणद्वयविशिष्टयोर्मिलितयोरुपासनमुक्तम्" इति टीकाकृत्।

उक्थमिति। प्राणः वै उक्थम्। कथं प्राणः उक्थम्? हि यस्मात् प्राणः इदं सर्व्वम् उत्थापयति। यः एवं—प्राणो हि उत्थापयिता इति—वेद, अस्मात् उक्थविदः उक्थवित् वीरः पुत्रः पुनः उत्तिष्ठति, उक्थस्य सायुज्यं सलोकतां जयति।

यजुरिति। यजुः वै प्राणः। कथं यजुः प्राण इति? हि यस्मात् इमानि सर्व्वाणि भूतानि प्राणे युज्यन्ते। यः एवं वेद अस्मै पुनः सर्व्वाणि भूतानि युज्यन्ते, श्रैष्ठ्याय भवति स, यजुषः सायुज्यं सलोकतां जयति।

साम प्राणो वै साम प्राणे हीमानि सर्व्वाणि भूतानि सम्यञ्चि सम्यञ्चि ह्यस्मै सर्व्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद।

क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्रक्षत्रमत्रमाप्नोति क्षत्रस्य साजुज्यꣳ जयति य एवंवेद। १—४।

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद।

ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा

सामेति। साम वै प्राणः। कथं साम प्राण इति? हि यस्मात् इमानि भूतानि प्राणे सम्यञ्चि सङ्गच्छन्ते। यः एवंवेद, अस्मै सर्व्वाणि भूतानि सम्यञ्चि सङ्गच्छन्ते, श्रैष्ठ्याय श्रेष्ठभावाय कल्पन्ते समर्थ्यन्ते, साम्नः सायुज्यं सलोकतां जयति।

क्षत्रमिति। क्षत्रं वै प्राणः। कथं क्षत्रम्? हि यस्मात् प्राणः क्षत्रम् इति वै प्रसिद्धम्। कथमिवं प्रसिद्धम्? एनं देहं प्राणः त्रायते। यः एवं वेद, स क्षणितः शस्त्रादिहिंसितः अत्रं—न त्रायतेऽन्येन केनचित् इत्यत्रं प्राणशब्दा क्षतपूरणदर्शनात्—अत्रं प्राणरूपं प्राप्नोति क्षत्रस्य सायुज्यं सलोकतां जयति।

भूमिरिति। भूमिः, अन्तरिक्षं, द्यौः इति अष्टौ अक्षराणि, अष्टाक्षरं पुनः गायत्र्यै छन्दोरूपायै एकं पदम्। अस्याः गायत्र्याः, एतत् त्रैलोक्यं पुनः एतत् पदम्। यः अस्याः गायत्र्याः एतत् त्रैलोक्यम् पदम् एवं वेद, स एषु त्रिषु लोकेषु यावत् तावत् पुनः जयति।

ऋच इति। ऋचः यजूंषि सामानि इति अष्टौ अक्षराणि, अष्टा-

एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद।

प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरꣳ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परो रजा इति सर्व्वमु ह्येवैष रज उपर्य्युपरि तपत्येवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद।

क्षरं पुनः गायत्र्याः एकं पदम्। अस्याः गायत्र्याः एतत् त्रयीरूपम् एतत् पदम्। यः अस्याः एतत् त्रयीरूपं पदम् एवं वेद, स यावती इयं त्रयी विद्या तावत् पुनः जयति।

प्राणइति। प्राणः अपानः व्यान इति अष्टौ अक्षराणि, अष्टाक्षरं पुनः गायत्र्याः एकं पदम्। अस्याः एतत् प्राणरूपं पुनः एतत् पदम्। यः अस्याः एतत् प्राणत्रयं पदम् एवं वेद स यावत् इदं प्राणि प्राणिजातं तावत् पुनः जयति। अनन्तरं चतुर्थपदव्याख्या अधेति। अथ अस्याः चतुर्थं पदम्। तत्र ऋक्—"एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति" इति। स्वयमेव श्रुतिः व्याचष्टे—'यद्वै चतुर्थं तत् तुरीयम्' 'दर्शतं पदमिति' ददृश इव हि एष परो रजा इति—सर्व्वम् उ हि एष रजः उपर्य्युपरि तपति।' योऽसौ सविता उपर्य्युपरि स्थितान् सर्व्वान् लोकान् तपति सोऽसौ चतुर्थं पदं दृश्यते इव इति समुदायार्थः। 'योगिभिर्दृश्यत इवेति लक्ष्यते न तु मुख्यमीश्वरस्य दृश्यत्वमतीन्द्रियत्वात्' इति टीकाकृत्। एवं पुनः स श्रिया यशसा तपति यः अस्याः एतत् 'तुरीयं दर्शतं पदं' वेद।

सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परो रजसि प्रतिष्ठिता तद्वैतत् सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वैतत् सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत् प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोजीय इत्येवमेषा गायत्र्यध्यात्मप्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत् प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳ सावित्रीमन्वाहैषैव स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ।

सैषेति । त्रैलोक्य त्रैविद्य-प्राणलक्षणा त्रिपदोक्ता गायत्री एतस्मिन् तुरीये दर्शते पदे परो रजसि प्रतिष्ठिता—त्रिपदा गायत्री मूर्त्तामूर्त्तात्मकं जगत् । सा पुनः जगदतिक्रम्य आदित्ये प्रतिष्ठिता ; न पुनरादित्यः सत्यातिरिक्तः तदात्मकत्वात्तस्य, अत आह—तत् वै एतत् चतुर्थं पदं पादत्रयेण सह सत्ये प्रतिष्ठितम् । चक्षुः वै सत्यम् । कथं ? हि यस्मात् चक्षुः सत्यं वै प्रसिद्धम्, तस्मात्—चक्षुषः सत्यꣳ प्रसिद्धिं दर्शयति—यत् यदि इदानीम् 'अहमदर्शम् अहमश्रौषम्' इति द्वौ विवदमानौ विरुद्धं वदमानौ एयाताम् आगच्छेयातां, यः एव ब्रूयात् 'अहम् अदर्शम्' इति तस्मै एव श्रद्दध्याम—यतः श्रवणे भ्रान्तिसम्भावनास्ति न तु दर्शने । तत् वै एतत् सत्यं बले प्रतिष्ठितम्, प्राणः वै बलम् । यस्मात् प्राणे तत् बलं प्रतिष्ठितं तस्मात् सत्यात् बलम् ओजीयः ओजस्तरमिति आहुः । एषा गायत्री अध्यात्मप्रतिष्ठिता अध्यात्मे प्राणे प्रतिष्ठिता । सा पुनः एषा गायत्री गयान्—'गायन्तीति गयाः' वागुपलक्षिता चक्षुरादयः तान्—तत्रे त्रातवती । के पुनस्ते गयाः ? प्राणाः चक्षुरादयः वै गयाः । तत्प्राणान् तन्नाम-

ताꣳ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्य्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवंविद् बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्चन पदं प्रति।

स य इमाꣳस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत् प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या

प्रसिद्धान् प्राणान् तत्र त्रातवती। यत् यस्मात् गयान् तत्र त्रातवती तस्मात् गायत्री नाम। याम् एव अमूं गायत्रीं स आचार्य्यः अन्वाह मानवकाय, एषा गायत्री एव—सावित्रीगायत्र्योरेकत्वम्। स यस्मै मानवकाय अन्वाह, तस्य मानवकस्य प्राणान् त्रायते नरकादिषु पतनात्।

तामिति। तां पुनः एतां सावित्रीम् एके शाखिनः अनुष्टुभम् अन्वाह। कथम्? अनुष्टुप् एव वाक्। एतद्वाचं एताम् अनुष्टुब्रूपां वाचम् अनुब्रूम इति हेतोः। तन्निषेधति—न तथा कुर्य्यात्, गायत्रीम् एव सावित्रीम् अनुब्रूयात्। यदि अपि पुनः वै एवंवित् बहु एव निखिलम् एव प्रतिगृह्णाति—'गायत्रीपादत्रिलोकादिपरिग्रहं' करोति न पुनः गायत्र्याः तत् प्रतिग्रहणं भवति, सुतरां न तस्याः एकञ्च पदं प्रति—विज्ञानफलं भवतीति शेषः। तथाहि टीकाकृत्—'न तेन प्रतिग्रहजातेन एकस्यापि गायत्रीपदस्य विज्ञानफलं भुक्तं स्यात्' इति।

स यः गायत्रीवित् इमान् भूरादीन् त्रिलोकान् पूर्णान् गोऽश्वादिभिः प्रतिगृह्णीयात् स अस्याः एतत् प्रथमं पदम् आप्नुयात्—प्रथमपदविज्ञानफलं तेन भुक्तं स्यात्; अथ यावती इयं एषा विद्या यः तावत् प्रतिगृह्णीयात्, स अस्याः गायत्र्याः एतत् द्वितीयं पदम्

एतत् तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा यएष तपति नैव केन च नाप्यं कुत उ एतावत् प्रतिगृह्णीयात्।

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परो रजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स काम ऋध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा।

आप्नुयात्—द्वितीयपदविज्ञानफलं तेन भुक्तं स्यात्; अथ यावत् इदं प्राणि प्राणिजातं यः तावत् प्रतिगृह्णीयात्, स अस्याः गायत्र्याः एतत् तृतीयं पदम् आप्नुयात्—तृतीयपदविज्ञानफलं तेन भुक्तं स्यात्। अथ अस्याः 'एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति' इत्युपलक्षितं पदं चतुर्थं न एव केन च देयं, न च केन च आप्यं प्राप्यं, सुतरां कुतः उ पुनः एतावत् प्रतिगृह्णीयात्—नात्र दानं प्रतिग्रहो वा सम्भवति। 'न तथा कुर्य्यात्' निषेधस्य कारणमिदमेव। एतेन त्रिपदा गायत्र्येव सावित्रीति सिद्धम्।

तस्याः गायत्र्याः उपस्थानं नमस्करणम् अनेन मन्त्रेण—हे गायत्रि, त्वम् त्रैलोक्यपादेन एकपदी असि, त्रयीविद्यारूपेण पादेन द्विपदी असि, प्राणादिना तृतीयपादेन त्रिपदी असि, तुरीयेण पादेन चतुष्पदी असि। चतुर्थ पादस्य सीमप्रतिग्रहासम्भवात् अपत् ज्ञानातीता असि; सुतरां न हि पद्यसे ज्ञायसे केनापि। ते तव दर्शताय तुरीयाय पदाय परोरजसे नमः। असौ तत्प्राप्तिविघ्नकरः पाप्मा अदः प्राप्तिविघ्नोत्पादनकर्त्तृत्वं मा प्रापत् मा प्राप्नोतु। असौ विद्वान् यं द्विष्यात्—अस्मै अमुकाय कामः अभिलषितं मा समृद्धिं मा समृद्धिं प्राप्नोतु, यस्मै एवम् उपतिष्ठते, न पुनः एव अस्मै स कामः ऋध्यते। अथवा

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथꣳ हस्तीभूतो वहसीति मुखꣳह्यस्याः सम्राण्न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधाति सर्व्वमेव तत् सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्व्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति। १—८। बृ, ७।११—१४।

३८। स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्य्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्व्वौषधं फलानीति संभृत्य परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य्याऽऽवृताऽऽज्यꣳ सꣳ-

मद: अमुकस्याभिप्रेतं समृद्धिरूपम् अहम् प्रापम्। मन्त्रपदानामेवं यथाकामं विकल्पः।

गायत्रीमुखविधानार्थमुपाख्यानमाह एतदिति। ह ऐतिह्ये। तत् तत्र गायत्री विज्ञाने आश्वतराश्विम् अश्वतरस्य अश्वस्य अपत्यं बुड़िलं वैदेहः विदेहाधिपतिः जनकः एतत् वै उवाच—यत् यदि-नु वितर्के—हे अहो, तद्गायत्रीवित् प्रसिद्धगायत्रीविज्ञानज्ञः अब्रूथाः, अथ कथं हस्तीभूतः सन् वहसि मां—प्रतिग्रहाकाङ्क्षया नीचतां स्वीकरोषि। बुड़िल उवाच—हे सम्राट्, अस्याः गायत्र्याः मुखं न विदाञ्चकार इति—ततो न विज्ञानफलं लब्धवानस्मीतिभावः। राजाह—तस्याः गायत्र्याः अग्निः एव मुखम्। यदि अपि हि वै बहु इव इन्धनम् अग्नौ अभ्यादधति सर्व्वम् एव तत् सन्दहति, एवं पुनरेव एवंवित् यद्यपि बहु इव पापं कुरुते सर्व्वम् एव तत् संप्साय संभक्षयित्वा शुद्धः पूतः अजरः अमरः संभवति।

३८। वित्तोपार्ज्जनेन महत्त्वलाभायानुष्ठानम्। स य इति।

स्कृत्य पुᳬसा नक्षत्रेण मन्थᳬ संनीय जुहोति यावन्तो देवा-स्त्वयि जातवेदस्तिर्यञ्चोघ्नन्ति पुरुषस्य कामान् तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्व्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे सᳬ राधनीमहᳬ स्वाहा।

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति मनसे स्वाहा प्रजापत्यै स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति।

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सᳬस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा

व्याख्यातमिदमष्टमस्य तृतीयं ब्राह्मणं श्रीमता भास्करानन्दस्वामिनैवं संक्षेपेण—

"यो महत्त्वमिच्छेत्स उत्तरायणे शुक्लपक्षे शुभेऽह्नि पयोव्रतमाचरेत्। तच्च द्वादशाहं पयोभक्षणरूपम्। ततस्त्रयोदशेऽह्नि शुभे उदुम्बरस्य कंसे चमसे वा पात्रे दधिमधुघृतं दत्त्वा व्रीह्याद्या वक्ष्यमाणा दश नियमेनान्याश्च यथाशक्तिसम्भवं ग्राम्यारण्यौषधीः फलानि च समाहृत्य पिष्टोपमिच्य तत्रैव पात्रेऽथ कृतयोरौदुम्बर्योर्मन्थन्योरेकया संमथ्य गृह्योक्तरीत्या भूसंस्कारमग्न्युपसमाधानं परिस्तरणं स्थालीपाकविधिनाज्य-

मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रव-मवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमव-नयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहे-त्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्व्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति।

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथ मस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधन-मसि संवर्गोऽसीति।

अथैनमुद्यच्छत्यामꣳस्यामꣳहि ते महि स हि राजे-शानोधिपतिः स माꣳराजेशानोऽधिपतिं करोत्विति।

अथैनमाचामति तत्सवितुर्व्वरेण्यम् मधुवाताऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः भूः स्वाहा। भर्गोदेवस्य धीमहि मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः

संस्कारं च कृत्वा पुन्नामनक्षत्रे पात्रमन्थः स्वस्य च मध्ये स्थापयित्वौ-दुम्बरसमिद्भिरग्निं प्रज्वाल्यौदुम्बरस्रुवेणाज्यहोमं कुर्य्यात्। रेतसे इत्यारभ्य लेकैकाहुत्यनन्तरं स्रुवावलिप्ताज्यस्य चमसस्थमन्थद्रव्ये पात-नानन्तरमपरमन्यन्या मन्थनं कार्य्यम् ततश्चमसस्थद्रव्यस्य भ्रमदसीत्यादि

मधु द्यौरस्तु नः पिता भुवः स्वाहा। धियो यो नः प्रचोदयात् मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति। सर्व्वां च सावित्रीमन्वाह सर्व्वाश्च मधुमतीरहमेवेदꣳ सर्व्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्छिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति।

तꣳ हैतमुद्दालक आरुणिर्व्वाजसनेयाय याज्ञवल्क्यायान्तेवासिनउक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति।

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति।

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति।

मन्त्रेण स्पर्शः आममिति मन्त्रेण सपात्रस्य हस्ते ग्रहणम्। ततः पात्रस्थमन्थद्रव्यं चतुर्धा विभज्य गायत्र्याः मधुमत्याः व्याहृत्याश्चैकैकपादेनैकैकभागं समस्ताभिस्ताभिस्तुर्थं तथा भक्षयेद्यथा निश्शेषता स्यात्। ततः सर्व्वं पात्रं प्रक्षाल्य तूष्णीं पिबेत्। ततो हस्तौ प्रक्षाल्य शुद्धोदकमाचम्याग्नेः पृष्ठदेशं गत्वा पूर्व्वशिराः शयीत ततः प्रभातकाले दिशामिति मन्त्रेणादित्योपस्थानं कृत्वा येन मार्गेण गतस्तेनैवागत्याग्नेरभि-

एतमु हैव चूलोभागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनꣳशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ।

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनꣳशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ।

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनꣳशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने ब्रूयात् ।

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुवश्चौदुम्बरश्चमसश्चौदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान्दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति । वृ, ८।३ । १—१३ ।

४० । एषां वै भूतानां पृथिवी रसः पृथिव्या

मुखमुपविश्य तं हैतमुद्दालक इत्यारभ्य तमेतं नापुत्रायेत्यतः प्राक् ये वंशमन्त्रास्तान् जपेत् । भक्षणाय संस्कृतं मन्थं शुष्कवृक्षे यदि निषिञ्चेत्तर्हि शाखापत्रादि भवेत्तत्रेति मन्थकर्मप्रशंसोक्तिर्वंशमन्त्रेषु । अथ विद्याया दानस्य षट् सम्प्रदानानि शिष्यः श्रोत्रियो मेधावी धनदायी प्रियपुत्रो विद्यया विद्याया दाता चेति । तत्र मन्थविद्यायास्तु शिष्यपुत्रावेव सम्प्रदाने ।”

४० । पुत्रार्थमनुष्ठानमाह एषामित्यारभ्य यावदध्यायपरिसमाप्तिम् । अत्रेदं विवेच्यम् । न ह्यत्र वैदिककाले यथा वीरकुलवर्द्धनाय

आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः।

स ह प्रजापतिरीचाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳससृजे ताꣳ सृष्ट्वाध उपास्त तस्मात्-स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत्।

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधो-पहासं चरत्यासाꣳस्त्रीणाꣳसुकृतं वृङ्क्तेऽथ य इदमविद्वा-नधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते।

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान् नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान् कुमार-हारित आह बहवो मर्य्या ब्राह्मणायना निरिन्द्रिया विसुकृ-तोऽस्माँल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं चर-न्तीति बहु वा इदꣳसुप्तस्य वा जाग्रतो वा रेतः स्कन्दति।

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवी-मस्कान्त्सीद्यदोषधीरप्यसरद्यदपः इदमहं तद्रेत आददे

पुत्रैषणासीत् तथेति मन्तव्यम्। 'वेदोऽसीति' पुत्रस्य नामकरणं दर्श-यति ब्रह्मविज्ञानानवच्छेदमभिकाङ्क्ष्य वेदान्तिकर्षय आत्मसदृशपुत्रजन्म-समुत्सुका आसन्। सुतरामेषणाजनितदोषो न तानप्राक्षीत्; अन्यथा शुकादीनां मोक्षनिरतानां प्रव्रजनेनात्मयोगसिद्धानन्तरं पुत्रोत्-

पुनर्म्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात्।

अथ यद्युदक आत्मानं पश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशोद्रविणऌ सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत।

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मैनैव दद्यात्काममेनां यष्ट्या वा पाणिनावोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति।

सा चेदस्मै दद्यादिन्द्रियेण ते यशसायश आदधामीति यशस्विनावेव भवतः।

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखऌ संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्संभवसि हृदयादधि जायसे स त्वमङ्ग कषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति।

अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय

पादनप्रवृत्तिर्जातुचिन्नोदीयात्। अतएव "स्वाध्यायमधीयानो धार्म्मिकान् विदधत्" इति श्रुतिचोदना। ये पुनर्विशुद्धदाम्पत्ययोगस्य मर्म्मानभिज्ञाः पशुधर्म्मनिरता निन्दिताचारा भवन्ति ते धिक्कारभाजः, तथाहि श्रुतिः—"बहवोमर्य्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति" इति। मर्य्याः मरणधर्म्मिणः, ब्राह्मणायनाः ब्रह्मबन्धवः जातिमात्रोपजीविनः। न हि वेदान्ते यज्ञदृष्टिं विना व्यवाया-

मुखेन मुखꣳ संधायाभिप्राण्याऽपान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ।

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ।

अथ यस्य जायायै जारः स्यात्तं चेद् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति । स वा एष निरिन्द्रियो विमुक्तोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवं विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ।

चरणं दृश्यते । न स पुनरमन्त्रकोऽत्र विधीयते । अतएव हि प्रत्यङ्गं मन्त्रविधानम् । श्रुतिगतानां मन्त्राणाञ्चार्थानुसन्धानमतिगोप्यत्वादध्येतॄन् प्रति न्यस्य मन्त्रमेकतं तत्त्वोद्घाटकं व्याख्यास्यामः—

"अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहम् ।
सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ॥
तावेहि संरभावहै सह रेतो दधावहै ।
पुंसे पुत्राय वित्तये ॥" इति ।

अहम् अमः प्राणः—पुत्तिकाशरीरमारभ्य त्रिलोकव्यापी परोक्षब्रह्माख्यः जगत्प्राणः, अतएव परब्रह्मणो विलासभूमिरहम् ( ८।८

अथ यस्य जाया मार्तवं विन्देत् त्र्यहं कंसेन पिबे-दहतवासा नैनां वृषलो न वृषल्युपहन्यात् त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत्।

स य इच्छेत् पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्व्व-मायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीया-तामीश्वरौ जनयितवै।

अथ य इच्छेत् पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्व्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै।

अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्व्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै।

[२४४।४५पृ] ); त्वं सा वाक्—सर्व्वस्य प्रकाशभूः वाचारम्भणत्वात् सर्व्वस्य, अतएव चिच्छक्तेरवयवस्त्वम्। यतः सा त्वमसि, अहम् अमः, अतः उभयोरेकत्वेन साम अहम् अस्मि, त्वम् ऋक्—चिच्छक्त्यालिङ्गित-परब्रह्मणः शास्त्रयोनित्वात् सर्व्वविज्ञानाधारत्वमुभयोः "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्व्वेदः सामवेदः" इति श्रुतेः। अहं द्यौः त्वं पृथिवी—अतः प्राणात् प्राणस्य विश्वात्मकसुतस्य जन्म ( ६।८ [२५०पृ] )। शेषः सुगमः। वित्तये—विज्ञानाय तस्याविच्छेदाय। सर्व्वत्र वेदान्ते पुत्राय शिष्याय वा प्रियतमाय पुत्रस्थानीयाय विज्ञान-दानव्यवस्था गार्हस्थ्येनोपसंहारश्च वेदान्तविज्ञानस्य। दृष्टिःपुनराधु-निकामान्त्वत्र,—

शय्यारोहोऽत्र दम्पत्योः सविचौक्रीड़संश्रयः।
दैवशिशुद्वयक्रीड़ा वरादिसृष्टिरेतयोः॥

अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्व्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताभीश्वरौ जनयितवै।

अथ य इच्छेत् पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्व्वान्वेदाननुब्रुवीत सर्व्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्ष्णेन वाऽर्षभेण वा।

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येत-

उरःसंश्लेषणञ्चैतद्रसमूर्त्तेस्तु वक्षसः।
परिष्वङ्गस्तयोस्तेन परिष्वक्तस्य चात्मनः॥
तेनैकता सुखेनाङ्ग सुखनिष्पत्तिरेव हि।
एवानुभूतिरद्वैया दाम्पत्ययोगसिद्धये॥

प्रथममन्त्रद्वयमस्य नैत्यिकं, त्रितयमन्यत् शारीरशास्त्रविधि अव- धानेनानुष्ठेयम्। साधारणनियमः—"त्रिभिस्त्रिभिरहोभिर्हि समेयात् प्रमदां नरः। सर्व्वेष्वृतुषु घर्म्मे तु पक्षात् पक्षाद्व्रजेद्बुधः॥" इति सुश्रुतः। मासिकरजःप्रवृत्तेः प्राक् पश्चाच्च गर्भसञ्चारदर्शनात् तद्गणनान्तःपाततयैवायं साधारणनियमः। विशेषनियमस्तु रोगादिजनित विघ्नोत्पत्तेः। वेदान्तसिद्धोऽप्ययं तत्र निद्रागममभावस्य ब्रह्मचर्य्यान्तःपातात् (११।६)। संवत्सरे मासत्रयं जाग्रतौ शिष्टेषु निद्रिता कामप्रवृत्तिरितरप्राणिनामिति नियमोऽयं स्वभावप्रतिष्ठः। पश्चावस्थानगतायां स्त्रीपुंसोः प्रक्लिष्टोन्मताऽवश्यम्भाविनी। सविधौ न केवलं सुतानां प्रेमसम्पत्तेरपि। सिद्ध्यति सर्व्वमेतत् साक्षात्सर्व्वकारणकारणज्ञानेन तत्तत् तत्र तत्र तत्पथारूढीकरणेन। आत्मन इत्येकवचनं द्वयो-

स्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां संजायां पत्या सहेति।

अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽहं सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वं तावेहि संरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति।

अथास्या ऊरू विहापयति विजिहीथां द्यावा पृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ।

हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ तं ते गर्भं हवामहे दशमे मासि सूतये यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां यथा गर्भमेवं गर्भं दधामि तेऽसाविति।

रात्मनोः प्राग्नालिङ्गनेनैकत्वात्। एव हि इति निर्द्धारणेन "समानस्य खेदविगमो गम्यायामगम्यायाञ्च" इति भाष्यकारनिवचनेनायोगिनां खेदनिवृत्तिर्योगिनान्तु सुखनिष्पत्तिः सान्द्रानन्दभगवत्प्रेमाविर्भाववशादिति भेदो बोध्यः।

"अथ यामिच्छेत्र गर्भं दधीत" इत्येतत् "सा चेदस्मै न दद्यात्" इत्यकामामुद्दिश्य। नैतद्भगवन्नियमविरोधि, सुतरां श्रुतेरस्या नाश्रुतित्वम्। नियमः पुनः—पेशियाद्दमणालीप्रासस्य पेशिवृत्तस्य वीज-

सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीᳬ समिङ्गयति सर्व्वतः। एवा ते गर्भ एजतु सहावैतु जरायुणा। इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः। तमिन्द्र निर्जहि गर्भेण सावराᳬ सहेति।

जातेऽग्निमुपसमाधायाङ्क आधाय कᳬसे पृषदाज्यᳬ संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे अस्योपसन्द्यां माच्छैत्सीत्प्रजया च पशुभिश्च स्वाहा मयि प्राणाᳬस्त्वयि मनसा जुहोमि स्वाहा यत्कर्म्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् अग्निष्टत्स्विष्टकृद्विद्वांत्स्विष्टᳬ सुहुतं करोतु नः स्वाहेति।

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधिमधुघृतᳬ संनीयानन्तर्हितेन जातरूपेण प्राशयति भूस्तेदधामि भूवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्व्वं त्वयि दधामीति।

अथास्य नाम करोति वेदोऽसीति तदस्य तद् गुह्यमेव नाम भवति।

जीवाणुप्रवेशानुकूलस्याकाशावस्थायां निष्क्रियत्वे अन्यदा च घनावरणत्वे तत्प्रवेशप्रतिहतत्वात् निष्फलत्वम्। ध्वजपतनाक्रान्तासु गर्भसञ्चारदर्शनात् स्त्रीपुंसोः स्पर्शादिसमुत्थहर्षोल्पादिक्यप्रमाणेन न तु क्रियानिष्पत्तिकालभाविसर्व्वाङ्गाक्षेपेण पेशिवृत्तस्य बीजजीवाणुप्रवेशे दत्तमार्गस्य मन्दक्रियत्वे मार्द्दवगुणोद्भावकत्वादुपादानानां कन्या; अधिकक्रियत्वे संहननशालित्वगुणोद्भावकत्वादुपादानानां पुत्रः। यैः पुनः पेशिवृत्तस्याकुञ्चनप्रसारणाभ्यां पुत्रकन्याजन्मेति निर्णीयते, न तैरयं

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति। यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति।

अथास्य मातरमभिमन्त्रयते इलासि मैत्रावरुणी वीरे वीरमजीजनत् सा त्वं वीरवती भवया ऽस्मान्वीरवतो करदिति तं वा एतमाहुरति पिता वतोभूरति पितामहोवताभूः परमां वत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवं विदो ब्राह्मणस्य पुत्रो जायत इति।

बृ, ८।४। १—१८।

४१। युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः।
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत्॥

नियमो निरुध्यते; निष्क्रियपेशिवृत्तस्याल्पक्रियत्वे प्रसारणमधिकक्रियत्वे पुनराक्षेपादाकुञ्चनमिति हेतोः। भोज्यादिकं सर्व्वं कारणत्वेनास्मिन्नवाप्तं भवति। बाहुल्येन रत्यङ्गानामुपदेशस्तच्छास्त्रे नियमस्यास्यानुकूल्याय।

४१। विविधान्यनुष्ठानानि ब्रह्मदर्शनानुकूलान्यभिधाय साक्षात्तत्साधनं ध्यानं वक्तुमारभते। "स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्। ध्याननिर्म्मथनाभ्यासात् देवं पश्येन्निगूढ़वत्॥" इत्यतीताध्याये सर्व्वतश्चित्तं विनिवर्त्त्य स्वदेहे तस्य धारणमुक्तम्। केन वा तत् सिद्धं भवति तदेवाह युञ्जान इति। सविता—"धियोयोनः प्रचोदयात्" इति धीप्रचोदयिता तत्त्वाय ब्रह्मज्ञानाय प्रथमं मनः युञ्जानः तत्र प्रवर्त्तयामः अग्निं ज्योतिः तदधिष्ठितं ज्ञानञ्च निचाय्य अवगम्य पृथिव्याः अधि अस्मिन् शरीरे धियः बुद्धिवृत्तीः आभरत् आहरत्—तत्र साक्षात्सम्बन्धेन तत्त्वावगमाय।

युक्तेन मनसा वयं देवस्य सवितुः सवे।
सुवर्गेयाय शक्त्यै ।
युक्त्वाय मनसा देवान् सुवर्य्यतो धिया दिवम्।
वृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥

युञ्जते मन उत युञ्जते धियो
विप्रा विप्रस्य वृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इत्-
मही देवस्य सवितुः परिष्टुतिः ॥
युजे वां ब्रह्म पूर्व्यं नमोभि-
र्वि श्लोका यन्ति पथ्येव सूराः।

युक्तेनेति। एवं युक्तेन योगयुक्तेन मनसा वयं सुवर्गेयाय स्वर्गप्राप्तिहेतुभूताय ध्यानाय शक्त्यै सामर्थ्याय तन्निमित्तं देवस्य सवितुः सवे अनुज्ञायां वर्त्तामहे।

युक्त्वायेति। सुवः स्वर्गं यतः गच्छतः—तदभिमुखान्—देवान् करणानि मनसा सह युक्त्वाय—छान्दसं—युक्त्वा—तेन सह तेषामेकत्वं संसाध्य—धिया सम्यग्दर्शनेन दिवं द्योतनशीलं वृहत् महत् ज्योतिः करिष्यतः आविष्करिष्यतः तान् देवान् करणानि सविता प्रेरयिता प्रसुवाति—लेट्—प्रसुवतु—तदाविष्करणाय प्रेरयतु।

युञ्जत इति। विप्राः मेधाविनः मनः युञ्जते समाहितं कुर्व्वन्ति, उत धियः इतराणि करणानि युञ्जते। तैः विप्रस्य—विपूर्व्वः प्रा पूरणे कः, विशेषेण पूरयति साधकानामभीष्टम्—अभीष्टपूरयितुः, वृहतः महतः विपश्चितः सर्व्वज्ञस्य, देवस्य सवितुः मही महती परिष्टुतिः कर्त्तव्या। स पुनः होत्राः वाचः यज्ञान् वा विदधे प्रवर्त्तितवान्, अतः वयुनावित् प्रज्ञावित् सर्व्वज्ञानात् साक्षिभूतः एकः अद्वितीयः इत् एव।

युजे इति। दशममण्डलस्य त्रयोदशसूक्ते प्रथमा ऋगियम्।

शृण्वन्तु विश्वे अमृतस्य पुत्रा
आ ये धामानि दिव्यानि तस्थुः ॥

अग्निर्यत्राभिमथ्यते वायुर्यत्राभियुज्यते ।
सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः ॥

सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्व्यम् ।
तत्र योनिं कृणवसे न हि ते पूर्त्तमक्षिपत् ॥

अस्या देवते हविर्धाने। ब्रह्मपूर्व्व्यं मन्त्रोच्चारणपूर्व्वकं वां हविर्धाने युजे योजयामि इत्याद्यस्या व्याख्यानम् तत्र। अत्र त्वन्यथाकृतं तत् श्वेताश्वतरेण वेदान्तवेद्ये परात्मनि तस्या नियोगात्। नमोभिः नमस्कारस्तुतिप्रणिधानादिभिः वां युवयोः नरनार्य्योः कारणभूतं पूर्व्व्यं चिरन्तनं ब्रह्म युजे आनुकूल्ये योजयामि—समादधे इति भाष्यकारः। इवार्थ एव। सुराः पण्डिताः यथा पथि सन्मार्गे वियन्ति जीवनशेषं कुर्व्वन्ति, तथा श्लोकाः भगवद्यशोगीतानि मम सन्मार्गे वियन्तु व्ययिताः भवन्तु—भगवद्यशोवर्णनं हित्वा नान्यत्र प्रसरन्तु। ये दिव्यानि धामानि आतस्थुः अधितिष्ठन्ति विश्वे सर्व्वे ते अमृतस्य परब्रह्मणः पुत्राः आत्मजाः तान् शृण्वन्तु—तैः सहैकहृदयत्वेनैव स्तुतिरिति श्रवणप्रार्थना।

प्रेरयितुः प्रेरणां विना न जातु परमात्मनि मनसो गतिर्भवतीति दर्शयति वाह्यानुष्ठाननिरतत्वं तस्योदाहृत्य अग्निरिति। यत्र अग्निः अभिमथ्यते यज्ञार्थं मन्थनेनाभिज्वाल्यते, यत्र वायुः प्रवर्ग्यादौ अभियुज्यते पवित्रेरितः शब्दाभिव्यक्तिं करोति, यत्र सोमः अतिरिच्यते दशापवित्रात् पूर्य्यमाणः, तत्र क्रतौ मनः सञ्जायते प्रवृत्तिमत् भवति।

सवित्रेति। सवित्रा प्रेरयित्रा प्रसवेन प्रेरणेन पूर्व्व्यं चिरन्तनं ब्रह्म जुषेत सेवेत। किन्तेन सेवनविधिपालनेन? हि यस्मात् सेवनफलवशात् ते तव पूर्त्तम् आचरितं न अक्षिपत् न त्वां सन्मार्गात्

त्रिरुन्नतं स्थाप्य समं शरीरं
हृदीन्द्रियाणि मनसा सन्निवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान्
स्रोतांसि सर्व्वाणि भयावहानि ॥
प्राणान् प्रपीड्येह संयुक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान् मनो धारयेताप्रमत्तः ॥
समे शुचौ शर्करावह्निवालुका-
विवर्ज्जिते शब्दजलाश्रयादिभिः ।

भ्रंशयत् । अतस्ततोऽधिकफललाभाय तत्र ब्रह्मणि त्वं योनिं वसतिं कृणवसे कुरुष्व ।

अधुना योगरीतिं वक्तुमुपक्रमते त्रिरुन्नतमिति । त्रीणि उरोग्रीव-शिरांसि उन्नतानि यस्मिन् शरीरे तत् त्रिरुन्नतं शरीरं समं समभावेन स्थाप्य संस्थाप्य, मनसा सह इन्द्रियाणि चक्षुरादीनि अन्तर्मुखतया हृदि सन्निवेश्य विषयतो विनिवर्त्य सूक्ष्माकारेण तत्र सन्धार्य विद्वान् योगनिरतः ब्रह्मोडुपेन ब्रह्मप्लवेन ब्रह्मावलम्बनेन सर्व्वाणि भयावहानि स्रोतांसि वहिर्मुखतासाधकेन्द्रियप्रावल्यादीनि प्रतरेत अतिक्रमेत् ।

प्राणानिति । इह योगासने संयुक्तचेष्टः संयतेन्द्रियेहः जितासनः स प्राणान् प्रपीड्य श्वासप्रश्वासयोः गतिं विच्छिद्य क्षीणे प्राणे शक्ति-क्षान्त्या तनुत्वं प्राप्ते नासिकया उच्छ्वसीत श्वासम् उत्सृजेत् न तु मुखेन । विद्वान् योगज्ञः अप्रमत्तः सन् दुष्टाश्वयुक्तम् एनं वाहं रथम् इव मनः धारयेत स्ववशे स्थापयेत् ।

समइति । समे निम्नोन्नतरहिते, शुचौ शुद्धे, शर्करावह्निवालुका-विवर्ज्जिते तथा शब्दजलाश्रयादिभिः— शर्करा क्षुद्रोपलः, शब्दः जन-

मनोऽनुकूले न तु चक्षुपीड़ने
गुहानिवाताश्रयणे प्रयोजयेत् ॥
नीहारधूमार्कानिलानलानां
खद्योतविद्युत्-स्फटिक-शशिनाम् ।
एतानि रूपाणि पुरःसराणि
ब्रह्मण्यभिव्यक्तिकराणि योगे ॥

कोलाहलः, जलं जलार्थिभिर्नित्यमुपद्रुतं, आश्रयः आश्रयार्थिभिः सङ्कुलः, इत्यादिभिः—वर्ज्जिते, मनोऽनुकूले मनसः स्थैर्य्यानुकूले मनोरमे, न तु चक्षुपीड़ने चक्षुःपीड़ने—छान्दसो विसर्गलोपः—चक्षुःपीड़ाकरे—"प्रतिपाद्याभिमुखे"—इति भाष्यकारः—एवम्भूते गुहानिवाताश्रयणे गुहायां निवाते वायुप्रवाहशून्ये आश्रयणे च विजनप्रदेशे प्रयोजयेत् प्रयुञ्जीत चित्तं परमात्मनि।

एवं प्राणायामेन कानि कानि दृश्यानि दृक्पथगतानि भवन्ति तान्युच्यन्ते नीहारेति। नीहारादीनां रूपाणि तत्तद्दृश्यानि योगे क्रियमाणे ब्रह्मणि आविष्क्रियमाणे निमित्ते पुरःसराणि अग्रगामीनि। "तच्छुभ्रं ज्योतिषां ज्योतिः" (४।८) इति कथनात् न पूर्व्वोक्तानि दृश्यानि ब्रह्मरूपाणीति मन्तव्यम्। तत्तद्दृश्यानि वाताधिक्यवशादुद्यन्ति, अतएवोक्तं महाभारते याज्ञवल्क्येन जनकं प्रति—"प्राणायामो हि सगुणः निर्गुणं धारयेन्मनः। यद्यद्दृश्यति मुञ्चन् वै प्राणान् मैथिलसत्तम। वाताधिक्यं भवत्येव तस्मात्तन्न समाचरेत् ॥" (शान्तिप, ३१६अ, १०श्लो)—प्राणान् श्वासप्रश्वासान् मुञ्चन् यत् यत् दृश्यं नीहारादिकं ऋच्छति गच्छति प्राप्नोति तत्र तत्र वाताधिक्यं भवति वातविकारहेतोस्तत्तदुद्भवतीति फलितार्थः। अतः तत् श्वासप्रश्वासनियमनं न समाचरेत् इति। आधुनिकैरप्येतत् प्राणायामवैगुण्यं प्रत्यक्षीकृतम्। "निशायाः प्रथमे यामे" इत्यादिभिस्तत्रैव स स्वाभाविकं योगमाह।

पृथ्व्यप्तेजोऽनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते।
न तस्य रोगो न जरा न दुःखं
प्राप्तस्य योगाग्निमयं शरीरम्॥

लघुत्वमारोग्यमलोलुपत्वं
वर्णप्रसादः स्वरसौष्ठवञ्च।
गन्धः शुभो मूत्र पुरीषमल्पं
योगप्रवृत्तिं प्रथमां वदन्ति॥

यथैव विम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत् सुधातम्।
तद्वात्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः॥

अनन्तरं भूतजयमाह पृथ्व्यबिति। पृथ्व्यप्तेजोऽनिलखे चित्यप् तेजोमरुद्व्योमप्रसिद्धे पञ्चभूते समुत्थिते तत्तत्स्वरूपदर्शननिष्पन्ने पञ्चात्मके योगगुणे गन्धादिस्वरूपदर्शनरूपे प्रवृत्ते योगाग्निमयं शरीरं प्राप्तस्य तस्य योगिनः न रोगः न जरा न दुःखं भवति—भूतजयात् भूतोत्थानां तेषामभिभवः।

योगस्य प्रथमप्रवृत्तौ किं भवति तदाह लघुत्वमिति। स्पष्टम्।

आत्मतत्त्वदर्शनमाह यथैवेति। मृदया मृदादिभिः उपलिप्तं विम्बं सौवर्णं राजतं वा सुधातं सुधौतं यथा तेजोमयं सत् भ्राजते दीप्तिमत् भवति, तत् वा तत् इव आत्मतत्त्वं प्रसमीक्ष्य दृष्ट्वा देही जीवः एकः—प्रकृत्यादीनामात्मनि लये अद्वितीयः—कृतार्थः सिद्धमनोरथः वीतशोकः भवते भवति।

यदात्मतत्त्वेन तु ब्रह्मतत्त्वं
दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्व्वतत्त्वैर्विशुद्धं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥

श्वेत २।१—१५ ।

४२ । अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते ।
रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितोवधी-
र्हविष्मन्तः सदमि त्वा हवामहे ॥

श्वे ४ । २१।२२ ।

केवलमात्मतत्त्वदर्शनेन न कृतार्थता किन्त्वात्मनि परमात्मदर्शनेनैवेत्याह यदेति । युक्तः योगी यदा दीपोपमेन आत्मतत्त्वेन ब्रह्मतत्त्वं प्रपश्येत् प्रत्यक्षं कुर्य्यात्, तदा सर्व्वतत्त्वैः प्रकृतितत्कार्य्यैः विशुद्धम् अस्पृष्टम्, अजं जन्मरहितं स्वयम्भूं, ध्रुवम् अप्रच्युतस्वरूपं देवं ज्ञात्वा सर्व्वपाशैः सर्व्वबन्धैः मुच्यते ।

४२ । प्रार्थनाप्राधान्येन विद्योपसंहारः क्रियते, अजात इति । अजातः जन्मादिविरहितः इति हेतोः कश्चित्—यः कोऽपि जीवः—भीरुः जन्मजरादिभ्यः भीतः त्वाम् एवं प्रतिपद्यते शरणं गच्छति । एवमित्युदाहरति—हे रुद्र क्लेशापहारक, यत् ते तव दक्षिणम् अनुकूलं भक्तानुग्राहकं मुखं तेन मां नित्यं पाहि रक्ष ।

विशेषप्रार्थनामाह । हे रुद्र, नः अस्माकं तोके पुत्रे तनये पौत्रे

चक्रिभिः" इत्याद्युक्त्यनन्तरं "मुनिर्न भामोद भवति गुरुदीक्षावततमाः" इति कृतार्थम्यता जातुचिदन्यथा न सम्भवेत्। "तेन व्यक्तेन"—तेन विस्पष्टेन भीषिणेत्यत्र धर्म्माविरुद्धोभग एव भगवत्प्रेरित इति—"धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" (गी ७।११) इत्यादिप्रमाणात्। योऽसावभिलाषो धर्म्माविरुद्धः स एव स इति तदनुमोदनात्तत्वोक्तम्। यत्र भगवतानुमोदनं तत्र सोऽस्मीति मत्वाऽऽचरणं मिथ्याचारएव। भगवदनुमोदितानि कर्म्माणि सदापूरितानीति तेषामनुष्ठाने न तज्जनितदोषस्य सम्भावनेति 'न कर्म्म लिप्यते नरे' इत्युक्तम्। तत्पूर्व्वत्वं विना मोऽदेवि शाश्वतात् वा कर्म्मासक्तो समाने इति मतमनुमोदितमननुमोदितमिति भेदेन तयोर्भेदस्यावश्यम्भावित्वादकिञ्चित्करम्। अननुमोदितानिषव्यानुमोदितस्यानुष्ठानं कर्म्मदोषपरिहाराय भवतीति सर्व्वं समञ्जसम्।

२। वेदान्तशास्त्रेन पुनः सर्व्वस्यैव वेदविहितानुष्ठानादीन् मिथ्यात्वेन परिहायात्मतत्त्वमुपदिश्यते किन्तर्हि तत्रैव तन्निवेश्यत इति पूर्व्वमुद्दिष्टम् (१।१)। मधुब्राह्मणे पुनर्ब्रह्मजीवात्मनामिथो परस्परसम्बन्धं प्रदर्श्य ब्रह्मणि सर्व्वैक्यं विदधाति (२।५?)। अत्र सर्व्वैक्योपकारिसाधनान्तरमुपदिश्य सुलभमार्गं प्रदर्शयति श्रुतिः कृपालुतया। न हि प्रकृतौ किञ्चिदस्ति यत्र परैव सम्बद्धम्। ये पुनः प्रकृतिमवमत्य परैव योगमभिकाङ्क्षन्ति, न केवलं तेषां विघ्नबाहुल्यक्लिष्टता, किन्तर्हि पदेपदे योगभंग इत्यस्य न दृष्टान्तैरल्पम्। न यथा स्वात्माद्यत्रोऽन्तरायस्तथैव वेदान्ते सर्व्वत्र प्रकृतिमवलम्ब्यैव साधनानुष्ठानानि। प्रकृतिस्तदैश्वर्य्यञ्चेति विभजनात् प्रकृतिः प्रकृष्टा क्रियाशक्तिः तदैश्वर्य्यं पुनर्मुहुर्मुहुराविर्भावतिरोभावस्वभावकं तस्या विविधवैचित्र्यं, येन च वैचित्र्येण जीवस्य भावावेशात् बन्धनं मोचनञ्च दृष्टिभेदादवश्यम्भावि। यदा हि प्रकृतिं परैव विच्छिन्नामेतज्जगद्रूपेण पश्यति जनः, तदा साऽज्ञानकारणतया (१।४) बन्धनाय भवति मोहकरविविधवैचित्र्ययोगात् तस्य मोहोत्पादनेन। यदा पुनः कल्याणतमस्य परस्यैव प्रकृष्टक्रियाशक्तित्वेन सा दृश्यते, तस्या वैचित्र्यं पुनरेकस्यैव कल्याणगुणस्य विविधविकाशत्वेन, तदा तेन परैवाविच्छेदयोगमुत्पाद्य मोचनाय भवति सा तद्वैचित्र्यञ्च। इयं प्रकृष्टक्रियाशक्तिः मायाशक्तिरेवेति वक्ष्यामस्तां तस्याः प्राधान्यम्।

३—१०। तृतीये (३) भजनीयत्वेन परमेवोपस्थाप्यते। परं ब्रह्मैवोपनिषदः प्रतिपाद्यम्। न हि पुनर्जातु चित्तसमाधानं विहितं भगवदनुमोदितकर्म्मानुष्ठानञ्च विना कषायकलुषितत्वमपैति। तदनपाये न तत्त्वस्फूर्त्तिः। अतस्या तत्त्वस्फूर्त्तिरोपनिषदज्ञानमवश्यम्भाविताया तिष्ठति। एवञ्च चित्तसमाधानादेव तत्त्वस्फूर्त्तिः, तत्त्वस्फूर्त्तौ चौपनिषदज्ञानस्याभ्युदयः, तेन च कृतार्थता। यद्युपनिषदेव परात्मज्ञानाधानं किमङ्गादिभिः? तैर्विना सा विकलाङ्गी, अतस्त एव तस्याः

श्रवणवर्णनम्। यथैव विमुर्णमर्थेन ? यथादिषु वर्णाशादिकमव्याप्ति स्वरूपादिकमारोप्यस्य स्थापि। यत् स्थापि तत् सत्यं, तदेवाश्रयभूतमत्ता:। सुतरां न सा वैरागुपैव्यते, वैतुपेक्षित स्वस्वरूपतो हीयेत। चतुर्थे (४) ब्रह्मविदितं कवचं तदधीनतया निर्वीर्याविकारी सन् मुक्तो भवति साधक इति संक्षेपः। पञ्चमे (५) श्रवणमात्रम् योगाकाङ्क्षिणा निरन्तरमप्रमत्ततया भवितव्यमन्यथा योगाद् भ्रंशोऽपरिहार्य इत्युक्त्वा योगावलम्बनमुच्यते वाञ्छितस्वरूपावधीत्ये सूत्राणाकग्रहणेन। "शान्तं शिवमद्वैतम्" इति तुरीये ब्रह्मणि शिवस्वरूपावधारणात् वाचं न तेन स्वरूपेणोपलब्धतायाममखिलं धारणार्थं गृह्णाति योगार्थीति जिज्ञासा स्वभावेव भाति ; यतोऽखिलं कस्यापि वस्तुनः, वस्तु च न स्वरूपहीनं भवितुमर्हति। ब्रह्मणो ह्यत्वं सर्वान्तर्भावकत्वमेव पश्यन्ती "तं यदन्तरा तद्ब्रह्म" इत्याह श्रुतिः। स्वरूपात् पृथक्कृत्याखिलत्वग्रहणं शून्यमेव न तु वस्तु। अयं हि विवेच्यम्—शिवस्वरूपं वस्तुगतं न वस्तुतो भिन्नमथापि न तत् प्रथमं प्रतिभाति सत्यावधारणकाले। नामादिभिरभिव्यक्तस्येन्द्रियग्राह्यस्य विषयस्य गुणसम्बलितस्यैव बुद्धिस्था भवति, न पुनस्तद्रूपायत्तस्य। सर्वेषां विषयजातं प्रत्याहारेण तिरोहितमप्यस्तीति ज्ञानं नापैति। अतएव तदेवाखिलत्वमिति निर्णयो न वितर्कविषयः। अखिलत्वस्यास्यानन्तत्वं सहजोपलभ्यमिति तदन्तर्गततया जीवात्मा पूर्णो भासते, सुतरां सा सत्ता ब्रह्मसत्तेत्यवधारणं योगस्य प्रथमभूमावुपलभ्यते। ततः जीवस्य कल्पस्विदाराद्वर्तेति शिवस्वरूपोपलब्धिः। यत् पुनः पञ्चाङ्गापि तस्यैवैतदद्गुणीयमिति श्रुतिर्यथायथं योगावलम्बनमुपदिशति। ब्रह्मदर्शनेन भवति हृदयग्रन्थिच्छेदनं ; हृदयग्रन्थिभेदनानन्तरमेव सर्वतः सर्वस्मिन् कल्याणतमरूपप्रत्यक्षीकरणात् विषयसम्बन्धेऽपि न योगापायः। षष्ठे (६) कर्मानुष्ठानस्य विप्लीपद्युतत्वमस्थायित्वञ्च प्रदर्श्य ; सप्तमे (७) प्रकृतिविज्ञानतया तदेवोपलभ्यते येन हि विज्ञायतेऽक्षरसत्यपुरुषः। परापरप्रकृतिपरिच्छिन्नो हि पुरुषः, सुतरां शिवस्वरूपप्रभाऽस्य। अष्टमे (८) पुनरुपासनं तदवलम्बनं तेन चात्मनो ब्रह्मयोगापादनं संक्षेपेणोक्तम्। तस्योपव्याख्यानं भिन्नभिन्नवेदान्तव्याख्यातॄणां मार्गानुसारि विस्तारेण तत्तद्ग्रन्थपूर्णाविव द्रष्टव्यम्। अत्र सर्वोपदानावलम्बनस्य तत्त्वं संक्षिप्योच्यते "प्रणवो धनुः"—प्रणवश्चोङ्कारः। अस्य प्रथममात्राऽकारो वैश्वानरः ; द्वितीयमात्रोकारस्तैजसः ; तृतीयमात्रा मकारः प्राज्ञः ( १।५[६-७] )। प्रथममात्रायां "रूपं रूपं प्रतिरूपो बभूव" ( ५।९ ) इत्यस्याः श्रुतेः प्रयोगः ; द्वितीयमात्रायाम् "अयमात्मा ब्रह्म सर्वानुभूः" इत्यस्याः (२।२१) ; तृतीयमात्रायां "सर्वं खल्विदं ब्रह्म तज्जलानिति" (२।१२) इत्यस्याः। एवं हि विहितमुपास्त्रानैविध्यमत्र। "जीव-मुख्यप्राण-लिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् (१।१।३१) इत्यत्र जीवेन ज्ञानशक्तिः, प्राणेन क्रियाशक्तिः, लिङ्गं न ब्रह्मस्वरूपमुपासात्रयार्थं गृह्यते। क्रियाशक्त्या विश्वात्मना, ज्ञानशक्त्या मनोमायाग्नितैजसत्व, सर्वा-

पानन्दस्येति सच्चिदानन्दस्य परात्मन एवं वक्तव्यमिति न कश्चिद्विरोधः। "अमात्रश्चतुर्थः" इत्यत्र "अहं ब्रह्मास्मि" (८।१२) इत्यस्याः प्रयोगः। यत्र एकात्मप्रत्ययेन शिवस्वरूपेण चोपासाचैविध्य-सम्पूर्णत्वमस्य सम्भवति। स्वरूपोपासनाधारामाधुनिकैः कथं वा "इदं ब्राह्मणमन्नम्" इत्याद्यवस्थनेनोपासनं विहितं प्रोक्तं तद्वीतासमन्वयमध्ये। विपदीभविष्यत्येतत् सर्व्वं तत्रस्थद्भ्राम्। नवमे (९) भगवद्गुणवर्णेन तदनुगतोपासीने च संसिद्धिरुच्यते। दशमे (१०) मानपरत्वाय ब्रह्मविद्या-प्रवर्त्तयित्री भक्तिशुल्याय ब्रह्मविज्ञानं यच्छेदित्युपसंहारः।

११—२०। एकादशे (११) प्रदर्श्यते क्षुद्रं वा महत् वा किमपि नानुष्ठेयं तत्र ब्रह्मदर्शनोप-योगिविषयाणां सन्निवेशं विना। आरभ्यते हि जीवनं वेदाध्ययनेन। तत्र यदि ब्रह्मदर्शनानु-कूलं कौशलं नावलम्ब्यते स्यात् पुनस्तद्विच्छेदः। अतएव प्रथमाध्येयसंहितायां पदार्थविभाग-रूपायां लोकाचारेऽपिचोपनिषद्दर्शनसन्निवेशः। एवञ्चाप्रसिद्धे विषये ब्रह्मदर्शनानुकूल्यं विधाय तदन्यच यत् यदुक्तं स्फुटं तदाकरे विना विशेषव्याख्यानेन। द्वादशे (१२) सत्यं, तपः, अध्ययन-मध्यापनं, धर्म्मानुष्ठानं, इन्द्रियसंयमः, गार्हस्थ्यं, तदुचितव्यवहारः, सर्व्वमेतत कर्त्तव्यत्वेनोपदिष्ट-मौपनिषद्ज्ञानस्थैर्याय। त्रयोदशे (१३) यत् साधनमुक्तं तत्तत्त्वं विचारितमासीद्वल्लीप्रपूर्ण पर्वे। तदलं पिष्टपेषणेन। विशेषस्याकर एव सुस्पष्टः। चतुर्द्दशादारभ्य यावद्विंशं (१४—२०) साधनं हि सामप्रधानम्। वाक्प्राणयोरैकत्वेन साम्नः सामत्वम्। न हि विना प्राणशक्तिं वागुच्चारणसम्भावना। गाने पुनस्तच्छक्तेरधिकविकाशः। गानमात्रं न हि ब्रह्मप्राप्तिकरं न यदि तत्र ब्रह्मदर्शनानुकूलदृष्टिः सम्भवति। "यदेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्व्वेण तस्मादेव सामाश्नुते साम्नः सायुज्यं सलोकतां जयति य एवमेतत् साम वेद" (९।८) इत्यत्र प्राणस्य जगद्व्यापित्वात् सर्व्वस्य च वागात्मकत्वात् तत्स्वरूपभूतं साम व्यापित्वेन परिगृह्यादित्यादिविविधाकारेण प्रकाशमानस्य साम्नः कार्य्येषु कारणानुगमेन ब्रह्माधि-ष्ठितत्वात् परोक्षब्रह्मणि प्राणे "प्राणस्य प्राणः" इति नियमेनापरोक्षनियन्तृब्रह्मदर्शनं विहितम्; सर्व्वस्मिन् भासमानस्य लोकरूपस्य च तस्य साम्नः स्तुत्यसम्बन्धवशात् स्तोत्रभूते तस्मिन् स्तुत्यस्य साक्षादुपलब्धिः।

२१। अत्र यज्ञाध्ययनदाननिरतानां, तापसानां, नैष्ठिकब्रह्मचारिणाञ्च पुण्यार्ज्जितलोक-भाक्त्वमुक्तिस्य, ये पुनः ब्रह्मसंस्था भवन्ति तेऽमृतत्वं यन्तीति साधारणतां भावयात् यत्र तत्राश्रमे ब्रह्मसंस्थतायाः सम्भावना। तथा हि मोक्षधर्म्मे शुकानुप्रश्ने व्यासः—

"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।
यथोक्तचारिणः सर्व्वे गच्छन्ति परमां गतिम्॥

एकोऽप्याश्रमानेतान् योऽनुतिष्ठेद्यथाविधि।
अकामद्वेषसंयुक्तः स परत्र विमोक्ष्यति॥
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता।
एतामारुह्य निःश्रेणीं ब्रह्मलोके महीयते॥

( शान्ति २४१अ, १५—१६श्लो ) इति।

'एकोऽपि' इत्यनेन गार्हस्थ्यस्य प्राधान्यमभिमतम्। अतएव कौर्मे—

ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात्।
तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम्॥ २५,॥

सुतरां विज्ञानभिक्षुणा स्वकृतवेदान्तसूत्रभाष्ये "यस्मिन् हि पक्षे गार्हस्थ्यादौ विक्षेपप्राबल्येन ब्रह्मैकाग्र्यं न सम्भवति, तस्मिन् पक्षे आश्रमनिवृत्तिद्वारोपकारिणी प्रव्रज्या प्राधान्यतया विधीयते न नियमेनेत्यर्थः। नियमे सति वक्ष्यमाणस्य गृहस्थेनोपसंहारस्यानुपपत्तेः.........'तत्त्वज्ञानेन मुच्यन्ते यत्र तत्राश्रमे रताः' इत्यादि स्मृतिविरोधाच्च।" इति। 'प्रव्रज्या प्राधान्यतया विधीयते' इत्युक्तिः सूत्रानुमोदिता "मौन स्यात्तेनैतत्र एव" (१०।२४) इत्युक्तत्वात्। अत्र भाष्यकारेण मौन-कर्तुरेव यदन्यथा भावितं तन्निवृत्तिमार्गानुसारि। अपरोक्षज्ञानानन्तरं यदा हि ब्राह्मभावस्य स्थिरतामुपैति, तदा साधकस्य सर्वथा शिवस्वरूपाधीनत्वात् निरभिमानतया तदादेशकरत्वं लोकाचारमुपेत्य तद्विपर्यं तावत्यश्च प्रवृत्तिमार्गमुद्भावयति।

यदा यमनुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥

( भा, ४।२९।४६ ) इति।

मार्गोऽयं भक्तियोग इति प्रसिद्धः। प्रकृष्टदृष्टान्तोऽस्य व्यासतनयः शुकः—

द्वैपायनाच्छुको जज्ञे भगवानिव शङ्करः।
संप्राप्तिनावतीर्य्योर्ध्वं स प्राप परमं पदम्॥
शुकस्यास्याऽभवन् पुत्राः पञ्चात्यन्ततपस्विनः।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः॥ ( कूर्म पु, १८अ, )।

इत्यत्र निवृत्तियोगसिद्धं प्रव्रजनं, तदनन्तरं स्वरूपावस्थानञ्च मोक्षधर्मोक्ताख्यानादवगम्यते। 'शुकस्यास्य' इति कथनात् स्वरूपावस्थानादर्वाक् शिवस्वरूपापत्तपेतावद्दाशया स आत्मतुल्याख्यो योगिन्यां पीवर्यां योगाचार्यान् पुत्रानुत्पादयदित्यवसीयते। श्रूयते हि पद्मपुराणे पीवर्यास्तपश्चरणं तासु प्रपत्तिमाभाग ;—

मयीरक्षीगणाश्चैव वसन्ति दिवि देवताः ।
पुलस्त्यपुत्राः शतशस्तपोयोगसमन्विताः ॥
महात्मानो महाभागा भक्तानामभयङ्कराः ।
एतेषां पीवरी कन्या मानसी दिवि विश्रुता ॥
योगिनी योगमाता च तपश्चचार सुदारुणम् ।
प्रसन्नो भगवान् तस्या वरं वव्रे शुभा ततः ॥

कन्योवाच ।

योगवन्तं स्वरूपञ्च भर्त्तारं विजितेन्द्रियम् ।
देहि देव प्रसन्नस्त्वं यदि मे वदतां वर ॥
उवाच देवो भविता व्यासपुत्रो यदा शुकः ।
भविता तस्य भार्य्या त्वं योगाचार्य्यस्य सुव्रता ॥
भविष्यति च ते कन्या कृत्वी नाम्ना च योगिनी ।
पाञ्चालाधिपतेर्देया त्वणुहस्य तदा त्वया ॥
जननी ब्रह्मदत्तस्य योगसिद्धा च सा स्मृता ।
कृष्णो गौरः प्रभुः शम्भुर्भविष्यन्ति च ते सुताः ॥ (ह, ख, १८, ) ।

'स्वरूपञ्च' इति विशेषणं स्वरूपावस्थत्वं प्रत्युदर्शयति चर्म्मादित्वादच् प्रत्यययोगेन । "छाया स्वपुत्रसदृशी.........दृश्यते" "छायां पश्यन् समागतः" (शा, प, ३३२अ, १०।१८ श्लो) इत्युक्तिस्तु स्वरूपावस्थत्वेन दर्शनं व्यज्यते "छायातपौ ब्रह्मविदो वदन्ति" (कठ ३।१) इति वचनानुरूपम् । परोक्षस्थितस्य शरीरस्यस्यैव छायादर्शनं बहुशोऽद्यापि घटते । पुत्राः पञ्च कौर्म्मे वायवे च हरिवंशेऽपि च चत्वारः ।

एतानुत्पाद्य धर्म्मात्मा योगाचार्य्यान् महाव्रतान् ।
श्रुत्वा स्वजनकाद्धर्म्मान् व्यासादमितबुद्धिमान् ॥
महायोगी ततो गत्वाऽपुनरावर्त्तिनीं गतिम् ।
यत्तत्पदमनुद्विग्नमव्ययं ब्रह्म शाश्वतम् ॥ (हरिवंश, १८अ, ५४।५५ श्लो)

इत्यत्र 'धर्म्मान्' भागवतानिति मन्तव्यं पूर्व्वमेव निखिलान्यधर्म्मश्रवणात् । 'महायोगी' निवृत्तिप्रवृत्त्युभययोगवत्त्वात् । 'अपुनरावर्त्तिनीं गतिम्' अत्र "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते" (११।२२) इति ज्ञेया । 'कन्या मानसी' इत्युक्तिः योगनिरतत्वस्य पितृगणाद्भूतत्वात् । तथाहि—

एते स्युः पितरस्तात योगिनां योगवर्द्धनाः।
आप्याययन्ति ये पूर्व्वं सोमं योगबलेन वै॥

( ह, वं, १८अ, १२ श्लो ) इति।

गीतापपूर्त्तौ प्रव्रजनात् प्राक् यत् सुतोत्पादनमुक्तं तद्विशेषानुसन्धानं विना लौकिकसंस्कारानुसरणादिति बोध्यम्। ओङ्कारस्य तत्त्वमुक्तम् (८)।

२२—२४। द्वाविंशे (२२) देवाराधनं दृष्ट्वा न भमितव्यं वेदान्तसिद्धब्रह्मविज्ञानविच्छेद इति। के पुनस्ते देवा वेदान्ते परिगृहीतास्तत्स्वरूपमुक्तं देवतावसाम्। ततोऽयं विवेकः—अग्निः, पृथिवी, वायुः, अन्तरिक्षम्, आदित्यः, द्यौः, चन्द्रमाः, नक्षत्राणि च, एते अष्टौ वसवः। इन्द्रियाणि दश मनश्च—एकादश रुद्राः। द्वादश मासा आदित्याः। अशनिः—इन्द्रः। यज्ञसाधनानि—प्रजापतिः। यद्येवं, न प्राकृतिकान् पदार्थानतीत्य देवतापरिकल्पनास्ति वेदान्ते। अतएव तेजोबन्नमुद्दिश्योक्तं छान्दोग्ये—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ( १२।२ )। अध्यात्माधिभूतभेदेन च प्रकृतिं परिगृह्य तत्र ब्रह्मदर्शनं तदन्तर्भूततया तस्या इति को निवारयेत्। सर्व्वेषां वेदोक्तानां देवानां प्राणक्रियासम्भूतत्वादेकस्मिन् प्राणे तेषामेकत्वं विधाय तत्र "प्राणस्य प्राणः" इति दृष्ट्या पुनरपरोक्षब्रह्मदर्शनमसकृदवोचाम। अस्मादौ व्यष्ट्या प्राणे समष्ट्या ब्रह्मदृष्टिरित्युभयविधदर्शनस्याप्युपयोगिता योगाविच्छेदायेति को न स्वीकुर्यात्। त्रयोविंशे (२३) उदयास्तविरहितस्यादित्यस्य रश्मिषु मधुनाडीत्वं वेदोपनिषदितिहासपुराणेषु च मधुकरत्वं परिकल्प्य दृश्यमानोदयास्तमयकालि वस्वादीनामाधिभौतिकानां देवानामाविर्भूतस्वरूपाणामाध्यात्मिकानां साध्यानामाधिपत्यमारोप्य रोहितादिरूपेषु च वेदरसत्वमारोप्य वैदिकदेवाग्नीन्द्रवरुणसोमानां मुखेन भौतिकदेवानामाध्यात्मिकानाञ्च ब्रह्मणो मुखेन तद्रसपानमुक्तम्। एतज्ज्ञानवत उदयास्तविरहितादित्यवद्वेदादिसमुद्भूतज्ञानस्याविच्छेदः सिद्ध्यतीत्यादित्यमधुविज्ञानस्य फलम्। लोकदृष्टादित्यो ह्युदयास्तमयवान्। न सा सत्यदृष्टिः। असत्यदृष्टिर्हि ब्रह्मविरोधिनी। तादृश्यासत्यदृष्टिविरहितस्य ब्रह्माविरोधित्वात् तेनाविच्छेदयोगोऽवश्यम्भावीति श्रुतेरन्तर्गताभिप्रायः। आदित्यरश्मिषु मधुनाडीत्वस्यारोपः स्वाध्यायोपकारित्वात्तेषामिति तत्त्वम्। चतुर्विंशे (२४) प्रथमं पुत्राणां दीर्घायुष्ट्वसाधनं, द्वितीयं स्वस्य पुरुषायुषसाधनम्, तृतीयं स्वाभाविकक्रियासु यशसाधनम्। प्रथमद्वितीये वेदोचिते कथमत्र वेदान्ते तयोर्निवेश इति प्रश्नश्चेत् विज्ञानाविच्छेदाय प्रथमं विज्ञानसाधनाविच्छेदाय द्वितीयमिति तस्योत्तरम्। अथाप्यस्ति वेदान्तोचितरहस्यम्। प्रथमे पुनस्त्रैलोक्यकोषस्याविनाशित्वं, तद्विस्तृतिभूतानां दिशां वत्सत्वं वायोः, कोषस्यास्य सर्व्वाधारत्वं, सर्व्वाधिष्ठानप्राणादिप्रपन्नत्वम्, द्वितीये

वसुरुद्रादीनां प्राधान्यं संसाध्य सर्व्वेषु तस्य यशः स्वं चैदानीन्तिनसाधनभ्रंशमेवोद्घाटयन्ति। ततीये पुरुषयज्ञे स्वाभाविकक्रियासु यज्ञाङ्गानि तपोदानादिषु च दक्षिणा प्रकल्प्य ब्रह्मप्रापकत्वं तस्य प्रख्यापयति तपनातीतस्य सर्व्वकारणस्य ब्रह्मणश्चिच्छक्तेर्विकाशेषु तपआदिषु च ज्ञानस्वरूपस्यानुगमात्। विज्ञानमिदं देवकीपुत्राय कृष्णाय घोरनामाऽङ्गिरसोमीमांसकः कश्चिदृषिरुपदिदेशेत्यवगम्यते। कृष्णस्य योगाचार्य्यस्य स्वभावानुगतं योगप्रधानं धर्म्मं पश्यन्तो वयं तत्सूत्रे पुनरिदमेव विज्ञानमवधारयामः। ऋग्वेदे ययातिप्रभृतीनां शतपथब्राह्मणे जनमेजयस्यान्येषां च वेदसम्बन्धः, का पुनरसम्भावना छान्दोग्योक्तस्य घोराङ्गिरसोपदिष्टस्य कृष्णेन। दृश्यते च तस्य स्तवनमिन्द्रस्य सोत्रमित्यनक्रसंहितायाम्। "विश्वं विश्वं मघवा पर्य्यशायत जनानां धेना अवचकाशदृषा" (१०म, ४९सू, ६ऋक्) इत्येषा तस्य "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति" इति मतमुद्भावयन्ती तत्कृतित्वं सूचयति। युद्धे जयलाभार्थेन्द्रस्य प्रार्थनारूपं, दस्युवधाय प्रवर्त्तनसर्व्वजनमनेनेति समरस्य धर्म्मत्वं ख्यापयता तेन स्तवनानुष्ठाने सोमरसेनेति विश्वासमुत्पादयति। वैदिकर्षिषु "कण्वघोरः" इति दर्शनात् घोरोऽपि वैदिककाले नाप्रसिद्ध आसीदित्यनुमीयते। नैकान्तिकप्रमाण्यतयाऽनुमानमिदं गृह्यतेऽस्माभिर्विशेषेणोत्तरदर्शनात्। छान्दोग्ये तु सास्ति देवकीपुत्रत्वख्यापनेनातस्तद्वचनं निःसन्देहप्रमाणं मन्यतेऽस्माभिः।

२५। पञ्चविंशे संवर्गविद्यायामन्तर्भावकगुणस्य प्राधान्यमुक्त्वा सर्व्वान्तर्भावके तुरीये ब्रह्मणि सर्व्वैक्यं कथं वा तदुपासनं सिद्ध्यति तत् प्रदर्श्यते। वायुश्च प्राणश्चान्तर्भावकत्वेन गृहीतः, यतो यदाग्निर्निर्व्वाति सूर्य्यश्च चन्द्रश्चास्तं गच्छति, आप उच्छोषं प्राप्नुवन्ति, तदा वायावेवैतेऽन्तर्भवन्ति। एवं स्वापकाले मुख्यप्राण एव वागादयोऽन्तर्भूतास्तिष्ठन्ति। प्राणस्य परोक्षब्रह्मत्वं प्रसिद्धम्, वायोस्तु तदन्तर्भूतत्वम् (८।११)। सुतरामुभयोरेकत्वेन "एकः कः स देवः" इत्येकत्वं सिद्ध्यति। एवमेकत्वेन पुनः "जनिता जनानाम्" इत्येकवचनम्। प्राणस्य परोक्षब्रह्मत्वम् 'इद' शब्देनापरोक्षतया संसाध्य 'इद' सर्व्वान्तर्भावकं ब्रह्म 'उपास्महे' इति कथनम्। भूतस्य सर्व्वस्वरूपसामर्थ्यं सर्व्वान्तर्भावकत्वे परिणमय्य तद्दृष्टान्तोपन्यासोऽत्र चारुतयैव प्रतिभाति। अधिभूताध्यात्मभूतं निखिलं जगत् सर्व्वान्तर्भावके ब्रह्मण्यन्तर्भाव्य सर्व्वैक्यमपरोक्षदर्शने हेतुरिति तदेवात्र प्रकारान्तरेण साधितम्। सर्व्वैक्यं नोपासनं सिद्ध्यतीति वचनं "वयं ब्रह्मचारिणिद- मुपास्महे" इति वचनेन निरस्तम्। "देवानां जनिता प्रजानाम्" इत्यादिवचनेन तुरीयत्वमत्र विघटितं, सुतराम् "इदमुपास्महे" इति कथनं स्रष्टृत्वादिलक्षणयुक्ते ब्रह्मणि न तु तुरीये इति चेत्, न, प्रसिद्धत्वस्यैव प्राधान्यात्, अन्यत् कारणगुणजातमत्राविवक्षितम्। जनकीयादेरन्तर्भावकं सर्व्वनिरपेक्षम् "अहं ब्रह्मास्मि" इति वचनेन साक्षात्प्रकाशमानं तुरीयं ब्रह्म कारणत्वेन सर्व्व-

कर्तृत्वं साधकत्वञ्चैव प्रकटयति, अतो यस्मिन्कर्म्मप्राधान्येऽपि कारकगुणजातस्योक्तत्वोऽत्र न किमप्यसामञ्जस्यमुद्भावयति यस्मिन्त्वेऽपि कर्तृत्वस्यापगमात्। न पुनरैक्यं नाम सर्व्वैक्यं 'वय-मुपास्महे' इति वचनादिति। उपासकानां पुनरैक्यं तत्स्वरूपतापत्तिरिति "योऽसावसौ पुरुषः सोऽहमस्मि" ( २।१ ) "अहं मनुरभवं सूर्य्यश्च" ( ८।११ ) इत्यादिभिर्ज्ञायते। स्वरूपैक्ये कुत्र चोपासनेत्युक्तिः प्रामादिकी "अस्य महिमानमिति वीतशोकः" ( ७।९ ) इति तन्मध्यत्वेनात्मनो महत्त्वानुभवस्तदापि न विनिवृत्तो भवति। अतएवात्रापि "महात्मनस्य महिमानमाहुः" इति महत्त्वस्योक्तत्वः ; स्वरूपैक्येऽपि "ज्ञाज्ञौ द्वावजावीशनीशौ" ( १२।११ ) इत्यतः "त्रयं यदा विन्दते ब्रह्ममेतत्" "त्रिविधं ब्रह्ममेतत्" इत्यभेदेऽपि भेदस्य सत्त्वात् क्रमेण जीवे महत्त्वयोगाच्च।

२६। वैदिकमूलदेवतात्रिकस्य ( १।७४ ) चाग्नित्व यज्ञस्य प्रवृत्तिः, तान्यएव तद्विशिष्टस्य प्रति-विधानं दर्शयति। कथमत्र वायोः प्राधान्यमिति प्रश्ने तदुत्तरम्—तं विना नाग्निर्दीप्यते, अप्रदीप्ते च तस्मिन् कथं वा सिद्धः स्याद्यज्ञः। तत् किमत्रादित्यस्य सर्व्वथाऽप्राधान्यम्? इत्यत्रोत्पादने तस्य सर्व्वतोमुखं कर्तृत्वं पश्यतस्तादृगुक्तिर्न जातु शोभते। किमिदमुच्यते—तप्यमानेभ्यो लोके-भ्यस्तत्सारभूतानामग्न्यादीनामुद्धार इति। पृथिव्यां सर्व्वत्र तापरूपेणाग्निस्तिष्ठति, प्रज्वलने पुनर्घनीभूतभावेन। अतोऽरण्योर्घर्षणेन वायुयोगात् तदुत्पत्तिः। अन्तरिक्षं वायुना पूर्णं, द्युस्था-नानादन्तरिक्षादुपरि पुनरादित्यस्य स्थितिः, प्रकाशस्तयोस्ततएव। अग्निर्वायुरादित्य इति क्रम-प्राप्तेरेव ऋग्यजुःसाम्नां तेभ्यः प्रवृत्तिकथनम्, अन्यथा ऋक्ष्वग्नेः, यजुःषु वायोः सामस्वादित्यस्य प्राधान्यमिति वक्तुमुचितं, तन्न शक्यते तत्र तत्र तेषां साम्येनोदीरणात्। श्रुतिमेतामनुसृत्यैव मनुराह—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ ( १अ, २३श्लो ) इति।

प्रथमं तावत् पृथिव्यादिभ्योऽग्न्यादीनाम्, अग्न्यादिभ्यस्त्रय्याः, अथाः पुनर्भूरादीनां प्रवृत्तिर्दर्श्यते। पृथिव्यादिभ्यो भूरादीनां पार्थक्यम्, अथच ज्योतिर्व्विदां मते भूगोलोऽयं लोकत्रयात्मक इति। किमत्र भूरादीनां पार्थक्यं वर्णयतां पौराणिकानां मतमेव श्रुतिरनुमोदते? अत्रेदं विवेच्यम्—न पुनर्मेरोरस्तित्वं ब्रह्मवाक्योपनिषत्सु उपलभ्यते, किन्तर्हि तदुक्तौ षण्मासात्मकौ देवयानपितृयाण-पन्थानौ तमेव प्रदर्शयत इति तत्त्वविदः। न ह्यस्ति सवितुरुदयास्तमयौ वेदान्तमते ; तौ द्रष्टपेक्षया तथा प्रतिभात इत्यस्य सिद्धान्तः। यत्र पुनरनुभूयते षाण्मासिको दिवसः षाण्मासिकी रजनी स एव पौराणिकैर्घोषितो मेरुप्रदेशः। मेरुरेव स्वर्लोक इति मन्यतां पौराणिकानां ज्योतिर्विद्भिर्न मतभेदः। जम्बुद्वीपस्य भुवर्लोकत्वं निरक्षदेशादुत्तरस्थस्य जलपृष्ठस्य भूगोलार्द्धस्य भूर्लोकत्वं

व्याप्यपरिरिति तेषां विरोधः । दक्षिणसमुद्रसम्पुटे सन्ति विविधानां द्वीपानां स्थितिः । तत्रत्यानि-वासिनामपुण्यभूमिवासित्वं, जम्बूद्वीपवासिनान्तु पुण्यभूमिवासित्वमिति मतभिन्नत्व ज्योतिर्विदां भूगोलस्य लोकत्रयात्मकत्वं कथनम्, उपनिषदि पुराणे च ज्ञातिसाध्यलोकानामुक्तिरिति भेदः । भूर्भुवःस्वरिति लोकत्रयं ज्ञातिसाध्यमिति नय्यास्तेषां प्रशस्तिरत्र वर्ण्यते न पुनर्भूगोलस्थानां तेषामिति वयमुपलभामहे । अतएव हि तेषां यज्ञदेवापहरणसामर्थ्यमुपवर्णितम् । भूः—पञ्च-महाभूतयोग्यस्थानं पृथिवी ; भुवः—सिद्धादिसेवितं भूमिसूर्य्यान्तरमन्तरीक्षम् ; स्वः—ध्रुव-सूर्य्यान्तरं देवाधिष्ठितं त्रिदिवमिति पौराणिकानां सिद्धान्तो दृश्यमानलोकविषयो, न त्वदृश्या-ध्यात्मलोकविषय इति ज्ञेयं, ततो भवति विरोधपरिहारः । लोकसम्बन्धदर्शनमैतरेयब्राह्मणेऽप्य-दृश्यते । तथा हि "तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुः । तं त्रिभिः स्वर्गै-र्लोकैरधस्तात् प्रत्यस्तभ्नुवन् ।" अत्र सायनः—"योऽयमादित्योऽस्ति तस्य आदित्यस्य स्वर्गलोकात् अधःपातः आधाराभावात् अधःपतनं तस्मात् देवा अबिभयुः आदित्योऽधः पतिष्यतीति भीताः सन्तः तम् आदित्यम् अधस्तात् मण्डलस्याधोभागे त्रिभिः स्वर्गलोकैः स्वर्गशब्दोपलक्षितैः भूरादिभिः प्रत्यस्तभ्नुवन् अधःपातप्रतिबन्धार्थमुत्तम्भनमाधारमकुर्व्वन् ।" इति । "तस्य पराचोऽतिपातादबिभ-युस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्नुवन् (४।३।४) ।" इति । अत्र सायनः—"पुनरपि देवाः तस्यादित्यस्य पराचोऽतिपातात् मण्डलात् पराभूतेषु ऊर्द्ध्ववर्त्तिषु लोकेषु योऽयम् अतिपातः दृष्टि-गोचरदेशमुल्लङ्घ्य यत्र क्वापि दूरदेशगमनं, तस्मादतिपातात् भीताः सन्तः परस्तात् आदित्यमण्डल-स्योपरि त्रिभिः जनतपःसत्यशब्दाभिधेयैः त्रिभिः स्वर्गलोकैः तम् आदित्यं प्रत्यस्तभ्नुवन् यथा पूर्व्वस्याधःपातनिवृत्त्यर्थमुत्तम्भनं कृतम्, एवमुपरिष्टादतिपातनिवृत्त्यर्थं प्रतिष्टम्भनं प्रतिबन्धस्तम्भ-मकुर्व्वन्" इति । "तयं यदा विन्दते ब्रह्मैतत्" (१२।११) इत्यस्या उपास्तिविषयो सर्व्वत्र नियोग इति दृश्यमाना विषयाः, उपासितात्मा, तदन्तर्यामी परात्मा चैकत्वेन गृह्यन्ते तत्रैकस्मिन् ब्रह्मणि सर्व्वात्मभावनात् । द्वैतपरिहारसामर्थ्यमतः प्रेरयितृदेवेति तत्त्वम् ।

२७—३२ । सप्तविंशे (२७) परोक्षप्राणे यद्वचनमन्नस्य तेन च प्राणस्य प्राणेनापरोक्षेण सम्बन्धचिन्तया तेनैक्यं भवतीति तत्त्वम् । अन्नपानं यदीन्द्रियबाधत्वं वर्द्धयते प्रतिकूलं भवति तद्योगस्य । अतएव योगेन महत्त्वलाभाय सर्व्वौषधपिष्टभोजनरूपमुपायं विदधाति संयमसामर्थ्या-द्रावकेन कष्टमन्वेषात्मशुद्धिनिमित्तेन । अष्टाविंशे (२८) वैश्वानरोपासनां विदधाति । कोऽयं वैश्वानरः ? "रूपं रूपं प्रतिरूपो बहिश्च" (५।६) इत्यस्या विषयः परमात्मा, माण्डुक्ये: "स्थूल-भुक् वैश्वानरः प्रथमपादः"—विश्वरूपः । विश्वव्यापित्वेनाष्टाङ्गतः स्वरूपो यत्नेन दोषमुक्ता तादृगुपासनाजातस्य वैयर्थ्यं प्रदर्शितम् । सप्तविंशेऽन्नपानेन पापविनाशोऽर्थत उक्तः, अष्ट-तु

मुक्तिरिति 'विपापो विरजो विचिकित्सः' इत्युक्तिर्दर्शयति। स्वाध्यायादिभिरुपायैः परमात्मानं विदित्वा—ध्यानेन न त्वपरोक्षत्वेन—'मुनिर्भवति' इति वचनात् मौनत्वेन वाक्यमेवानुमोदितम्। वाग्वह्निरभिमानत्वे पुनः प्रशान्तचित्ततादीनामभ्युदयः। तदुदये परमात्मदर्शनम्, परमात्मदर्शने पापातिक्रमः, कामनिवृत्तिः, संशयापगमश्च। एवञ्च यद्यदुक्तं तत्र तत्तदेव स्फुटतया विहितम्। भिक्षाचरणस्य यथा तत्र 'येन स्यात्' इत्यनियतवाक्यात्मानियत्वं साधितं, विशेषवचनाभावादत्रापि तस्य तथा। निर्बन्धस्तत्र निरर्थक इति शुकादीनामाचारादेव निःसंशयतया प्रतिभाति। विद्या-फले पुनः सम्पल्लाभोऽभयप्राप्तिश्चेत्युभयोः सन्निवेशो न तयोस्तारतम्यमुद्भावयति, किन्तर्हि परमात्म-विसृष्टसम्पद्भिर्न आत्मभयप्राप्तेर्हानिरित्येतदेव दर्शयति; अन्यथा परमात्मदर्शनप्रधानायां विद्यायां ग्रन्थिच्छेदाद्यभावः संसूचित इति सिद्धान्ते विद्याया एव स्वपरमार्थभावोच्छेदः स्यात्। वस्तुतस्तु 'अन्नादः'—भोगापहारी, 'वसुदानः'—सम्पद्दाता इति विशेषणद्वयस्यैकत्र सन्निवेशेन साऽऽत्मगूढा-भिप्रायमिमं व्यनक्ति—स परमात्माऽऽदौ साधकस्य भोगवासनामपहृत्य पश्चात् स्वेच्छया वितरति तस्मै सम्पदामिति। अतएव च शुकादीनामाचारो विद्यानुगृहीत एवेति सर्व्वमवदातम्।

३६—४१। षट्त्रिंशे (३६) प्रथमतो बुद्धिभेदादेकस्यापि भेदेन ग्रहणं भवतीति प्रदर्श्य भेदस्यास्यैकस्मिन् प्रयोगेऽवस्थाभेदादिति प्रतिपादयति। हृदयस्य सर्व्वात्मकत्वेन साधनान्तरं कथयन्ति प्रत्यक्षं सर्व्वात्मकत्वात् विशेषविशेषफलावाप्तौ—हृदयस्य प्राशस्त्यादेव फललाभ इति तत्त्वम्। एवं सत्यस्य। सत्ये पुनः साधनमादित्यदृष्ट्याऽऽदित्यमण्डलस्य च पुरुषदृष्ट्या। सप्त-त्रिंशे (३७) मनोविद्युद्वाग्जठराग्नीशावलम्ब्य साधनमुक्तम्। अष्टात्रिंशे (३८) व्याधिमरण-दाहानां तपस्त्वेन ग्रहणं; अन्नप्राणयोरेकत्वे ब्रह्मदर्शनम्; उक्थयजुःसामक्षत्रेषु प्राणदृष्ट्यो-पासनं; भूमिरन्तरिक्षं द्यौरित्यादिष्वष्टाक्षरवत्सु त्रिपदां गायत्रीं मूर्त्तामूर्त्तजगद्रूपेण विभाव्य चतुर्थस्य पदान्तरस्यादृश्यस्य सत्ये प्रतिष्ठां परिकल्प्य, प्राणानां त्राणात् सा तथैवाख्यातेति निश्चित्य गायत्रीसावित्र्योरेकत्वञ्चोपदिश्य तत्रोपदिष्टस्य प्राणत्राणं, त्रिपदेवोपदेशविषयो न सर्व्वातीतं तस्याश्चतुर्थं पदं तस्य ज्ञानाविषयत्वादित्यादिकं निर्द्दिश्य तस्या उपस्थानम्। ऊनचत्वारिंशे (३९) महत्त्वलाभायानुष्ठानविशेषः चत्वारिंशे (४०) पुत्रार्थश्च। अत्र परोक्षापरोक्षदर्शनेन भेदः प्राचीना-र्व्वाचीनानाम्। एकचत्वारिंशे (४१) साधनान्तरं परिहाय मुख्यं साधनमुपदिष्टम्। अत्र प्रेरयितुः परमात्मनो ध्यानधारणे एव प्रधाने। तदेवाकारे सर्व्वं व्याख्यातम्। कथं वा वैदिकस्तोत्राणां वेदान्तानुचिन्तनभावेन विपरिवर्त्तनमभूत् तदत्र विशेषत उपलभ्यते। ये पुनर्मन्यन्ते वेदान्तसिद्ध-परमात्मयोगेन सर्व्वथाप्यनिरपेक्षत्वमुत्पन्नं इति, ते "शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः" इत्यस्या वेदान्तमार्गसम्मतव्याख्यानं परिचिन्तयन्तु। मनो हि स्वभावतश्चलं,

चञ्चलत्वोपयोगी विविधेषु विषयेषु तस्याभिनिवेशः; बाह्यानुष्ठाननिरतत्वमतएव तस्य। सर्व्वथा प्रेरयितुः परमात्मत्वं विना न तस्मात् चलता जहाति। योगोपायस्यावलम्बनं वशीकरणार्थं तस्य। कस्मिंश्चिद्विषये मनसोऽभिनिवेशे श्वासस्य क्षीणता नासाभ्यन्तरचारिता च भवति, श्वास-प्रश्वासगतिविच्छेदे प्रयत्नोऽतएव स्वाभाविकक्रियातः प्रवृत्तः। नैष ऐकान्तिक उपायः। प्रकृष्ट-सूक्ष्मः पञ्चमे (५)ऽभिनिवेशे तद्विषयस्यैव प्राधान्यात्। सदाकर्षकत्वं तत्र कारणमित्युक्तं माहात्म्य-निष्ठ तद्विषयकविशेषज्ञानस्य। जनकेन दृप्तबालाकेः संवादः प्रकारान्तरेण तदेव दर्शयति। (३।४८५)। अतएव हि वेदान्ते "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिस्वरूपानुचिन्तनं सर्व्वत्र विहितम्। आत्मतत्त्वप्रत्यक्षीकरणेन भवति प्रत्यक्षं ब्रह्मतत्त्वम्। द्वाचत्वारिंशे (४२) प्रार्थनोपाय-त्वेन विहिता। वेदे, वेदान्ते, पुराणे चेयं सर्व्वत्र समादृता सर्व्वावस्थागतैः सर्व्वजनैराश्रयणीया।

## इति विद्यावल्ली दशमोऽध्यायः।

---

# एकादशोऽध्यायः।

## गतिवल्ली।

१। यस्तु सर्व्वाणि भूतानि आत्मन्येवानुपश्यति।
सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते॥

सिध्यति गतिर्विद्यया, सुतरां विद्यावल्ल्यनन्तरं गतिवल्लीति बोद्धुं न प्रयत्नमपेक्षते। विद्याभेदेन गतिभेदोऽवश्यम्भावीति सोऽत्र सर्व्वत्र तथैव गीयते। मुख्या हि ब्रह्मणि स्थितिः, वेदान्तस्य नान्यदुद्देश्यं भवितुमर्हति। तत् कथं गतीनां विविधत्वमत्रोपवर्ण्यते इति जिज्ञासायां "अयं यदा विन्दते ब्रह्ममेतत्" (१२।११) इत्यस्या विनियोगो गतावपीत्युत्तरम्। न हि किञ्चित् स्वभावविरुद्धं वेदान्तेष्वन्वेष्यम्। अतएव हि योगाचार्य्यो वासुदेवः

> यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
> स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ (गीता, १८।४६)।

इत्युक्त्वा स्वभावानुसरणमेवोपादिशत्।

१। यदि स्वभावानुसरणमेव साधनार्थं गत्यर्थञ्चावलम्बनीयं सर्व्वभूतानामात्मनि सर्व्वभूतेषु चात्मनो दर्शनं किं स्वाभाविकं स्वभावातीतं वेति प्रश्ने "बाल्ये तिष्ठासेत्" (१०।२४) इत्यस्यास्तत्त्वं सुधीभिर्विवेच्यम्। यद्यपि पित्रादिस्वभाववैगुण्यात् कुत्र कुत्रचित् बालेऽपि विकारो लक्ष्यते तथापि स्वपरभेदज्ञानेन यदनात्मीयत्वं वयोधिक्ये निरूढ़ं दृश्यते तत्तस्मिन्नविद्यमानसत्त्वमेव। अतएव यस्त्वित्यादिना गतिवल्ल्यारम्भणं न जातु स्वभावमतिक्रामति। यस्त्विति। यः तु पुनः साधकः आत्मनि एव सर्व्वाणि भूतानि अनुपश्यति—आत्मानं स्वरूपतः विज्ञाय तदनन्तरं तत्स्वरूपं विज्ञाय तदनुसारेण आत्मानं

यस्मिन् सर्व्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ ईश ६।७

असुर्य्या नाम ते लोका अन्धेन तमसावृता।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ईश ३

२। स्वर्गे लोके न भयं किञ्चनास्ति
न तत्र त्वं न जरया बिभेति।

समतया जानाति, ततः तस्मादेव कारणात् न विजुगुप्सते घृणां न करोति। आत्मा परमात्मेति पक्षे—

त्वय्यस्ति भगवान् विष्णुर्मयि चान्यत्र चास्ति सः।
यतस्ततोऽयं मित्रं मे शत्रुश्चेति पृथक् कुतः॥ (वि, पु, १।१९।३८)।

इत्यात्मन्यन्येषु च परात्मदर्शनात् शत्रुमित्रभेदज्ञानविरहः।

यस्मिन्निति। यस्मिन् आत्मनि सर्व्वाणि भूतानि आत्मा एव अभूत्, अतएव एकत्वम् अनुपश्यतः विजानतः तादृग्ज्ञानसम्पन्नस्य तत्र आत्मनि कः मोहः—अयं बन्धुरयं नेत्यज्ञानं—ताड़नादावपि शिक्षाप्रदबन्धुकार्य्यदर्शनात्, कः शोकः अवियोगे वियोगजनितखेदः—आत्मस्वरूपेण चिरस्थायित्वात्।

विपरीते किं भवति तत्प्रदर्शनायाचैव व्युत्क्रमेण तत्प्रतिपादिकायाः श्रुतेर्ग्रहणम् असुर्य्या इति। ये के च जनाः आत्महनः आत्मपरद्वेषवन्तः—आत्मनि च भूतानि भूतेषु चात्मानं नानुपश्यन्तः—ते जनाः प्रेत्य तान् लोकान् अभिगच्छन्ति ये लोका अन्धेन तमसा आवृताः असुर्य्याः असुरभावापन्नाः नाम—नाम अभ्युपगमे—इह तथा दर्शनात् परत्रापि तथेत्यभ्युपगमः—"यदेवेह तदमुत्र यदमुत्र तदन्विह" (४।१०) इति श्रौतन्यायात्।

२। ये पुनः सर्व्वभूतात्मभूतात्मानस्तेषां भवति क्षुत्तृड्जराभयशोकातिक्रम इत्याह स्वर्ग इति। स्वर्गे लोके किञ्चन भयं न अस्ति।

उभे तीर्त्वाऽशनयापिपासे
शोकातिगो मोदते स्वर्गलोके ॥ काठ १।१२ ।

३ । यथोदकं दुर्गे वृष्टं पर्व्वतेषु विधावति ।
एवं धर्म्मान् पृथक् पश्यंस्तानेवानुविधावति ॥
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥
काठ ४।१४।१५ ।

४ । इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥

तत्र स्वर्गे, हे मृत्यो, त्वं न असि ; जरया न तत्रत्यजनः बिभेति । उभे अशनायापिपासे क्षुत्तृष्णे तीर्त्वा अतिक्रम्य शोकातिगः शोकम् अतीत्य वर्त्तमानः जनः स्वर्गलोके मोदते हृष्यति ।

३ । प्रथमं गतिवैचित्र्यस्य कारणमुक्त्वा स्वरूपावस्थानमाह यथेति श्लाभ्यामिति । दुर्गे दुर्गमे उच्छ्रिते देशे वृष्टम् उदकं पर्व्वतेषु गैरिकादिमत्सु प्रत्यन्तगिरिषु विधावति विकीर्णं भवति तत्तद्वैचित्र्य-सङ्कुलम्, एवं धर्म्मान् आत्मनः पृथक् पश्यन् तान् एव धर्म्मान् अनु विधावति भिन्नभिन्नभावापन्नो भवति ।

शुद्धे निर्म्मले उदके शुद्धम् उदकम् आसिक्तं तादृक् शुद्धम् एव भवति, एवं हे गौतम, विजानतः मुनेः—शुद्धे परमात्मनि मननशील-तया विद्यमानस्यात्मज्ञानसम्पन्नस्य—आत्मा भवति ।

४ । ज्ञानरूपमुपाधिग्रहणमुच्यते इहेति । शरीरस्य विस्रसः विस्रंशनात् पतनात् प्राक् यदि इह देहावस्थानकाले बोद्धुं ज्ञानं लब्धुम् अशकत्, ततः शरीरस्रंसनादनन्तरं सर्गेषु पुनः प्रभवकालेषु लोकेषु भिन्नभिन्नलोकेषु तत् ज्ञानं शरीरत्वाय शरीरभावाय कल्पते समर्थं भवति ।

यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके।
यथाप्सु परीव ददृशे तथा गन्धर्व्वलोके।
छायातपयोरिव ब्रह्मलोके॥
इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति॥
इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति॥

तदेव विवृणोति यथेति। "यस्यात्मा शरीरम्" (३।१४।५) इत्यात्मनः परमात्मशरीरत्वात् आदर्शे यथा तथा आत्मनि चित्स्वरूपतयावस्थाने तत्स्वरूपमेव शरीरं भवति, यथा स्वप्ने स्थूलशरीरासत्त्वेऽपि शरीरदर्शनं भवति, तथा पितृलोके स्वाप्निकशरीरं भवति, यथा अप्सु परिददृशे परिदृश्यते इव तथा गन्धर्व्वलोके शरीरं भवति—आदर्शस्यातिनिर्म्मलत्वात् चित्स्वरूपतया भासनम्, आपो नातिनिर्म्मलाः, अतोऽत्रोपाधियोगोऽस्त्येव—"अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्व्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानाम् (११।२८)" इत्युक्तत्वादन्यदपि रूपान्तरं मन्तव्यम्। ब्रह्मलोके—"छायातपौ ब्रह्मविदो वदन्ति" (७।१) इति छायातपयोरिव शरीरशरीरिणोरिव जीवब्रह्मणोः स्थितिर्भवत्येकत्र।

इन्द्रियाणामिति। यत् यस्मात् शरीरग्रहणकारणात् पृथगुत्पद्यमानानां भिन्नभिन्नरूपेणोत्पद्यमानानाम् इन्द्रियाणां पृथग्भावं वस्तुग्रहणसामर्थ्यपार्थक्यम्, उदयास्तमयौ—कुत्रापि तेषामुदयः शरीरग्रहणे, कुत्राप्यस्तमयः स्वरूपावस्थाने—मत्वा ज्ञात्वा धीरः न शोचति देहकृत्परिवर्त्तनमिति यावत्। एतदनुरूपमेवानुगीतायां—

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्॥

कठ ६।४—१०।

देहान् यथेष्टममेऽति हित्वेमां मानुषीं तनुम्।
निर्व्वेदस्तु न कर्त्तव्यो भुक्तानेन कथञ्चन॥ (१८।२१) इति।

सप्तमाध्याये यदुक्तं (७।६[२५२४]) तदेवात्र पुनरभिलप्यते मुक्तिहेतु-प्रदर्शनाय इन्द्रियेभ्य इति अव्यक्तादिति। सत्त्वं बुद्धिः। अलिङ्गः लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति।

कथमलिङ्गस्य तस्य दर्शनं सिध्यति तदाह न सन्दृश इति। अस्य अलिङ्गस्य रूपं सन्दृशे दर्शनविषये न तिष्ठति, कश्चन एनं चक्षुषा न पश्यति, किन्तर्हि हृदा हृदयेन अनुरागेण, मनीषा—मनसः ईष् दर्शनं—ईष दर्शने—अनुरागजनितसूक्ष्मवस्तुदर्शनसामर्थ्यं विवेकः—तया—

यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथा श्रवणाभिधानैः।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तम्॥ (भा, ११।१४।२६) इति।

—मनसा मननेन अभिक्लृप्तः अभिमुखीकृतः प्रकाशितः। ये एतत् परमात्मतत्त्वं विदुः जानन्ति ते अमृताः विकारातीताः भवन्ति।

यदेति। यदा पञ्च ज्ञानानि ज्ञानेन्द्रियाणि मनसा सह अवतिष्ठन्ते निश्चलतया तिष्ठन्ति स्वस्वव्यापाराद्धि निवृत्य बुद्धिः च न विचे-

५ । शतं चैका हृदयस्य नाड्य-
स्तासां मूर्द्धानमभिनिःसृतैका ।
तयोर्द्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदि सन्निविष्टः ।
तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषिकां धैर्य्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥

इते विषयावधारणाय न व्याप्रियते परमात्मन्येव विश्राम्यति तां परमां गतिम् आहुः बुधाः ।

५ । "हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते" ( २।५[५०पृ] ) इत्यत्र हृत्प्रभवा द्वासप्ततिसहस्राणि नाड्यः श्रूयन्ते । एता अतिसूक्ष्माः, अतएवाह "यथा केशः सहस्रधा भिन्नस्तावतोऽणिम्ना तिष्ठन्ति" (५७पृ) इति । सूक्ष्मत्वात्तासां संख्याकरणं प्रायिकमेवेति ज्ञेयम् । तासु शतसंख्यकानां शिरोगतानामेकस्या मुख्यायाश्चात्रोल्लेखस्ताभ्यः प्राणस्योत्क्रमणप्रदर्शनाय शतमिति । हृदयस्य शतं च एका च, तासाम् एका मूर्द्धानं भित्वा अभिनिःसृता । तया एकया ऊर्द्धम् आयन् गच्छन् अमृतत्वम् एति प्राप्नोति न तु विविधा गतीर्ब्रह्मण्येव स्थितिवशात् । विष्वक् नानाविधगतियुक्ताः अन्याः नाड्यः उत्क्रमणे प्राणस्य भवन्ति प्रभवन्ति सहायाः भवन्ति । नानागतियुक्तत्वात् नानाविधगतीरेव लभन्ते जीवास्ताभ्यो न तु मुक्तिमिति वेदान्तविदः ।

जीवस्य शरीरात् पार्थक्यं संसाध्य ब्रह्मस्वरूपत्वं तस्याह अङ्गुष्ठेति । अङ्गुष्ठमात्रः हृत्प्रमाणः पुरुषः देहशायी अन्तरात्मा जीवात्मा—

जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम् ।
येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु ॥ ( मनु १२।१३ ) ।

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा
विद्यामेतां योगविधिञ्च कृत्स्नम्।
ब्रह्मप्राप्तो विरजोऽभूद्विमृत्यु-
रन्योप्येवं यो विदध्यात्ममेवम्॥

कठ ६।१६—१८।

६। संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चो-त्तरञ्च। तस्येह वै तदिष्टापूर्त्ते कृतमित्युपासते। ते चान्द्रमसमेव लोकमभिजयन्ते। तएव पुनरावर्त्तन्ते तस्मादेते ऋषयः प्रजाकामादक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्यः पितृयाणः।

इति—सदा जनानां हृदये सन्निविष्टः, मुञ्जात इषिकाम् अन्तःस्थाम् इव स्वात् आत्मीयात् शरीरात् तं जीवं धैर्य्येण धीरतासहकारेण प्रवृहेत् उद्यच्छेत् पृथक् कुर्य्यात्। तं शरीरान्निष्क्रष्टं चिन्मात्रं शुक्रं विशुद्धम् अमृतम् अमरणधर्म्माणं विद्यात् जानीयात्। द्विर्व्वचनमुप-निषत् समाप्त्यर्थम्।

आख्यायिकयात्मविद्योपसंहारः—अथ नचिकेतः मृत्युप्रोक्तं यमेन उक्ताम् एतां विद्यान् आत्मविद्यां कृत्स्नं समग्रं योगविधिं च लब्ध्वा ब्रह्मप्राप्तः, विरजः विरजस्कः विगतमलः, विमृत्युः विगतमृत्युः अभूत्। अन्यः अपि च अध्यात्मम् आत्मानमधिकृत्य एवं वित् सोऽपि ब्रह्मप्राप्तः विरजः विमृत्युः भवति। आत्मतत्त्वाधिकारे परमात्मतत्त्व-मधिकृतं भवतीति—"यइमं मध्वदं वेद आत्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥ एतद्वैतत्" (७।७) इत्याद्याभिः सर्व्वत्र सूचितम्।

६। पुनरावर्त्तनीमपुनरावर्त्तनीञ्च गतिमभिधाय ब्रह्मचि क्षितिः कथं व्याप्तदृश्यति संवत्सर इति। संवत्सरः एव प्रजापतिः,

अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययात्मान-मन्विष्यादित्यमभिजयन्ते एतद्वै प्राणानामायतनमेतद-मृतमभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्त इत्येष निरोधस्तदेष श्लोकः।

पञ्चपादं पितरं द्वादशाकृतिं
दिव आहुः परे अर्द्धे पुरीषिणम्।
अथेमे अन्य उ परे विचक्षणं
सप्तचक्रे षड़र आहुरर्पितमिति॥

दक्षिणं च उत्तरं च तस्य अयने मार्गौ षण्मासात्मकौ। तत् तत्र चान्द्रमसम् एव लोकं ते अभिजयन्ते ये पुनः—तत् कर्म्म मया कृतम् अनुष्ठितम् इति कर्तृत्वाभिमानेन—इष्टापूर्त्ते इष्टं च पूर्त्तं च उपासते नियतम् अनुतिष्ठन्ति। ते पुनरेव आवर्त्तन्ते पार्थिवलोकान् प्राप्नुवन्ति। तस्मात् एते ऋषयः प्रजाकामाः दक्षिणम् अयनं प्रतिपद्यन्ते यान्ति। एष रयिः देवानाम् अन्नभूतः चन्द्रः एव यः पितृयाणः दक्षिणमार्गः।

अथ तपसा, ब्रह्मचर्य्येण, श्रद्धया विद्यया आत्मानम् अन्विष्य उत्त-रेण मार्गेण आदित्यम् अभिजयन्ते। एतत् आदित्यस्वरूपम् एव प्राणा-नाम् आयतनम् आश्रयः। एतत् आदित्यस्वरूपम् एव अमृतम् अभयम्, एतत् आदित्यस्वरूपं परायणं परमाश्रयः एतस्मात् न पुनः आवर्त्तन्ते। एष निरोधः भ्रमणनिवृत्तिः। तत् तस्मिन् अर्थे एष श्लोकः—

पञ्चपादं—हेमन्तशिशिरयोरभेदत्वात् एकत्वेन—पञ्च ऋतवः एव पादाः यस्य, द्वादशाकृतिं द्वादशमासात्मकं, दिवः अन्तरीक्षस्य परे अर्द्धे उत्तरार्द्धे पुरीषिणम् उदकवर्षिणम् आदित्यं पितरम् आहुः एके। अथ अन्ये इमे पुनः परे उत्कृष्टे विचक्षणं निपुणम् आदित्यं सप्तचक्रे सप्तहयचक्रे संवत्सरचक्रे षड़रे षट् ऋतवः एव अराः यस्य तस्मिन् रथे अर्पितम् इति आहुः।

मासो वै प्रजापतिस्तस्य कृष्णपक्षएव रयिः शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्व्वन्तीतर इतरस्मिन्।

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः। प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते।

अन्नं वै प्रजापतिस्ततोह वै तद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति।

तद् ये ह तत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्य्यं येषु सत्यं प्रतिष्ठितम्।

मासः वै प्रजापतिः—स्वावयवत्वात्। तस्य मासस्य कृष्णपक्षः एव रयिः अन्नम्, शुक्लः पक्षः प्राणः आदित्यः, तस्मात् ऋषयः क्रान्तदर्शिनः शुक्लपक्षे इष्टं यागादि कुर्व्वन्ति, इतरे अविद्वांसः इतरस्मिन् कृष्णपक्षे इष्टं कुर्व्वन्ति।

अहोरात्रं वै प्रजापतिः—संवत्सरावयवभूतत्वात्। तस्य अहः एव प्राणः, रात्रिः एव रयिः। ये दिवा रत्या संयुज्यन्ते, ते एते प्राणं प्रस्कन्दन्ति शोषयन्ति आयुर्हरत्वात् तस्याः। रात्रौ यत् रत्या संयुज्यन्ते तत् ब्रह्मचर्य्यम् एव—आयुष्करत्वात् यथावत् सेवनेन।

अन्नं वै प्रजापतिः—कालपरिपाकत्वात् व्रीह्यादेः। ततः अन्नात् एव हि रेतः नृबीजं, तस्मात् रेतसः इमाः प्रजाः प्रजायन्ते उत्पद्यन्ते इति।

तत् तत्र ये पुनः प्रजापतिव्रतं यथाविहितभार्य्यागमनरूपं चरन्ति, ते मिथुनं पुत्रं च पुत्रीं च उत्पादयन्ते। तेषां प्रजापतिव्रताचरणरतानाम् एव—कामत आहुतिमत्वात्—चान्द्रमसः ब्रह्म-

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं माया चेति। प्र, १।८—१६।

७। तपःश्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्ष्यचर्य्यां चरन्तः।
सूर्य्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा॥

मु १ (२)। ११।

लोकः। कीदृशानां? येषां तपः कायिकवाचिकमानसिकसन्तपनं ब्रह्मचर्य्यं विहितकाले भार्य्यासङ्गमनं, येषु सत्यम् अनृतवर्ज्जनं प्रतिष्ठितम् अव्यभिचारितया वर्त्तमानम्। अत्र तपश्चरणप्रयोजनवशाच्च सम्यक्सिद्धरजःसम्बन्धपरिहानिरिति बुध्यते, सुतरां लोकस्यास्य नारजस्कत्वम्। एवं कथं लोकाल्लोकान्तरभ्रमणोपयोगिब्रह्मलोकप्राप्तिः? सत्येन ब्रह्मचर्य्येण च।

येषु न जिह्मं न कौटिल्यं, न अनृतं न अनृतविषयानुरतिः, न माया च न मिथ्याचरणं च तेषाम् असौ आदित्योपलक्षितः—आवृत्तिपरिशून्यः—विरजः मालिन्यविरहितः ब्रह्मलोकः। पूर्व्वत्र रजः-सम्बन्धसत्त्वात् तपश्चरणस्य प्रयोजनम्, तेन च निमित्तेन लोकस्य रजस्कत्वम्, अत्र तु विषयानुरतिशून्यत्वात् विरजस्कत्वेनापरिलक्षितमस्य लोकस्य।

७। इष्टापूर्त्तनिरतानां चयिष्णुगतिमुक्त्वा (१।८) ऽरण्यवासिनां भिक्षूणाञ्च गतिरुच्यते तपइति। ये हि वानप्रस्थनियमरताः अरण्ये वने तपःश्रद्धे तपः—भक्ष्यसंयमादि आश्रमविहितं कर्म्म, श्रद्धां च—अग्निहोत्रोत्पन्नाबूविन्दून्—उपवसन्ति सेवन्ते, ये पुनः एवं तपश्चरणेन शान्ताः—उपरतकरणग्रामाः, विद्वांसः—औपनिषदज्ञानसम्पन्नाः, भैक्ष्यचर्य्यां चरन्तः—तापसादिभ्यः प्राणधारणमात्रोपयोगि भैक्ष्यम्

८। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥
मु २ (२) । ८ ।

९ । सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत् सत्यस्य परमं निधानम् ॥
मु, ३ (१) । ६ ।

आहरन्तः ते विरजाः रजःसंस्पर्शरहिताः विमलाः सूर्य्यद्वारेण ब्रह्मलोकप्रवेशवर्त्मना (११।२१) तत्र प्रयान्ति यत्र स अव्ययात्मा नित्यकालस्थायी, अमृतः मरणधर्म्मरहितः पुरुषः जगज्जीवनियन्ता—हिरण्यगर्भ इति भाष्यकारः ।

८। जगज्जीवनियन्तुः सान्निध्येन तमेव कारणात्मना कार्य्यमात्रमात्मन्यन्तर्भूयविद्यमानं पश्यतः किं भवति तदेवाह—तस्मिन् मनःप्राणादिषु प्रकाशमाने (३।३[७८पृ]) परावरे परं कारणम् अवरं कार्य्यं तदुभयोरेकस्मिन्नन्यस्यान्तर्भूयमानत्वादेकात्मत्वं, सुतरां—कारणकार्य्यात्मके ब्रह्मणि दृष्टे हृदयग्रन्थिः—अज्ञानजनिताऽहंबुद्धिः अहं कर्त्तेत्यभिमानः—भिद्यते विशीर्य्यते, सर्व्वे संशयाः—आत्मतत्त्वादिषु अविनिश्चयाः—छिद्यन्ते छिन्नाः भवन्ति ; अस्य साधकस्य कर्म्माणि वासनाविकारजनितानि न त्वीशव्याप्यानि तत्परिचयसाधकानि क्षीयन्ते क्षीणानि भवन्ति ।

९। न हि जातु मिथ्याश्रयेण किन्तर्हि सत्याश्रयेणैव लोकजयो भवति तदेवाह सत्यमिति। सत्यम् एव जयते जयति न अनृतं मिथ्या। पुरुषानाश्रितयोः केवलयोः सत्यानृतयोः न सम्भवतो जयपराजयाविति सत्यशब्देन सत्यवादी अनृतशब्देनानृतवादीति भाष्य-

१०। यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान्।
तं तं लोकं जयते तांश्च कामां-
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः॥

मु, ३(१)। १०।

कारनिवचनेन न सत्यानृतयोर्जयपराजयसाधकत्वं व्याहन्यते, किन्तर्हि पुरुषगतौ तौ स्वस्वक्रियामभिव्यङ्क्त इति तस्याभिप्रायः। सतो यदुद्भूतं तद्भावेन तत् सत्यम्, अतएव सत्याश्रयेण ब्रह्मभावाश्रयः, तेन चोद्भूतं साधके महत् बलम्, येन बलेन स विघ्नराशीन् पराजयते, सुतरां 'सत्यमेव जयते' इति वदति श्रुतिः। अनृतं ह्यसद्भावः तेन च भवति बलक्षयः बलक्षयेणात्मपराजय इति तत्त्वम्। सत्येन तादृशेन देवयानः देवभावप्राप्तिसाधनः पन्थाः विततः विस्तीर्णः सातत्येन प्रवृत्तः। येन पथा हि आप्तकामाः विगततृष्णाः ऋषयः दर्शनवन्तः तत्पदम् आक्रमन्ति यत्र सत्यस्य निधानं प्रवर्त्तकं तत् परं ब्रह्म। 'सत्यस्य निधानम्' इत्युक्तिबलादुक्तः सत्यस्यार्थः प्रतिपन्नो भवति। अतएव च "येषु सत्यं प्रतिष्ठितम्" इत्यतो भेदः।

१०। सत्याश्रयेणोद्भूतबलः साधकः पापानि पराजयते, तेन च भवति विशुद्धान्तःकरणः, विशुद्धान्तःकरणे यथावत् प्राप्यविषयाः प्रतिभान्ति। सुतरां तत्तल्लाभः सम्भवति परब्रह्माभिप्रायानुसारित्वात् तेषाम्। इममेवार्थं कथयति श्रुतिः यं यमिति। विशुद्धसत्त्वः विशुद्धान्तःकरणः साधकः यं यं लोकं मनसा मननेन सङ्कल्पेन संविभाति—अन्तर्भावितण्यन्तात्—संविभापयति संविभासयति प्रकाशीकरोति, यान् यान् च कामान् कामयते अभिलषति, तं तं लोकं तान् च कामान् जयते जयति आयत्तीकरोति। तस्मात् एवम्भूतम् आत्मज्ञं प्रत्यक्षीकृतात्मप्रभावं जनं भूतिकामः ऐश्वर्य्यमिच्छुः अर्च्चयेत् सेवानमस्कारादिभिः अर्हयेत्।

११। स वेदैतत् परमं ब्रह्मधाम
यत्र विश्वं निहितं भाति शुभ्रम्।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदभिवर्त्तन्ति धीराः॥

कामान् यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र।
पर्य्याप्तकामस्य कृतात्मनस्तु
इहैव सर्व्वे प्रविलीयन्ति कामाः॥

मु ३(२)। १।२।

१२। गताः कलाः पञ्चदश प्रतिष्ठा
देवाश्च सर्व्वे प्रतिदेवतासु।

११। सकामानां गतिमुक्त्वा तद्वर्ज्जितानां गतिमाह स वेदेति। स आत्मज्ञः जनः एतत् अपरोक्षं ब्रह्म परमं प्रकृष्टं धाम वेद, यत्र ब्रह्मणि निहितम् अन्तर्भूय वर्त्तमानं विश्वं शुभ्रं शुद्धं दोषमलविरहितं भवति। कदा स एतत् जानाति तदकामानां गतिकथनेन स्फोरयति —ये हि अकामाः सन्तः पुरुषम्—भूतिकामरहितत्वात् अनन्तरोक्तं 'परात्परम्'—उपासते, ते धीराः एतत् शुक्रं जन्मकारणम् अतिवर्त्तन्ति अतिवर्त्तन्ते अतिक्रामन्ति।

यः कामान् कामयते स मन्यमानः—कामैः कृतार्थैतेति—कामभिः कामैः तत्र तत्र—कामानुरूपेषु लोकेषु—जायते। पर्य्याप्तकामस्य सुतरां कृतात्मनः कृतकृत्यस्य, इह इहलोके एव सर्व्वे कामाः प्रविलीयन्ते तिरोभवन्ति।

१२। किमिदं जन्मकारणातिक्रमणं तदाह गताइति यथा इति। प्राणाद्याः पञ्चदश कलाः (५।७) प्रतिष्ठाः—कर्म्म—गताः

कर्म्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व्व एकीभवन्ति ॥

यथा नद्यः स्यन्दमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥

स योह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति।
नास्याब्रह्मवित् कुले भवति।
तरति शोकं तरति पाप्मानं
गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥

मु, ३(२)। ७—९।

स्वकारणे विलयं प्राप्ताः, देवाश्च चक्षुरादिकरणस्थाः प्रतिदेवतासु आदित्यादिषु गताः; कर्म्माणि "ईशावास्यम्" इति विधानेनानुष्ठितानि, विज्ञानमयः आत्मा जीवः सर्व्वे एते अव्यये अनन्ते परे ब्रह्मणि एकीभवन्ति एकत्वमापद्यन्ते।

यथा स्यन्दमानाः गच्छन्त्यः नद्यः नामरूपे गङ्गादि नाम प्राशस्त्यादिजनितं रूपं च विहाय परित्यज्य समुद्रे अस्तं गच्छन्ति विलयं प्राप्नुवन्ति, तथा विद्वान् नामरूपात् विमुक्तः स्वरूपमात्रावशेषः परात्-परं परात् कारणात् तद्रूपेणाभिव्यक्तात् परं तदतीतं तुरीयं दिव्यं विषयगन्धशून्यं स्वप्रकाशं पुरुषं शान्तं शिवम् उपैति उपगच्छति।

स य इति। स यः पुनः तत् परमं ब्रह्म वेद ब्रह्म एव भवति—भेदकरविषयाभावात् तेनैकतामाप्नोति। अस्य कुले न अब्रह्मवित् भवति। असौ शोकं तरति, पाप्मानं तरति, गुहाग्रन्थिभ्यः हृदय-ग्रन्थिभ्यः विमुक्तः सन् अमृतः अमरणधर्म्मा भवति।

१३। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य।

तै २।७।

१४। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवं वित्। अस्माँल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति।

१३। रसस्वरूपे परब्रह्मणोऽएकत्वेनावस्थितौ भयशून्यो भवति साधकः अतो नाणुमात्रमपि भेदं स सहते। भेददर्शिनस्तु ब्रह्मैव भयकारणमित्याह यदेति। यदा हि एव एष साधकः एतस्मिन् (४।१२) रसस्वरूपे—किम्भूते?—अदृश्ये दृगगोचरे, अनात्म्ये अशरीरे, अनिरुक्ते अनिर्व्वचनीये, अनिलयने अनाधारे—अभयं यथा स्यात् तथा प्रतिष्ठां स्थितिं विन्दते लभते, अथ स अभयं गतः प्राप्तः भवति। यदा हि एव एष साधकः एतस्मिन् परब्रह्मणि उदरम् अल्पम् अपि अन्तरं भेदं कुरुते, अथ भेदकरणानन्तरं तस्य साधकस्य भयं भवति। अतएव अमन्वानस्य एकत्वमननहीनस्य विदुषः वेदाद्यनुशीलनपरस्य तत् ब्रह्म एव तु भयं भयकारणम्, भयवशादेव स धर्म्मे प्रवर्त्तते न त्वनुरागात् यथा वातादयः (२।८)।

१४। रसस्वरूपोऽयं सर्व्वगतः। सर्व्वस्मिन् दृष्टेऽपि तस्मिन्न यदि तस्यैकत्वं विस्मरति साधकस्तदा चराचरेषु पश्यन्नपि तं साक्षात्-

यतो वाचो निवर्त्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति। तꣳह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳस्पृणुते य एवं वेद। इत्युपनिषत्। तै, २।८।६।

सम्बन्धेन जानाति, भवति च कृतार्थ इत्याह स य इति। स योऽयं रसस्वरूपः पुरुषे जीवे, यः च असौ रसस्वरूपः आदित्ये—आदित्य-इत्युपलक्षणं चराचरे—स एकः अखण्डः। स यः साधकः एवं वित् अखण्डज्ञानसम्पन्नः अस्मात् लोकात् प्रेत्य एतं पूर्व्वोक्तम् अन्नमयं चराचरमात्मन्यन्तर्भूय विद्यमानं—आत्मानं परमात्मानम् उपसंक्रामति प्रविशति—तदापि चराचरेण सम्बन्धस्य विद्यमानत्वात् सचराचरमेव—एतं पूर्व्वोक्तं प्राणमयं चराचरोद्भावके सूक्ष्मजगति तदन्तर्भूय विद्य-मानम् आत्मानं परमात्मानं उपसंक्रामति ; एतं पूर्व्वोक्तं मनोमयं मानसराज्ये तदन्तर्भूय विद्यमानम् आत्मानं परमात्मानम् उपसंक्रा-मति ; एतं पूर्व्वोक्तं विज्ञानमयं जीवात्मजगति तदन्तर्भूय विद्यमानम् आत्मानं परमात्मानं उपसंक्रामति ; एतं पूर्व्वोक्तम् आनन्दमयं प्राचुर्य्येणानुभूयमानम् आनन्दस्वरूपम् आत्मानं परमात्मानम् उप-संक्रामति। तत् तस्मिन् एव अर्थे एष श्लोकः भवति।

यतइति। व्याख्यातं पूर्व्वम् (३।७५पृ)। तत्र मनउपाधौ प्रकाशमानस्य ब्रह्मणः संस्पर्शजन्यसुखमत्र तु साक्षाद्ब्रह्मण आनन्द-संस्पर्शइति विशेषः। अहं साधु न अकरवं किम्? अहं पापम् अकरवं किम्? इति भूतकालसम्पर्कीयकर्त्तव्याकरणाकर्त्तव्यकरण-विषयकात्मजिज्ञासा तम् आनन्दलोकगतं साधकं न पुनः तपति सन्तप्तं करोति। कथं न तपति? स यः एते अतीतकर्त्तव्याकरणा-कर्त्तव्यकरणे एतमानन्दात्मनावस्थायाम् असन्तापके इति विद्वान्

१५। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान् कामान्नी भवति कामरूप्यनुसञ्चरन्। एतत् साम गायन्नास्ते। हा३वु हा३वु हा३वु। अहमन्न१ अहमन्न१ अहमन्नम्। अहमन्नादो२ऽहमन्ना-

आत्मानं स्पृणुते पालयति ततो रचति—पतने पुनरानन्दस्य विच्छेदः स्यादिति ज्ञानात्। उभे हि एव एते पूर्व्वोक्तकर्त्तव्याकरणाकर्त्तव्यकरणे यः एवं वेद—ब्रह्मणि वसतो न ताभ्यां सन्तापः संसर्गो वा इति —स एष आत्मानं स्पृणुते रचति—पापादिहलोकेऽपीति शेषः। इति उपनिषत् ब्रह्मानन्दरहस्यम्।

१५। "सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता" (४।११) इत्येतद्विवृणोति स य इति। स यश्चायमित्यादि पूर्व्ववत्। आनन्दमयमुपसंक्रम्य कामान्नो—कामतोऽन्नमस्येति कामान्नो, कामरूपी—कामतो रूपाण्यस्येति कामरूपी इमान् भूरादीन् लोकान् अनुसञ्चरन् विचरन् एतत् साम गायन् आस्ते—हावु हावु हावु अहो अहो अहो—अहम् अन्नम्, अहम् अन्नम्, अहम् अन्नम्—न मद्व्यतिरिक्तं भोग्यं किमप्यस्ति विषयस्फूर्त्तेः पूर्व्वरूपत्वात्; अहम् अन्नादः, अहम् अन्नादः, अहम् अन्नादः—न मद्व्यतिरिक्तो भोक्तापि कश्चिदस्ति पराख्यप्रकृतित्वात्; अहं श्लोककृत्, अहं श्लोककृत्, अहं श्लोककृत् —श्लोक संघाते—संघातकृत्—देहादिसंघातकारणम्; अहम् ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्यास्य जगतः प्रथमजः हिरण्यगर्भः, देवेभ्यः पूर्व्वम्, अमृतस्य—"पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि" (३।११)

दो२ऽहमन्नादः। अहऽ३म्नो१कऋदहऽ३म्नो१कऋदहऽ३म्नो१कऋत्। अहमस्मि प्रथमजा ऋता३स्य। पूर्व्वं देवेभ्योऽमृतस्य ना३भायि। यो मा ददाति सइदेव मा३वाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवां३। सुवर्णज्योतीः। य एवं वेद। इत्युपनिषत्। तै ३।१०।

१६। स एतेन प्राज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वामृतः समभवत् समभवत्। ऐ ५।४।३।

इत्यमृतस्य परब्रह्मणः नाभिः—"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" (१२।२) इति—मध्यदेशः अभिव्यक्तिस्थानम्। यः मा मां—दरिद्रैरेकत्वप्राप्तं—ददाति प्रयच्छति, स इत् इथम् एव माम् आवाः अवति—दरिद्ररक्षणेन मद्रक्षणं भवति, "आवा इति लोण्मध्यपुरुषैकवचनं पौनःपुन्येनेत्येवं सर्व्वव्याख्यानेषु निपात्यत इत्यवतीति व्याख्यातम्" इति टीकाकृत्। दरिद्रेभ्यः पुनरदत्वा भोजने—मां मत्स्वरूपम् अन्नम् अदन्तं जनम् अहम् अन्नस्वरूपम् अद्मि भोजयामि नाशयामि रूपान्तरतां प्रापयामि। कथमेवं भवति? अहं विश्वं भुवनम् अभिभवाम् अभिभवामि—सर्व्वं मद्वशे इति हेतोः। केवलं नाभिभवामि किन्तर्हि—सुवर्णज्योतिः—सुवः सूर्य्यः न इव सूर्य्य इव ज्योतिः प्रकाशः अहम्—अभिभवनमेव पुनःप्रकाशकारणम्। अत्रानन्दस्वरूपेणैकत्वात् सृष्ट्यादौ जीवे यद्यदासीत् सामर्थ्यं स्रष्टृत्वव्यतिरिक्तं तत्तदेव सर्व्वात्मताप्राप्ते साधके समुदेतीति—"य एवं वेद" इत्युपसंहारवचनेन दर्शयति—यः एवंवेद स तादृक् फलं लभते इति उपनिषत् रहस्यम्।

१६। न हि जीवो जातुचित् परात्मनानालिङ्गितस्तिष्ठतीह

१७। इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढ़ꣳ साम तस्मादृच्यध्यरूढ़ꣳ साम गीयते इयमेव साऽग्निरमस्तत् साम।

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृचाधूाढ़ꣳसाम तस्मादृचाधूाढ़ꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम।

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यधूाढ़ꣳ साम तस्मादृच्यधूाढ़ꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत् साम।

परत्र चानेन तस्य कृतार्थता। अतआह—स शारीर आत्मा ( ३।५ [५८पृ] ) वामदेवो वा एतेन प्राज्ञेन आत्मना जीवपरिष्वक्ता अस्मात् लोकात् उत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्व्वान् कामान् आप्ता प्राप्य अमृतः ब्रह्मसम्पन्नः समभवत्। यथा वामदेवस्याभवत् तथा ब्रह्मविदोऽन्यस्यापि।

१७। विद्यावल्ल्यामुद्गीथोपासना सामोपासना च विहिता। तन्मूलमात्रोपन्यस्य तज्जनितगतिरत्रोच्यते इयमिति। इयं पृथिवी एव ऋक्, अग्निः साम। तत् तस्मात् एतत् अग्न्याख्यं साम एतस्यां पृथिव्याम् ऋचि अध्यूढ़म् उपरिभावेन स्थितम्। तस्मात् सामगैः ऋचि अध्यूढ़ं साम गीयते। इयं पृथिवी सा अग्निः अमः, तत् तस्मात् उभययोगात् साम।

अन्तरिक्षम् एव ऋक् वायुः साम, तत् तस्मात् एतत् वाय्वाख्यं साम अन्तरिक्षाख्यायाम् ऋचि अध्यूढ़म्। तस्मात् सामगैः ऋचि अधूाढ़ं साम गीयते। अन्तरिक्षम् एव सा वायुः अमः, तत् तस्मात् उभययोगात् साम।

द्यौः एव ऋक् आदित्यः साम। तस्मात् एतत् आदित्याख्यं साम

नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढ़ँ साम तस्मादृच्यध्यूढ़ँ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम।

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढ़ँ साम तस्मादृच्यध्यूढ़ँ साम गीयते।

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व्व एव सुवर्णः।

एतस्यां दिवि ऋचि अधूढ़म्। तस्मात् सामगैः ऋचि अधूढ़ं साम गीयते। द्यौः एव सा आदित्यः अमः, तत् तस्मात् उभययोगात् साम।

नक्षत्राणि एव ऋक् चन्द्रमाः साम, तत् तस्मात् एतत् चन्द्रमआख्यं साम एतस्यां नक्षत्राख्यायाम् ऋचि अधूढ़ं साम गीयते। नक्षत्राणि एव सा चन्द्रमाः अमः, तत् तस्मात् उभययोगात् साम।

अथ यत् एतत् आदित्यस्य शुक्लं भाः सा एव ऋक्, अथ यत् नीलं परःकृष्णं परोऽतिशयेन कार्ष्ण्यं—रवौ दृष्टेरेकान्तसमाधानेऽनुभूयमानं—तत् साम। तत् तस्मात् एतत् कार्ष्ण्याख्यं साम एतस्यां शुक्लदीप्याम् ऋचि अधूढ़म्। तस्मात् सामगैः ऋचि अधूढ़ं साम गीयते।

अथ यत् एव एतत् आदित्यस्य शुक्लं भाः सा एव सा, अथ यत् नीलं परःकृष्णं तत् अमः, तत् तस्मात् उभययोगात् साम।

अथ य एष अन्तरादित्ये—इत्यादि व्याख्यातम् (३।७)। इति अधिदैवम्।

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्व्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेद।

तस्यर्क्‌ च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम्। १—८।

अथाध्यात्मं वागेवर्क्‌ प्राणः साम तदेतस्यामृच्यधूाढ़ं साम तस्मादृच्यधूाढ़ं साम गीयते वागेव सा प्राणोऽमस्तत् साम।

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यधूाढ़ं साम तस्मादृच्यधूाढ़ं साम गीयते। चक्षुरेव साऽऽत्मामस्तत् साम।

श्रोत्रमेवर्ङ्‌ मनः साम तदेतदेतस्यामृच्यधूाढ़ंसाम तस्मादृच्यधूाढ़ं साम गीयते। श्रोत्रमेव सा मनोऽमस्तत् साम।

अथ अध्यात्मम्। वाक् एव ऋक् प्राणः साम। तत् तस्मात् एतत् प्राणाख्यं साम एतस्यां वाचि ऋचि अध्यूढ़म्। तस्मात् सामगैः ऋचि अधूाढ़ं साम गीयते। वाक् एव सा प्राणः अमः, तत् तस्मात् उभययोगात् साम।

चक्षुः एव ऋक्, आत्मा चक्षुषि स्थितः छायात्मा साम। तत् तस्मात् एतत् आत्माख्यं साम एतस्यां चक्षुराख्यायाम् ऋचि अधूाढ़म्। तस्मात् सामगैः ऋचि अधूाढ़ं साम गीयते। चक्षुः एव सा आत्मा अमः, तत् तस्मात् उभययोगात् साम।

श्रोत्रम् एव ऋक् मनः साम। तत् तस्मात् एतत् मनआख्यं

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढ़ꣳ साम तस्मादृच्यध्यूढ़ꣳ साम गीयते अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ।

अथ यएषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ।

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्य-कामानाञ्चेति तद्यइमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ।

अथ य एतदेवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताꣳश्चा-प्नोति देवकामाꣳश्च ।

साम एतस्यां श्रोत्राख्यायाम् ऋचि अध्यूढ़म् । तस्मात् सामगैः ऋचि अध्यूढ़ं साम गीयते । श्रोत्रम् एव सा मनः अमः । तत् तस्मात् उभययोगात् साम ।

अथ यत् एतत् अक्ष्णः चक्षुषः शुक्लं भाः सा एव ऋक्, अथ यत् नीलं परः कृष्णं तत् साम । तत् तस्मात् एतत् कार्ष्ण्याख्यं साम एतस्यां शुक्लदीप्त्याम् ऋचि अध्यूढ़म् । तस्मात् सामगैः ऋचि अध्यूढ़ं साम गीयते । अथ यत् एव एतत् अक्ष्णः शुक्लं भाः सा एव सा, अथ यत् नीलं परः कृष्णं तत् अमः । तत् तस्मात् उभययोगात् साम ।

अथ यएषोऽन्तरक्षिणि पुरुषः इत्यादि व्याख्यातम् (३।८) ।

अथ यः एतत् एवं विद्वान् साम गायति, उभौ—चाक्षुषम् आदि-त्यं च—स गायति । स अमुना आदित्यपुरुषेण एव ये च अमुष्मात्

अथानेनैव ये चैतस्मादर्व्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात्।

कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एतदेवं विद्वान् साम गायति साम गायति। १—९।

छा, १।३।६।७।

१८। त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति।

आदित्यात् पराञ्चः ऊर्द्धस्थाः लोकाः तान् लोकान् च देवकामान्—स एष आप्नोति।

अथ अनेन एव चाक्षुषपुरुषेण ये च एतस्मात् आदित्यात् अर्व्वाञ्चः अर्व्वाग्गताः अधःस्थाः लोकाः तान् लोकान् मनुष्यकामान् च आप्नोति। तस्मात् कारणात् पुनः उद्गाता एवं ब्रूयात्—

हे यजमान, ते तव कं कामं देवं मानुषं वा आगायानि इति। हि यस्मात् य एतत् एवं विद्वान् साम गायति, स एष उद्गाता कामागानस्य उद्गानेन इष्टे समर्थः कामं सम्पादयितुम्। साम गायति साम गायति इति द्विरुक्तिः समाप्त्यर्था।

१८। उच्चादुच्चतरः परात् परतरो लोको विद्यते, तदधिगमोपायमाख्यायिकामुखेन नय इति। ह—ऐतिह्ये। शालावत्यः शलावतोऽपत्यं शिलकः, चैकितायनः चिकितायनस्यापत्यं दाल्भ्यः, जीवलस्यापत्यं जैवलिः प्रवाहणः इति त्रयः उद्गीथे उद्गीथज्ञानं प्रति कुशलाः निपुणाः बभूवुः। ते पुनः ऊचुः वयम् उद्गीथे वै कुशलाः स्मः। हन्त—वाक्यारम्भे—उद्गीथे उद्गीथविषये कथां वदामः इति।

तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति।

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच।

का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच।

अपां का गतिरित्यसौ लोक इति होवाच, मनुष्यलोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति।

तथा इति पुनः उक्त्वा ते समुपविविशुः किल। स प्रवाहणः जैवलिः पुनः उवाच—भगवन्तौ पूज्यौ अग्रे वदताम्। कथम्? वदतोः प्रश्नोत्तररूपेण भाषतोः ब्राह्मणयोः—अनुरोद्धा तु क्षत्रियः ब्राह्मणयोरिति विशेषणसामर्थ्यात्—वाचं श्रोष्यामि इति हेतोः।

स पुनः शालावत्यः चैकितायनं दाल्भ्यम् उवाच—हन्त त्वा त्वाम् पृच्छानि इति। स दाल्भ्यः पुनः उवाच—पृच्छ।

साम्नः का गतिः इति प्रश्नः। स दाल्भ्यः पुनः उवाच—स्वरः इति। स्वरस्य का गतिः इति प्रश्नः। स दाल्भ्यः पुनः उवाच—प्राणः इति। प्राणस्य का गतिः इति प्रश्नः। स दाल्भ्यः उवाच—अन्नम्। अन्नस्य का गतिः इति प्रश्नः। स दाल्भ्यः उवाच—आपः इति।

अपां का गतिः इति प्रश्नः। स दाल्भ्यः उवाच—असौ लोकः इति। अमुष्य लोकस्य का गतिः इति प्रश्नः। स दाल्भ्यः पुनः उवाच—स्वर्गं लोकम् अति अतीत्य न साम नयेत् इति। वयं साम

त९ँह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति ।

हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्यलोकस्य का गतिरित्ययं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमति नयेदिति होवाच प्रतिष्ठां वयं लोक९ँ सामाभिसं९ँस्थापयामः प्रतिष्ठासं९ँस्ताव९ँ हि सामेति ।

स्वर्गं लोकम् अभि संस्थापयामः—स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः । हि यस्मात् साम स्वर्गसंस्तावं—स्वर्गत्वेन संस्तवनं यस्य तत् ।

तं पुनः चैकितायनं दाल्भ्यं शिलकः शालावत्यः उवाच—हे दाल्भ्य, ते तव साम अप्रतिष्ठितं किल, वै—आगमस्य स्मारकः । यः तु एतर्हि एतस्मिन् काले असहिष्णुः सन् ब्रूयात्—मूर्द्धा ते तव विपतिष्यति इति ते तव मूर्द्धा विपतेत् इति—नाहं तथा ब्रवीमि, अतो न ते मूर्द्धा पतितः ।

एवमुक्तो दाल्भ्य आह—हन्त, अहं भगवत्तः एतत्—यत्प्रतिष्ठं साम तत्—वेदानि जानानि । स शालावत्यः शिलकः पुनः उवाच—विद्धि इति । एवमनुमतस्य दाल्भ्यस्य प्रश्नः—अमुष्य मनुष्यलोकस्य का गतिः इति । स शिलकः पुनः उवाच—अयं लोकः इति । अस्य लोकस्य का गतिः इति प्रश्नः । स शिलकः पुनः उवाच—प्रतिष्ठां साम्नः प्रतिष्ठाभूतम् इमं लोकम् अति अतीत्य साम न नयेत्—यागदानादिभिरस्य मनुष्यलोकस्य परिपुष्टेः । वयं साम प्रतिष्ठाम् इमं लोकम् अभिसंस्थापयामः । हि यस्मात् साम प्रतिष्ठासंस्तावम् —प्रतिष्ठात्वेन संस्तुतम् ।

स ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच। १—८।

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तंयन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्।

स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसोह लोकान् जयति य एतदेवं विद्वान् परोवरीयाꣳसमुद्गीथमुपास्ते ।

तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति।

तं शालावत्यं शिलकं प्रवाहणः जैवलिः उवाच—अन्तवत् वै किल ते तव साम। यः तु असहिष्णुः एतर्हि एतस्मिन् काले ब्रूयात्—मूर्द्धा ते तव विपतिष्यति इति, मूर्द्धा ते तव विपतेत् इति। शिलकः पुनः उवाच—हन्त अहम् एतत् भगवत्तः वेदानि इति। स जैवलिः पुनः उवाच—विद्धि इति।

एवमनुमतस्य शिलकस्य प्रश्नः—अस्य लोकस्य का गतिः इति व्याख्यातम् (२।८)।

तम् एतम् उद्गीथं शौनकः शुनकस्यापत्यम् अतिधन्वा उदरशाण्डिल्याय शिष्याय उक्त्वा उवाच—एनम् उद्गीथं ते तव प्रजायां प्रजासमूहेषु

तथामुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति। १।४।

छा, १।३।८।९।

१९। अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्न-

सन्ततयः यावत् वेदिष्यन्ते ख्यास्यन्ते, तावत् एभ्यः प्रजाभ्यः परोवरीयः उत्तरोत्तरविशिष्टं जीवनं भविष्यति अस्मिन् लोके

तथा अमुष्मिन् लोके इति। स यः अधुनापि एतम् उद्गीथम् एवं विद्वान् उपास्ते अस्य पुनः परोवरीयः जीवनं भवति अस्मिन् लोके तथा अमुष्मिन् लोके इति। लोके लोके इति द्विरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था।

१९। "दुर्ब्बलानां गवां चत्वारि शतानि सहस्रेणापूर्य्य प्रत्यावर्त्तितव्यमित्याचार्य्येणादिष्टं ब्रह्मचारिणं सत्यकामं जाबालं सहस्रसंख्याप्रपूर्त्तिकालएव ऋषभादयो ब्रह्मोपदिदिशुः" इति यत् पूर्व्वमुक्तं (३।१४) तत्रेयमाख्यायिका ;—

सत्यकामोह जाबालो जाबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्य्यं, भवति, विवत्स्यामि किं गोत्रोऽहमस्मीति। १। सा हैनमुवाच नाहमेतद्वेद, तात, यद्गोत्रस्त्वमसि। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि, जाबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि, स सत्यकाम एव जाबालो ब्रवीथा इति। २। स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्य्यं भगवति वत्स्याम्युपेयां भगवन्तमिति। ३। तं होवाच किं गोत्रो नु सोम्यासीति ; स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि, अपृच्छं मातरं सा मा प्रत्यब्रवीत् "बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि, जाबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति।" सोऽहम् सत्यकामो जाबालोऽस्मि। ४। तं होवाच नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति। तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानु संव्रजेति। ता अभिप्रस्थापयन्नुवाच नाऽसहस्रेणावर्त्तयेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रं सम्पेदुः। ५।

मादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः

तस्य पुनराचार्य्यकुलप्राप्त्यनन्तरमेवमाख्यायिकापरिसमाप्तिः—

प्राप हाचार्य्यकुलं, तमाचार्य्योऽभ्युवाद सत्यकाम३ इति, भगव इति ह प्रतिशुश्राव । १ । ब्रह्मविदिव वै, सोम्य, भासि, कोनु त्वानुशशासेति अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे, भगवांस्त्वेव मे कामे ब्रूयात् । २ । श्रुतं ह्येव मे भगवद्दृशेभ्यः—आचार्य्याद्धेव विद्या विदिता साधिष्ठं प्रापयतीति, तस्मै हैतदेवोवाच, अत्र ह न किञ्चन वीयायेति वीयायेति । ३ ।

अत्र पुन :—

उपकोसलोह कामलायनः सत्यकामे जाबाले ब्रह्मचर्य्यमुवास तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः समावर्त्तयं स्तं ह स्मैव न समावर्त्तयति । १ । तं जायोवाच, तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीत् मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति, तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे । २ । स ह व्याधिनाऽनशितुं दध्रे तमाचार्य्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति, स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्ययाः व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति । ३ । अथ हाग्नयः समूदिरे, तप्तो ब्रह्मचारी कुशलं नः पर्य्यचारीत् हन्तास्मै प्रब्रवामेति तस्मै होचुः । ४ ।

'प्राणो ब्रह्म' इत्यादि ( ३।१५ ) सम्भूयाग्नय उपकोसलाय ब्रह्म प्रोक्तवन्तः, अथ अनन्तरं प्रत्येकं स्वस्वविषयां विद्यां वक्तुमारेभिरे । तत्रादौ एनं ब्रह्मचारिणं गार्हपत्यः अग्निः अनुशशास । पृथिवी, अग्निः, अन्नम्, आदित्यः इति—मम चतस्रस्तनव इति शेषः । तत्र आदित्ये यः एष पुरुषः दृश्यते स अहम् अस्मि गार्हपत्योऽग्निः स एवाऽहमादित्ये पुरुषोऽस्मि इति ।

स यः एवं विद्वान् एतं गार्हपत्याग्निम् उपास्ते स पापकृत्यां पापकर्म्म अपहते अपहन्ति, लोकी लोकवान् भवति, सर्व्वं वर्षशतम् आयुः एति आप्नोति, ज्योक् उज्ज्वलं जीवति, अस्य विदुषः अवरपुरुषाः

चीयन्ते उप वयं तं भुञ्जामोऽस्मिꣳश्चलोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते। ११२।

अथ हैनमन्वाहार्य्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः चीयन्ते उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते। ११२।

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति यएव विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति।

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः

अधस्तनपुरुषाः पुत्रपौत्रादयः न चीयन्ते। यः एवं विद्वान् एतं गार्हपत्याग्निम् उपास्ते तं वयम् अग्नयः सम्भूय अस्मिन् च लोके अमुस्मिन् च लोके उपभुञ्जामः पालयामः।

अथ अनन्तरम् एनम् उपकोसलम् अन्वाहार्य्यपचनः दक्षिणाग्निः अनुशशास। आपः दिशः नक्षत्राणि चन्द्रमाः इति चतस्रः मम तनवः।

यएष चन्द्रमसि पुरुषो दृश्यते इत्यादीनां व्याख्यानं पूर्व्ववत्।

अथ अनन्तरम् एनम् उपकोसलम् आहवनीयः अनुशशास। प्राणः आकाशः द्यौः विद्युत् इति चतस्रः मम तनवः।

यएष विद्युति पुरुषो दृश्यते इत्यादीनां व्याख्यानं पूर्व्ववत्।

क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ।१।२।

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्य्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्य्यस्तमाचार्य्योऽभ्युवादोपकोसल३ इति ।

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति को नु मानुशिष्याद्भो इति हापेव निह्नुते इमे नूनमीदृशा अन्यादृशा इति हाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ।

ते पुनः सम्भूय ऊचुः हे सोम्य उपकोसल, एष ते तव अस्मद्विद्या अग्निविद्या आत्मविद्या च—पूर्व्वोक्ता (३।१५) "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति च। आचार्य्यः तु ते तुभ्यं गतिं वक्ता—विद्याफल-प्राप्तये इति। अस्य आचार्य्यः आजगाम प्रवसात्। तम् उपकोसलम् आचार्य्यः अभ्युवाद—उपकोसल३ इति।

हे भगवः भगवन् इति पुनः स प्रतिशुश्राव—आदरेणाचार्य्यवचनं प्रतिजग्राह। आचार्य्य आह—हे सोम्य, ब्रह्मविदः मुखम् इव ते मुखं भाति। को नु त्वा त्वाम् अनुशशास इति। उपकोसलः—भो आचार्य्य, को नु मा माम् अनुशिष्यात् इति ह अपनिह्नुते इव —इवशब्देन द्योत्यते—दृश्यतो न तु वस्तुतोऽपनिह्नुते। कथम्? इमे अग्नयः नूनम् ईदृशाः आचार्य्यवत् उपदेशयोग्याः सन्तः त्वत्-सन्निधौ अन्यादृशाः उपदेशायोग्या इति ह स अग्नीन् अभ्यूदे उक्त-वान्, तेषामुपदेशे न्यूनतास्ति—"आचार्य्यस्तु ते गतिं वक्ता" इति तेरुक्तत्वात्। एवमेवोक्तमन्यथा निह्नवाभिप्राये सति तमेवाचार्य्योऽवो-धदिति चेत् न पुनरयं पृच्छेत्—किं नु ते अग्नयः, हे सोम्य, अवोचन् किल इति।

इदमिति ह प्रतिजज्ञे लोकान् वाव किल सोम्य तेऽवोचन्नहन्तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच। १—३।

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचै-तदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति।

एतं संयद्वाम इत्याचक्षत एतं हि सर्व्वाणि वामा-न्यभिसंयन्ति सर्व्वाण्येनं वामान्यभिसंयन्ति य एवं वेद।

एष उ एव वामनीरेष हि सर्व्वाणि वामानि नयति सर्व्वाणि वामानि नयति य एवं वेद।

उपकोसलः—इदम् इति ह प्रतिजज्ञे—अग्निभिर्यदुक्तं तत् निवे-दितवान्। यदपि चेत् न निखिलं तदुक्तं तेन निवेदितम्, तथा सति न पुनराचार्य्येणोच्येत—लोकान् वाव किल ते अग्नयः, हे सोम्य, अवोचन् इति। तत्रेदं विवेच्यम्—प्राप्यत्वेन यदुच्यते स लोकः। अग्निभिः "कं ब्रह्म खं ब्रह्म" इति प्राप्यत्वेनोक्तं ब्रह्म न तु गतित्वेन सा त्वाचार्य्येणैव वक्तव्या—"अर्च्चिषमेवाभि सम्भवन्ति" "स एतान् ब्रह्म गमयति" इत्यादिभिरिति तैरभिप्रेतम्। अन्यथाऽग्निविद्यात्म-विद्या चेत्युभयमवोक्षिप्य न तैरुच्येत 'आचार्य्यस्तु ते गतिं वक्ता' इति। सुतरां साधूक्तमग्निभिर्यदुक्तं तन्निवेदितवानिति। अहं तु ते तुभ्यं तत् अनुक्तं वक्ष्यामि। मयोच्यमानस्य माहात्म्यम्—यथा पुष्करपलाशे पद्मपत्रे आपः न श्लिष्यन्ते श्लिष्टा भवन्ति, एवम् एवंविदि तादृग्ज्ञानवति पापं कर्म्म न श्लिष्यते इति। उपकोसलः—मे मह्यं भगवान् ब्रवीतु इति। तस्मै उपकोसलाय पुनः आचार्य्यः उवाच;—

यएषोऽक्षिणि पुरुषो दृश्यते इत्यादि व्याख्यातम् (३।१६)।

एष उ एव भामनीरेष हि सर्व्वेषु लोकेषु भाति सर्व्वेषु लोकेषु भाति य एवं वेद।

अथ यदु चैवास्मिञ्छव्यं कुर्व्वन्ति यदि च नार्च्चिषमेवाभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः।

स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन

गतिरुच्यते अथेति। अथ यत् यदि पुनः एव अस्मिन् एवंविदि शव्यं शवकर्म्म सत्क्रियां कुर्व्वन्ति यदि च न कुर्व्वन्ति ऋत्विजः, अर्च्चिषम् अर्च्चिरभिमानिनीं देवताम् अभिसम्भवन्ति प्रतिपद्यन्ते परेताः— तदाप्यायनेन प्राकट्यं भजन्तीत्याधुनिकाः; अर्च्चिर्देवतायाः अहः अहरभिमानिनीं देवताम्, अह्नः आपूर्य्यमाणपक्षं शुक्लपक्षं तदभिमानिनीं देवताम्, आपूर्य्यमाणपक्षात् शुक्लपक्षात् यान् षण्मासान् उदङ् उत्तरां दिशम् एति सविता तान् मासान् उत्तरायणाभिमानिनीं देवतां, मासेभ्यः तेभ्यः संवत्सरम्—संवत्सरमिहलोकसम्बन्धं न अहन्तीत्याधुनिकाः, अहरादयः प्राकट्यानुकूलकाला इत्यपि च तं—संवत्सरात् आदित्यम्, आदित्यात् चन्द्रमसं, चन्द्रमसः विद्युतम्—अभिसम्भवन्तीति शेषः। तत्पुरुषः विद्युत्स्थः पुरुषः अमानवः न मानवः देवः। दृश्यते पुनरथर्व्वणि—"ईजानश्चित्तमारुक्षदग्निं नाकस्य पृष्ठाद्दिवमुत्पतिष्यन्। तस्मै प्रभाति नभसो ज्योतिष्मीमान्त्स्वर्गः पन्थाः सुकृते देवयानः॥" (१८का, ४अनु, १४ऋक्) इति। तदुक्तोऽयं प्रपञ्चः।

स वैद्युतः पुरुषः एतान् परेतान् ब्रह्म गमयति प्रापयति। एष देवपथः—देवैरर्च्चिरादिभिरुपलक्षितो मार्गः, ब्रह्मपथः गन्तव्येन ब्रह्मणा

प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्ते।

१—६। छा, ४।६।११—१५।

२०। श्वेतकेतुर्हारुणेयः पाञ्चालानाम् समिति-मेयाय तꣳ ह प्रवाहणो जैवलिरुवाच कुमारानु त्वा-शिषत् पिता इत्यनु हि भगव इति।

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति, वेत्थ यदा पुनरावर्त्तन्ता३ इति न भगव इति; वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना३ इति न भगव इति।

उपलक्षितो मार्गः। एतेन पथा प्रतिपद्यमानाः परेताः इमं मानवं मनुसम्बन्धिनम् आमनोः प्रवर्त्तमानम् अथवा [illegible] मानवसम्बन्धिनं मनुष्यलोकसम्पर्कीणम् आवर्त्तं चक्रवद्रूपरूपान्तर-लोकलोकान्तरपरिभ्रमणं न आवर्त्तन्ते—स्वरूपेणावस्थानात्। (४।३। १—१५)।

२०। विशेषभावेन गतिं वक्तुं प्रकरणान्तरमारभते श्वेतकेतुरिति। ह ऐतिह्ये। आरुणेयः—अरुणस्यापत्यम् आरुणिः तस्य अपत्यम् आरुणेयः—श्वेतकेतुः पञ्चालानां जनपदानां समितिं सभाम् एयाय आजगाम। तम् आगतवन्तं पुनः जीवलस्यापत्यं जैवलिः प्रवाहणः उवाच—हे कुमार, त्वा त्वां पिता अन्वशिषत् इति—किमनुशिष्टस्त्वं पित्रेत्यर्थः। स आह—हे भगवः भगवन्, अनु हि—अनुशिष्टोऽस्मि—इति।

राजाह—वेत्थ जानीषे यत्, इतः अस्मात् लोकात् अधि अध्यूर्द्ध्वं यत् यत्र परेताः प्रयन्ति इति? स आह—न भगवः भगवन् इति। राजाह—वेत्थ जानीषे, यथा येन प्रकारेण पुनरावर्त्तन्ते प्रजाः इति? स आह—न भगवः भगवन् इति। राजाह—वेत्थ जानीषे, देव-

वेत्थ यथासौ लोको न सम्पूर्य्यता३ इति न भगव इति ; वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति।

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳसोऽनुशिष्टो ब्रवीतेति स हायस्तः पितुरर्द्धमेयाय तꣳ होवाचाऽननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति।

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकञ्च नाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो

यानस्य पितृयाणस्य च पथोः व्यावर्त्तना—कुतः पथद्वयं पृथग्गति भवतीति। स आह—न भगवः भगवन् इति।

वेत्थ जानीषे, यथा येन प्रकारेण असौ लोकः न सम्पूर्य्यते इति। स आह—न भगवः भगवन् इति। वेत्थ जानीषे, यथा येन प्रकारेण पञ्चम्यां पञ्चपूरणसंख्यायाम् आहुतौ आपः—आहुतिसाधनाः—पुरुषवचसः पुरुषवाच्याः भवन्ति पुरुषाख्यां लभन्त इत्यर्थः। स आह—नैव भगवः भगवन् इति।

राजाह—अथ किं नु त्वम् अनुशिष्टः तत् अवोचथाः, यो हि न इमानि विद्यात्, कथं स अनुशिष्टः—अनुशिष्टोऽस्मीति—ब्रवीत इति। स पुनः आयस्तः क्लिष्टहृदयः पितुः अर्द्धं स्थानम् एयाय गतवान्। तं पितरं पुनः स उवाच—अननुशिष्य अनुशासनम् अकृत्वा एव किल मा मां भगवान् अब्रवीत्—त्वा त्वाम् अन्वशिषम् अनुशिष्टवान् इति।

राजन्यबन्धुः—क्लिष्टहृदयत्वाच्चकारोक्तिः—राजन्याधमः मा मां पञ्च प्रश्नान् अप्राक्षीत् पृष्टवान्। तेषां प्रश्नानाम् एकञ्च न विवक्तुं विशेषेणार्थतो निर्णेतुं न अशकम् न शक्तवान् इति। स पिता पुनः उवाच —तदा—मत्सन्निधावागमनकाले—यथा त्वं मा माम् एतान् प्रश्नान्

यथाऽहमेषां नैकञ्चन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ।

स तु गौतमो राज्ञोऽर्द्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ।

स ह कृच्छ्री बभूव तꣳह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमाऽवदो यथेयन्न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्व्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच।१—७ ।

अवदः उक्तवान् असि, यथा अहम् एषां प्रश्नानाम् एकं च न वेद, तथा तवाभवदिति शेषः । यदि अहम् इमान् प्रश्नान् अवेदिष्यम् विदितवान् अस्मि, कथं ते तुभ्यं प्रियाय पुत्राय न अवक्ष्यम् उक्तवान् अस्मि इति ।

स पुनः गौतमः—गोत्रतः आरुणिः—राज्ञः अर्द्धं स्थानम् एयाय गतवान् । प्राप्ताय समीपोपगताय तस्मै गौतमाय स राजा अर्हाम् अर्हणां चकार अर्हयाञ्चकार । स गौतमः पुनः प्रातं सभागे सभागते राज्ञि उदेयाय । स राजा तं गौतमम् उवाच—हे भगवन् गौतम, मानुषस्य मनुष्यसम्बन्धिनो वित्तस्य वरं कामं वृणीथाः प्रार्थयेथाः इति । स गौतमः पुनः उवाच—हे राजन्, मानुषं वित्तं तव एव अस्तु इति शेषः । कुमारस्य मम पुत्रस्य अन्ते समीपे याम् एव वाचम् अभाषथाः ताम् एव वाचं मे ब्रूहि इति ।

स राजा पुनः कृच्छ्री कष्टागतः बभूव—ब्राह्मणस्याप्रत्याख्येयत्वात् । तं गौतमं पुनः चिरं दीर्घकालं वस इति आज्ञापयाञ्चकार आज्ञप-

असौवाव लोको गौतमाग्निस्तस्यादित्य एव समिद्र-श्मयो धूमोऽहरर्च्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फु-लिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति। १।२।

वान्। हे गौतम, त्वं मा मां यथा अवदः "तामेव मा ब्रूहि" इति, इयं विद्या त्वत्तः प्राक् ब्राह्मणान् यथा न गच्छति न अगच्छत्, तस्मात् पुनः पुरा—त्वत्सन्निधौ भाषणात्—पूर्व्वं सर्व्वेषु लोकेषु क्षत्रस्य एव प्रशासनम् अभूत् अनया विद्यया शिष्याणाम्। अतःप्रभृति ब्राह्मणा उपदेक्ष्यन्तीति भावः। तस्मै गौतमाय स उवाच ;—

असौ लोकः द्युलोकः आकाश इति यावत् एव, हे गौतम, अग्निः, तस्य अग्नेः समित् आदित्यः एव—समिन्धनात्, रश्मयः धूमः—तदुत्थानात्, अहः अर्च्चिः—प्रकाशसामान्यात्, चन्द्रमाः अङ्गाराः—अह्नः प्रशमेऽभिव्यक्तेः आदित्यकिरणेन च किरणवत्त्वात्, स्वतः त्वरणहीनत्वात् नक्षत्राणि विस्फुलिङ्गाः—विप्रकीर्णत्वात्।

तस्मिन् एतस्मिन् अग्नौ देवाः—"यो दिवि तिष्ठन्" (३।२२), इत्यन्तर्याम्यधिष्ठिताम्, "अनेन जीवेनात्मना" (१२।२) इति जीवोपदानाम्, मधुब्राह्मणानुमोदितसमावस्थितजगज्जीवतदन्तर्याम्युद्भूतस्वरूपाम्—श्रद्धां श्रद्धाभाविताः सूक्ष्मा आपः—"श्रद्धापूर्व्वकं होममुद्दिश्य —'पयः सोमाज्याहुतिसाधनं सम्पाद्य जुह्वोति' इति तैत्तिरीयकाः पठन्ति" इति टीकाकृत्—जुह्वति, तस्याः आहुतेः—परिणामः —सोमः राजा सम्भवति आविरेति। "जलमयजलजस्य गोलकत्वात्" इति सोमस्य जलमयवपुष्ट्वम्। अन्तरिक्षगतस्तोय आदित्येन परिवर्द्धितः वाष्पाख्युद्भावयति तैश्च चन्द्रगोलकं उद्भूयते इति तत्त्वम्।

पर्ज्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्च्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳराजानं जुह्वति तस्या आहुतेर्वर्षꣳ सम्भवति। ११।

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्च्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ सम्भवति। १२।

पर्ज्जन्यः—वृष्ट्युपकरणवाष्पराशिः—एव, हे गौतम, अग्निः, तस्य अग्नेः समित् वायुः एव—पुरोवातादिप्राबल्ये वृष्टिदर्शनात् तत्परिचालनेन च वर्षणयोग्यत्वात्, अभ्रं धूमः तद्रूपेण प्रकाशमानत्वात्, विद्युत् अर्च्चिः प्रकाशसामान्यात्, अशनिः अङ्गाराः—वैद्युतांशापगमे विश्लिष्टायसादिरूपेण तत्समानाकारत्वात्, ह्रादुनयः—गर्ज्जितशब्दाः—विस्फुलिङ्गाः विप्रकीर्णत्वात्।

तस्मिन् एतस्मिन् अग्नौ देवाः सोमं राजानं आप्यपिण्डं जुह्वति, तस्याः आहुतेः—परिणामः—वर्षं सम्भवति।

पृथिवी एव, हे गौतम, अग्निः, तस्याः पृथिव्याः तदाख्याग्नेः समित् संवत्सरः एव—संवत्सरेण वर्षणफलभूतानां व्रीह्यादीनां परिपाकात्, आकाशः धूमः—तद्वत्प्रतीयमानत्वात्, रात्रिः अर्च्चिः—पृथिव्यास्तमोरूपत्वाभिव्यञ्जकत्वात्, दिशः अङ्गाराः—उपशान्तत्वसामान्यात्, अवान्तरदिशः विस्फुलिङ्गाः—क्षुद्रत्वसामान्यात्।

तस्मिन् एतस्मिन् अग्नौ देवाः वर्षं जुह्वति, तस्याः आहुतेः—परिणामः—अन्नं सम्भवति।

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति। १।२।

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति। १।२।

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति

पुरुषः एव, हे गौतम, अग्निः, तस्य पुरुषाग्नेः वाक् एव समित्—वाचा हि मुखेन समिध्यते पुरुषः न मूकः, प्राणः धूमः—धूम इव मुखान्निर्गमनात्, जिह्वा अर्चिः—वाचां प्रकाशकत्वात्, चक्षुः अङ्गाराः—भास आश्रयत्वात्, श्रोत्रं विस्फुलिङ्गाः—विप्रकीर्णत्वसाम्यात्।

तस्मिन् एतस्मिन् अग्नौ देवाः अन्नं जुह्वति, तस्याः आहुतेः—परिणामः—रेतः सम्भवति।

योषा एव, हे गौतम, अग्निः, तस्याः उपस्थः योनिलिङ्गं समित्—पुत्रोत्पादनाय समिन्धनात्, यत् उपमन्त्रयते स धूमः—उपमन्त्रणस्य सङ्केतकरणस्य तद्विकारोत्थत्वात्, योनिः अर्चिः—इन्धनकारणप्रकाशकत्वात्, यत् अन्तःकरोति ते अङ्गाराः—उपशान्तत्वसामान्यात्, अभिनन्दाः विस्फुलिङ्गाः—सुखावाप्त्युदयमात्रविलोपस्वभावत्वात्।

तस्मिन् एतस्मिन् अग्नौ देवाः रेतः जुह्वति, तस्याः आहुतेः—परिणामः—गर्भः सम्भवति।

इति तु एवं तु पञ्चम्याम् आहुतौ आपः—श्रद्धाशब्दवाच्याः—

स उल्वावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते।

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतोयतः सम्भूतो भवति। १२।

पुरुषवचसः पुरुषवाच्याः भवन्ति इति। स उल्वावृतः गर्भचर्म्मणावृतः गर्भः दश वा नव वा मासान् यावत् यावता वा कालेन न्यूनातिरिक्तेन शयित्वा—मातुः कुक्षौ—अथ अनन्तरं जायते।

येनैव क्रमेण सृष्टिः प्रकल्पिता तेनैव सर्व्वत्र क्रियाप्राधान्यात् तत् तत् यज्ञसाधनत्वेन परिगृहीतम्। दृश्यते तैत्तिरीये—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः।" (८।४) इति। यज्ञकल्पने पुनरत्रादित्यस्य प्राथम्यं वायोर्द्वितीयत्वं न विरुध्यते क्रमस्यानियतत्वात् छान्दोग्ये तेजसः प्राथम्यस्य दर्शनात्। जीवोत्पत्तिक्रमचिन्तनेनाराधनं तत्र तत्र परमात्मक्रियादर्शनेन भवति। आकाशाद्युपादानानां परात्मालिङ्गितजीवसद्भावात् तादृक्परिणामः सम्भवतीति देवस्वरूपेण तेषां कर्त्तृत्वमत्र ग्रथितम्—दृश्यते च तथा छान्दोग्ये "हन्ताहमिमास्तिस्रो देवताः" (१२।२) इत्यादि। "तज्जलानिति" न्यायमाश्रित्य सर्व्वत्र सर्व्वस्येशावास्यत्वं सिध्यतीति नैतैः परात्मना साक्षात्सम्बन्धस्य हानिरावासनेन तुरीयत्वाभिव्यक्तेः।

"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसोभवन्ति" इति चरमप्रश्नो व्याख्यातः। सम्प्रति "यदितोऽधिप्रजाः प्रयन्ति" "वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना" इत्यनयोर्व्याख्यानमारभ्यते स जात इति। स जातः आयुषं यावत् जीवति। प्रेतं मृतं तं दिष्टं निर्द्दिष्टं कर्म्मानुरूपं लोकं प्रति इतः इहलोकात् अग्नयः एव हरन्ति। कथमग्नयो हरन्तीति तत्कारणमुच्यते—यतः एव

तद्यइत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्च्चिषमभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान् ।

मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति ।

अथ ये इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणेति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ।

अग्निभ्यः पञ्चभ्यः इतः आगतः जन्मकाले, यतः अग्निभ्यः श्मशानान्तात् सम्भूतः भवति भास्वरवर्णपुरुषरूपेण ।

ये गृहस्थाः तत् पञ्चाग्निदर्शनम् इत्थं—द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पञ्चाग्न्यात्मान इत्येवं—विदुः जानीयुः, ये च इमे अरण्ये अरण्योपलक्षिताः वानप्रस्थाः वैखानसाः श्रद्धातपः श्रद्धैव तपः श्रद्धास्थानीयं तपः—तपएवानुतिष्ठन्ति न तु पञ्चाग्निदर्शनसम्मतमुपासनम्—उपासते अनुतिष्ठन्ति, ते अर्च्चिषम् अभिसम्भवन्ति इत्यादि पूर्व्ववत् (११।१८) ।

अथ ये च इमे ग्रामे ग्रामवासिनः गृहस्थाः पञ्चाग्निदर्शनानभिज्ञाः इष्टापूर्त्ते—इष्टम् अग्निहोत्रादि वैदिकं कर्म्म, पूर्त्तं वापीकूपतड़ागारामादिकरणं, दत्तं यागाद्यतिरिक्तस्थले दरिद्रादिभ्यो दानम् उपासते, ते धूमं—पञ्चाग्निपरिहारात् दर्शनप्रतिरोधिनं दह्यमानशरीरोत्थं धूमं न त्वग्निं—धूमाभिमानिनीं देवताम् अभिसम्भवन्ति प्रतिपद्यन्ते, धूमात् रात्रिं रात्रिदेवताम्, रात्रेः अपरपक्षं कृष्णपक्षं तद्देवताम्, अपरपक्षात् कृष्णपक्षात् यान् षण्मासान् दक्षिणा दक्षिणां दिशम् एति सविता

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्र-मसमेष सोमोराजा तद्देवानामन्नं तं देवा भक्षयन्ति।

तस्मिन् यावत् सम्पातमुषित्वाऽथैतमध्वानं पुन-र्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमोभूत्वाऽभ्रं भवति।

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति तइह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति।

तां दक्षिणायनाभिमानिनीं देवताम् प्रतिपद्यन्ते, न एते संवत्सरम् अभिप्राप्नुवन्ति ;

किन्तर्हि मासेभ्यः पितृलोकं पितृलोकात् आकाशम्, आकाशात् चन्द्रमसम् ? कोऽयं चन्द्रमाः ? एष सोमः राजा, देवानां तत् अन्नम्, तं सोमं देवाः भक्षयन्ति।

"वेत्थ यथा पुनरावर्त्तन्ते" इत्यस्य व्याख्यानम्—तस्मिन् चन्द्र-मण्डले सम्पातं पुनरवतरणकालं यावत् उषित्वा, अथ अनन्तरम् एतं वक्ष्यमाणम् अध्वानं पुनः निवर्त्तन्ते। *यथेतं यथागतं*—दह्यमाने शरीरे यत् आकाशत्वमगमत् तत्स्वरूपभूतम्—आकाशम्, आकाशात् वायुं प्रतिपद्यते, वायुः भूत्वा धूमः भवति, धूमः भूत्वा अभ्रं भवति—

अभ्रं भूत्वा मेघः भवति, मेघः भूत्वा प्रवर्षति। ते इह मनुष्यलोके एवमवतीर्णाः व्रीहियवाः ओषधिवनस्पतयः तिलमाषाः इति जायन्ते, अतः व्रीहियवादेः अन्यत् खलु दुर्निष्प्रपतरं दुर्निष्प्रपततरम्—तकार-एकोलुप्तः—दुर्निष्क्रमणं—यतो न निष्क्रमणं भवति। एवं सति पुनर्वृष्ट्यादिरूपेण परिणामानन्तरं निष्क्रमणयोग्यावस्थायां प्राप्तायां—

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्य-योनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डाल-योनिं वा।

अथैतयोः पथोर्नकतरेण च न यन्ति तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्ये-तत्तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्य्यते तस्मा-ज्जुगुप्सेत तदेष श्लोकः।

यः यः हि अन्नम् अत्ति, तेषु च पुनः यः रेतः सिञ्चति तद्भूयः तद्भावः सम् एव भवति पुरुषः।

केन वा नियमेन निष्क्रमणं भवति तदाह तदिति। यत् यत्र अवतरणयोग्येषु ये इह पृथिवीलोके रमणीयचरणाः शोभनाचरण-शीलाः आसन्, तत् तत्र तेषु ते ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्य-योनिं वा रमणीयां योनिम् अभ्याशः क्षिप्रम् एव आपद्येरन्। अथ यत् यत्र अवतरणयोग्येषु ये इह पृथिवीलोके कपूयचरणाः अशुभाचरण-शीलाः आसन् ते श्वयोनिं शूकरयोनिं चण्डालयोनिं वा कपूयां योनिम् अभ्याशः क्षिप्रम् एव आपद्येरन्।

"वेत्थ यथासौ लोको न सम्पूर्य्यते" इत्यस्य व्याख्यानम्।—अथ एतयोः पथोः देवयानपितृयाणमार्गयोः न-कतरेण एकतरेण अन्य-तरेण च न यन्ति न गच्छन्ति ये तानि इमानि जायस्व म्रियस्वेति असकृदावर्त्तीनि पुनः पुनः रूपान्तरितानि क्षुद्राणि भूतानि कीटपत-ङ्गादीनि भवन्ति। एतत् तृतीयं स्थानं मार्गद्वयपृथक्त्वात्। तेन दुर्निष्प्रपततरत्वादिकारणेनासौ लोको न सम्पूर्य्यते। तस्मात् नीच-योनित्वलाभकारणात् जुगुप्सेत। तत् तस्मिन् अर्थे एष श्लोकः।

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्
ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति।

अथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद। १—१०। छा, ५।७।३—१०।

बृ, ८।२।१—१६।

हिरण्यस्य स्वर्णस्य स्तेनः हर्त्ता, सुरां पिबन् सुरापायी, गुरोः तल्पं परिग्रहम् आवसन् गुरुतल्पगामी, ब्रह्महा च एते चत्वारः पतन्ति, तैः पतितैः सह आचरन् च पञ्चमः पतति।

अधुना पञ्चाग्निवेत्तॄणां पापसंश्लेषराहित्यं गतिञ्चाह अथेति। अथ पुनः यः एतान् पञ्चाग्नीन् एवं—परात्माराधनोपायत्वेन—वेद स पुनः तैः महापातकिभिः सह अपि आचरन् पाप्मना न लिप्यते ; यः एववेद स तादृगाराधनेन शुद्धः पूतः पुण्यलोकः पुण्यार्ज्जितलोकभाक् (१०।२१) भवति। द्विरभ्यासः समस्तप्रश्ननिर्णयप्रदर्शनार्थः।

पुण्यलोकभाजां यः पुनः ब्रह्मसंस्था भवति सोऽमृतत्वमेतीत्यप्यत्रानुवर्त्तते। अन्यथा "एवंविदि पापं कर्म्म न श्लिष्यते" (१८) इत्युक्त्वा "इमं मानवमावर्त्तं नावर्त्तन्ते" इति यदुक्तं तस्यात्र सम्यङ्नियोगो न सम्भवति। पुण्यलोकानामसंख्येयत्वात् तत्र तत्रावर्त्तनस्य सम्भावना हि ब्रह्मसंस्थत्वं विना नावरुध्यते। "एनान् ब्रह्म गमयति" इत्युक्तेरेव ब्रह्मसंस्थत्वमनावृत्तित्वञ्च सिध्यति, किं पुनस्तत्साधनार्थमेतावता प्रयासेनेति चेत्, ब्रह्मप्राप्तिः ब्रह्मणि स्थितिरित्यनयोरयं भेदो मन्तव्यः —भगवदैश्वर्य्यभूतेषु लोकलोकान्तरेषु परिभ्रमणेन तत्र तत्र ब्रह्मप्राप्त्या स्वरूपस्थाना कृतार्थता, लोकलोकान्तरभ्रमणं परिहाय ब्रह्मणि स्थित्वा तत्रैव सर्व्वैश्वर्य्यसम्भोगश्च। एवञ्चेत् "मानवमावर्त्तं नावर्त्तन्ते" इति कथं सिध्यति ? स्वरूपस्थतारहितानां रूपरूपान्तरभाजां मनुष्यलोकेषु

**यथा विवर्त्तस्वभावं परिभ्रमणं, न तथैषां स्वरूपस्थानां पुण्यलोकेषु देवलोकेषु विवर्त्तस्वभावं परिभ्रमणं भवतीत्यनेन। मुक्तानां भगवदैश्वर्य्यदर्शनकुतूहलानां स्वेच्छया लोकलोकान्तरभ्रमणं पुराणेषु यच्छ्रूयते "नाहं पुनरिहागन्ता लोकानालोकयाम्यहम्" इत्यनुगीतायाञ्च (१६।४०) यच्छ्रूयते तदेवमेव समञ्जसं भवति। (४।३।१—१५)।**

**अथ बृहदारण्यके :—**

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम, स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति। स भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच। १। वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति, नेति होवाच, वेत्थ यथेमं लोकं पुनरापद्यन्ता३ इति नेति होवाच, वेत्थ यथेमं लोकं पुनः सम्पद्यन्ता३ इति, नेति होवाच, वेत्थ यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्य्यता३ इति नेति होवाच, वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति होवाच, वेत्थ देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतं "द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च॥" इति नाहमत एकञ्चन वेदेति होवाच। २। अथैनं वसत्योपमन्त्रयाञ्चक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार। ३। स होवाच तथा नस्त्वं तात जानीथाः यथा यदहं किञ्चन वेद सर्व्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्य्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्मा अर्घ्यं चकार तं होवाच वरं भवते गौतमाय दद्म इति। ४। स होवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति। ५। स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति। ६। स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्योऽभूदिति, स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व्व उपयन्ति स होपायनकीर्त्या उवास। ७। स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्व्वं न कस्मिंश्च न ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति। ८। असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा

अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति। ९। पर्ज्जन्यो वाग्निर्गौतम तस्य संवत्सरएव समिदभ्राणि धूमो विद्युदर्च्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति। १०। अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्च्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति। ११। पुरुषो वाग्निर्गौतम तस्य व्यात्तमेव समित् प्राणो धूमो वागर्च्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति। १२। योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते। १३। अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित् समिद्धूमो धूमोऽर्च्चिरर्च्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति। १४। ते य एवमेतद्विदुः ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्च्चिरभिसम्भवन्ति अर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः। १५। अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत् पर्य्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति, ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्त्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्। १६।

व्याख्यानन्तु यत् पूर्व्वं कृतं तदेवात्रालम्। यत्र यत्र विशेषोऽस्ति तं तमेव प्रतीकग्रहणेन व्याख्यास्यामः। 'पाञ्चालानां परिषदमाजगाम'—तस्याः पराजयेनात्मनो यशःप्रथनाय तत्रागतवान्। 'स आजगाम जैवलिं प्रवाहणं परिचारयमाणम्'—पञ्चालराजं प्रवाहणं परिचारयमाणम्—आत्मनः परिचरणं कारयन्तं—राजानं जित्वा सभृत्यन्तमात्मनः सेवाय नियोजयिष्य इत्यभिमानवशतो राजसभागतोऽभवत्। 'प्रयन्त्यः विप्रतिपद्यन्ते'—म्रियमाणाः समानमार्गेण गच्छन्त्योऽपि यत्र

मार्गद्वैविध्यं भवति तत्र विपरीतमार्गेण गच्छन्ति। 'यतिथ्यामाहुत्याम्'—यत्संख्यकायामाहुत्याम्। 'देवयानस्य वा पथः प्रतिपद'—प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपदम्। स्वयं श्रुतिपच्छब्दार्थं स्फोरयति—'यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा'—यत् कर्म्म कृत्वा प्रतिपद्यन्ते तत् कर्म्म प्रतिपदुच्यते। 'द्वे सृती अशृणवम्'—इयं ऋक् ( १०म, ८८सू, १५ऋक ) तैत्तिरीयब्राह्मणेऽप्युद्धृता। तत्र पाठद्वयमस्ति, 'विश्वं भुवनम्' 'विश्वमेजत्'; 'अन्तरा पूर्व्वमपरञ्च केतुम' 'यदन्तरा पितरं मातरञ्च' इति; व्याख्यातञ्च तत् सायनेनैवम—"पितृणामस्मतपूर्व्वपुरुषाणां द्वे सृती अशृणवं द्वौ मार्गाविति शास्त्रमुखेनाहं श्रुतवानस्मि। तयोर्मध्ये देवानामेको मार्गः। येन गत्वा ब्रह्मलोके देवा भूत्वा न पुनरावर्त्तन्ते। उत अपिच मर्त्त्या येन च गत्वा स्वर्गमनुभूय पुनरावर्त्तन्ते। ताभ्यामुभाभ्यां मार्गाभ्यामिदं विश्वं भुवनं शास्त्रानुष्ठानपरं सर्व्वप्राणिजातं समेति सम्यग्गच्छति। पूर्व्वं केतुं चिह्नं पृथिवीमपरं केतुं दिवञ्च अन्तरा द्यावापृथिव्योर्मध्ये द्वे सृती वर्त्तेते इत्यर्थः।" इति। एजदिति पाठे तस्यैवेदं विशेषव्याख्यानम—"एजत् कम्पमानं परलोकगतियुक्तम इदं विश्वं प्राणिजातं याभ्यां मार्गाभ्यां तत्तल्लोकं सम्यक् प्राप्नोति इति।" "अन्तरा पितरं मातरञ्च" इत्यस्य पुनः—"यन्मार्गद्वयं पितरं मातरञ्च अन्तरा द्यावापृथिव्योर्मध्ये वर्त्तते।" इति। इयमारण्यकोपनिषत् यस्य शतपथब्राह्मणस्यान्तिमभागस्तस्मिन्नियं हवनसंसृष्टत्वेन गृहीता—"स जुहोति। द्वे सृती अशृणवं पितृणामहमिति द्वे वाव सृती इत्याहुः देवानाञ्चैव पितृणाञ्चेति ताभ्यामिदं विश्वमेजत् समेतीति ताभ्या॑ हीद॑ सर्व्वमेजत् समेति; यदन्तरा पितरं मातरञ्चेत्यसौ वै पितेयं माता आभ्यामेव पितॄन् देवलोकमपि नयति। एकाकी हुतोच्छिष्टं भक्षयत्येकधैव ध्रियमाणान् धत्ते श्रीर्हि पयः (१२।८।१।२१)" इति। 'अथैनं वसत्योपमन्त्रयाञ्चक्रे'—वसत्या वसतिप्रयोजनेन—इह वसतु भवानिति पाद्यादिभिरामन्त्रितं कृतवान्। 'कथं सुमेधः'—

कथं केन प्रकारेण, हे सुमेधः—शोभना मेधा यस्य स त्वम्—तव दुःख मुपजातमिति पितुः प्रश्नः। 'जैवलेरास'—आस आसनम् आख्यायिकाम्। 'विज्ञायते ह्यास्तिहिरण्यस्यापात्तम्'—हिरण्यादि सर्व्वं ममास्यस्तीति भवता विज्ञायते। 'मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्योऽभूदिति'—भवान् नः अस्मान् अभि बहोः प्रभूतस्य अनन्तस्य अन्तवत्त्वरहितस्य अपर्य्यन्तस्य अपरिमेयस्य वित्तस्य अवदान्यः अदाता मा भूत् इति गौतम आह। 'स वै गौतम तीर्थेनेच्छासा इति'—स त्वं वै, गौतम, तीर्थेन—शास्त्रविहितन्यायेन इच्छासे इच्छस्व विद्यामाप्तुम् इति राज्ञा जिज्ञासितः। 'उपैम्यहं भवन्तमिति'—भवन्तम् अहम् उपैमि शिष्यत्वेनोपगच्छामि इति स आह। 'वाचा ह स्म वै पूर्व्वे उपयन्ति'—पूर्व्वे विद्यार्थिनः ब्राह्मणाः क्षत्रियान् वैश्यान् वा वाचा—उपगच्छामीति वाङ्मात्रेण—किल उपयन्ति स्म; सुतरां 'स उपायनकीर्त्त्या उवास'—स गौतमः उपायनकीर्त्त्या उपगमनकीर्त्तनमात्रेण उवास उषितवान्। 'स होवाच तथा' इत्यादि—राजाह—तव च पितामहा यथा तथा, हे गौतम, त्वं न अस्मान् प्रति मा अपराधाः अपराधग्रहणं मा कुरु। इतः पूर्व्वम् इयं विद्या न कस्मिन् च ब्राह्मणे उवास उषितवती। तां विद्यां तु अहं तुभ्यं वक्ष्यामि। को हि तु एवम्—उपैम्यहं भवन्तम् इति—ब्रुवन्तं प्रत्याख्यातुम् अर्हति इति। आहुतिकल्पनेऽयं विशेषश्छन्दोगात्—प्रथमाहुतावङ्गारत्वेन दिशो विस्फुलिङ्गत्वेनावान्तरदिशः; द्वितीयाहुतौ समित्त्वेन संवत्सरः; तृतीयाहुतौ समित्त्वेन पृथिवी धूमत्वेनाग्निरङ्गारत्वेन चन्द्रमा विस्फुलिङ्गत्वेन नक्षत्राणि; चतुर्थाहुतौ समित्त्वेन विवृतमुखमर्चिष्ट्वेन वाक्, पञ्चमाहुतौ धूमत्वेन लोमानीति। दाहकाले छन्दोगानां संक्षेपोक्तिः "यतएवैतो यतः सम्भूतो भवति" इति, इह तु स्फुटतयाभिदधाति—'तस्याग्निरेवाग्निर्भवति समित् समित्' इत्यादि। 'श्रद्धां सत्यमुपासते'—तत्र श्रद्धातपः अत्र श्रद्धां सत्यम् उपासते, गतिस्तु तुल्या। श्रद्धा च तपश्च सत्यञ्च नैकश्चेत् कथं गतौ नात्र भिन्नतेति

२१ । तद्यथेह कर्म्मजितो लोकः चीयते एवमेवामुत्र पुण्यजितो लोकः चीयते तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामाꣳ स्तेषाꣳ सर्व्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्व्वेषु लोकेषु कामचारो भवति । १।६ ।

विप्रतिपत्तौ सर्व्वत्रोपासनायां परात्माराधनं साक्षादसाक्षादिति फले तुल्यता । 'मासेभ्यः संवत्सरम्' इत्यत्रेह—मासेभ्यो देवलोकम् । 'तान् पुरुषो मानसः'—विद्युत्प्राप्तान् तान् परेतान् मानसः—ब्रह्मणा मनसा सृष्टः—पुरुषः, छन्दोगानान्तु—'तत् पुरुषोऽमानवः' इति । 'परा: परावतो वसन्ति'—परा: प्रकृष्टाः सन्तः परावतः प्रकृष्टाः समाः संवत्सराननेकान् वसन्ति । पितृलोकादाकाशमित्यनुल्लिख्य पितृलोकाच्चन्द्रमित्यत्र । परेतानां देवानामन्नत्वं न तत्र स्फुटतयोक्तमत्र तु स्फुटतया । 'आप्यायस्वापक्षीयस्वेत्येवमेनाꣳस्तत्र भक्षयन्ति'—भक्षणेनापक्षयस्तच्छिवृत्तावप्यायनं परिपूरणं भवति, एवंप्रकारेण एनान् परेतान् तत्र देवा भक्षयन्ति । तत्र दृष्टान्तः—'यथा सोमं राजानं'—चमसे सोमं पूरयित्वा यथा भक्षयन्ति, भक्षणेन निःशेषतां प्राप्ते पुनस्तेन तत् पूरयित्वा पूर्व्ववत् भक्षयन्ति एवं विश्रम्य विश्रम्य भक्षणमत्र भवति । 'यदा तत् पर्य्यवैति'—यदा तत् कार्य्यं परिगच्छति परिक्षीयते । 'लोकान् प्रत्युत्थायिनस्ते'—जननानन्तरं मरणं मरणानन्तरं लोकान् मनुष्योचितान् प्रति उत्थायिनः ते । 'एवमेवानुपरिवर्त्तन्ते'—पुनः पुनः भ्रमणशीला भवन्ति । मार्गद्वयानभिज्ञानां कीटादित्वं सुस्पष्टमत्र ।

२१ । यथेष्टगतिं वक्तुमारभते तद्यथेति । व्याख्यातम् ( ३।१८ [१२६पृ] ) ।

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते।

अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते।

अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते।

अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते।

अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते।

कामचारितां वर्णयति। स यदि पितृलोककामः पितृगणसम्बन्धाभिलाषी—"पितरो जनयितारः तएव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः सम्बन्धो यस्य"—भवति, सङ्कल्पादेव सङ्कल्पमात्रादेव अस्य पितरः समुत्तिष्ठन्ति गोचरतया आविर्भवन्ति। एवं तेन पितृलोकेन पितृगणेन सम्पन्नः सन् महीयते समृद्धो भवति। आधुनिकानामप्येष सिद्धान्तः। (४।४।८)।

अथ यदि मातृलोककामः मातृगणसम्बन्धाभिलाषी भवति सङ्कल्पमात्रादेव अस्य मातरः आविर्भवन्ति, तेन मातृगणेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि भ्रातृगणसम्बन्धाभिलाषी भवति, सङ्कल्पमात्रादेव अस्य भ्रातरः आविर्भवन्ति, तेन भ्रातृगणेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि स्वसृगणसम्बन्धाभिलाषी भवति, सङ्कल्पमात्रादेव अस्य स्वसारः आविर्भवन्ति, तेन स्वसृगणेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि सखिगणसम्बन्धाभिलाषी भवति, सङ्कल्पमात्रादेव अस्य सखायः आविर्भवन्ति, तेन सखिगणेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते।

अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते।

अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते।

अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते।

यं यमन्तमभिकामो भवति यं यं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते।

१—१०।

अथ यदि गन्धमाल्यनिचयसम्बन्धाभिलाषी भवति, सङ्कल्पमात्रादेव गन्धमाल्ये आविर्भवतः तेन गन्धमाल्यनिचयेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि अन्नपाननिचयसम्बन्धाभिलाषी भवति सङ्कल्पमात्रादेव अस्य अन्नपाने आविर्भवतः, तेन अन्नपाननिचयेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि गीतवादित्रनिचयाभिलाषी भवति सङ्कल्पमात्रादेव अस्य गीतवादित्रे आविर्भवतः तेन गीतवादित्रनिचयेन सम्पन्नः सन् समृद्धो भवति।

अथ यदि स्त्रीनिचयसम्बन्धाभिलाषी भवति सङ्कल्पमात्रादेव अस्य स्त्रियः आविर्भवन्ति तेन स्त्रीनिचयेन सम्पन्नः सन् समृद्धो भवति।

यं यम् अन्तं प्रदेशम् अभिकामः अभिलाषी भवति यं यं कामं

त इमे सत्याः कामा अनृतापिधानास्तेषाᳫ सत्यानाᳫ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते।

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्व्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्व्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढ़ाः।

कामयते अस्य स अभिलाषः सङ्कल्पमात्रादेव आविर्भवति, तेन अभिलाषेण सम्पन्नः सन् समृद्धो भवति।

यदि सङ्कल्पमात्रादेव पित्रादिभिः सम्बन्धोऽनुभूयते न तत् कथं भवतीह सर्व्वेषामित्यस्य कारणं निर्णीयते तदिति। ते इमे सत्याः अकल्पिताः कामाः पित्रादिसम्बन्धविषयाः अनृतापिधानाः—अनृतम्—'सत्येन छन्न' (८।१४) 'अनृतापिधानाः' इत्यनयोरनुवादि "अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्" इति तिरोहितस्वरूपम्—असत्—इयर्त्ति प्राप्नोति हृदयं हृदयमधिकृत्य (१२।८[२३]) तिष्ठतीति ऋतं—बाहुलकात् क्तः, न हृदयमधिकृत्य तिष्ठतीत्यनृतं विषयान्तरप्रवेशात् यत् हृदयादपसृतम्—तदेव अपिधानम् आच्छादनं येषां ते—तिरोहितस्वरूपासत्प्रच्छन्नाः। वाक्यान्तरेण तदेव स्फोरयति—सत्यानाम् अकल्पितानां सतां विद्यमानानां तेषां कामानाम् अनृतम्—तिरोहितस्वरूपमसत्—अपिधानम् आच्छादनं सुतराम् अस्य जीवस्य यः यः हि इतः इहलोकात् प्रैति, इह तं दर्शनाय साक्षात्काराय न लभते—तैः साक्षात्सम्बन्धो नानुभूयते तेन।

अनन्तरं जीवितैर्मृतैर्विषयैश्च हृदि सत्यपि नित्यसम्बन्धे कथं न सोऽनुभूयते तदेवाह अथेति। अथ अस्य जन्तोः सम्पर्कीणाः ये च

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय-मिति तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति।**

**अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं**

जीवाः इह विद्यमानाः, ये च प्रेताः, यत् च अन्यत् अन्नादिकम् इच्छन् न लभते सर्व्वं तत् तत्र हृदि सुषुप्तौ गत्वा विन्दते लभते परब्रह्मणि। यदि तत्र लभते कथं न तज्ज्ञायते?—हि यस्मात् अस्य जन्तोः एते सत्याः अकल्पिताः कामाः अनृतापिधानाः तिरोहितस्वरूपेणासता प्रच्छन्नाः, तत् तस्मात् अक्षेत्रज्ञाः निधिशास्त्रानभिज्ञाः निहितं भूमेः अधःस्थात् प्रक्षिप्तं हिरण्यनिधिम् उपर्य्युपरि सञ्चरन्तः अपि न विन्देयुः न लभेरन्, एवम् एव इमाः सर्व्वाः प्रजाः अहरहः सुषुप्तौ एतं ब्रह्मलोकं गच्छन्त्यः न विन्दन्ति। कथं न विन्दन्ति? हि यस्मात् ताः अनृतेन तिरोहितस्वरूपेणासता प्रत्यूढ़ाः प्रतिहृताः तस्मादन्यतो वहमानाः—तासां दृष्टौ परिस्फुटतया नैष ब्रह्मलोको भासते अतस्ता अन्यत्रापहृतचित्ता भवन्तीति भावः। अत्रेदं तत्त्वं विवेक्तव्यम्—जाग्रदवस्थायामनुभूतविषयजातमाविर्भावतिरोभावस्वभावकत्वात् सदसदुभयात्मकम्। यद्विषयकज्ञानं चेतनायामाविर्भवति, तदाविर्भूय तिरोधत्ते, विषयान्तरज्ञानायावकाशं दातुम्। विषयस्य सत्त्वेऽपि तद्विषयकज्ञानस्यैवं तिरोधानात् चेतनासम्पर्के तस्यासत्त्वम्। अनेनैव तिरोधापकेनासता प्रच्छन्नं सत् चेतनान्तरा तिष्ठत्यव्यक्ततया। प्रच्छन्नं तत् सत् योगोपायेनाविष्कर्त्तव्यम्। तत्त्वमेतत् द्रष्टव्यं सांख्ये पञ्चमाध्यायस्य षट्पञ्चाशसूत्रे; शाब्दिकानामृतशब्दव्युत्पादने च।

स वा एष आत्मा—अपहतपाप्मा (३।१८)—हृदि। हृदि अयम् इति तस्य आत्मनः निरुक्तं निर्वचनं तेनैवानुभवयोग्यत्वम्। तस्मात् हृदयम् आत्मेति विज्ञातव्यम्। एवंवित् हृदयमेवात्मेति विद्वान् अहरहः वै स्वर्गलोकम् एति।

अहरहः स्वर्गलोकं प्राप्य किं भवति तदाह अथेति। अथ

ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति।

तानि ह वा एतानि त्रीण्यक्षराणि स ती-यमिति तद्यत् सत् तदमृतमथ यत्ति तन्मर्त्यमथ यद्यन्तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्व्वा एवंवित् स्वर्गं लोकमेति। १—५।

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳसेतुमहोरात्रे तरतो न जरा न मृत्युर्न

अनन्तरं यः एष सम्प्रसादः प्रसन्नः शान्तः जीवात्मा अस्मात् शरीरात् समुत्थाय शरीरात्मभावनां परिहाय परं ज्योतिः परात्मानम् उपसम्पद्य तेनैकीभूय स्वेन रूपेण अभिनिष्पद्यते स्वस्वरूपसम्पन्नो भवति। जीवात्मपरात्मैकत्वेन—एष आत्मा इति पुनः उवाच। एतत् जीवात्मपरात्मैक्यम् अमृतम् अभयम्, एतत् ब्रह्म—सर्व्वान्तर्भावकत्वात्। तस्य वा एतस्य सर्व्वान्तर्भावकस्य ब्रह्मणः सत्यम् इति नाम। (४।४।१—४)।

किमर्थमिदं नाम तदुच्यते—स-ती-यम् इति तानि वा एतानि त्रीणि अक्षराणि, तत् यत् सत् तत् अमृतम्; अथ यत् ति—इकारानुबन्धः—तत् मर्त्त्यं रूपरूपान्तराधीनम् असत्; यत् यं तेन उभे अमृतं मर्त्त्यं च यच्छति यमयति वशीकरोति। यत् यस्मात् उभे यच्छति, तस्मात् यम्। एवंवित्—सत्यस्य निर्व्वचनवेत्ता—अहरहः वै स्वर्गं लोकम् एति। सता हि असत् चिरसम्बद्धम्। सदसतोरेवं नित्यसम्बन्धं विदित्वा सताऽसतो नियमनं विचिन्त्यते येन सोऽनाच्छन्नदृष्टिरिहैव ब्रह्मलोकं पश्यतीति श्रुतेरभिप्रायः।

एवं जीवात्मपरमात्मनोरेकत्वमभिधाय पुनः पृथक्त्वं दर्शयति क्रियया—अथ यः आत्मा परात्मा स एषां लोकानाम् असम्भेदाय

शोको न सुकृतं न दुष्कृतꣳ सर्व्वे पाप्मानोऽतो निवर्त्तन्ते ऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद्वा एतꣳ सेतुं तीर्त्वा-ऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्न-नुपतापी भवति तस्माद्वा एतꣳ सेतुं तीर्त्वापि नक्तमह-रेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः।

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दन्ति तेषा-मेवैष ब्रह्मलोकस्तेषाꣳ सर्व्वेषु लोकेषु कामचारो भवति। १—३।

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण

भङ्गनिवारणाय सेतुः विधृतिः विधारणः। एतं सेतुम् अहोरात्रे न तरतः—कालेनापरिच्छेदात्, न जरा, न मृत्युः, न शोकः, न सुकृतं, न दुष्कृतम् एतं तरति। अतः सेतोः परात्मनः सर्व्वे पाप्मानः निव-र्त्तन्ते। हि यस्मात् एष अपहतपाप्मा परात्मा ब्रह्मलोकः, तस्मात् एतं सेतुं परात्मानं तीर्त्वा सम्यक् उपलभ्य जीवात्मा अन्धः सन् अनन्धः भवति, विद्धः दुःखादिसम्बन्धी सन् अविद्धः भवति, उपतापी रोगाद्युपतापवान् सन् अनुपतापी भवति। हि यस्मात् एष ब्रह्मलोकः एव सकृद्विभातः—सकृत् एकदा न पुनः पुनः सदेति यावत्—सदा-विभातः, तस्मात् वै एतं सेतुं तीर्त्वा सम्यगुपलभ्य नक्तम् अपि अहः एव निष्पद्यते।

तत् तत्र ये एव ब्रह्मचर्य्येण (१०।२१) एतं ब्रह्मलोकम् अनुविन्दन्ति तेषाम् एव ब्रह्मलोकः। सर्व्वेषु लोकेषु तेषां कामचारः यथेष्टः गतिः भवति।

सर्व्वाणि साधनानि ब्रह्मचर्य्यएवान्तर्भूतानीति तेषामर्थान्तरसाध-नेन दर्शयति अथेति। यज्ञः इति आचक्षते यत् तत् ब्रह्मचर्य्यम् एव। कथम्? हि यस्मात् ब्रह्मचर्य्येण एव यो ज्ञाता यज्ञतत्त्वज्ञः स तं यज्ञ-

ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्म-चर्य्यमेव तद्ब्रह्मचर्य्येण ह्येवेष्ट्वात्मानमनुविन्दते।

अथ यत् सत्रायणमित्याचक्षते ब्रह्मचर्य्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण ह्येवात्मानमनुविद्य मनुते।

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दते यदरण्यायन-मित्याचक्षते ब्रह्मचर्य्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्म-लोके तृतीयस्यामितो दिवि तदैरमदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिर-ण्मयम्।

फलभूतं ब्रह्मलोकं विन्दते। अथ इष्टम् इति यत् आचक्षते ब्रह्म-चर्य्यम् एव तत् कथम्? हि यस्मात् ब्रह्मचर्य्येण एव इष्ट्वा आराध्य आत्मानं परात्मानम् अनुविन्दते।

अथ सत्रायणं—दीर्घकालव्यापियज्ञानुष्ठानम्—इति यत् आच-क्षते तत् ब्रह्मचर्य्यम् एव कथम्? हि यस्मात् ब्रह्मचर्य्येण एव सतः सत्स्वरूपात् आत्मनः परात्मनः त्राणं मुक्तिं विन्दते। अथ मौनम् इति यत् आचक्षते तत् ब्रह्मचर्य्यम् एव। कथम्? हि यस्मात् आत्मा-नम् एव अनुविद्य प्राप्य मनुते मौनी भवति।

अथ अनाशकायनम् उपवासपरायणत्वम् आचक्षते यत्, तत् ब्रह्म-चर्य्यम् एव। कथम्? हि यस्मात् ब्रह्मचर्य्येण यम् आत्मानं अनु-विन्दते स एष आत्मा न नश्यति अदर्शनो न भवति। अथ अरण्यायनं —अरण्यवासः—इति आचक्षते यत् तत् ब्रह्मचर्य्यम् एव। कथम्? इतः अस्माल्लोकात्—भुवश्चान्तरीक्षञ्चापेक्ष्य—तृतीयायां दिवि ब्रह्मलोके

तद्य एवैतावरं च ण्यञ्चार्णवौ ब्रह्मलोके ब्रह्मचर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाᳪ सर्व्वेषु लोकेषु कामचारो भवति। १—४।

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः।

अरश्च ण्यश्च अर्णवौ समुद्रौ, तत् तत्र ऐरमदीयम्—इरा अन्नम् तदुत्पन्नम् ऐरम्, अन्नरसमयञ्च तत् मदीयञ्च मदकरं च—सरः, तत् तत्र सोमसवनः सोमस्रावो अश्वत्थः, तत् तत्र ब्रह्मणः अपराजिता पुः पुरी, प्रभुविमितं प्रभुणा ब्रह्मणा निर्म्मितं हिरण्मयं गृहम् ;—

तत् तत्र ये एव ब्रह्मचर्य्येण एतौ अरं च ण्यं च अर्णवौ ब्रह्मलोके अनुविन्दन्ति लभन्ते, तेषाम् एव एष ब्रह्मलोकः ; तेषां सर्व्वेषु लोकेषु कामचारः यथेष्टगतिः भवति। सर्व्वेषां साधनानां ब्रह्मलोकप्रापकत्वं ब्रह्मचर्य्येणैवेति फलितार्थः।

इदानीं मूर्द्धन्यनाड़ीसम्बन्धां गतिमनुशीलयति ( ४।२ १७—१६ ) अथेति। अथ याः एताः हृदयस्य हृत्पिण्डप्रसृताः नाड्यः ताः पिङ्गलस्य पिङ्गलवर्णस्य, शुक्लस्य शुक्लवर्णस्य, नीलस्य नीलवर्णस्य, पीतस्य पीतवर्णस्य, लोहितस्य लोहितवर्णस्य अणिम्नः अणुत्वस्य वर्णाभिव्यञ्जनहेतुभूतस्य नाड्यः तत्तद्वर्णाभिव्यञ्जनसामर्थ्ययुक्ताः—तासु कस्याञ्चित् वैगुण्ये वर्णविशेषाभ्यव्यञ्जनासामर्थ्यम्। कुत एतेषां वर्णाभिव्यञ्जने सामर्थ्यानां प्रवेशस्तदाह—असौ वा आदित्यः पिङ्गलः, एष शुक्लः, एष नीलः, एष पीतः, एष लोहितः—आदित्यरश्मित एव तत्र वर्णाभिव्यञ्जनसामर्थ्यानां सत्तेति फलितार्थः।

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चा-मुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चा-मुञ्चामुष्मादादित्यात् प्रतायन्ते ता आसु नाड़ीषु सृप्ता आभ्यो नाड़ीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः।

तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाड़ीषु सृप्तो भवति तन्न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति।

तत्र रश्मीनां प्रचरणञ्चाह तद्यथेति। तत् तत्र यथा महापथः आततः विस्तृतः इमं च निकटवर्त्तिनम् अमुं च दूरवर्त्तिनम् उभौ ग्रामौ गच्छति, एवम् एव एताः आदित्यस्य रश्मयः इमं च पुरुषम् अमुं च आदित्यम् उभौ लोकौ गच्छन्ति। अमुष्मात् दूरवर्त्तिनः आदित्यात् ताः रश्मयः आसु नाड़ीषु सृप्ताः प्रविष्टाः प्रतायन्ते सन्तताः भवन्ति, आभ्यः पुनः नाड़ीभ्यः ते—"रश्मिः पुमान् दीधितौ स्यात्" इति पुंस्त्वात्—रश्मयः अमुष्मिन् आदित्ये सृप्ताः प्रविष्टाः प्रतायन्ते सन्तताः भवन्ति महापथवत्। दूरस्थानां प्रयाणाभिमुखानां तद्भाव-प्रणोदितबन्धुजनदृग्गोचरे प्रतिच्छविप्रतिफलनं सन्ततैतत्सूक्ष्मतम-रश्मियोगादेव भवतीत्याधुनिकाः। एकस्य मानसव्यापारस्यान्यस्मिन् संक्रमणञ्चैवमेव भवतीति तेषां सिद्धान्तः।

तत् तत्र—रश्मिसञ्चरणे—सति यत्र यस्मिन् काले एतत् भवति। किन्तत्? सुप्तः जीवः समस्तः उपसंहृतकरणव्यापारः, सुतरां सम्प्रसन्नः विषयसम्पर्कविरहितत्वात् सम्यक् प्रसन्नः—सम्पन्नः स्वप्नं न विजानाति न अनुभवति, तदा आसु नाड़ीषु स सृप्तः प्रविष्टः भवति। तं सम्पन्नं जीवात्मानं कश्चन पाप्मा न स्पृशति। कथं न पाप्मा स्पृशति? हि यस्मात् तेजसा—नाड़ीगतेन सौरेण रश्मिना—तदा स सम्पन्नः भवति।

अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति।

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्।

तदेष श्लोकः—शतञ्चैका च हृदयस्य नाड्यस्तासां

अथ यत्र यस्मिन् समये एतत् भवति। किन्तत्? अबलिमानं रोगादिना दौर्ब्बल्यं नीतः प्राप्तः भवति, तं प्रयाणोद्यतम् अभितः आसीनाः बन्धुजनाः आहुः—जानासि मां, जानासि माम् इति, स यावत् अस्मात् शरीरात् अनुत्क्रान्तः अबहिर्निःसृतः भवति तावत् जानाति तदुत्तरं यच्छति।

अथ यत्र यस्मिन् काले एतत् भवति। किन्तत्? अस्मात् शरीरात् स उत्क्रामति, अथ तदा एतैः एव नाड़ीगतैः रश्मिभिः ऊर्द्ध्वम् आक्रमते। स साधनसम्पन्नः ओम् इति एव पुनः स्मरन् उत् ऊर्द्ध्वम् एव मीयते गच्छति। यावत् यावता कालेन मनः क्षिप्येत् विषयात् विषयान्तरं यायात् तावत् तावता कालेन—अतिशीघ्रमिति भावः—आदित्यं गच्छति। एतत् आदित्यमण्डलं खलु विदुषां लोकद्वारं ब्रह्मलोकद्वारं, सुतरां तेषां प्रपदनं ब्रह्मलोकप्रवेशवर्त्म, अविदुषां पुनः निरोधः प्रवेशनिरोधनम्।

तत् तस्मिन् अर्थे एष श्लोकः—हृदयस्य हृदयसम्बन्धिन्यः शतं च एका एकोत्तरशतं नाड्यः। तासां नाड़ीनाम् एका मूर्द्धानम् अभि अभिमुखं गता निःसृता विनिर्गता। तया नाड्या ऊर्द्ध्वम् आयन् गच्छन् अमृतत्त्वम् एति प्राप्नोति। विष्वङ्ङन्याः विश्वम्

मूर्द्धानमभिनिःसृतैका। तयोर्द्ध्वमायन्नमृतत्वमेति विष्व-ङ्ङन्या उत्क्रमणे भवन्ति॥ १—६।

छा; ८।१०।२—६।

२२। मघवन्मर्त्त्यं वा इदᳬ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहति-रस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः।

अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपस-म्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते।

एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति जक्षन् क्रीड़न्नममाणः स्त्रीभिर्वा यानैर्वा

सर्व्वतोगताः अन्याः नाड्यः उत्क्रमणे निर्गमने भवन्ति सहायाः न तु अमृतत्वे इति शेषः। द्विरभ्यासः प्रकरणसमाप्त्यर्थः।

२२। आत्मनो द्विविधा स्थितिर्विव्रियते (४।४।५—७) मघव-न्निति। व्याख्यातम् (३।४८५)।

ऐश्वर्य्यप्रकाशरूपा प्रथमा स्थितिस्तावदुच्यते;—वायुः अशरीरः शिरःपाण्यादिविरहितः; अभ्रम्, विद्युत, स्तनयित्नुः एतानि अशरी-राणि। तत् तत्र—अशरीरे—सति यथा एतानि वाय्वादीनि अमुष्मात् आकाशात् समुत्थाय परं ज्योतिः स्वकारणं तेजः उपसम्पद्य तेन एकीभूय स्वेन रूपेण अभिनिष्पद्यन्ते स्वस्वरूपसम्पन्नानि भवन्ति;

एवम् एव एष सम्प्रसादः सुप्रसन्नः शान्तः जीवः अस्मात् शरीरात् समुत्थाय शरीरात्मभावनां परित्याय परं ज्योतिः परात्मानं उपसम्पद्य

ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः।

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदꣳ शृण्वानीति स आत्मा श्रवणाय श्रोत्रम्।

तेनैकीभूय स्वेन रूपेण अभिनिष्पद्यते स्वस्वरूपसम्पन्नो भवति। एवं परात्मनाभिन्नभावेनावस्थितः स उत्तमः पुरुषः—आविर्भूतस्वरूपत्वात्। स तत्र—आविर्भूतस्वरूपावस्थायां—जक्षन् भक्षयन् क्रीड़न् स्त्रीभिः वा यानैः वा ज्ञातिभिः वा रममाणः उपजनम् आत्मभावेन गृहीतम् इदं शरीरं न स्मरन् पश्यंति विहरति। यदि विस्मृतशरीर एव विहरति, कथं पुनः सिद्धति भक्षणादिकं तदुच्यते—यथा स प्रयोग्यः अश्वः बलीवर्द्दः वा आचरणे रथे अनसि वा युक्तः, एवम् एव अस्मिन् शरीरे अयं प्राणः—"पञ्चवृत्तिः इन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितात्मा"—युक्तः।

प्रतिकरणं तस्याधिष्ठानं तत्स्वरूपत्वञ्च दर्शयति—अथ यत्र नेत्रकोटरे एतत् आकाशम् अनुविषण्णम् अनुगतं चक्षुः, स चाक्षुषः पुरुषः—नैतत् चक्षुः किन्तर्हि चाक्षुषः चक्षुषि भवः पुरुषएव—"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश" (३।१७[१२३छ]) इत्यादि दर्शनात्—दर्शनाय दर्शनहेतोः स पुरुषः चक्षुः; अथ यः वेद इदं सुगन्धि दुर्गन्धि वा जिघ्राणि इति स आत्मा, गन्धाय गन्धग्रहणहेतोः स घ्राणं घ्राणेन्द्रियम्; अथ यः वेद इदं वचनम् अभिव्याहराणि वदानि इति स आत्मा, अभिव्याहाराय

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः सवा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ।

य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्व्वे च लोका आत्ताः सर्व्वे च कामाः स सर्व्वाꣳश्च लोकानाप्नोति सर्व्वाꣳश्च कामान्यस्तमात्मानमनुविद्य जानाति ह प्रजापतिरुवाच प्रजापतिरुवाच ।

१—६ ।

भाषणहेतोः स वाक् वागिन्द्रियम्, अथ यः वेद इदं शृणवानि इति स आत्मा, श्रवणाय श्रवणार्थं स श्रोत्रम् ;

अथ यः वेद इदं मन्वानि इति स आत्मा, अथ आत्मनः मनः दैवम् अप्राकृतं चक्षुः—वर्त्तमानकालविषयाणीतरेन्द्रियाण्यतोऽदैवानि तानि, मनस्तु त्रिकालोपलब्धिकरणं सुतरां दैवम् । स वा एष आत्मा देहविमुक्तः एतेन दैवेन चक्षुषा मनसा एतान् कामान् पश्यन् रमते—"न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" (१०।२३[४३३पृ]) इत्युक्तेः दर्शनमेव तृप्तिहेतुर्न तु लौकिकभोजनादिकम् । "वशिष्ठधेनोरनुयायिनं तमावर्त्तमानं वनिता वनान्तात् । पपौ निमेषालसपक्ष्मपंक्तिभिरुपोषिताभ्यामिव लोचनाभ्याम्" (रघु २स, १९श्लो) इतिवत् दर्शनादेव भोगापेक्षयाऽऽनन्दाधिक्यं विषयव्यवधानकालुष्यराहित्यात् ।

कान् कामान् पश्यन् रमते? ये एते ब्रह्मलोके अलौकिकाः कामाः । तं वा एतम् आत्मानम्—इन्द्राय प्रजापतिनोक्तम् (३।४६पृ) —देवाः उपासते, तस्मात् तेषां देवानां सर्व्वे च लोकाः सर्व्वे च कामाः आत्ताः प्राप्ताः । इदानीमपि—यः तम् आत्मानम् अनुविद्य जानाति ज्ञानसम्पन्नो भवति, स सर्व्वान् च लोकान् सर्व्वान् च कामान् आप्नोति इति, ह ऐतिह्ये—प्रजापतिः उवाच इन्द्राय । द्विर्व्वचनं समाप्त्यर्थम् ।

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति। १। छा, ८।१०।१२।१३।

२३। तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्य्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान् विदधदात्मनि सर्व्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन्त्सर्व्वभूतान्यनात्र तीर्थेभ्यः स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते। छा, ८।१०।१५।१।

हार्द्दब्रह्मध्यानार्थोऽयं मन्त्रः—श्यामात् गम्भीरवर्णात् हार्द्दब्रह्मणः शबलं वैचित्रयुक्तं—ब्रह्मणि सर्व्वैश्वर्य्याणां स्थितिवशात्—ब्रह्मलोकं प्रपद्ये, शबलात् विचित्रात् ब्रह्मलोकात् पुनः श्यामं हार्द्दं ब्रह्म प्रपद्ये। एवं हार्द्दब्रह्मलोकप्राप्त्या अश्वः इव रोमाणि विधूय—अश्वो यथा रोमकम्पनेन पांश्वादि अपोहति तथा—पापं विधूय, राहोः मुखात् चन्द्रः इव प्रमुच्य शरीरं धूत्वा परित्याज्य कृतात्मा कृतकृत्यः अकृतं नित्यं ब्रह्मलोकम् अभिसम्भवामि। द्विर्व्वचनं मन्त्रसमाप्त्यर्थम्।

२३। इष्टं गार्हस्थ्यप्राधान्यं विद्यावस्नामत्रापि तदनुरूपमेव गार्हस्थ्येन गत्युपसंहारं करोति तद्धेति। तत् वै एतत् आत्मतत्त्वं ब्रह्मा प्रजापतये कश्यपाय, प्रजापतिः मनवे, मनुः प्रजाभ्यः उवाच। केनोपायेन साधनेन वेदमात्मतत्त्वमधिगतं भवति तदाह—गुरोः कर्म्मातिशेषेण गुरुशुश्रूषाद्यनुष्ठानसमापनानन्तरम् अतिशेषेण अवशिष्टेन कालेन यथाविधानम् आचार्य्यकुलात् वेदम् अधीत्य, अभिसमावृत्य गुरुकुलात् निवृत्य कुटुम्बे गार्हस्थ्यविहितपरिणयादिजनितकर्त्तव्ये

२४। अथ त्रयोवाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः नान्येन कर्म्मणा, कर्म्मणा पितृलोको विद्यया देवलोको देवलोकोवै लोकानाᳵ श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति।

अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोकइति स पुत्रः प्रत्याहाहं ब्रह्म यज्ञोऽहं लोकइति यद्वै किञ्चानूक्तं तस्य सर्व्वस्य ब्रह्मेत्येकता। ये वै के च यज्ञास्तेषाᳵ सर्व्वेषां यज्ञइत्येकता ये वै के च लोकास्तेषाᳵ सर्व्वेषां लोक इत्येकतैतावद्वा इदᳵ सर्व्वं-

स्थितौ शुचौ मेध्ये देशे स्वाध्यायम् अधीयानः, पुत्रान् शिष्यान् च धार्म्मिकान् विदधत् धार्म्मिकत्वेन तान् नियमयन्, आत्मनि परात्मनि सर्व्वेन्द्रियाणि सम्प्रतिष्ठाप्य, तीर्थेभ्यः शास्त्रानुज्ञाविषयेभ्यः अन्यत्र सर्व्वभूतानि आपिपीलकप्राणिमात्रम् अहिंसन्, स खलु आयुषं जीवितकालं यावत् एवं वर्त्तयन् ब्रह्मलोकं—ब्रह्मैव लोकः ब्रह्मलोकः तम्—अभिसम्पद्यते, प्रेत्य न च पुनः आवर्त्तते ततो निवृत्तो भवति। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः।

२४। अथ लोकत्रयसाधनमुच्यते अथेति। अथ मनुष्यलोकः पितृलोकः देवलोकः इति लोकाः त्रयः एव। सोऽयं मनुष्यलोकः पुत्रेण जय्यः जेतव्यः, न अन्येन कर्म्मणा; कर्म्मणा अग्निहोत्रादिना पितृलोकः जेतव्यः, विद्यया देवलोकः। लोकानां वै देवलोकः श्रेष्ठः, तस्मात् विद्यां प्रशंसन्ति तज्ज्ञाः।

अथ अनन्तरम् अतः—केन वा प्रकारेण पुत्रात् लोकजयो भवति तदर्थम्—सम्प्रत्तिः सम्प्रदानं—पुत्रे स्वात्मव्यापारसम्प्रदानम्। यदा पिता प्रैष्यन् मरिष्यन् इति मन्यते, अथ तदा स पुत्रम् आह—ब्रह्म त्वम्, यज्ञः त्वम्, लोकः त्वम् इति। स पुत्रः पितरं प्रत्याह—अहं

मेतन्मा सर्व्वꣳ सन्नयमितो भुनजदिति तस्मात् पुत्र-मनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवं विद-स्मााल्लोकात् प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति। स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनꣳ सर्व्व-स्मात् पुत्रो मुञ्चति तस्मात् पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते देवाः प्राणा अमृता आविशन्ति।

ब्रह्म, अहं यज्ञः, अहं लोकः इति। अहं ब्रह्म इत्यादेः कोऽर्थः श्रुतिस्तं स्वयं व्याचष्टे—यत् वै किञ्चन अनूक्तम्—अनु पश्चात् पितुः प्रयाणानन्तरम् उक्तम् अवतीर्णं स्यात्—तस्य सर्व्वस्य ब्रह्म वेदस्वरूपः त्वम् इति एकता पितापुत्रयोरैकत्वम् वेदप्रचारविच्छेदाभावात्। ये वै के च यज्ञाः इतः परम् अनुष्ठेयाः तेषां सर्व्वेषां यज्ञः त्वम् इति एकता पितापुत्रयोः कर्म्मैक्यम्। ये वै के च लोकाः इतःपरं जेतव्याः त्वया तेषां सर्व्वेषां लोकानां लोकः त्वम् इति एकता पितापुत्रयो-र्लोकैक्यम्। इदं सर्व्वं—गृहिणां कर्त्तव्यम्—एतावत् एतत्परि-माणम्। इतः अस्मात् लोकात् एतत् सर्व्वं सन्नयं—लिङ्गव्यत्यय-श्छान्दसः—पृष्ठबलं सत् मा मां भुनजत् भुनक्तु पालयतु—लेट्। विकरणयुक्तत्वमपि लेटि यथा "रयिमश्नवत्" इति। विकरणव्यत्ययो-ऽप्यत्र—इति तस्मात् अनुशिष्टम् एवमनुज्ञातं पुत्रं लोक्यं लोकहितम् आहुः विद्वांसः। तस्मात् कारणात् एव एनं पुत्रम् अनुशासति अनु-शिष्टं कुर्व्वन्ति। यदा स एवंवित् अस्मात् लोकात् प्रैति म्रियते, अथ तदा एभिः एव प्राणैः सह पुत्रम् आविशति पिता। अनेन पित्रा यदि अक्ष्णया—अक्ष्णोतिः श्नः, निपातनाद्यगभावः, अक्ष्णा तया—बहु-कर्म्मव्यापृतिवशात्—किञ्चित् अकृतं भवति, स पुत्रः तस्मात् सर्व्वस्मात् अकृतात् एनं पितरं मुञ्चति मोचयति, तस्मात् पुत्रो नाम—पुनाति पितरम् अकरणापराधात्—पूञोक्त्रस्वश्चेति क्त्रक्। स पिता पुत्रेण एव अस्मिन् लोके प्रतितिष्ठति प्रतिष्ठाभाजनं भवति मनुष्यलोकं

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ।

दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ।

अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति स एवंवित् सर्व्वेषां भूतानामात्मा भवति यथैषा देवतैवꣳ स यथैतां देवताꣳ सर्व्वाणि भूतान्यवन्त्येवꣳ हैवंविदꣳ सर्व्वाणि भूतान्यवन्ति । यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति । बृ, ३।५।१९—२० ।

जयति । यदि पिता प्राणैः पुत्रमाविशति, कथं सिद्धाति तस्यामुष्मिन् लोके स्थितिरिति तदाह—अथ—एवं मनुष्यलोकजयानन्तरम्—एनं पितरम् एतं अमृताः अमरणधर्म्माणः देवाः प्राणाः वागादयः आविशन्ति । पुत्रेणाकृतस्यापराधपरिहारो भवति, स्वकर्म्मणा विद्यया च पुनः पितृलोकदेवलोकजयो भवत्यतोऽथशब्देनात्र पुत्रप्रकरणविच्छेदः ।

कुतस्तत् प्रवेशो भवति तद्विवृणोति—पृथिव्यै पृथिव्याः च अग्नेः च दैवी वाक् एनं परेतम् आविशति । सा पुनः दैवी वाक्, यया वाचा यत् यत् एव वदति तत् तत् भवति—सिद्धवाक् भवति सः ।

दिवः च आदित्यात् च एनं दैवं मनः आविशति । तत् पुनः दैवं मनः, येन मनसा आनन्दी सुखी एव भवति स, न शोचति ।

अद्भ्यः च चन्द्रमसः च एनं दैवः प्राणः आविशति । यः प्राणः जङ्गमेषु सञ्चरन् स्थावरेषु असञ्चरन् च न व्यथते, अथो अपि न रिष्यति न नश्यति । स एवंवित्—प्राणतत्त्वपरिज्ञाता—सर्व्वेषां भूतानाम्

२५। याज्ञवल्क्येति होवाच यदिदꣳ सर्व्वं मृत्युनाप्तं सर्व्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः सातिमुक्तिः।

याज्ञवल्क्येति होवाच यदिदꣳ सर्व्वमहोरात्राभ्यामाप्तꣳ सर्व्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्य्युणर्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याध्वर्य्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्य्युः सा मुक्तिः सातिमुक्तिः।

आत्मा भवति—एकात्मतालाभात्। कथम्? एषा देवता प्राणः यथा, तथा सः। सर्व्वाणि भूतानि एतां देवतां यथा अवन्ति पालयन्ति, एवं पुनः एवंविदं सर्व्वाणि भूतानि अवन्ति रक्षन्ति। सर्व्वात्मतायां नापरेषां दुःखैः संश्लेषः किन्तर्हि पुण्यैः संश्लेषो भवतीत्याह—इमाः प्रजाः यत् उ किञ्च यत् किञ्च शोचन्ति, अमैव सहैव आभिः तत् आसां प्रजानां भवति पुण्यम् एव अमुं गच्छति। कथमेतत् भवति? न पुनः पापं देवान् गच्छति।

२५। सामान्यतो लोकत्रयसाधनोक्तौ यदस्फुटमस्ति तत् परिस्फुटयति याज्ञवल्क्येति। हे याज्ञवल्क्य इति सम्बोध्य जनकस्य होता अश्वलः पुनः उवाच—यत् इदं सर्व्वं मृत्युना आप्तं व्याप्तं, सर्व्वं मृत्युना अभिपन्नं ग्रस्तं, यजमानः केन उपायेन मृत्योः आप्तिम् अधिकारम् अतिमुच्यते इति। याज्ञवल्क्य आह—होत्रा ऋत्विजा अग्निना वाचा। वाक् वै यज्ञस्य होता, तत् तत्र या इयं वाक् सोऽयम् अग्निः, स होता सा मुक्तिः सा अतिमुक्तिः। वाचि होतरि पुनरग्निदृष्टिरेव मृत्योरतिमुक्तेरुपायः।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—यत् इदं सर्व्वम्

याज्ञवल्क्येति होवाच यदिदं सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामाप्तꣳ सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता सा मुक्तिः सातिमुक्तिः।

याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाऽऽक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ सम्पदः।

अहोरात्राभ्याम् आप्तम्, सर्व्वम् अहोरात्राभ्याम् अभिपन्नं ग्रस्तं, केन उपायेन यजमानः अहोरात्रयोः आप्तिम् अतिमुच्यते इति। याज्ञवल्क्य आह—अध्वर्य्युणा ऋत्विजा, चक्षुषा, आदित्येन। चक्षुः वै यज्ञस्य अध्वर्य्युः। तत् तत्र यत् इदं चक्षुः सोऽसौ आदित्यः, सोऽध्वर्य्युः, सा मुक्तिः, सा अतिमुक्तिः। चक्षुष्यध्वर्य्यौ पुनरादित्यदृष्टिरेव कालग्रासादतिमुक्तेरुपायः।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—यत् इदं सर्व्वं पूर्व्वपक्षापरपक्षाभ्यां शुक्लपक्षकृष्णपक्षाभ्याम् आप्तं सर्व्वं पूर्व्वपक्षपरपक्षाभ्याम् अभिपन्नं, केन उपायेन यजमानः पूर्व्वपक्षापरपक्षयोः आप्तिम् अभिमुच्यते इति। याज्ञवल्क्य आह—उद्गात्रा ऋत्विजा, वायुना प्राणेन। प्राणः वै यज्ञस्य उद्गाता, तत् तत्र योऽयं प्राणः स वायुः, स उद्गाता, सा मुक्तिः सा अतिमुक्तिः। प्राणे उद्गातरि वायुदृष्टिरेव पूर्व्वापरपक्षग्रासादतिमुक्तेरुपायः।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—यत् इदम् अन्तरिक्षं अनारम्बणम् अनालम्बनम् आलम्बनशून्यम् इव, केन आक्र-

याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भि र्होतास्मिन् यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया किन्ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति।

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्य्युरस्मिन् यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किन्ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव

मेण आलम्बनेन यजमानः स्वर्गं लोकम् आक्रमते प्राप्नोति इति। याज्ञवल्क्य आह—ब्रह्मणर्त्विजा ब्रह्माख्येन ऋत्विजा ; मनसा, चन्द्रेण। मनो वै यज्ञस्य ब्रह्मा, तत् तत्र यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः सा अतिमुक्तिः। मनसि ब्रह्मणि चन्द्रदृष्टिरेवान्तरिक्षाति-क्रमेण स्वर्गप्राप्तिरूपाया अतिमुक्तेरुपायः। इति अतिमोक्षाः—उक्ताः। अथ अनन्तरं सम्पदः—उच्यन्ते।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—अद्य कतिभिः ऋग्भिः अयं होता अस्मिन् जनकेनानुष्ठीयमाने यज्ञे करिष्यति—शंसनं करिष्यति इति। याज्ञवल्क्य आह—तिसृभिः इति। अश्वल आह—कतमाः ताः तिस्रः इति। पुरोऽनुवाक्या—प्रयोगकालात् प्राक् याः ऋचः प्रायुज्यन्ते सा ऋग्जातिः पुरोऽनुवाक्या ; याज्या—यागार्थं याः प्रयुज्यन्ते सा ऋग्जातिः याज्या ; शस्त्रार्थं याः प्रयुज्यन्ते सा ऋग्जातिः शस्या एव तृतीया। अश्वल आह—किं ताभिः ऋग्भिः जयति इति। याज्ञवल्क्य आह—यत् किञ्च इदं प्राणभृत्। प्राणस्य सर्व्वत्र प्रसरात् त्रिलोकजयइति फलम्।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—अद्य कति आहुतीः अयम् अध्वर्युः अस्मिन् यज्ञे होष्यति इति। याज्ञवल्क्य

ताभिर्जयति दीप्यते इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोकमाहुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यधएव हि मनुष्यलोकः।

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मनएवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवता अनन्तमेव स तेन लोकं जयति।

आह—तिस्रः इति। अश्वल आह—कतमाः ताः तिस्रः इति। याः हुताः उज्ज्वलाः—समिदाज्याहुतयः; याः हुताः अतिनेदन्ते अतीव शब्दं कुर्व्वन्ति मांसाद्याहुतयः; याः हुताः अधिशेरते भूमेः अधोगता शेरते पयःसोमाहुतयः। अश्वलः—किं ताभिः जयति इति। याज्ञवल्क्यः—याः हुताः उज्ज्वलन्ति, ताभिः देवलोकम् एव जयति। कथम्? हि यस्मात् देवलोकः दीप्यते इव। याः हुताः अतिनेदन्ति ताभिः पितृलोकम् एव जयति। कथम्? हि यस्मात् पितृलोकः अतिनेदते इव—पापात्मनां हाहतोऽस्मीत्यादि-कुत्सित-ध्वनियुक्तत्वात्। याः हुताः अधिशेरते, ताभिः मनुष्यलोकम् एव जयति। कथम्? हि यस्मात् मनुष्यलोकः अधः इव।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—अद्य कतिभिः देवताभिः ब्रह्मा दक्षिणतो यज्ञं गोपायति इति। याज्ञवल्क्यः—एकया देवतया इति। सत्यामेकस्यां प्रश्ने देवताभिरिति बहुवचनं तस्यामेकस्यां बह्वनां सन्निवेशात्। अश्वलः—कतमा सा एका इति। याज्ञवल्क्यः—मनः एव इति। अनन्तं वै मनः—वृत्तिबाहुल्यात्, अनन्ताः विश्वेदेवाः, सुतरां स तेन मनसा अनन्तम् एव लोकं जयति।

याज्ञवल्क्येति होवाच कत्ययमद्योद्गातास्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राणएव पुरोऽनुवाक्याऽपानो याज्या व्यानः शस्या किन्ताभिर्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जन्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया। ततोह होताश्वल उपरराम।

वृ, ५। १। ३—१०।

२६। याज्ञवल्क्येति होवाच यदिदꣳसर्व्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति।

हे याज्ञवल्क्य इति सम्बोध्य अश्वलः पुनः उवाच—अथ कति स्तोत्रीयाः—प्रगीतम् ऋगजातं स्तोत्रम्, अप्रगीतं स्तोत्रजातं शस्त्रम्—अयम् उद्गाता अस्मिन् यज्ञे स्तोष्यति इति। याज्ञवल्क्यः—तिस्रः इति। अश्वलः—कतमाः ताः तिस्रः इति। पुरोऽनुवाक्या च, याज्या च, शस्याएव तृतीया। कतमाः ताः याः अध्यात्मम् इति। प्राणः एव पुरोऽनुवाक्या, अपानः याज्याः, व्यानः शस्या। अश्वलः—किं ताभिः जयति इति। पुरोऽनुवाक्या पृथिवीलोकम् एव जयति; याज्यया अन्तरिक्षलोकम्, शस्यया द्युलोकम् इति। ततः प्रश्नानामुत्तरश्रवणानन्तरं होता अश्वलः पुनः उपरराम निवृत्तो बभूव।

२६। ग्रहातिग्रहनिर्णयानन्तरं (१२।५) कस्मात् वा मृत्योर्मृत्युर्भवति तद्दर्शयति याज्ञवल्क्येति। जारत्कारवः आर्त्तभागः याज्ञवल्क्य इति सम्बोध्य तं पुनः उवाच—यत् इदं सर्व्वं मृत्योः अन्नम्, कास्वित् सा देवता यस्याः मृत्युः अन्नम् इति। याज्ञवल्क्य आह—अग्निः एव मृत्युः सोऽग्निः अपाम् अन्नम्। मृत्युं पुनः अपजयति पुरुषः।

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उद-स्मात् प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञव-ल्क्योऽत्रैव समवनीयन्ते उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते।

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अन-न्तमेव स तेन लोकं जयति।

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितञ्च रेतश्च निधीयते क्वायं तदा पुरुषो

याज्ञवल्क्य इति सम्बोध्य पुनः आर्त्तभागः उवाच—यत्र यस्मिन् काले पुरुषः म्रियते, अस्मात् म्रियमाणात् प्राणाः उत्क्रामन्ति, अहो न उत्क्रामन्ति इति। याज्ञवल्क्यः पुनः उवाच—नेति नेति; अत्र पुरुषे एव समवनीयन्ते प्रलीयन्ते प्राणाः। ततः उच्छ्वयति उच्छूनतां प्रतिपद्यते, आध्मायति, वाह्येन वायुना पूर्य्यते, आध्मातः स्फीतः मृतः शेते।

याज्ञवल्क्य इति सम्बोध्य पुनः आर्त्तभागः उवाच—यत्र यस्मिन् काले पुरुषः म्रियते एनं मृतं किं न जहाति इति। याज्ञवल्क्य आह—नाम इति। अनन्तं वै नाम, अनन्ताः विश्वेदेवाः, स तेन नाम्ना अनन्तम् एव लोकं जयति।

याज्ञवल्क्य इति सम्बोध्य पुनः आर्त्तभागः उवाच—यत्र यस्मिन् काले मृतस्य अस्य पुरुषस्य वाक् अग्निम् अप्येति गच्छति, प्राणः वातम्, चक्षुः आदित्यम्, मनः चन्द्रं, श्रोत्रं दिशः, शरीरं पृथिवीम्, आत्मा आकाशं, लोमानि ओषधीः, केशाः वनस्पतीन् गच्छन्ति,

भवतीत्याहर सोम्य हस्तमार्त्तभागाऽवाममेतस्य वेदिष्यावो न नावेतत् सजनइति। तौ होत्क्रम्य मन्वयाञ्चक्राते तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ यत् प्रशशꣳसतुः कर्म्म हैव तत् प्रशशꣳसतुः पुण्योवै पुण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्त्तभाग उपरराम। बृ, ५। २। १०—१३।

१७। अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् सुधन्वाऽऽङ्गिरस इति तं

लोहितं च रेतः च अप्सु निधीयते ; तदा तस्मिन् काले अयं पुरुषः कुत्र भवति इति। याज्ञवल्क्य आह—हे सोम्य आर्त्तभाग, अवाम दक्षिणं हस्तम् आहर देहि, एतस्य प्रश्नस्य यत् वेदितव्यं तत् वेदिष्यावः ; सजने जनाकीर्णस्थाने नौ आवयोः एतत् न वेदितव्यम्। तौ याज्ञवल्क्यार्त्तभागौ पुनः उत्क्रम्य निर्गत्य मन्वयाञ्चक्राते। पुनः यत् ऊचतुः, तत् कर्म्म एव पुनः ऊचतुः, तौ यत् प्रशशंसतुः, तत् कर्म्म एव पुनः प्रशशंसतुः। पुण्येन कर्म्मणा पुरुषः पुण्यएव भवति पापेन कर्म्मणा पापः इति। ततः जारत्कारवः आर्त्तभागः पुनः उपरराम विरतो बभूव।

२७। गत्यर्थं कर्म्मैव प्रशंसितं तदेव द्रढ़यति अथेति। अथ अनन्तरम् एनं याज्ञवल्क्यं लाह्यायनिः लह्यस्यापत्यं लाह्यः तदपत्यं लाह्यायनिः भुज्युः पप्रच्छ। हे याज्ञवल्क्य इति सम्बोध्य स भुज्युः पुनः उवाच—मद्रेषु जनपदेषु चरकाः व्रताचरणशीलाः पर्य्यव्रजाम पर्य्यटितवन्तः। ते वयं काप्यस्य कपिगोत्रस्य पतञ्चलस्य गृहान्

यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ।

स होवाचोवाच वै सोऽगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथाह्न्यान्ययं लोकस्तꣳ समन्तं पृथिवी

ऐम गतवन्तः। तस्य पतञ्चलस्य दुहिता गन्धर्व्वगृहीता गन्धर्व्वजुष्टा आसीत्। तं गन्धर्व्वं वयम् अपृच्छाम—कोऽसि इति। स गन्धर्व्वः अब्रवीत्—आङ्गिरसः गोत्रतः सुधन्वा नामत इति। तं यदा लोकानाम् अन्तान् पर्य्यवसानानि अपृच्छाम, अथ तदा एनं गन्धर्व्वम् अब्रूम—क्व कुत्र पारिक्षिताः परिक्षिततनया अभवन् इति। स गन्धर्व्वः क्व पारिक्षिताः अभवन् तत् अब्रवीत् इति शेषः। सुतरां हे याज्ञवल्क्य, क्व पारिक्षिताः अभवन् इति त्वा त्वाम् पृच्छामि। दृश्यते च शतपथब्राह्मणे—"एतेन हेन्द्रोऽतो दैवापः शौनकः। जनमेजयं पारिक्षितं याजयाञ्चकार। तेनेष्ट्वा सर्व्वां पापकृत्याꣳ सर्व्वां ब्रह्महत्यामपजघान। सर्व्वाꣳह वै पापकृत्याꣳ सर्व्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते। १। तदेतत् गाथयाभिगीतम्—

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्।
अबध्नादश्वं सारङ्गं देवेभ्यो जनमेजयः॥ इति। २।

एते एव पूर्व्वे अहनी। ज्योतिरतिरात्रस्तेन भीमसेनम्। एते एव पूर्व्वे अहनी गौरतिरात्रस्तेनोग्रसेनम्। एते एव पूर्व्वे अहनी आयुरतिरात्रस्तेन श्रुतसेनम् इत्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्—

पारिक्षिता यजमाना अश्वमेधैः परोवरम्।
अजहुः कर्म्म पापकं पुण्याः पुण्येन कर्म्मणा॥ इति। ३।

(श, प, ब्रा, १३।५।४)।"

स याज्ञवल्क्यः पुनः उवाच—ते पारिक्षिताः तत् तत्र अगच्छन्

द्विस्तावत् पर्य्येति ताꣳ समन्तं पृथिवीं द्विस्तावत् समुद्रं पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णोभूत्वा वायवे प्रायच्छत् तान् वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततोह भुज्युर्लाह्यायनिरुपरराम। वृ, ५।३।१।२।

२८। स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः

यत्र अश्वमेधयाजिनः गच्छन्ति इति स वै गन्धर्व्वः उवाच। भुज्युः आह—क्व नु अश्वमेधयाजिनः गच्छन्ति इति। द्वात्रिंशतं देवरथाह्नानि—देवस्य आदित्यस्य रथः देवरथः तस्य गत्या परिच्छिन्नो देशः देवरथाह्नम् अहोरात्रं तत् द्वात्रिंशद्गुणितं देवरथाह्नानि तावत् परिमाणोऽयं लोकः लोकालोकगिरिवेष्टितः। तं लोकं समन्तं समन्ततः द्विस्तावत् लोकद्विगुणा पृथिवी पर्य्येति, तां पृथिवीं समन्तं समन्ततः द्विस्तावत् पृथिवीद्विगुणः समुद्रः पर्य्येति। तत् तत्र ब्रह्माण्ड यावती यत् परिमाणा क्षुरस्य धारा, यावत् यत्परिमाणं वा मक्षिकायाः पत्रं पक्षः, तावान् अन्तरेण मध्ये आकाशः तेन प्राणान् तान् पारिक्षितान् इन्द्रः सुपर्णः पक्षी भूत्वा वायवे प्रयच्छेत्, वायुः तान् पारिक्षितान् आत्मनि स्वस्मिन् धित्वा स्थापयित्वा तत्र अगमयत् यत्र अश्वमेधयाजिनः अभवन् इति एवमेव स गन्धर्व्वः वायुम् एव प्रशशंस। तस्मात् वायुः एव व्यष्टिः वायुः एव समष्टिः। यः एवं वेद—वायुरेव व्यष्टिः वायुरेव समष्टिरिति—स पुनः मृत्युम् अपजयति। ततः भुज्युः लाह्यायनिः उपरराम निवृत्तो बभूव।

२८। आत्मनो गतिप्रकारं वक्तुमाह स यत्रेति। यत्र यस्मिन्

समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते तथाऽरूपज्ञो भवति।

एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयाग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति। चक्षुषो वा मूर्द्ध्नो वाऽन्येभ्यो

काले सोऽयम् आत्मा अबल्यम् अबलभावं न्येत्य गत्वा सम्मोहम् इव अचेतनभावम् इव नेरति प्राप्नोति, अथ तदा एते प्राणाः इन्द्रियाणि एनम् आत्मानम् अभिसमायन्ति तत्समीपवर्त्तिनः भवन्ति। स आत्मा एताः तेजोमात्राः रूपादिप्रकाशकत्वात् तेजोवयवा समभ्याददानः संहरमाणः हृदयम् एव अन्ववक्रामति तद्गतो भवति। कदा स हृदयगतो भवति? यत्र यस्मिन् काले एष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते आदित्यात्मत्वं प्रतिपद्यते तथा सति अरूपज्ञो भवति रूपं न जानाति। रूपज्ञानविवर्ज्जितोभवति तदा मुमूर्षुः।

एकीभवति चक्षुषा। तदवस्थायां पार्श्वस्थाः आहुः—न पश्यति इति। एकीभवति घ्राणेन; पार्श्वस्थाः आहुः—न जिघ्रति इति। एकीभवति रसनया, पार्श्वस्थाः आहुः—न रसयते इति। एकीभवति वागिन्द्रियेण, पार्श्वस्थाः आहुः—न वदति इति। एकीभवति मनसा, पार्श्वस्थाः आहुः—न मनुते इति। एकीभवति त्वचा, पार्श्वस्थाः आहुः—न स्पृशति इति। एकीभवति बुद्ध्या, पार्श्वस्थाः आहुः—न विजानाति इति। तस्य पुनः एतस्य हृदयस्य अग्रं नाड़ीमुखं प्रद्योतते ज्योतिःसम्पन्नं भवति, तेन प्रद्योतेन ज्योतिषा एष आत्मा निष्क्रामति चक्षुषः नेत्रतः वा, मूर्द्ध्नः वा, अन्येभ्यः शरीरदेशेभ्यः अवयवेभ्यः वा,

वा शरीरदेशेभ्यस्तमुत्क्रान्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्व्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा च।

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति।

तद्यथा पेशस्कारः पेशसोमात्रामुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं

उत्क्रामन्तं तम् आत्मानम् अनु प्राणः उत्क्रामति, उत्क्रामन्तं प्राणम् अनु सर्व्वे प्राणाः वागादयः अनु सहैव उत्क्रामन्ति। आत्मा सविज्ञानः स्वकर्म्मानुसारिविशेषज्ञानवान् भवति। सविज्ञानम् एव अन्ववक्रामति गन्तव्यम् अनुगच्छति, विद्याकर्म्मणी—विद्या च ज्ञानं कर्म्म च विहिताविहितं—तं गच्छन्तम् आत्मानम् समन्वारभेते सम्यक् अनुगच्छतः, पूर्व्वप्रज्ञा च—विद्याकर्म्मारम्भकसहजसंस्कारश्च तमनुगच्छति।

तत् तत्र गमनकाले तृणजलायुका तृणजलूका तृणस्य अन्तम् अवसानं गत्वा अन्यम् आक्रमम् आश्रयम् आक्रम्य आश्रित्य आत्मानं स्वम् उपसंहरति—पूर्व्वावयवस्योपसंहारेणान्त्यावयवस्थाने, एवम् एव अयम् आत्मा इदं शरीरं निहत्य पातयित्वा अविद्याम् अचेतनं गमयित्वा प्रापय्य अन्यम् आक्रमम् आश्रयं—साधनं—"स्वकर्म्मविद्यानुसारतः यादृशपरलोकप्रतिपत्तिसाधनयुक्तः भवति तमाक्रमं साधनम् (३।६।१९)" —आक्रम्य आश्रित्य आत्मानम् उपसंहरति तत्रात्मभावम् आरभते।

तत् तत्र देहान्तरारम्भे यथा पेशस्कारः सुवर्णकारः पेशसः सुवर्णस्य मात्राम् उपादाय गृहीत्वा अन्यत् पूर्व्वापेक्षया नवतरं कल्याणतरं

निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्व्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्।

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्म्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयोऽधर्म्ममयः सर्व्वमयस्तद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः

रूपं तनुते निर्मिमीते, एवम् एव अयम् आत्मा इदं शरीरं निहत्य पातयित्वा अविद्याम् अचेतनं गमयित्वा प्रापय्य अन्यत् पूर्व्वापेक्षया नवतरं रूपं कुरुते पित्र्यं पितृलोकोपभोगयोग्यं, गान्धर्व्वं गन्धर्व्वलोकोपभोगयोग्यं, दैवं देवलोकोपभोगयोग्यं, प्राजापत्यं प्रजापतिलोकोपभोगयोग्यं, ब्राह्मं ब्रह्मलोकोपभोगयोग्यं वा, अन्येषां वा भूतानां प्राणिनां रूपं कुरुते।

एवमात्मनो विद्याकर्म्मानुसारिणीं गतिमुल्लिख्य तस्य निखिलशक्तियुक्ततयावस्थितिं विवृणोति स वेति। स वा अयम् आत्मा ब्रह्म —"त्रिविधं ब्रह्ममेतत्" (१२।११) इत्यनुसारतः—व्यापित्वेन गृह्यमाणः भोक्ता विज्ञानमयः बुद्धियुक्तः, मनोमयः, प्राणमयः, चक्षुर्म्मयः, श्रोत्रमयः, पृथिवीमयः, आपोमयः, वायुमयः, आकाशमयः, तेजोमयः तत्तन्मात्रायुक्तः, अतेजोमयः—अज्ञानोपबृंहणत्वे, काममयः, अकाममयः—निष्कामत्वे, क्रोधमयः, अक्रोधमयः—निष्क्रोधत्वे, धर्म्ममयः, अधर्म्ममयः—अधर्म्मनिरतत्वे, सर्व्वमयः। यत् यस्मात् सर्व्वमयः तत् तस्मात् इदम्मयः अदोमयः इति एतत् सिद्ध्यति। प्रत्यक्षाप्रत्यक्षसमस्तविषययुक्तत्वमस्य। यथाकारी यथाचारी तथा स भवति, साधुकारी

पुण्येन कर्म्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्-क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म्म कुरुते यत् कर्म्म कुरुते तदभिसम्पद्यते ।

तदेष श्लोको भवति—तदेव सक्तः सह कर्म्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्म्मणस्तस्य यत् किञ्चेह करोत्ययं तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्म्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।

साधुः भवति, पापकारी पापः भवति, पुण्येन कर्म्मणा पुण्यः भवति, पापेन कर्म्मणा पापः । अयमेवार्थः संक्षेपेण मतान्तरोक्त्योच्यते—अथ खलु अपरे आहुः—अयं पुरुषः काममयः इति । स पुरुषः यथाकामः भवति तत्क्रतुः तादृगध्यवसायवान् भवति, यत्क्रतुः यादृगध्यवसायवान् भवति तत् कर्म्म कुरुते, यत् कर्म्म कुरुते स तत् अभिसम्पद्यते तत्-फलवान् भवति ।

तत् तस्मिन् अर्थे एष श्लोको भवति । अस्य परेतस्य यत्र मनः निषक्तं आसक्तियुक्तं, सक्तः सन् आसक्तियुक्तः सन् तत् एव कर्म्मणा सह एति प्राप्नोति । कथमिदं ज्ञायते ?—मनो लिङ्गम्—लिङ्ग्यते अवगम्यते येन तत् लिङ्गं, मानसप्रवृत्तिरेव तद्दर्शयति, तथाहि भागवते—

मनएव मनुष्यस्य पूर्व्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ (४।२९।६६) इति ।

अत्र माध्यन्दिनीयपाठे "तदेव सत् तत् सह कर्म्मणैति" इति । अस्यार्थं आसक्त्यनुसारतो मनएव तद्रूपतां प्राप्नोतीति ज्ञेयः (११।३) । इह यत्किञ्च अयं करोति तस्य कर्म्मणः अन्तम् अवसानं प्राप्य तस्मात्

तदेष श्लोको भवति—यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति। तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेते। अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेजएव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः।

लोकात् भोगभूमिः अस्मै लोकाय कर्म्मभूमये कर्म्मणे कर्म्मसम्पादनार्थम् एति। उक्तञ्च महाभारते वनपर्व्वणि,

इह यत् क्रियते कर्म्म तत् परत्रोपभुज्यते।
कर्म्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता॥ (२६०।३५)।

विनियोगोऽस्य सकामवैदिकानुष्ठानेष्विति दर्शयति—इति नु कामयमानः—पुनरावृत्त्यधीनः—गतिं लभत इति शेषः। अथ अनन्तरम् अकामयमानः—पुनरावृत्त्यतीतः—यां गतिं लभते सोच्यत इति शेषः। यः अकामः—ब्रह्मयोगं विना अन्यकामनापरिशून्यः, सुतरां निष्कामः—निर्गताः कामाः यतः, न हि कामशून्यो जीवोभवितुमर्हति काममयत्वात्तस्य, अत उच्यते—आप्तकामः आप्तः प्राप्तः स्वाभिलषितब्रह्मरूपः कामः कामनाविषयो येन, एवमपि स्वर्गो ब्रह्मणोऽन्यत्वात् कामान्तःपातएव तस्य, न—आत्मकामः—आत्मनः पुनरात्मत्वं ब्रह्मण्येव, सुतरां ब्रह्मकामत्वे तस्यात्मकामत्वमेव। एवम्भूतः यः न तस्य प्राणाः उत्क्रामन्ति लोकलोकान्तरलाभाय, किन्तर्हि ब्रह्म एव सन् ब्रह्मभूतः ब्रह्म अप्येति ब्रह्मणोऽभिन्नभावेन स्थितिं करोति। इहैव स ब्रह्मणि तिष्ठति देहान्तेऽपि।

तत् तस्मिन् अर्थे एष श्लोकः भवति। अस्य हृदि ये कामाः श्रिताः सर्व्वे ते यदा प्रमुच्यन्ते विशीर्य्यन्ते, अथ तदा मर्त्त्यः अमृतः मुक्तः भवति। अत्र अस्मिन् जीवने एव ब्रह्म समश्नुते प्रतिपद्यते ब्रह्मसम्पन्नो भवति। तत् तत्र दृष्टान्तः—यथा अहिनिर्ल्वयनी सर्प-

तदेते श्लोका भवन्ति—अणुः पन्था विततः पुराणो मा॑ऽ स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्द्ध्वं विमुक्ताः॥

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गल॑ऽ हरितं लोहितञ्च। एष पन्था ब्रह्मणा हानुवित्तः तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च॥

निर्म्मोकः प्रत्यस्ता प्रतिक्षिप्ता तदाकारेण भासमाना शयीत वर्त्तेत, एवम् एव इदं शरीरं शेते वर्त्तते। यद्येवं कथं तदाप्यस्य चेष्टा दृश्यते तत्राह—अथ अयम् अशरीरः शरीराभिमानशून्यः अमृतः मुक्तः, ब्रह्म एव अस्य प्राणः, ब्रह्म एव अस्य तेजः। ब्रह्मप्रेरणयैव तस्य सर्व्वविधा चेष्टा भवति, न पुनर्देहेन्द्रियप्रेरणया। अतएवास्मिन् ब्राह्मणे "प्राणस्य प्राणमुतचक्षुषश्चक्षुः" इत्यादिना (४।१५) औपनिषदविद्याया मूलं न्यस्तम्। "अन्नस्यान्नम्" इति माध्यन्दिनीयपाठोऽस्य न्यूनतां परिहरति यथा "आत्मनि तिष्ठन्" इत्यादिनान्तर्यामिब्राह्मणे। जनको वैदेह विदेहाधिपतिः पुनः आह—सोऽहं जनकः भगवते सहस्रं ददामि इति।

तत् तत्र एते श्लोकाः भवन्ति।—अणुः सूक्ष्मः, विततः विस्तीर्णः, पुराणः चिरन्तनः पन्थाः मां स्पृष्टः—तेन पथा नित्यसम्बद्धोऽहमिति मयानुभूतः। न केवलमनुभूतः किन्तु मया स्वयमेव अनुवित्तः लब्धसाक्षात्तत्सम्पर्कीयज्ञानः, नैषा केवला ममानुभूतिः किन्तर्हि—तेन पथा धीराः ब्रह्मविदः विमुक्ताः सन्तः ऊर्द्ध्वाः शरीरपातादूर्द्ध्वम् इतः स्वर्गं लोकं ब्रह्मलोकम् अपियन्ति अपिगच्छन्ति।

तस्मिन् पथि आदित्यसम्पर्कात् केवलं शुक्लं, केवलं नीलं, केवलं पिङ्गलं, केवलं हरितं, केवलं लोहितं च (११।२१) आहुः स्वस्वदर्शनानुसारात्। एष पन्थाः ब्रह्मणा ब्राह्मणेन ब्रह्मयोगसम्पन्नेन—ह

अन्धंतमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव तमो य उ विद्यायाꣳ रताः ॥

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसोऽबुधा जनाः ॥

आत्मानं चेद्विजानीयादयमस्मीति पुरुषः ।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत् ॥

यस्यानुवित्तः प्रतिबुद्ध आत्मा-
ऽस्मिन् सन्देह्ये गहने प्रविष्टः ।
स विश्वकृत् स हि सर्व्वस्य कर्त्ता
तस्य लोकः स तु लोकएव ॥

ऐतिह्ये—अनुवित्तः लब्धसाक्षात्तत्सम्यक्कीयज्ञानः । ब्रह्मवित् ब्रह्मज्ञः पुण्यकृत् (१०.२१) तपोनिरतः, तैजसः च—तेजोब्रह्मेत्यस्योपासकः—तेन पथा एति सद्गतिं प्राप्नोति ।

अन्धंतम इत्यादि व्याख्यातम् ( ११ ) ।

अविद्वांसः अज्ञाः, अबुधाः बोधरहिताः आत्मज्ञानशून्याः ये जनाः ते प्रेत्य अन्धेन तमसा आवृताः अनन्दा नाम आनन्दरहिताः इति विश्रुताः ये लोकाः सन्ति तान् अभिगच्छन्ति ।

अयं पुरुषः अस्मि इति (२।२) चेत् आत्मानं विजानीयात् किम् इच्छन् अभिलषन् कस्य कामाय प्रयोजनाय शरीरम् अनु संज्वरेत् तत्सन्तापेन सन्तापी भवेत् ?

यस्य ब्रह्मज्ञस्य अस्मिन् सन्देह्ये सन्देहविषये गहने विषमे प्रविष्टः आत्मा अनुवित्तः लब्धसाक्षाज्ज्ञानः प्रतिबुद्धः जागरितः, तस्य ब्रह्मज्ञस्य स आत्मा विश्वकृत्—"अनेन जीवेनात्मना" (१२।१) इति निखिल-नामरूपव्याकरणहेतुतया, स हि सर्व्वस्य कर्त्ता—भगवदधीनतायाम-

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः।
य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति॥

बृह, ६।४।१—१४।

२६। यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन ऊर्द्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्द्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खन्तेन स ऊर्द्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः। बृ, ७।१०।१।

लब्धसामर्थ्यात्; लोकः उत्कृष्टगतिस्थानं तस्य आत्मनः। कथम्? स तु स्वयं लोकः एव—चिन्मयत्वात् लोकस्य।

इह जीवने एव सन्तः वयं तत् ब्रह्म विद्मः विजानीमः, न चेत् विद्मः अवेदिः अज्ञानी स्याम्। किन्तेन स्यात्? महती विनष्टिः क्षतिः। कोवा लाभः क्षतिर्वा? एतत् ब्रह्म ये विदुः ते अमृताः मुक्ताः भवन्ति, अथ इतरे अज्ञानिनः दुःखम् एव अपियन्ति प्राप्नुवन्ति।

२८। दशमस्य षट्त्रिंशवचनसंघे मोक्षानामुपासकानां गतिमाह यदेति। यदा पुरुषः उपासकः अस्मात् लोकात् प्रैति, स वायुम् आगच्छति, स वायुः तस्मै रथचक्रस्य खं यथा तथा विजिहीते स्वात्मावयवान् विगमयति अवकाशं ददाति। तेन अवकाशेन स ऊर्द्ध्वं आक्रमते आरोहति। स आदित्यम् आगच्छति स आदित्यः तत्र तस्मै यथा लम्बरस्य वादित्रविशेषस्य खं तथा विजिहीते अवकाशं ददाति। तेन आकाशेन स ऊर्द्ध्वं आक्रमते। स चन्द्रमसे आगच्छति। स चन्द्रमाः तत्र तस्मै यथा दुन्दुभेः खं तथा विजिहीते अवकाशं

३०। अनाद्यनन्तं कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपम्।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥

भावग्राह्यमनीड़ाख्यं भावाभावकरं शिवम्।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्॥
श्वे, ५।१३।१४।

३१। यदा चर्म्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदादेवमविज्ञाय दुःखस्यान्तो भविष्यति॥
श्वे, ६।२०।

ददाति। तेन अवकाशेन स ऊर्द्ध्वं आक्रमते। स अशोकम् अहिमं हिमवर्ज्जितं लोकम् आगच्छति। तस्मिन् शाश्वतीः समाः नित्यकालं वसति।

३०। भगवज्ज्ञानेन मुक्तिमाह अनाद्येति। कलिलस्य संसार-गहनस्य मध्ये अनाद्यनन्तम् आद्यन्तविरहितं विश्वस्य स्रष्टारम्, अनेक-रूपं विविधभावेन प्रकाशमानं, विश्वस्य एकं परिवेष्टितारं देवं ज्ञात्वा सर्व्वपाशैः मुच्यते।

भावग्राह्यं भावेन अनुरागेण विशुद्धान्तःकरणेन वा ग्राह्यम्, अनीड़ाख्यम् अशरीराख्यं निरवयवं, भावाभावकरं भावञ्च अभावं च करोतीति भावाभावकरं तं स्थितिसंहारकारणं, शिवं मङ्गलमयं, कलानां प्राणादीनां षोड़शानां सर्गकरं सर्व्वज्ञं देवं ये विदुः, ते तनुं शरीरं स्वरूपावस्थानविघ्नकरीम् अभिमानात्मिकां जहुः परित्यजेयुः।

३१। आकाशो हि ब्रह्मलिङ्गम्। तं यदि न तद्भावेन पश्यन्ति जनाः किन्तर्हि स्थूलावरणरूपेण, तदा न भवेत् स तस्य दुःखापहर-

**णायेत्याह यदेति। यदा मानवाः आकाशं चर्म्मवत् वेष्टयिष्यन्ति तदा देवम् अविज्ञाय दुःखस्य अन्तः विनाशः भविष्यति किमिति शेषः। भविष्यतीति शिरश्चालनेनोत्तरार्थम्। "एष आकाश आनन्दः" इति तत्त्वम्। परापरात्मजगद्व्याप्त्यान्निहितपरात्मा समन्तात् काशत आनन्दतयेति आकाश आनन्दः।**

*

* *

गतिर्हि द्विविधा। पुनरावर्त्तन्यपुनरावर्त्तनी च। अपुनरावर्त्तनसाधिका गतिरेवोपनिषत्सिद्धा, सैव मुख्या, तामेव विस्तरतः प्रदर्श्यान्या पुनर्वैदिकानुष्ठानपराणां तदानीन्तनानामुत्कर्षे तत्तो विनिवर्त्तनाय। अपुनरावर्त्तनी गतिरपि द्विविधा, भगवदैश्वर्य्यसम्भोगरूपा, भगवत्सम्भोगरूपा च। केचित् भगवत्सम्भोगमपि न बहुमन्यन्ते। ते पुनर्नामरूपादिकं भेदकरं सर्व्वं परिहाय सर्व्वातीतब्रह्मणि न केवलमविभागेन स्थितिं किन्तर्हि लयमेव प्रार्थयन्ति। यत्र यत्र तादृशी गतिरुपलभ्यते तत्र तत्र प्राप्यप्रापकादिसम्बन्धदर्शनात् स्वरूपैक्यमेव न त्वेकस्मिन्नन्यस्यात्यन्तविलोपो गीयत इति वयमवधारयामः। तथाहि द्वादशे (१२) नामरूपाद्विमुक्तो जीवः "परात्परं पुरुषमुपैति" "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इति कथनात् मुक्तस्य परमपुरुषप्राप्तिः तज्ज्ञानेन च तत्स्वरूपता न हि तस्य विलोपं साधयतः। वदसि चेत्, समुद्रे नदीनामस्तगमनमत्र दृष्टान्ततयोपन्यस्तं, तेन च तासां स्वतन्त्रास्तित्वविलोपः, स यदि मुक्तेष्वभिप्रेतो न स्यात्, दृष्टान्तहानिरुपपद्येत। अत्रोच्यते, अम्मयो हि समुद्रः, अम्मयीनां नदीनां तत्र प्रवेशे स्वरूपैक्यमेव भवति, न तु विनाशः; अपां सञ्चये अणुरूपेण तासां तदापि सत्त्वात्। तटाद्युपाधियोगादासीत् योऽसावैकत्वान्तरायस्तस्यैव तिरोधानमभूत्। यदि स्वीकरोषि नदीस्वरूपाविनाशं, तदा मुक्तानां जीवचैतन्यानामपि सोऽवश्यं स्वीकर्त्तव्यः। तेषां सत्त्वे भोक्तृत्वं तदवस्थमेव तिष्ठति। "ब्रह्मैव भवति" इत्येकतास्थले "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" (१२।११) इत्यस्या विनियोगोऽतएव हि दृष्टपरिहारः। "नास्य कुलेऽब्रह्मवित् भवति" इति जीवतस्तस्य शुकादिवत् प्रव्याप्तिः सूच्यते, सुतरां योगेनाविभक्ततया स्थितस्य शरीरसत्त्वेऽप्यशरीरत्वं युक्तं भवति (११।२८।६१३पृ)। त्रयोदशे (१३) यदुक्तं तत् पुनरस्य सिद्धान्तस्य दृढतामापादयति। अदृश्यादिधर्म्मके परब्रह्मणि प्रतिष्ठालाभात् अभयस्याभयप्राप्तिः; यदि तदवस्थायां स्यादल्पापि भेदोपलब्धिस्तस्य भयमुपतिष्ठते। उक्तिरेषा दर्शयति परब्रह्मणि प्रतिष्ठालाभे न पुनर्मुक्तस्योपलब्धेः कर्त्तृत्वस्य वा विलोपो भवति। अष्टाविंशे (२८) यत्र निष्कामानां गतिरुक्ता तत्र न केवलं

ब्रह्मभूतत्वं किन्तर्हि शरीरसत्त्वेऽप्यशरीरत्वमभिमानशून्यतयोपवर्ण्य ब्रह्मप्रेरणयैव तेषां प्राण-चेष्टादि निर्णीयतेऽमुख्यसामर्थ्यञ्च। सम्यगैक्योऽपि दृक्शक्त्यादेरविलुप्तत्वं स्वयं श्रुतिरेव कण्ठ-रवेणोक्तम् (५-८)। तासां विषयान्तरसम्बन्धशून्यानां भगवत्स्वरूपरससम्भोगएव तात्पर्य्यम्। तत्-सम्भोगकाले तस्मिन् विद्यमानं निखिलं दोषमलविरहितं प्रतिभाति। एकादशे (११) तदेव स्पष्टमुपलभ्यते। विज्ञानभिक्षुरप्याह (१।३।४१) "सुषुप्त्युत्क्रान्त्योरवस्थयोरपि अर्थात् जीवाद्भेदे-नैव ब्रह्मज्ञेयमित्यर्थः। कुतः? व्यपदेशात्—तदाप्यन्योन्याभावलक्षणस्य भेदस्य श्रुत्यैव व्यपदेशा-दित्यर्थः। यथा तस्मिन्नेव बृहदारण्यकीयप्रकरणे सुषुप्त्यधिकारे 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्' इति। उत्क्रान्त्यधिकारे च 'तद्यथाऽनः सुसमाहितमुत्सर्ज्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्ज्जन्याति' इति। अनयोर्वाक्ययोः सुषुप्त्युत्क्रान्त्यौ च जीवब्रह्मणोः स्फुटं भेदएव उच्यत इति। अत्र चोत्क्रान्तिशब्दो जीवस्य देहत्यागमात्रपरतया मोक्षादीनामपि ग्राहकः। मोक्षावस्थायामपि 'निरञ्जनः परमं साम्यमुपैति' इति श्रुतौ साम्यान्तर्गतस्य भेदव्यप-देशः। 'ब्रह्मैव सन् ब्रह्माप्येति' इत्युक्तवाक्येऽप्यप्ययस्य भेदतन्त्रत्वात्त 'ब्रह्मैव सन्' इति च त्यक्त-देहाद्यभिमान इति प्राप्तगौणब्रह्मभाव इति चार्थः। अपौनरुक्त्याय विशेषणपदस्यैव गौणतौचित्या-दिति। प्रलयावस्थायाञ्च 'यत् प्रयन्त्यभिविशन्ति' इत्यादि श्रुतौ कोषखड्गयोरिव प्रवेष्टव्यप्रवेष्टो-र्भेदोऽवगम्यत इति।

"नन्वेवमपि सुषुप्तावेकीभावः तुरीये च ब्रह्मचिन्मात्रावशेषो माण्डूक्यादिसकलश्रुत्यन्तरेभ्यः प्रतीयत इति चेत्, उदाहृतयोर्बृहदारण्यकवाक्ययोरविभागपरत्वस्यागत्या वक्तव्यतया तदेकवाक्यत्वे-नेतरश्रुतेरपि तत्परत्वमेव धार्य्यते। तथाहि सुषुप्तौ तावत् स्त्रीपुरुषयोरिव मिथुनीभय भक्तोः स्पष्टविभागाभावेन जीवेश्वरयोरविभागलक्षण एकीभावः श्रुत्योच्यते, सुषुप्तौ जीवस्य भोगप्रयोजन चित्तवृत्तिसम्बन्धतः सूक्ष्मविभागस्यैव सत्त्वात्। तुरीये तु चित्तस्यात्यन्तविलयेन जीवस्याप्यत्यन्तविल-यात् ईश्वरोपाधेश्च नित्यवृत्तिमतोऽपि व्यापाराभावेन प्रसुप्तत्वात् ब्रह्मचैतन्ये च सर्व्वविषयावभासन-लक्षणव्यापारस्य तुरीयाख्यमहाप्रलयावस्थायामप्रच्युतत्वात् ब्रह्म चिन्मात्रावशेषतया श्रुत्योच्यते। सुषुप्ततुरीययोरयमवान्तरसूक्ष्मभेदो शिष्यैर्न विस्मरणीयः। तदेतत् स्वयमाचार्य्यो वक्ष्यति— 'अविभागो वचनात्' (४।२।१६) इति सूत्रेण।" इति।

यदिदमुक्तं तत् भगवत्सम्भोगरूपायागतेरन्तर्भूतम्। भगवदैश्वर्य्यसम्भोगरूपाया गतेरेवोप-निषदि बाहुल्येनोपवर्णनम्। परापरप्रकृतिकं परं ब्रह्म त्रिविधं ब्रह्मेत्युच्यते। अपरया यदा ह्यविभक्ता सती परा परस्मिन् तिष्ठति तदा स्वरूपरससम्भोग उपजायते। न केवमपरा विलुप्ता

किन्तर्हि परायां विद्यमानसत्त्वा (१।५) स्वेच्छयैव भोग्यत्वेनोपस्थापयितव्या च। अपरा पुनर्भगवदैश्वर्य्यम्। अध्यात्ममधिदैवञ्च सर्व्वमेव तस्यामन्तर्भूतम्। तत्तदधिकारयोरुपासना विहिता। तत्तज्जय एवोपासनायाः फलम्। न हि परिचिततारतम्यादस्य भिन्नत्वोपासना तत्फलञ्च। सुतरां विद्याभावे परात्मनोऽनुशीलनेऽपि सर्व्वत्र तदनुविद्धमेव सर्व्वं ग्राह्यम्। समयविद्यावल्ली गतिसाधनत्वेनैव ग्राह्या। वस्तुतस्तस्यां गतेर्गतिप्रदर्शनमेव तात्पर्य्यम्। प्रथमे (१) तावत् गतेर्मूलमुपन्यस्यति। आत्मज्ञानं परात्मज्ञानपरिपुष्टं गतेस्तत्प्रतिष्ठायाः कारणम्। न हि श्रुतिषु परात्मदर्शनं विना तेषु पराधस्य तिरोधानं तज्जयश्च सम्भवति। सुतरां तदेव सर्व्वादौ साधनीयम्। न खलु वक्तव्यं कथं परात्मदर्शने सिद्धे श्रुतेः सम्बन्धरक्षणे पुनरियान् प्रयासः। तस्मिन् सिद्धे कः पुनर्बुद्धिमान् न परिहरति तदुपायम्। यद्यन्योपायोपेययोश्चिरसम्बन्धो न स्यात् परिहारो भवेदपरिहार्य्यएव, अन्ययैकेनान्यस्य व्यवधानात् लक्ष्यसिद्धिरेव व्याहन्येत। भगवदैश्वर्य्यरूपेणापरा प्रकृतिस्तदधीनाऽनपायिनीति तस्मिन् तया जीवस्य सम्बन्धो न व्यवधायकः किन्तर्हि भगवत्यानन्दचित्तत्वस्य हेतुः। "सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता" (३।११) इत्यस्याः प्रपञ्चश्चतुर्द्दशे (१४) पञ्चदशे (१५) च कृतः। अयमेवार्थः षोडशे (१६)। भगवदैश्वर्य्यसम्भोगे कामो वर्त्तते, अकामस्य तत्सम्भोगः कुतोऽपि निषिद्धः। अतएव हि वेदान्ते कामस्य विद्यमानता दृश्यते। नायं कामो भगवदिच्छाविरोधी, तादृशत्वे दौर्बल्यमेवोपतिष्ठते। सति दौर्ब्बल्ये सङ्कल्पानुरूपा प्राप्तिर्जीवे न सम्भवति। नवमे (९) दशमे (१०) सत्यानुसारित्वं सत्यानुसरणेनोद्बुद्धत्वं, तेन च विशुद्धेऽन्तःकरणे सङ्कल्पस्य प्रभावान्वितत्वं सर्व्वैश्वर्य्यायत्तीकरणञ्च। अयमौपनिषदः कामो भगवदिच्छासङ्गततया सत्यः। सत्येन च कामेन स्वेच्छया पितृलोकादिभिः सम्बन्ध एकविंशे (२१)। तत्तल्लोकोचितभोगोऽप्यस्य न कलुषीकरणाय "मनसैतान् पश्यन् रमते" (११।२२) इति तस्मिन् भगवच्छक्तिवैचित्र्यादिप्रत्यक्षीकरणेन तस्यानन्दरूपत्वात्। यद्येवं कथं सरजस्कविरजस्कत्वभेदोऽत्र षष्ठे (६) दृश्यते? कामस्य रजःसंसृष्टत्वात्। रजोऽत्र क्रियाशालित्वं न तु मालिन्यं, सत्येन तपसा ब्रह्मचर्य्येणापसारितमलत्वात्। विना हि क्रियाशालित्वं प्रच्छन्नानां लोकानां नाभिव्यक्तिः। रजोगन्धशून्यत्वात् तेषु न स्वतन्त्रक्रियाशालित्वं तेभ्यः स्वयं परात्मैव निखिलं प्रकटयति।

उद्गीथोपासनायां सामोपासनायाञ्च परमात्मोपासनं न साक्षात्सम्बन्धेन। ततएव देवलोकमनुष्यलोकाभिरक्ष्याः फलम्। न पुनः फलदातृनिरपेक्षं तत् भवितुमर्हति, अतः "यएष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" (१।७) "यएष अन्तरक्षिणि पुरुषो दृश्यते" (१।८) इति तत्र तत्र परमेश्वराधिष्ठानमुच्यते। अत्रापि कामानुसारतः देवलोकान् मनुष्यलोकान् साम्प्रत्युपासक इति

सप्तदशे (१७) प्रोक्तम्। न हि लोकानामियत्ताऽस्ति। अनन्तलोपासकानामतीलोकजीवनयोगानन्त्यमुपपादुकतया। अष्टादशे (१८) विवृणोत्येतदेव। ऊनविंशे (१९) विंशे (२०) एकविंशे (२१) अर्चिरादिगतिः, अनावृत्तिः, ब्रह्मप्राप्तिश्च। देहाज्जीवोत्क्रमकाले प्रथममर्चिषमेवावलम्ब्य स उत्क्रमते। आदित्यमण्डलात् प्रसृताऽर्चिषं हृताम् नाड़ीषु प्रविश्य तिष्ठति, सुतरां रात्रावपि न तदभावः। मनस्तुल्यया क्षिप्रगत्या रश्मिमार्गेण सोऽयमादित्यमागच्छति। तत्र विदुषां मूर्द्धन्यनाड़ीविनिःसृतानां ब्रह्मलोकप्रवेशे द्वारमस्ति नाविदुषां नाड्यन्तरविनिःसृतानां, तेषां तत्र गतिरोधो भवति। अर्चिषः अह्नः, अह्नः शुक्लपक्षं, शुक्लपक्षात् उत्तरायणषण्मासान्, तेभ्यः संवत्सरं, संवत्सरात् आदित्यम्, आदित्यात् चन्द्रमसं, चन्द्रमसो विद्युतं प्रतिपद्यन्त इत्युक्तम्, तत् कथं क्षिप्रगत्या प्रथममेवादित्यप्राप्तिरित्युक्तिः। इत्थमागादादित्यमण्डलादूर्द्धं देवलोकाः, अधश्च मनुष्यलोकाः। ये पुनर्ब्रह्मलोकं गच्छन्ति ते तन्मण्डलादूर्द्धं प्रयान्ति। संवत्सरानन्तरं योऽसावादित्य उक्तः, स आदित्यलोकः, न तत्राहोरात्रे परिवर्त्तेते, निरन्तरज्योतिःपूर्णत्वात्। अतएवाह तैत्तिरीयब्राह्मणे—"नाकमारोह सह यजमानेन सूर्य्यं गच्छतात् परमे व्योमन्" (३।७। १३) इति। "नास्याहोरात्रे लोकमाप्नुतः" (३।११।८) इति। ये पुनरादित्यमण्डलद्वारात् प्रत्याख्यातास्तेऽविदुषः। ततस्ते धूमं, धूमात् रात्रिं, रात्रेः कृष्णपक्षं कृष्णपक्षात् दक्षिणायनषण्मासान्; तेभ्यः पितृलोकं, पितृलोकात् आकाशम्, आकाशात् चन्द्रमसं प्रतिपद्यन्ते। विदुषां गतौ आदित्यात् चन्द्रमसं चन्द्रमसः विद्युतं ते गच्छन्ति, अत्र पुनरविदुषां चन्द्रमस एव निवृत्तिः। "एतद्वै स्वर्गस्य द्वारं यच्चन्द्रमाः" इति श्रवणात् ततो निवृत्तिर्ब्रह्मलोकाप्रवेशात्। ब्रह्मलोकगमने न ततः पुनरावृत्तिर्भवति, तदन्यत्रावृत्तिः। अर्चिरादिगतिविषयेऽन्योन्यानां सिद्धान्त आकरे प्रोक्तः। शुक्लकृष्णगतिप्रदर्शनार्थमेवेति योगाचार्य्यस्य। देवपितृसम्पर्कीणा अहोरात्रिप्रभृतय इति ब्राह्मणाज्ज्ञातव्यम्। पञ्चाग्निदर्शनम, अरण्येवासः, तपः, ब्रह्मचर्य्यं प्रथमायाः, अग्निहोत्रादिवैदिकं कर्म्म, वापीतड़ागारामादिकरणञ्च द्वितीयाया गतेर्हेतुः। सप्तमे (७) तमेव निर्द्दिश्य, अष्टमे (८) गतेर्ह्येतोश्च हेतुं दर्शयति। ब्रह्मलोके जीवब्रह्मणोश्छायातपयोरिव स्वरूपस्यतया स्थितिश्चतुर्थे (४)। तदन्यत्र ज्ञानानुरूपं तनुग्रहणम्। तत्राधिष्ठायत्वेऽपि शरीरतया भासमानत्वम्। अष्टाविंशे (२८)ऽस्य प्रपञ्चः।

अष्टाविंशेन द्वाविंशस्य च (२२) मेलनात् परलोकतत्त्वमेवं प्रतिभाति। चक्षुरादीनीन्द्रियाणि जीवाधिष्ठानेन न केवलं क्रियावन्ति किन्तु तदुद्भूतानि। अतस्तच्छक्तितया तान्यन्यत्र (३।५८४) परिगृहीतानि, अत्र तु तेजोवयवतया, तेजो हि ब्रह्मपरनाम। प्रयाणकाले तेषां जीवेनैकीभावः, सन्निधौ व तेषां स्थितिः, भोगकाले मनोऽपेक्षाभिव्यक्तिः। मनसैव भोग्यजातं पश्यन् स रमते।

प्रयाता पुनर्विद्याकर्म्मपूर्व्वप्रज्ञासमन्वितः प्रयाति, सुतरां भोगस्य च तदनुरूपत्वम्। यत्र तु छाया-तपयोरिव जीवब्रह्मणोरेकत्र वासस्तत्र मनसा भोगः, यत्र पुनरेकीभावस्तत्र परात्मप्रेरणयैव सर्व्वविधा चेष्टा। ये पुनर्न मुमुक्षवः किन्तर्हि पार्थिवभोगेष्वासक्ताः प्रजाकामा वा (११।६) तेषां येन येन कर्मणा यो यो भोग उपतिष्ठते तत्तत्कर्म्मावसाने पुनस्तत्तद्भोगसाधनकर्म्मसञ्चयार्थं मनस्तदनुरूपं शरीरग्रहणं करोति। पृथिवी कर्म्मभूमिश्चन्द्रमा भोगभूमिरित्येवं कर्म्मभूमेर्भोगभूमेश्च भेदं संसाध्य पृथिव्याश्चन्द्रमसं चन्द्रमसः पृथिवीं प्रतिपद्यन्ते त इत्ययमौपनिषदः सिद्धान्तः। पृथिवी मनुष्यलोकश्चन्द्रमा देवलोकः। संहितायां ब्राह्मणे च यथा मनुष्यलोकानां देवलोकानाञ्चा-संख्येयत्वं दृश्यते तथोपनिषद्यपि। सुतरां "लोकान् मृत्युत्यायिनस्तएवमेवानुपरिवर्त्तन्ते (११।२०)" इत्यवत्यल्लोकानिति पदं प्रयाणोपयोगिनां तत्तल्लोकानामसंख्यं बहुत्वमेव व्यनक्ति। "तद्य इह रमणीयचरणा अभ्यासोह यत् ते रमणीयां योनिमापद्येरन्" "अभ्रं भूत्वा मेघोभवति मेघोभूत्वा प्रवर्षति" इत्यादि च मनुष्यलोकानामसंख्येयत्वात् "यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति यइह नानेव पश्यति॥" (४।१०) इति प्रतिपादनात् सर्व्वेषु लोकेषु यतो यतो जीवो यत्र यत्र गच्छति तत्र तत्र पूर्व्वानुरूपं सर्व्वमस्तीति प्रदर्शनाय पृथिव्यनुरूपं वर्णनं न गतिविषये क्वापि विचिकित्सा वेदान्तवाक्यादुपतिष्ठते। 'प्रवर्षति' इत्यनन्तरमिहशब्दः पृथिवीलोकमपेक्ष्य अतएव हि बृहदारण्यके "वृष्टेः पृथिवीं प्राप्यान्नं भवन्ति" इति। वर्षणानन्तरमपि यत् परेतैः पूर्व्वानुरूपतनुमद्भिः साक्षात्कारः क्वचित् क्वचित् घटते तत्तु मुक्तानां स्वेच्छया रूपपरिग्रह इति वेदान्तकृतान्तानुरूपमिति मन्तव्यम्। ये पुनराधिकारिकाणां साक्षात्कारे भगवत्साक्षात्कार इति मन्यन्ते तैरिदमवश्यमङ्गीकर्त्तव्यं यत् तेष्वपि परात्मनिरपेक्षरूपपरिग्रहो न जातु सम्भवति। एवं मुक्तानाञ्चानन्याधिपतित्वन्तु परात्मानमुद्दिश्य कथयति वेदान्तवादिनः, यतो जीवमात्राणां प्राणेनानालिङ्गितस्थितिर्न कुत्रापि तत्सम्मता। कथं तेषां क्वचित् साक्षात्कारदानमिति प्रश्नस्योत्तरं परात्मप्रेरणापेक्षं तदित्येदपि यदुक्तं तद्द्रढयति। अविभक्ततयावस्थितानां तथैवात्मत्वाविर्भावानुभव इति विशेषः। "तत् पुरुषोऽमानवः" (११।२०) इत्येषा वैद्युततनुमत्त्वात् रूपवत्तया, "पुरुषो मानसः" इत्येषा पुनररूपवत्ताया लिङ्गम्। अधुनातनं ताड़ितप्रवाहेण प्रतिच्छविप्रतिफलनं सुदूरदेशे रहस्यमिदमुद्घाटयति मुक्तानां वैद्युतरूपपरिग्रहस्य। प्रस्थितानामेवमेव लोकाल्लोकान्तरभ्रमणं सिद्धं भवति।

पुत्रैषणादिकं परिहाय यद्यपि मोक्षनिरता ब्रह्मण्येव मनोभिर्विविशिवन्तः, तथापि नैवं मन्तव्यम् यत् संहितासमयोचिततत्तद्देषणानि यथावत् वेदान्ते परिगृहीतानि, यतो लक्ष्येऽपि पुनरेतानि भिन्नान्यासन्। चतुर्विंशे (२४) लोकत्रयजयसाधनमुक्तम्। पुत्रेण मनुष्यलोकः, अग्निहोत्रा-

दिना पितृलोकः, विद्यया देवलोको जेतव्यः। दृश्यते वेदान्ते पुत्रस्य वेदरूपित्वम्। वेदविस्तारस्य विच्छेदो माभूदिति वैदान्तिकसमये पुत्राकाङ्क्षा। पित्राऽपरिसमाप्तस्य पुत्रेण समापनेन मनुष्यलोकजयः सिद्ध्यति। प्रयातुः पितुः पुत्रे प्रविष्टाः प्राणाः पृथिव्यादिभ्यस्तस्मिन् पुनः प्रवेशकाले दैवशक्तिसम्पन्नास्तं प्रविशन्ति, सर्व्वभूतानि च तमवन्ति, नापरेषां दुःखैः किन्तर्हि पुण्यैः संश्लेषो भवति तस्येति मनुष्यलोकजयः। पञ्चविंशे ( २५ ) यज्ञसाधनेभ्यस्त्रिलोकजयोक्तिः संहितासिद्धपद्धतिमतिक्रामति। एवमन्यत्रापि। आकरे विद्यावल्ल्याञ्च यद्यदुक्तं तेनैव शिष्टस्य विशेषव्याख्यानं भवतीत्यलं पल्लवितेन।

जीवात्मवल्ल्यां जीवस्य ( ७।१२ ) पुंस्त्वस्त्रीत्वनपुंसकत्वं नात्मगतं किन्तर्हि देहगतमिति यदुक्तं तद्देहान्तरितानामात्मनां पुंस्त्वादिभेदं वारयति न पुनर्गुणगतवैषम्यम्। तत्तु सिद्धे पुनरेकात्मत्वे तिरोधत्ते। कर्म्मभिर्देहस्य रूपादिषु योऽसौ भेद उपतिष्ठते स पुनरिह नित्यप्रत्यक्षः। दुर्ज्जातीयानां सदाचारैर्देहस्योच्चवंशीयानामनुरूपत्वं तथैवोच्चवंशीयानामसदाचारैर्दुर्ज्जातीयानां देहवन्नीचत्वं मनोऽनुरूपं तादृक् परिवर्त्तनं दर्शयति। जन्मकाले यद्गुणेराहतो देही भूमावाविरेति तेषां स्फूर्त्तिः क्रियागुणैश्च तैरन्येषां नवनवयोगोऽपि प्रत्यक्ष एव। "यदेवेह तदमुत्र" इति श्रौतन्यायादेषां परत्रापि विनियोगः।

## इति गतिवल्ल्येकादशोऽध्यायः।

---

# द्वादशोऽध्यायः।

## तत्त्ववल्ली।

१। श्वेतुकेतुर्ह्वारुणेय आस तꣳह पितोवाच श्वेतकेतो वस ब्रह्मचर्य्यं न वै सोम्याऽस्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति।

स ह द्वादशवर्ष उपेत्य चतुर्व्विꣳशतिवर्षः सर्व्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः।

वल्लीभिरेकादशभिर्य्यदुक्तं तत्सर्व्वमस्यां वल्ल्यां सूत्रेणैकेन सम्बद्धं तत्त्वमुद्भावयतीत्यनेनाध्यायेन समन्वयपरिसमाप्तिः। मूलादेकस्मात् सर्व्वस्योद्भवः। उद्भूतानां पुनर्न स्वतन्त्रसत्ता। अथापि स्वतन्त्रतयैव सर्व्वैस्तानि परिगृह्यन्ते। परिग्रहणमिदं भ्रान्तिविजृम्भितं नैतत् वक्तुं शक्यते। तथा सति सर्व्वोच्छेदएव प्रसज्येत। अस्मिन् विषये को वा वेदान्तस्य सिद्धान्तः वल्ल्यामस्यां तद्वाक्यैरेव विषदीभविष्यति। अतः प्रथममेव तद्वक्तुमारभत आख्यायिकापदेशेन।

१। ह-ऐतिह्ये। अरुणेरपत्यम् आरुणेयः श्वेतकेतुः आस बभूव। तं पुनः पिता आरुणिः उवाच—हे श्वेतकेतो ब्रह्मचर्य्यं वस। हे सोम्य, अस्मत्कुलीनः अस्माकं कुले समुत्पन्नः अननूच्य अनधीत्य ब्रह्मबन्धुः—ब्राह्मणानाम् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तः—इव भवति इति।

स पुनः द्वादशवर्षः तद्वयस्कः सन् उपेत्य गुरुकुले यावत् चतुर्व्विंशतिवर्षः बभूव तावत् सर्व्वान् वेदान् अधीत्य महामनाः—महत्

**येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात-मिति कथं नु भगवः स आदेशो भवतीति।**

**यथा सोम्यैकेन मृत्पिण्डेन सर्व्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।**

गम्भीरं मनः अस्य इति गाम्भीर्य्येण तादृशमात्मानं दर्शयमानः—अनूचानमानी अध्ययनाभिमानयुक्तः स्तब्धः अविनीतः एयाय गृहम् आगतवान्। तं श्वेतकेतुं ह पिता उवाच—हे श्वेतकेतो, हे सोम्य, यत् नु इदं महामना अनूचानमानी स्तब्धः असि, उत अपि तम् आदेशम् आचार्य्यम् अप्राक्ष्यः पृष्टवान् असि;

येन आदेशेन अश्रुतं श्रुतं, अमतं—अतर्कितं मतं—तर्कितम्, अज्ञातं ज्ञातं भवति? इति। श्वेतकेतुराह—हे भगवः भगवन्, कथं नु स आदेशः भवति? इति।

पिताह—हे सोम्य, यथा एकेन मृत्पिण्डेन कारणेन सर्व्वं मृण्मयं मृद्विकारजातं कार्य्यं विज्ञातं स्यात्; एवं स आदेशो भवतीति परेणान्वयः। तत्र हेतुः—वाचारम्भणं—वाचा आरभ्यते उत्पाद्यते (८।१४) उपादानादुद्भूयते यत् तत् नामधेयं नाम—रूपेणाभिव्यक्तं घटशरावादि—विकारः कार्य्यम्; मृत्तिका इति एव नामधेयं सत्यं—सम्मूलकम् अवान्तरकारणं विकारजातव्यापित्वात्। "नामरूपे सत्यम्" (८।१४) इत्युक्तत्वात्, "ते यदन्तरा तद्ब्रह्म" (३।१९) इति च ब्रह्मणि तयोः सत्त्वात् कार्य्याण्यवान्तरकारणानि च नानृतानि तत्-सत्तया तेषां सत्तावत्त्वात्, कार्य्यकारणयोरनन्यत्वाच्च (२।१।१४)। घटशरावाद्याकाराः मानवकल्पनासम्भूता अतएव तेऽनृता इति न वक्तुं शक्यते, प्रकृतौ तेषामसत्त्वे तदनुकृतिरेव कुतः स्यात्। जगति विविधनामरूपसन्निवेशो यथा साक्षात्परमात्मनोद्भूयते, मानवकृते तस्मिन् तथैव तत्प्रेरणायाः साम्राज्यम्। घटशरावादि नामधेयं वाचाऽऽरभ्यत इति कथमुक्तमिति जिज्ञासायां—वाक्सामान्यतया घट-

यथा सोम्यैकेन लोहमणिना सर्व्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ।

यथा सोम्यैकेन नखनिकृन्तनेन सर्व्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम् एवꣳ सोम्य स आदेशोभवतीति ।

न वै नूनं भगवन्तस्तएतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेवमेतद्ब्रवीत्विति तथा सोम्येति होवाच । छा, ६।८।१।१—७ ।

शरावाद्याकारा नामधेयानि मानसे तिष्ठन्ति, तएवोपादानयोगेन वहिः सन्निवेश्यन्त इत्युत्तरम् । मृत्तिकाहिरण्याद्यवान्तरकारणान्युपादानसंज्ञकानि नामरूपतया परे ब्रह्मणि तिष्ठन्ति, तान्येव जीवात्मनि तेन प्रत्यवभासितानि वैचित्र्यमातन्वन्ति । तद्वैचित्र्यानुसरणेनावान्तरकारणानां घटशरावादिरूपेणोद्भावनं जीवेन नामरूपयोः सत्यत्वात् सत्यमेव । स्वयं श्रुतिरेव सिद्धान्तमिमं प्रतिपादयिष्यति । किमिदं नाम रूपञ्च यद्ब्रह्मणि सृष्टादौ तिष्ठति । सर्व्वानुभुवोऽनुभवो योऽसौ जीवहृदि वाचोपलभ्यमानस्तद्योगेन ते वहिः प्रकटीभवतः ।

हे सोम्य, यथा एकेन लोहमणिना सुवर्णपिण्डेन—"लोहोऽस्त्री शस्त्रके लोहे जोङ्गके सर्व्वतैजसे" "सर्व्वं स्यात् तैजसं लौहम्" इति स्वर्णरजतादिवाचकतया सुवर्णं कृष्णायसस्य पश्चादुल्लेखात्—सर्व्वं लोहमयं सुवर्णविकारजातं कार्य्यं विज्ञातं स्यात् । समानमन्यत् ।

हे सोम्य, यथा एकेन नखनिकृन्तनेन—तदुपलक्षितेन कृष्णायसपिण्डेन कारणेन—सर्व्वं कार्ष्णायसं कृष्णायसविकारजातं कार्य्यं विज्ञातं स्यात्, समानमन्यत् । हे सोम्य, एवं स आदेशः उपदेशः भवति इति ।

श्वेतकेतुराह—न वै नूनं ते भगवन्तः—मम आचार्य्याः—एतत्

२। तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति।

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवते-

अवेदिषुः। यदि हि एतत् ते अवेदिष्यन् कथं मे मह्यं न अवक्ष्यन् इति। भगवान् त्वम् एवं दृष्टान्तानुरूपेण एतत् ब्रवीतु इति। पिता उवाच—हे सोम्य, तथा अस्तु इति।

२। तेजोऽबन्नानां त्रयाणां सृष्टिप्रदर्शनानन्तरं (८।८) जीवसम्बन्धप्रदर्शनाय त्रीण्येव बीजानि प्राणिनामाह तेषामिति। तेषां प्रसिद्धानां गतिप्रकरणे निर्द्दिष्टानाम् एषां प्रत्यक्षाणां भूतानां प्राणिनां तेजोऽबन्नवत् त्रीणि एव बीजानि भवन्ति—अण्डजं, जीवजम्, उद्भिज्जम् इति। पक्ष्यादयः अण्डात्, पश्वादयः जीवात्, वृक्षादयः उद्भिदः स्थावरात्। बीजानीत्युक्तेर्माहात्म्यमिदं यत् पक्ष्यादिषु सर्व्वेषु बीजकोषोविद्यते। तत्रोत्पत्तिप्रकारसाम्येऽपि बहिःप्रकाशकालेऽण्डरूपेण जीवरूपेण भूभेदरूपेण चाविर्भवन्ति ते, ततस्तेषां तत्तज्जत्वम्।

सा इयं देवता सदाख्या ऐक्षत पर्य्यालोचयत, हन्त—वाक्यारम्भे—अहम्—'तदात्मानमवेदहं ब्रह्मास्मीति'—अनेन जीवेन आत्मना स्वात्मस्थेन इमाः तेजोऽबन्नरूपाः तिस्रः देवताः—कर्म्म—अनुप्रविश्य नामरूपे व्याकरवाणि विस्पष्टमाकरवाणि। तेजोऽबन्नानां तदा शक्तितयासीत् स्थितिः, सुतरां तेभ्यो नामरूपाभिव्यक्तिर्जीवचैतन्येन सह प्रविष्टया परात्मदेवतया वदति श्रुतिः स्वात्मनोऽविक्रियत्वात् विक्रियाधीनपरापरात्मशक्तियोगात्। तेजोऽबन्नरूपा ह्यपरा, जीवः परा। परापरात्मशक्तिरिति ज्ञेया तत्प्रकृतितया प्रसिद्धा।

तासां तेजोऽबन्नदेवतानाम् एकैकां त्रिवृतं त्रिवृतं—"एकैकां

मास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्।

तासां त्रिवृतं त्रिवृतमेकैकमकरोद्यथा नु खलु सोमेमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति। १—४।

यदग्नेरोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां

देवतां द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा द्विधा कृत्वा तदितरभागयोर्निक्षिप्य त्रिवृत्करणम्"—इति नियमस्तु काल्पनिकः कुत्र कुत्रचित् केषाञ्चिदुद्भूतानामाधिक्यदर्शनात्—करवाणि इति सा इयं देवता अनेन जीवेन आत्मना इमाः तिस्रः देवताः—कर्म—अनुप्रविश्य व्याकरोत् विस्पष्टीकृतवती।

तासाम् एकैकां देवतां त्रिवृतं त्रिवृतं सा अकरोत्। हे सोम्य, यथा नु खलु इमाः तिस्रः देवताः एकैका त्रिवृत् त्रिवृत् भवति तत् मे—निगदतो मम—विजानीहि विस्पष्टमवधारय। त्रिवृत्करणं श्रुतिसिद्धं न तु पञ्चीकरणमतएवाह विज्ञानभिक्षुः—"यत्तु पञ्चीकृतभूतेभ्यो ब्रह्माण्डादिसृष्टिरिति प्रलपनमाधुनिकानां तदप्रामाणिकम्। महाभूतेभ्योऽपञ्चीकृतेभ्यएव तदुत्पत्तिसम्भवात् श्रुतिस्मृत्यभावाच्चेति ध्येयम्। यापि तैः पञ्चीकरणे व्यवस्था कल्पिता अर्द्धएकस्य भूतस्य अपरार्द्धं च समभागैर्भूतचतुष्टयस्येत्येवं मिलितं मिलितं पञ्चीकृतं भवतीति साप्यप्रामाणिकी व्यभिचरिता च सुवर्णादौ तैजसे तैलादौ च पार्थिवे पृथिवीजलादीनामितरभूतापेक्षयाऽऽधिक्यदर्शनादिति दिक् (२।४।२०)।" इति।

अग्नेः यत् रोहितं लोहितं रूपं तत् तेजसः रूपं, यत् शुक्लं रूपं तत् अपां रूपम्, यत् कृष्णं रूपं तत् अन्नस्य रूपम्। रूपेणैवाग्नेरग्नित्वं, तस्य रूपस्य चाभिव्यक्तिस्तेजोऽवसात्, सुतराम्—अग्नेः

यत् कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्।

अग्नित्वं—तेजोऽबन्नादिभ्यः स्वतन्त्रास्तित्वम्—अपागात् अपगतम्। वाचा आरभ्यते अग्निरिति नामधेयं यत् तत् विकारः कार्य्यं त्रीणि रूपाणि लोहितादीनि इत्येव अभिव्यक्तं रूपं सत्यं सम्मूलकम्। तेजः प्रभृतिषु लोहितादिकं रूपं विद्यते, तस्य सन्निवेशविशेषोऽग्निरित्याख्यायते। एतदाख्यानं यदपि न मिथ्या तथापि रूपं विना तस्य सामान्यवागाकारेण विद्यमानताऽऽसीत्; रूपयोगादेवाग्निरिति विशेषाख्या। "अजामेकां लोहितशुक्लकृष्णाम्" (८।१५); "देवात्मशक्तिं स्वगुणैर्निगूढ़ाम्" (१२।११); "स्वाभाविकी ज्ञानबलक्रिया च" (६।११) इत्यादि (२।१।३०) श्रुतत्वात् "तदैक्षत" इत्यत्र ज्ञानक्रिया "तत्तेजोऽसृजत" (८।८) इत्यत्र बलक्रिया। कथम् "तदात्मानं स्वयमकुरुत" (८।६) इति? आत्मशक्तिप्रकाशात् सृष्टेः। तेजो हि बलक्रियेत्याधुनिकानामप्यत्र सम्मतिरस्ति। तेजस आपः, अद्भ्योऽन्नं व्रीहियवादीति वचनं प्रत्यक्षमूलकम्। सर्व्वेषामजाया लोहितशुक्लकृष्णायाः प्रकृतेरभिव्यक्तिः; सम्मूलकमित्युक्तिस्तु तच्छक्तितया। सृष्टिप्रक्रमे कुत्राप्याकाशः कुत्रापि प्राणः कुत्रापि तेजः कुत्राप्यम्भ इत्यनियतक्रमदर्शनात् "क्रमस्यानियतत्वात्" (५७३पृ) इति यदुक्तं तत्रानियतत्वे किं बीजं तच्चिन्तनीयम्। "आकाशो वै नाम नामरूपयोर्निर्व्वहिता" (३।१८) इत्यत्र नीरूपत्वाद्ब्रह्मण आकाशत्वं निर्द्दिष्टं तस्यैव जगद्विधायिन्यास्तच्छक्तेः, सुतरां तस्याः प्रथमाभिव्यक्तेर्ब्रह्मणोऽविभक्तत्वसूचनाय "आत्मन आकाशः" (८।४) इत्युक्तिः, "आकाशाद्वायुः" इत्यत्र प्राणस्य "एतस्माज्जायतेप्राणो मनः" (८।३) इत्याद्यनुरूपस्य। एवमुद्भूतक्रियाशक्तेः 'तेजः'; ततोऽप्युद्भूतत्वे" अम्भः—तेजसोऽबुद्भवनस्य पूर्व्वरूपम्। आधुनिका अप्येवं गतेस्तेजसस्तेजसो रश्मिताड़िताटीनां क्रमोद्भेदं वर्णयन्ति।

यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्।

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्।

यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागाद्विद्युतोविद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणिरूपाणीत्येव सत्यम्।

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्व्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः।

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदा-

यदादित्यस्येत्यादि समानम्।

यच्चन्द्रमस इत्यादि समानम्।

यद्विद्युत इत्यादि समानम्।

तत् एतत्—एकस्मिन् विज्ञाते सर्व्वं विज्ञातं भवतीति वचनं—विद्वांसः विदितवन्तः पूर्व्वे प्राचीनाः महाशालाः महाश्रोत्रियाः आहुः स्म किल—अद्य इदानीं नः अस्माकं कुले कश्चन अश्रुतम् अमतम् अविज्ञातं न उदाहरिष्यति—एकस्मिन् विज्ञाते सर्व्वविज्ञानात्—इति। कथमेवमुक्तवन्तः? हि यस्मात् एभ्यः दृष्टान्तेभ्यः—एकविज्ञानेन सर्व्वविज्ञानं—विदांचक्रुः ज्ञातवन्तः।

कतिपयेभ्यो दृष्टान्तेभ्यः कथं सर्व्वं श्रुतं मतं विज्ञातमभूदिति दर्शयति—रोहितम् इव अभूत् इति यत् तत् तेजसः रूपम् इति तत्

श्चक्रुः यदु शुक्लमिवाभूदित्यपाᳬ रूपमिति तद्विदाञ्चक्रु-र्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः।

यद्वविज्ञातमेवाभूदित्येतासामेव देवतानाᳬ समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति। १—७।

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातु-स्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठ-स्तन्मनः।

ते विदाञ्चक्रुः; शुक्लम् इव अभूत् इति यत् तत् अपां रूपम् इति ते विदाञ्चक्रुः, कृष्णम् इव अभूत् इति यत् तत् अन्नस्य रूपम् इति ते विदाञ्चक्रुः।

यत् पुनः अविज्ञातम् एव अभूत् इति तत् एतासाम् एव देवतानां तेजोऽबन्नानां समासः समुदायः इति ते विदां चक्रुः। हे सोम्य, यथा नु खलु इमाः तिस्रः देवताः पुरुषं प्राप्य एकैका त्रिवृत् त्रिवृत् भवति, तत् मे मम—गदतः—विजानीहि विस्पष्टमवधारय।

अशितं भुक्तम् अन्नं त्रेधा विधीयते। तस्य अन्नस्य यः स्थविष्ठः स्थूलतमः धातुः वस्तु अंशः, तत् पुरीषं भवति, यो मध्यमः धातुः तत् मांसं भवति, यः अणिष्ठः अणुतमः सूक्ष्मतमः धातुः तत् मनः भवति। अत्र भाष्यकार आह—"अन्नोपचितत्वात् मनसो भौतिकत्वमेव। न वैशेषिकतन्त्रोक्तं लक्षणं नित्यं निरवयवञ्चेति गृह्यते। यदपि 'मनोऽस्य दैवं चक्षुः' इति वक्ष्यति तदपि न नित्यत्वापेक्षया किन्तर्हि सूक्ष्म-व्यवहितविप्रकृष्टादिसर्व्वेन्द्रियविषयव्यापकत्वापेक्षया। यच्चान्येन्द्रिया-पेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः 'सदेकमेवाद्वितीयम्'

आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः।

इति श्रुतेः" इति। दैहिकधातूनामुपचयेनापचयेन च वाङ्मनःप्राणानां सामर्थ्योपचयापचयौ भवत इति न तेषामनित्यत्वं किन्त्वात्मन्यवरुद्धक्रियत्वमेव दर्शयति। प्रयाणकालेऽप्येवमेव भवत्यथापि तैः सह जीवात्मनो गतिरुपनिषद्युक्ता। तेजोऽबन्नानां सूक्ष्मतमावस्था शक्तिमात्रतयाऽवगन्तव्या, अतएव हि "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" (५८पृ) इत्याद्युक्तम्। एवमेवहि वैशेषिकतन्त्रोक्तं लक्षणं समञ्जसं भवति। "सदेकमेवाद्वितीयम्" इति श्रुतिस्तु शक्तिशक्तिमतोरभेदेनैव सिद्ध्यति। प्रकृतौ सर्व्वत्र ज्ञानबलक्रिया विद्यते, जीवे तत्संक्रमणेन तस्य ज्ञानबलयोरुपचयोऽसंक्रमणे पुनरपचय इति न कोऽपि विरोधः। अन्नात्मनसो बलोपचयापचयौ तदेव दर्शयतः। तेजोऽबन्नानां देवत्वोक्तेरिदमेव मूलम्। एवमन्यत्र। अतेदं तत्त्वं विशेषतो विवेक्तव्यम् वाङ्मनःप्राणैर्जीवस्य कृत्स्नत्वं (८।१३) ते पुनस्तस्याङ्गानि तन्मयश्च सः (७।११); मनसा पुनस्तस्य विशेषेणैकत्वञ्च (७।१०) सुतरां तेजआदिषु जीवानुप्रवेशस्तत्सूक्ष्मतमांशेष्व तस्यैकत्वञ्च सिद्ध्यति। विभजनात् प्राक् तेषामात्मन्यात्मनश्च परात्मन्यविभागेन स्थितिरासीत् (८।११।१२) (३।५)। विभजनञ्च तेषांमाण्डुक्योपनिषत्कथितया प्रक्रिययोपरिष्टादध्यायप्रपूर्त्यवसाने व्याख्याततया वेदितव्यम्। तत्र ये सर्व्वानुभुवः कल्याणानुभवा उच्यन्ते तएव स्थूलसूक्ष्मविषयाणामुद्भावयितारः। ज्ञानबलात्मकपरानुभवमूलकत्वात्तेषां स्थूलेभ्योऽन्नादिभ्यो सूक्ष्माणां मनःप्राणादीनां विभजनमत्र न तेषां हेयत्वं दर्शयति।

आपः पीताः त्रेधा विधीयन्ते। तासाम् अपां यः स्थविष्ठः धातुः तत् मूत्रं भवति, यः मध्यमः धातुः तत् लोहितं शोणितं भवति, यः अणिष्ठः धातुः स प्राणः भवति।

तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ।

अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच । १—४ ।

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तत् सर्पिर्भवति ।

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तन्मनो भवति ।

तेजः—तैलघृतादि—अशितं त्रेधा विधीयते । तस्य तेजसः यः स्थविष्ठः धातुः तत् अस्थि भवति, यः मध्यमः धातुः स मज्जा—नास्तः पुंसि—अस्थ्यन्तर्गतस्नेहः भवति, यः अणिष्ठः धातुः सा वाक् भवति ।

हे सोम्य, अन्नमयं हि मनः, आपोमयः प्राणः, तेजोमयी वाक् इति । श्वेतकेतुराह—भूयएव मा मां विज्ञापयतु भगवान् इति । हे सोम्य, तथा अस्तु इति पुनः पिता उवाच ।

वस्तुन्यवरुद्धशक्तिरुन्मुक्ता प्रभूतबलमाविष्करोतीति प्रत्यक्षगम्यम्, तद्यथा, कुड़वपरिमितखनिजाङ्गारादुन्मुक्तं बलं तत्परिमितदशलक्ष-गुणितगुरुभारमुद्वहति भूमेरूर्द्ध्वं पादान्तरप्रमाणम् । मानसशक्तेः प्राणशक्तेर्वाक्शक्तेश्च प्रभूतबलमन्नादिभ्य उद्भूयते कथं तदेव दर्शयति दध्न इति । हे सोम्य, मथ्यमानस्य दध्नः यः अणिमा स ऊर्द्ध्वः ऊर्द्ध्व-गतः समुदीषति सम्यगुद्गच्छति, तत् सर्पिः भवति ।

एवम् एव खलु, हे सोम्य, अश्यमानस्य भुज्यमानस्य अन्नस्य यः अणिमा—"एषोऽणुरात्मा" "स य एषोऽणिमा" इत्याद्युक्त्यनुसरणीनो-द्भूतं बलम्—स ऊर्द्ध्वः समुदीषति तत् मनः भवति ।

अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्द्ध्वः समुदीषति स प्राणो भवति।

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति सा वाग्भवति।

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच। १—५।

षोड़शकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति।

स ह पञ्चदशाहानि नाऽऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूंषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति।

हे सोम्य, पीयमानानाम् अपां यः अणिमा स ऊर्द्ध्वः समुदीषति, स प्राणः भवति।

हे सोम्य, अश्यमानस्य तेजसः घृतादेः यः अणिमा स ऊर्द्ध्वः समुदीषति, सा वाक् भवति।

हे सोम्य, अन्नमयं हि मनः इत्यादि पूर्व्ववत्।

हे सोम्य, पुरुषः—षोड़शकलः—जीवविशिष्टः कार्य्यकारणसंघातलक्षणः। पञ्चदश अहानि माशीः मा भुङ्क्ष्व; कामम् अपः पिब। आपोमयः प्राणः सुतरां पिबतः जनस्य प्राणः न विच्छेत्स्यते इति। समाधिस्था अन्नाशनं विनापि जीवन्तीति पश्यन् भाष्यकार आह— "ध्यानाहाराश्च केचित् अन्नस्य सर्व्वात्मकत्वात्।" इति।

स श्वेतकेतुः पुनः पञ्चदश अहानि न आश न बुभुजे। अथ तद्-

तᳫं होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवᳫं सोम्य ते षोड़शानां कलानामेका कलातिशिष्टा स्यात्तयै-तर्हि वेदान्नानुभवस्यशान ;

अथ मे विज्ञास्यसीति। स हाऽऽशाथ हैनमुपससाद तᳫंह यत् किञ्च पप्रच्छ सर्व्वᳫं ह प्रतिपेदे तᳫं होवाच।

यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्। तेन ततोऽपि बहु दहेत्।

नन्तरं एनं पितरम् उपससाद, आह च—भो पितः, किं ब्रवीमि इति। पिताह—हे सोम्य, ऋचः यजूंषि सामानि इति। स श्वेत-केतुः पुनः उवाच—भो पितः, न मा मां प्रति ऋगादीनि प्रतिभान्ति।

तं श्वेतकेतुं पिता उवाच—हे सोम्य, यथा महतः अभ्याहितस्य उपचितस्य अग्नेः खद्योतमात्रः खद्योतपरिमाणः एकः अङ्गारः परि-शिष्टः स्यात्, तेन खद्योतप्रमाणेनाङ्गारेण ततोऽपि एकस्मादङ्गारादपि बहु न दहेत्; एवं सोम्य, ते तव षोड़शानां कलानां एका कला अतिशिष्टा स्यात्, तया एकया कलया एतर्हि इदानीं वेदान् न अनु-भवसि। अशान भुङ्क्ष्व।

अथ भोजनानन्तरं मे मम—गदतः—विज्ञास्यसि प्रतिपत्स्यसे इति। स श्वेतकेतुः पुनः आश बुभुजे। अथ अनन्तरम् एनं पितरं स उपससाद। तं श्वेतकेतुं पिता यत् किञ्च पप्रच्छ पृष्टवान् सर्व्वं पुनः स प्रतिपेदे। तं श्वेतकेतुं पिता उवाच ;—

हे सोम्य, यथा महतः अभ्याहितस्य अग्नेः खद्योतमात्रं परिशिष्टम् एकम् अङ्गारं तृणैः उपसमाधाय उपचित्य प्राज्वलयेत्, तेन प्रज्वलिते-नैकेनाङ्गारेण ततोऽपि एकस्मादपि बहु दहेत्।

एवं सोम्य ते षोड़शानां कलानामेका कलातिशिष्टा-भूत् सान्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननु-भवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजिज्ञाविति विजिज्ञाविति । १—६ ।

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ।

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा-

एवं, हे सोम्य, ते तव षोड़शानां कलानाम् एका कला अतिशिष्टा अभूत्, सा एका कला अन्नेन उपसमाहिता उपचिता प्राज्वालीत् सुप्रज्वलितवती, सुतरां तया शिष्टया कलया एतर्हि इदानीं वेदान् अनुभवसि । कथम् ? हि यस्मात्, हे सोम्य, अन्नमयं हि मनः, आपो-मयः प्राणः, तेजोमयी वाक् इति । अथः पितुः तत् उक्तं स श्वेतकेतुः विजज्ञौ विज्ञातवान् । हिरभ्यामस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः

सन्मूलकत्वप्रतिपादनाय सर्व्वस्य पुनराख्यायिकारभ्यते उद्दालक इति । उद्दालकः आरुणिः किल पुत्रं श्वेतकेतुम् उवाच—हे सोम्य, स्वप्नान्तं स्वप्नस्य स्वापस्य—स्वस्वरूपतोक्तेः—सुषुप्तेः अन्तं स्वरूपम् —"अन्तं स्वरूपे नाशे ना" इति—मे मम गदतः—विजानीहि विस्पष्टमवधारय । यत्र यस्मिन् काले एतत्पुरुषः एष पुरुषः जीवः स्वपिति नाम—नाम प्रसिद्धे—स्वापं भजते नाम, तदा, हे सोम्य, सता सम्पन्नो भवति, तस्मात् एनं पुरुषं स्वपिति इति जनाः आचक्षते वदन्ति । कथम् ? हि यस्मात् स्वम् अपि इतः स्वस्वरूपताम् एव गतः भवति ।

मनसः प्राणतादात्म्येन सुषुप्तिं दर्शयति—स यथा शकुनिः पक्षी

ऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मनइति।

अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामापएव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति।

सूत्रेण व्याधप्रहितेन प्रबद्धः पाशितः दिशं दिशं पतित्वा अन्यत्र आयतनम् आश्रयम् अलब्ध्वा अप्राप्य पाशम् एव उपश्रयते, एवम् एव खलु, हे सोम्य, तन्मनः तस्य पुरुषस्य मनः दिशं दिशं पतित्वा अन्यत्र आयतनम् अलब्ध्वा प्राणम् एव उपश्रयते। कथम्? हि यस्मात्, हे सोम्य, प्राणबन्धनं प्राणः एव बन्धनम् अवष्टम्भकः यस्य तादृक् मनः। देहे यावत् प्राणस्य स्थितिस्तावत् तस्य तत्र स्थितिदर्शनात्। सन्मूलकत्वात् प्राणस्य प्राणतादात्म्येन सता सम्पन्नता।

हे सोम्य, मे मम—गदतः—अशनापिपासे अशितुं पातुम् इच्छे त्वं विजानीहि इति। यत्र यस्मिन् समये पुरुषः अशिशिषति नाम—अशितुम् इच्छति नाम—तत् तदा आपः एव अशितम् अन्नं नयन्ते—रसरूपेण विपरिणमय्य देहस्य सर्व्वत्र प्रेरयन्ति, अतएव तासां तन्नेतृत्वम्। तत् तत्र—गवादिनेतृत्वे यथा गोनायः गोपालः, अश्वनायः अश्वपालः, पुरुषनायः राजा सेनापतिर्व्वा इति, एवं तत् तत्र—अन्ननेतृत्वे अशनायाः इति—विसर्ज्जनीयलोपेन अशनायेति—अपः आचक्षते वदन्ति। तत्र—एवमन्नस्य देहगतत्वे—एतत् शुङ्गं शुङ्गः तीक्ष्णाग्रः शुँया इति ख्यातः—देहोपचितिसाधकमांसाङ्कुरः—उत्-

तस्य क्व मूलं स्यादन्यत्राद्भ्यादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्व्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः।

अथ यत्रैतत्पुरुषः पिपासति नाम तेजएव तत् पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति।

पतितम् उद्भूतं भवति। हे सोम्य विजानीहि न इदं शुङ्गोत्पतनम् अमूलं निर्म्मूलं मूलहीनं भविष्यति इति।

अस्य क्व मूलं स्यादित्याकाङ्क्षानिवृत्तये पिता स्वयमाह—अन्नात् अन्यत्र तस्य शुङ्गस्य क्व मूलं स्यात्। एवमेव एवम्प्रकारेणैव, हे सोम्य, अन्नेन शुङ्गेन तदुभयविवेकेन अपः मूलं तत्कारणम् अन्विच्छ प्रतिपद्यस्व। अद्भिः शुङ्गेन तदुभयविवेकेन, हे सोम्य, तेजः मूलं तत्कारणम् अन्विच्छ। तेजसा शुङ्गेन तदुभयविवेकेन, हे सोम्य, सत् मूलं तत् कारणम् अन्विच्छ। हे सोम्य, इमाः सर्व्वाः प्रजाः सन्मूलाः सत्कारणाः, सदायतनाः सदाश्रयाः, सत्प्रतिष्ठाः सत्पर्य्यवसानाः।

अथ यत्र यस्मिन् समये एतत्पुरुषः एष पुरुषः जीवः पिपासति नाम, तत् तदा तेजः शरीरोष्मा पीतं पानीयं नयते—स्थूलपरिणामं मूत्रस्वेदाकारेण बहिर्निःसृत्य मध्यमपरिणामं शोणितं समग्रदेहे प्रेरयति। तत् तत्र—गवादिनेतृत्वे—यथा गोनायः, अश्वनायः, पुरुषनायः इति, एवं तत् तत्र—पानीयनेतृत्वे—तेजः उदन्येति—उदकं नयतीति—उदन्यम् इति—विभक्तिलोपश्छान्दसोऽचि गुणाभावश्च; नयनव्यापारे पूरयितव्यत्वस्यावश्यम्भावित्वादुदकशब्दस्योदादेशः (पा, ६।३।५८)। तत्र—एवं शोणितस्य समग्रदेहव्यापित्वे—एतत् एव

तस्य क्व मूलꣳस्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्व्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्‌-त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ।

स य एषोऽणिमा एतदात्म्यमिदꣳसर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूयएव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच । १—७ ।

शुङ्गम् उत्पतितं—शोणितेन क्षयापनयात् । हे सोम्य, विजानीहि न इदम् अमूलं भविष्यति इति ।

अद्भ्यः अन्यत्र तस्य क्व मूलं स्यात्? हे सोम्य, अद्भिः शुङ्गेन उभयविवेकेन इत्यादि पूर्व्ववत् । हे सोम्य, यथा नु खलु इमाः तिस्रः देवताः पुरुषं जीवं प्राप्य एकैका त्रिवृत् त्रिवृत् भवति तत् पुरस्तात् एव उक्तम् भवति । हे सोम्य, प्रयतः म्रियमाणस्य पुरुषस्य वाक् मनसि, मनः प्राणे, प्राणः तेजसि देहोष्मणि, तेजः परस्यां देवतायां सदाख्यायां सम्पद्यते उपसंह्रियते । "शारीर आत्मा प्राज्ञेनात्मनान्वारूढ़मुत्सर्ज्जद्‌-याति यत्रैतदूर्द्ध्वोच्छ्वासी भवति" (५८४) इत्युक्तत्वात् परेणालिङ्गितस्य जीवस्य तेजोऽनुप्रविष्टत्वात् नासौ स्वातन्त्र्येणात्र गृहीतः । अतएव हि गतिवक्त्र्यां रश्म्यवलम्बनेनोत्क्रमणं वर्णितम् ।

स य एष सदाख्यः—अनुपलभ्यमानत्वात्—अणिमा । इदं सर्व्वं जगत् ऐतदात्म्यम्—एष सदाख्यः अणिमा आत्मा स्वरूपं यस्य तस्य भावः—सामानाधिकरण्येन एतत्स्वरूपकं सत्स्वरूपकं सन्मू-

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान् समवहारमेकताꣳ रसं गमयन्ति।

ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्व्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति।

त्वम्। तत् सदाख्यं कारणं सत्यं नित्यविद्यमानं स आत्मा—सर्व्वान्तर्यामी। न केवलमिदं जगत् तत्स्वरूपकं तदधीनसत्त्वाकं किन्तर्हि—हे श्वेतकेतो, त्वं जीवः तत्—एतदात्मेयन सत्—असि। 'अनेन जीवेनात्मना'' इति प्रतिज्ञानात् तस्य तच्छक्तित्वं तच्छक्तित्वेनाजत्वमपि। तादात्म्यमत्र भेदानर्हत्वात्। "सोऽहमस्मीति" अहं जीवः (८।११),"अहं ब्रह्मास्मीति"(८।१२) अहं ब्रह्मेति वेदान्तप्रतिपत्तिः। 'सोऽहमस्मि' (२।२) इत्यत्र तच्छब्देन परमपुरुषः प्रकरणेऽस्मिंस्तु सत्—सत्यस्वरूपं ब्रह्म—अहंशब्देन जीवः अस्मिन् पुनस्तत्प्रतिनिधिः त्वंशब्दः परामृश्यते स्वरूपैक्यप्रदर्शनाय। एवं सर्व्वत्र। श्वेतकेतुराह भूयएव मा मां भगवान् विज्ञापयतु इति। पिता—हे सोम्य तथा अस्तु इति।

सर्व्वं सता सम्पन्नमपि कथं न तज्ज्ञायते तदुपपादयति त्रिविधदृष्टान्तमुखेन यथेति। हे सोम्य, मधुकृतः मधुकराः मधु निस्तिष्ठन्ति निष्पादयन्ति। नानात्ययानाम्—अत्ययः अतिगमनम् एकस्यान्यतो भिन्नतया गुणादिभिरतिक्रमणं—नाना अत्ययानां विविधजातीयानां वृक्षाणां रसान् समवहारं—णमुल्—समाहृत्य रसम् एकतां गमयन्ति प्रापयन्ति मधुत्वेन।

ते रसाः यथा तत्र—विविधरससम्मेलनोत्थमधुनि—अमुष्य वृक्षस्य रसः अस्मि इति विवेकं पार्थक्यबोधं न लभन्ते, एवम् एव, हे सोम्य, इमाः सर्व्वाः प्रजाः सति सम्पद्य—सुषुप्तौ मरणे लये वा—एकीभूय सति सम्पद्यामहे एकीभवामः इति न विदुः न जानन्ति।

त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच । १—४ ।

इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति समुद्रएव भवन्ति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ।

एवमेव खलु सोम्येमाः सर्व्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहइति त इह व्याघ्रो वा सिꣳहो

व्याघ्रः वा, सिंहः वा, वृकः वा, वराहः वा, कीटः वा, पतङ्गः वा, दंशः वा, मशकः वा, ते इह—सत्तायाएकीभवनावस्थायां—यत् यत् भवन्ति, तत्—सुषुप्त्यादेः—आ आगम्य भवन्ति—मनोभावानुरूपं तत्तद्रूपेण परिणामात् ।

स य एष इत्यादि समानम् ।

हे सोम्य, इमाः नद्यः पुरस्तात् पूर्व्वां दिशं प्रति प्राच्यः प्रागञ्चनाः स्यन्दन्ते स्रवन्ति, पश्चात् प्रतीचीं दिशं प्रति प्रतीच्यः प्रत्यगञ्चनाः स्यन्दन्ते । ताः नद्यः समुद्रात्—समुद्रोत्थितवाष्पराशिः मेघाकारेण परिणतः पर्व्वतादौ वर्षति, ततो नद्याकारेण समुद्रीयाः—आपः—समुद्रम् एव अपियन्ति, समुद्रः एव भवन्ति । ताः नद्यः यथा तत्र समुद्रे इयम् अहम् अस्मि इयम् अहम् अस्मि इति न विदुः ।

एवम् एव खलु, हे सोम्य, इमाः सर्व्वाः प्रजाः सतः आगम्य सतः आगच्छामहे इति न विदुः । ते इह इत्यादि पूर्व्ववत् ।

वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तदा भवन्ति।

स य एषोऽणिमैतदात्म्यमिदं सर्व्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूयएव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच।

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति।

अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्व्वं जहाति सर्व्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच।

स य एष इत्यादि पूर्व्ववत्।

हे सोम्य, अस्य महतः वृक्षस्य मूले यः अभ्याहन्यात् परश्वादिना, जीवन् स्रवेत्, यः मध्ये अभ्याहन्यात् जीवन् स्रवेत्, यः अग्रे शीर्षदेशे अभ्याहन्यात् जीवन् स्रवेत्। स एष वृक्षः जीवेन आत्मना अनुप्रभूतः अनुव्याप्तः पेपीयमानः मूलैः रसान् अतिशयेन पिबन् मोदमानः प्रफुल्लः तिष्ठति।

अस्य वृक्षस्य यदा एकां शाखां जीवः जहाति, अथ तदा सा शाखा शुष्यति, यदा द्वितीयां शाखां जहाति, अथ तदा सा द्वितीया शाखा शुष्यति, यदा तृतीयां शाखां जहाति, अथ तदा तृतीया शाखा शुष्यति, यदा सर्व्वं जहाति सर्व्वः शुष्यति। एवम् एव खलु, हे सोम्य, विद्धि इति पिता उवाच।

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स यएषोऽणिमैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूयएव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच। १—३।

न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमाधाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति किञ्चन न भगव इति।

तꣳ होवाच यं वै सोम्यैतमणिमानं न निभा-

इदं सर्व्वं किल जीवोपेतम् एव म्रियते, जीवः न म्रियते। स य एष इत्यादि पूर्व्ववत्। अत्र जीवोपेतत्वमेव प्रथयति, न तदुपेतत्वमिति। "तेजः परस्यां देवतायाम्" इत्यत्र यथा प्राज्ञेनात्मनाऽन्वारूढ़त्वात् न स्वातन्त्र्येण जीवनिवचनं, तथैवात्र प्राज्ञस्येति विज्ञेयम्। पृथिव्यादि सर्व्वेषु जीवानुप्रवेशात्तदुपेतं, जीवश्च तत्र परस्यां देवतायां तिष्ठतइत्यौपनिषदसिद्धान्तः (३।५)।

पिता—अतः—महतो न्यग्रोधवृक्षात्—न्यग्रोधफलम् आहर इति। पुत्रः—हे भगवः भगवन्, इदम् फलम् इति। पिता—भिन्धि इति। हे भगवः भगवन्, भिन्नम् इति। पिता—किम् अत्र पश्यसि इति। पुत्रः—हे भगवः भगवन्, अण्व्यः इव अणुसदृश्यः इव इमे धानाः—"स्त्री भूम्नि धानाः सक्तवः" सक्तुवत् सूक्ष्मत्वात्—वटवीजानि इति। पिता—अङ्ग हे पुत्र, आसाम् एकां भिन्धि। पुत्रः—हे भगवः भगवन्, भिन्ना—एका बहुधाकृताऽनुपलभ्यमानतया पाषाणाघातेन—इति। पिता—किम् अत्र पश्यसि इति। पुत्रः—हे भगवः भगवन्, न किञ्चन इति।

तं पुत्रं पुनः पिता उवाच—हे सोम्य, यम् एतम् अणिमानं न

लयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोध-स्तिष्ठति।

श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच। १—३।

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्ग।

अस्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति

निभालयसे न पश्यसि, एवं—दृष्ट्यगोचरत्वेन—हे सोम्य, एतस्य वै अणिम्नः कार्य्यभूतः एष महान्यग्रोधः तिष्ठति।

हे सोम्य, श्रद्धत्स्व—"सत एवाणिम्नः स्थूलं नामरूपादिमत् कार्य्यं जगदुत्पन्नमिति"—सत्यं धारय। स य एष इत्यादि समानम्।

अनुपलभ्यमानस्य सतः प्रकारान्तरेण भवत्युपलब्धिरिति तत्र दृष्टान्तः—एतत् लवणम् उदके अवधाय निक्षिप्य अथ अनन्तरं मा मां प्रातः उपसीदथाः उपगच्छेथाः इति। स श्वेतकेतुः पुनः तथा चकार। तं श्वेतकेतुं पिता उवाच—दोषा रजन्यां लवणम् उदके अवाधाः निक्षिप्तवान् असि। अङ्ग हे पुत्र, तत् आहर इति। अवमृश्य—चक्षुषा करेण च परामृश्य—तत् लवणं न विवेद विज्ञातवान् यथा, तथा, अङ्ग हे पुत्र, विलीनम् एव सत्।

अधुनोपलब्धये प्रकारान्तरं दर्शयति—अस्य विलीनलवणोदकस्य

लवणमित्यभिप्राश्यैनदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्त्तते तꣳ होवाचात्र वाव किल सत् सोम्य न निभालयसेऽत्रैव किलेति।

स य एषोऽणिमैतदात्म्यमिदं सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच। १—३।

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ् वा उदङ् वा अधराङ् वा प्रत्यङ् वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः।

अन्तात् उपरिभागात् आचाम अद्धि इति। पिता—कथम् इति। पुत्रः—लवणम् इति। मध्यात् आचाम इति। पिता—कथम् इति? पुत्रः—लवणम्। अन्तात् अधोदेशात् आचाम इति। पिता—कथम् इति। पुत्रः—लवणम् इति। एनत् लवणम् अभिप्राश्य परित्यज्य अथ अनन्तरं मा माम् उपसीदथाः उपगच्छेथाः इति। तत् लवणं पुनः तथा चकार पित्राज्ञानुसारतः परित्यक्तवान्। तत् परित्यक्तं लवणं शश्वत् नित्यं वर्त्तते----इत्युक्तवन्तं---तं श्वेतकेतुं पिता उवाच —अत्र एव किल, हे सोम्य, सत्, न निभालयसे न पश्यसि----अत्र एव किल इति।

स य एष इत्यादि पूर्व्ववत्।

हे सोम्य, यथा अभिनद्धाक्षं बद्धचक्षुषं पुरुषं गन्धारेभ्यः जनपदेभ्यः आनीय, तं ततः पूर्व्वापेक्षया अतिजने—अतिगताः जनाः यस्मात् तादृशे—जनशून्यप्रदेशे विसृजेत् तस्करः। स पुरुषः यथा तत्र जनशून्यदेशे दिग्भ्रमवशात् प्रध्मायीत विक्रोशेत्—प्राङ् पूर्व्वदिक् वा, उदङ् उत्तरदिक् वा, अधराङ् दक्षिणदिक् वा, प्रत्यक् पश्चिम-

तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्य्यवान् पुरुषोवेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति ।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोमेति होवाच । १—३ ।

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्य्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ।

दिक् वा, अभिनद्धाक्षः आनीतः अहम् अभिनद्धाक्षः विसृष्टः परित्यक्तः अहम् ।

तस्य पुरुषस्य—कश्चित् कारुणिकः—यथा अभिनहनं बन्धनं प्रमुच्य प्रब्रूयात्—एतां दिशं गन्धाराः, एतां दिशं व्रज इति । स पण्डितः मेधावी, सुतरां तन्निदर्शनानुसरणेन ग्रामात् ग्रामं पृच्छन् गन्धारम् एव उपसम्पद्येत प्राप्नुयात्, एवम् एव इह आचार्य्यवान् पुरुषः वेद जानाति । किं जानाति ? तस्य आचार्य्यवतः पुरुषस्य तावत् एव चिरं विलम्बः यावत् न विमोक्ष्ये—पुरुषव्यत्ययेन—विमोक्ष्यते पापबन्धनात्, अथ पापबन्धनमोचनानन्तरं सम्पत्स्ये—सता सम्पत्स्यते इति ।

य एष इत्यादि पूर्व्ववत् ।

कथं सम्पत्स्यते तदुच्यते—हे सोम्य, उपतापिनं ज्वराद्युपतापयुक्तं पुरुषं ज्ञातयः पर्य्युपासते—जानासि माम् इति जानासि माम् इति ।

अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राण-स्तेजसि तेजः परस्यां देवतायामथ न जानाति ।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूयएव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच । १—२ ।

पुरुषꣳ सोम्येतो हस्तगृहीतमानयन्त्यपाहार्षीत् स्तेय-मकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेना-त्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ।

तस्य उपतापयुक्तस्य यावत् न वाक् मनसि, मनः प्राणे, प्राणः तेजसि, तेजः परस्यां देवतायां सम्पद्यते तावत् जानाति ।

अथ अनन्तरं यदा अस्य वाक् मनसि, मनः प्राणे, प्राणः तेजसि तेजः परस्यां देवतायां सम्पद्यते अथ तदा न जानाति ।

स य एष इत्यादि समानम् ।

बन्धमोक्षस्य कारणं चोरसाधुदृष्टान्तेनोपपाद्य सत्यस्य सूक्ष्मत्वेन तदात्मकत्वं सर्व्वस्य दर्शयति पुरुषमिति । हे सोम्य, पुरुषम् उत हस्तगृहीतं बद्धहस्तम् आनयन्ति राजपुरुषाः । कथं तमेवमानयन्ति ? अयम् अपाहार्षीत् स्तेयम् अकार्षीत् । अस्मै—चौर्य्यमस्वीकृतवते—हे राजपुरुषाः, परशुं तपत—अग्नौ अरुणं कुरुत इति । स यदि तस्य चौर्य्यस्य कर्त्ता भवति, ततः चौर्य्यास्वीकारात् आत्मानम् अनृतम् असत्यसन्धं कुरुते । अनृताभिसन्धः स अनृतेन आत्मानं अन्तर्द्धाय अवहितं कृत्वा तप्तं परशुं गृह्णाति स दह्यते—असत्यव्यवहितहस्त-तलत्वात्, अथ तदनन्तरं हन्यते राजपुरुषैः ।

अथ यदि तस्याकर्त्ता भवति ततएव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते।

स यथा तत्र ना दाह्येतैतदात्म्यमिदꣳ सर्व्वं तत् सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजिज्ञाविति विजिज्ञाविति।

१—३। छा, ६।८।३—१६।

३। य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको-विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वे-ष्टव्यः स विजिज्ञासितव्यः स सर्व्वाꣳश्च लोकानाप्नोति

अथ यदि तस्य चौर्य्यस्य अकर्त्ता भवति, ततः सत्यवचनात् एव आत्मानं सत्यं सत्यसन्धं कुरुते। सत्याभिसन्धः स सत्येन—"सत्येन वायुरावाति" इति वायुप्रवाहोद्भावकेन—आत्मानम् अन्तर्द्धाय व्यवहितं कृत्वा तप्तं परशुं प्रतिगृह्णाति, स न दह्यते सत्यव्यवहितहस्ततलत्वात्, अथ मुच्यते राजपुरुषैः। अन्तर्निरुद्धात्मनो देहस्य तप्ताङ्गारस्य चान्तः-सञ्चरद्वायुप्रवाहशैत्येन दाहं वारयतीत्याधुनिकैरपि परीक्षालब्धम्।

स सत्याभिसन्धः पुरुषः यथा तत्र तप्तपरशुपरीक्षायां—ना दाह्येत न दग्धो भवेत्, तथा सन्तापकसंसारपरीक्षायां सत्यानुसरणशीलः। ऐत-दात्म्यमिदं सर्व्वम् इत्यादि पूर्व्ववत्। अस्य—पितुर्गदतः—तत् सद्वि-ज्ञानं श्वेतकेतुः विजज्ञौ विज्ञातवान् इति। द्विरभ्यासोऽध्यायपरि-समाप्त्यर्थः।

३। आत्मतत्त्वं प्रस्तौत्याख्यायिकाच्छलेन य आत्मेति। यः आत्मा अपहतपाप्मा पापमालिन्यरहितः, विजरः विगतजरः, विमृत्युः विगतमृत्युः, विशोकः विगतशोकः, विजिघत्सः विगताशनेच्छः, अपि-पासः अपानेच्छुः, सत्यकामः—सत्याः अवितथाः कामाः यस्य सोऽयम्,

सर्व्वाᳫंश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच।

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्व्वाᳫंश्च लोकानाप्नोति सर्व्वाᳫंश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः।

तौ ह द्वात्रिᳫंशतं वर्षाणि ब्रह्मचर्य्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावावास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजि-

सत्यसङ्कल्पः—सत्याः अवितथाः सङ्कल्पाः यस्य सोऽयम् (३।१८), स अन्वेष्टव्यः अन्वेषणीयः, स विजिज्ञासितव्यः विशेषेण जिज्ञासनीयः। कथम्? यः तम् आत्मानम् अनुविद्य अन्विष्य विजानाति स्वसंवेद्यम् आपादयति, स सर्व्वान् च लोकान् सर्व्वान् च कामान् आप्नोति इति ह—ऐतिह्ये—प्रजापतिः उवाच।

तत् प्रजापतिवचनं पुनः उभये देवासुराः अनुबुबुधिरे अनुबुद्धवन्तः। ते देवासुराः ऊचुः। हन्त—वाक्यारम्भे, तम् आत्मानम् अन्विच्छामः अन्विष्यामः यम् आत्मानम् अन्विष्य सर्व्वान् च लोकान् आप्नोति, सर्व्वान् च कामान् इति। देवानाम् इन्द्रः एव, असुराणां विरोचनः अभिप्रवव्राज। तौ इन्द्रविरोचनौ पुनः असंविदानौ ईर्षापरिहारमकुर्व्वाणौ एव समित्पाणी प्रजापतिसकाशम् आजग्मतुः आगतवन्तौ।

तौ इन्द्रविरोचनौ पुनः द्वात्रिंशतं वर्षाणि ब्रह्मचर्य्यम् ऊषतुः उषितवन्तौ। प्रजापतिः पुनः तौ उवाच—किम् इच्छन्तौ अवास्तम् उषितवन्तौ। तौ पुनः ऊचतुः उक्तवन्तौ—‘य आत्मा’ इत्यादि भग-

न्वासितव्यः स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ।

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्व्वेष्वेतेषु परिख्यायत इति होवाच ।

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्व्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ।

वतः वचः वेदयन्ते शिष्टाः, अतः तम् आत्मानम् इच्छन्तौ अवास्तम् उषितवन्तौ इति ।

तौ पुनः प्रजापतिः उवाच—अक्षिणि यः एष पुरुषः दृश्यते योगिभिः एष आत्मा इति ह उवाच उक्तवान् अस्मि एतत् अमृतम् अभयम् एतत् ब्रह्म इति । अथ प्रजापतिवचनानन्तरं छायारूपं पुरुषं मत्वा तौ उक्तवन्तौ—हे भगवः भगवन्, योऽयम् अप्सु परिख्यायते प्रसिद्धः गोचरः भवति, यः च अयम् आदर्शे स्वच्छपदार्थे, कतमः एष इति । प्रजापतिरुवाच एष उ एव एषु स्वच्छपदार्थेषु एतेषु सर्व्वेषु स्वच्छास्वच्छपदार्थेषु परिख्यायते इति । सर्व्वात्मत्वज्ञानोद्बोधनाय वचनमेतत् प्रजापतेः न तु भ्रान्त्युत्पादनाय ।

उदशरावे उदकपूर्णशरावे आत्मानम् अवेक्ष्य आत्मनः यत् न विजानीथः तत् मे मह्यं प्रब्रूतम् इति । तौ इन्द्रविरोचनौ उदशरावे

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति।

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वएवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविर्त्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः।

अवेक्षांचक्राते ईक्षणं कृतवन्तौ। तौ इन्द्रविरोचनौ प्रजापतिः उवाच किं पश्यथः इति। तौ पुनः ऊचतुः उक्तवन्तौ, हे भगवः भगवन्, आलोमभ्यः आनखेभ्यः इदं सर्व्वं प्रतिरूपं प्रतिविम्बम् एव आत्मानं पश्यावः।

तयोरज्ञानतां पश्यन्नागन्तुकेभ्योऽलङ्कारादिभ्यस्तत्त्वज्ञानोद्बोधनाय—तौ पुनः प्रजापतिः उवाच—साध्वलङ्कृतौ सुवसनौ सुपरिष्कृतौ भूत्वा उदशरावे अवेक्षेथाम् अवेक्षेयाथाम् इति। तौ पुनः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावे अवेक्षाञ्चक्राते। तौ पुनः प्रजापतिः उवाच—किं पश्यथः इति।

तौ पुनः ऊचतुः उक्तवन्तौ—हे भगवः भगवन्, यथा आवां साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः भवावः, इदं प्रतिरूपम् एवम् एव। हे भगवः भगवन्, इमौ प्रतिविम्बौ साध्वलङ्कृतौ सुवसनौ परिष्कृतौ इति। एष आत्मा इति पुनः उवाच प्रजापतिः। एतत् अमृतम् अभयं ब्रह्म इति। अत्र "त्रिविधं ब्रह्ममेतत्" इति दर्शनेन प्रजापतेर्मृषावादित्वस्य निरसनं भवति। तौ पुनः शान्तहृदयौ प्रवव्रजतुः गतवन्तौ।

तौ हान्वीक्ष्य प्रजापतिरुवाच अनुपलभ्यात्मानमननुविद्य व्रजतोयतरे एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा ते पराभविष्यन्तीति स ह शान्तहृदयएव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामुञ्चेति।

तस्मादप्यद्येहाऽददानमश्रद्दधानमयजमानमाहुरासुरोवतेत्यासुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते। १—४।

दर्शनस्यास्य सत्यत्वेऽपि यथावद्वस्त्ववधारणमृते नैतत्तत्त्वज्ञानाय प्रभवति। न तौ यथावद्वस्त्ववधारितवन्ताविति—प्रजापतिः पुनः अन्वीक्ष्य विचार्य उवाच स्वात्मानं निवेदयामास—तौ पुनः आत्मानम् अनुपलभ्य साक्षात्कारविषयम् अकृत्वा, अननुविद्य "आत्मा वा अरे द्रष्टव्यो मन्तव्यः" इत्याद्यनुसारेण अन्वेषणविषयम् अकृत्वा व्रजतः। देवाः वा असुराः वा यतरे अन्ये ये एतदुपनिषदः—एषा उपनिषत् येषां—तादृङ्निश्चयवन्तः भविष्यन्ति, ते पराभविष्यन्ति पराभवं प्राप्स्यन्ति। स विरोचनः पुनः शान्तहृदय एव असुरान् जगाम गतवान् प्राप्तवान्। तेभ्यः असुरेभ्यः एताम् उपनिषदं प्रोवाच—आत्मा एव देह एव इह महय्यः पूजनीयः आत्मा देहः परिचर्य्यः परिचरणीयः सेवनीयः, इह आत्मानम् एव महयन् पूजयन्, आत्मानं परिचरन् इमं च अमुं च उभौ लोकौ आप्नोति इति।

तस्मात् कारणात् अद्य इदानीम् अपि इह अददानं दानमकुर्व्वाणम्, अश्रद्दधानं श्रद्धारहितम्, अयजमानम् अयजनस्वभावं, वत हन्त आसुरः इति आहुः शिष्टाः। एषा हि असुराणाम् उपनिषत्—

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति।

स समित्पाणिः पुनरेयाय तꣳह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्द्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिꣳश्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति।

भिक्षया स्वजनवर्गाणां सन्निधौ याञ्चया आहृतेन वसनेन अलङ्कारेण प्रेतस्य शरीरं संस्कुर्व्वन्ति इति। कथमेवं कुर्व्वन्ति? एतेन हि ते अमुं लोकं जेष्यन्तः इति मन्यन्ते।

अथ पुनः इन्द्रः देवान् अप्राप्य एव तेषां सन्निधौ अगत्वा एव एतत् भयं ददर्श। यथा एव अयं छायापुरुषः अस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतः भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवम् एव अयम् अस्मिन् शरीरे अन्धे सति अन्धः भवति, स्रामे शिङ्घाणकादिस्राविणि स्रामः शिङ्घाणकस्रावी, परिवृक्णे छिन्नहस्ते छिन्नपादे वा परिवृक्णः छिन्नहस्तः छिन्नपादः वा भवति। अस्य एव शरीरस्य नाशम् अनु एष नश्यति। अहम् इन्द्रः न अत्र भोग्यं फलं पश्यामि इति।

स इन्द्रः समित्पाणिः पुनः एयाय आगतवान्। तम् इन्द्रम् पुनः

एवमेवैष मघवन्निति होवाचैतन्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच। १—३।

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति इत्यारभ्य अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति।

(३।५[४६पृ])। छा, ८।१०।७—१२।१।

प्रजापतिः उवाच—मघवन्, शान्तहृदयः सन् विरोचनेन सार्द्धं सह प्राव्राजीः इतः अगमः यत्, तत् किम् इच्छन् पुनः आगमः आगतवान् असि। स इन्द्रः पुनः उवाच—'यथैव खल्वयम्' इत्यादि पूर्व्ववत्।

प्रजापतिः पुनः उवाच—हे मघवन्, एवम् एव एष छायात्मा इति। एतम् आत्मपदार्थं तु एव ते तुभ्यम् अनुव्याख्यास्यामि। अपराणि द्वात्रिंशतं वर्षाणि वस ब्रह्मचर्य्यम् इति। स इन्द्रः अपराणि द्वात्रिंशतं वर्षाणि उवास ब्रह्मचर्य्यम्। तस्मै इन्द्राय प्रजापतिः पुनः उवाच। शिष्टो वचनसंघातः पूर्व्वं व्याख्यातः (४७।४८पृ)। अत्रेदं विवेच्यम्—

अपहतपाप्मत्वादिकं ब्रह्मस्वरूपेणैक्यं दर्शयति। विना हि स्वरूपैक्यं जीवब्रह्मणोरविभक्ततयैकत्र स्थितिर्न जातु सम्भवति। अतएव "विपापो विरजो विचिकित्सो ब्राह्मणो भवति" (१०।३५) इत्युक्तम्। आत्मा हि स्वरूपतः शुद्धः, शरीरसम्पर्कात् तस्मिन् प्रकृतिगुणसंस्पर्शो जायते, तेन च तस्य मालिन्यम्। सुखञ्च दुःखञ्च प्रियञ्चाप्रियञ्च सति प्रकृत्युत्पन्ने शरीरे न पुनस्तं जहाति। अतएव शरीरसम्बन्धवर्ज्जितमात्मानं यथा गृह्णीयात् साधकस्तथैवात्र प्रजापतेरुक्तिर्निबद्धा। प्रथमस्तावत् देहस्योपाधिमात्रत्वं दर्शयितुं तत्प्रतिबिम्बदर्शने नियोजितौ शिष्यौ प्रजापतिना। अक्षिगतपुरुषे परमात्मदृष्टिर्योगिनां साधनशैली (३।८।१६)। तामेवोद्दिश्यैवं तौ प्रचोदितौ तेन।

देहमेव तावद्गृहीष्टां न त्वात्मानम्। ततः प्रकृष्टवसनभूषणादिभिरलङ्कृतं तं देहं द्रष्टुं प्रयोजितौ तौ। वसनादिवत् देहोऽयमाच्छादनमलङ्करणं वा तस्येति तेन तयोर्बोध एष उत्पद्येतेति प्रजापतेरभिप्रायः। तदानीन्तनानामाचार्य्याणामादौ सत्यग्रहणसामर्थ्योद्बोधनायैव प्रयास आसीदुद्बुद्धे पुनः साक्षादुपदेशः। अनुद्बुद्धे तदुपदेश ऊषरे वपनवत् विफल इति "अश्रद्दधानाय न देया" सत्यधारणाक्षमाय विद्या नोपदेश्येति नियमएव तेऽनुसृतवन्तः। अतो विरोचनस्याज्ञानावस्थायां ज्ञानाभिमानिता न प्रजापतिना निरुद्धा। इन्द्रस्तु पुनः शरीरस्यान्धत्वादिकं नाशञ्च पश्यन् तत्र मनोऽभिनिवेशस्य निष्फलत्वं विज्ञातवान्। स्वप्नपुरुषेऽपि वधादिभ्रान्तिदर्शनात् ततोऽपि विरतः सः। सुप्तपुरुषे यथा विषयस्य तथाऽयमहमस्मीत्यस्य ज्ञानं विनष्टं भवति। तत्र साक्षादात्मज्ञानाभावात् तदवलम्बनमनवलम्बनमेव। सुतरां ततोऽपि विरते तस्मिन् देहसम्बन्धजनितं यत् किञ्च तत् परिहाय तदतीतमात्मानमेवोपदिदेश स तम्। सुप्तावविभक्ततया स्थितिः परात्मना किं जीवस्यायमहमस्मीति ज्ञानविमोषणीति प्रश्नः। तथा सत्यात्मविनाशभयमेवोपतिष्ठतेन्द्रस्येव। "येनेदं सर्व्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्" (१२।४) इत्यत्र "केन प्रकाशान्तरेण विज्ञातारं लोके प्रकाशयेत्" इति विज्ञानभिक्षुकृतोऽर्थ एव समीचीनः पातञ्जलभाष्येऽभिव्यञ्जितव्यासाभिप्रायानुसारित्वात्। तथाहि "न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषोदृश्यते, पुरुषएव प्रत्ययं स्वात्मावलम्बनं पश्यति, तथाह्युक्तं 'विज्ञातारमरे केन विजानीयात्' इति" इति। अन्यथा "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति" (५८८) इत्यादिषु 'पश्यन्' 'जिघ्रन्' 'रसयन्' इत्यादि निवचनं न सिद्ध्यति। तत्र परात्मन्येव दर्शनादीनां चरितार्थता न तु विषयजाते। अतएव सुप्तावपि 'अयमहमस्मि' इति ज्ञानस्य प्रमोषो नास्ति। द्रष्टृदृश्ययोः संयोगः स्वरूपोपलब्धेरुपकारी (पात २।२३)। रजस्तमोमलराहित्यजन्यपुरुषशुद्धिसारूप्येण दृश्यस्वरूपोपलब्धेरनन्तरं यदा-

४। मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन् वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति।

सा होवाच मैत्रेयी। यन्नु म इयम्भगोः सर्व्वा पृथिवी

स्वस्वरूपोपलब्धिर्भवति ( पात ३।५५) तदात्मस्वरूपपरात्मस्वरूपयोरैक्य-वशात् यदपरभिन्नतया स्थितिर्भवति, न तदभिन्नता परात्मस्वरूपसम्भोगं प्रतिबध्नाति चिदेकरसत्वात् विभक्ततया विषयदर्शनप्रतिनिवृत्तावपि दृक्शक्त्यादेरविलोपात् स्वात्मसम्भोगपरात्मसम्भोगयोरविसंवादित्वाच्च। स्वकार्य्यसाधनायादिपुरुषस्य पापदहनं (८।११) तस्मिंश्च परात्मप्रतिषिद्ध-विषयेषु प्रवृत्त्या पापत्वं (८।८) रजस्तमोमलरूपेणासुरभावेनेन्द्रियविका-रेण पापजननं स्वरूपप्राप्तौ तद्विनाशश्च (८।४) त्यादेस्तत्त्वं यदुक्तमत्र तदेव। पापस्य मृत्युरूपत्वं (८।८) शक्तिहरत्वात्। रजस्तमः स्मार्त्तं न तु वैदिकमिति न मन्तव्यम् अथर्व्वणि "रजस्तमो मा उपगाः" (८।२।१) "पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्" ( १०।८।४३ ), श्वेताश्वतरे "गुणांश्च सर्व्वान् विनियोजयेद्यः" (६।१०) इत्याद्युक्तत्वात्। गुणानां तत्त्वं गीतासमन्वयभाष्ये द्रष्टव्यम्।

४। याज्ञवल्क्यमैत्रेयीसंवादेनात्मतत्त्वं परिस्फुटतया विवृणोति मैत्रेयीति। मैत्रेयि इति सम्बोध्य याज्ञवल्क्य उवाच—अरे अयि मैत्रेयि, अस्मात् स्थानात् वर्त्तमानायाः भूमेः गार्हस्थ्यात् उद्यास्यन् ऊर्द्धं यास्यन् प्रव्रजिष्यन्, हन्त—अनुकम्पायाम्—अनया कात्यायन्या ते अन्तं विच्छेदं करवाणि इति। षष्ठे उत्तरमैत्रेयीब्राह्मणे स्फुट-तरेयमाख्यायिका, यथा

अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्। १। मैत्रेयीति होवाच याज्ञ-वल्क्यः प्रव्रजिष्यन् वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति। २।

सा मैत्रेयी पुनः उवाच—हे भगवः भगवन्, यत् यदि इयं सर्व्वा

वित्तेन पूर्णा स्यात् कथं तेनामृतास्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितᳬ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति।

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्य्यां यदेव भगवान् वेद तदेव मे ब्रूहीति।

स होवाच याज्ञवल्क्यः प्रिया वतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति।

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै

पृथिवी वित्तेन पूर्णा स्यात्, कथं किं तेन अमृता स्याम् इति। याज्ञवल्क्यः उवाच—न इति। यथा उपकरणवतां धनादिसाधनवतां जीवितं जीवनं स्यात् ते तव जीवितं तथा एव स्यात्, वित्तेन अमृतत्वस्य तु आशा न अस्ति।

सा मैत्रेयी पुनः उवाच—येन अहम् अमृता न स्याम्, अहं तेन किं कुर्य्याम्। यत् अमृतत्वसाधनं भगवान् वेद तत् अमृतत्वसाधनं मे मह्यं ब्रूहि इति।

स याज्ञवल्क्यः पुनः उवाच—वत सन्तोषे, अरे अयि नः अस्माकं प्रिया सती प्रियं भाषसे। एहि आगच्छ, आस्स्व उपविश। ते तुभ्यं व्याख्यास्यामि। व्याचक्षाणस्य व्याख्यानं कुर्व्वतः तु मे मम निदिध्यासस्व वाक्यानि अर्थतो निश्चयेन ध्यातुम् इच्छ इति।

स याज्ञवल्क्यः पुनः उवाच—अरे अयि मैत्रेयि, पत्युः कामाय प्रयोजनाय अभिलषत्वाय प्रियत्वायेति यावत् न वै पतिः प्रियः भवति, तु किन्तु आत्मनः कामाय प्रयोजनाय अभिलषत्वाय प्रियत्वाय पतिः

कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं भवत्यात्मनस्तु कामाय सर्व्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्व्वं विदितम्।

प्रियः भवति। न वा अरे जायायै कामाय जाया प्रिया; न वा अरे पुत्राणां कामाय पुत्राः प्रियाः, न वा अरे वित्तस्य कामाय वित्तं प्रियं; न वा अरे ब्रह्मणः ब्राह्मणस्य कामाय ब्रह्म प्रियं; न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं; न वा अरे लोकानां कामाय लोकाः प्रियाः; न वा अरे देवानां कामाय देवाः प्रियाः; न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं; किन्तु आत्मनः कामाय इति सर्व्वत्र योज्यम्। षष्ठे "न वा अरे देवानां कामाय" इत्यनन्तरं

न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति

इत्यधिकम् । सुतरां "देवास्तं परादुः" इत्यनन्तरं "वेदास्तं परादुः" इति । आत्मना परित्यक्तानां तेषां देहत्वेन विद्यमानत्वेऽपि त्वरितमग्न्यादौ निःक्षेपप्रवृत्तिर्बन्धुवर्गाणां तत्र तत्रात्मनः प्रियत्वमेव व्यनक्ति । यद्येवं किमत्रात्मतत्त्वसाक्षात्करणाय कर्त्तव्यम् ।—अरे अयि मैत्रेयि, आत्मा द्रष्टव्यः दर्शनविषयमापादयितव्यः, श्रोतव्यः श्रवणविषयीकर्त्तव्यः आचार्य्याच्च आगमतश्च । मन्तव्यः मननविषयीकर्त्तव्यः परिचिन्तनेन ; ततो निदिध्यासितव्यः निश्चयेन ध्यातव्यः मनोनिवेशविषयीकर्त्तव्यः ।

अत्रात्मा परमात्मा जीवोवेति विवेक्तव्यम् । "तदेतत् प्रेयः पुत्रात् प्रेयोवित्तात् प्रेयोऽन्यस्मात् सर्व्वस्मादन्तरतरं यदयमात्मा" (१०।३०) इत्यत्रोपास्यतया ग्रहणादात्मा परमात्मा । इह पुनः "आत्मा वा अरे द्रष्टव्य." इत्यादिना तद्दर्शनादिभिः सर्व्वविज्ञानप्रतिज्ञानादत्रापि परमात्मैव भवितुमर्हति । व्यासपादेन योगसूत्रोक्तपुरुषविज्ञानविषये "विज्ञातारं केन विजानीयात्" इति श्रुतिरुदाहृता । सिद्धान्ततोऽयं जीवात्मेति । परस्य परा प्रकृतिर्जीवः निखिलं जगद्व्याप्य स्थितः, सुतरां तद्विज्ञानेन सर्व्वविज्ञानं न सुदूरपराहतम् । पतञ्जलेर्योगो जीवस्य स्वरूपावस्थानपर्य्यवसायी ; वेदान्तसिद्धस्य पुनर्ब्रह्मस्वरूपैक्यपर्य्यवसायी । अतएवात्र पृथिव्यादिकमारभ्य जीवात्मपर्य्यन्तं निखिलस्यान्तर्यामिणआत्मशरीरतया पर्य्यवसनादात्मशब्दे तत्पर्य्यवसायित्वम् । सुतरां परात्मनएवात्र मुख्यप्रियत्वं तत्स्वरूपैक्येन जीवात्मन इति तत्त्वम् । परेतस्य परात्मालिङ्गितत्वेनैवोत्क्रान्तिर्न तु स्वातन्त्र्येण (५८पृ) । द्रष्टृदृश्ययोः संयोगे रजस्तमोमलविरहितजीवात्मस्वरूपोपलब्धिः परमात्मस्वरूपोपलब्धेर्हेतुः । अतएवोभयपरएवात्रात्मशब्दः । "विज्ञातारमरे केन विजानीयात्" इत्यत्र विज्ञाता पुरुष इति सिद्धान्तेऽपि तस्य विज्ञातृत्वं परमात्मसापेक्षमिति वेदान्तसिद्धान्तस्य न क्वापि हानिः पातञ्जलसूत्रभाष्येण । (१।४।१८—२२) ।

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद चत्रं तं परा-दाद्योऽन्यत्रात्मनः चत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद भूतानि परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्व्वं तं परा-दाद्योऽन्यत्रात्मनः सर्व्वं वेद। इदं ब्रह्म इदं चत्र-मिमे लोका इमे देवा इमानि भूतानीदं सर्व्वं यद-यमात्मा।

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुया-द्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः।

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छ-क्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः।

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छ-

ब्रह्म ब्राह्मणजातिः तं जनं परादात् परादध्यात् पराकुर्य्यात् न्यक्कुर्य्यात् यः आत्मनः अन्यत्र आत्मस्वरूपव्यतिरेकेण अनात्मत्वेन—नायमात्मा किन्तु रक्तमांसादिसंघात इति—ब्रह्म वेद। चत्रं तं न्यक्कु-र्य्यात्, लोका देवा भूतानि तं न्यक्कुर्य्युः, सर्व्वं तं न्यक्कुर्य्यात् यः आत्मनः अन्यत्र तत् तान् तानि च वेद। कथमेवं न्यक्कुर्य्यात्? यत् यस्मात् अयम् आत्मा इदं ब्रह्म इदं चत्रम् इमे लोकाः इमे देवाः इमानि भूतानि इदं सर्व्वम्। आत्मशब्दस्य परमात्मपर्य्यवसाने—परमात्मा आत्मनः आत्मा।

सर्व्वत्रात्मग्रहणोपायं दर्शयति—स आत्मा तथा गृहीतः स्यात् यथा शब्दः गृहीतो भवति। न हि दुन्दुभ्यादिनिरपेक्षान् बाह्यान्

क्नुयात् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः।

स यथार्द्रैन्धाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्व्वाणि निःश्वसितानि।

शब्दान् कोऽपि ग्रहीतुं शक्नोति, तत्तदुत्थितान् शब्दानेव तत्तद्योगेन शब्दत्वेन ग्रहीतुं समर्थो भवति। आत्मापि तथा पतिजायादियोगेनैव स्वमभिव्यनक्ति, तत्र तत्र चात्मत्वेन स गृहीतो भवति। एतत्तत्त्वप्रकाशकाद्दृष्टान्ताः—यथा हन्यमानस्य दुन्दुभेः वाह्यान् तदनपेक्षान् शब्दान् न ग्रहणाय न ग्रहीतुं शक्नुयात्, किन्तु दुन्दुभेः ग्रहणेन तद्योगेन दुन्दुभ्याघातस्य दुन्दुभिताड़नस्य शब्दः गृहीतः भवति, तथा स आत्मा।

एवं शङ्खस्य ध्मायमानस्य, वीणायै वाद्यमानायै इत्युभयं व्याख्यातम्।

स आत्मा तथा ऋगादेरुद्भावयिता यथाग्निः धूमानाम्। एतदेव कथयति—यथा अभ्याहितात् आर्द्रैन्धाग्नेः आर्द्रैन्धनेन इद्धात् अग्नेः पृथग्भूत्वा धूमाः विनिश्चरन्ति, एवं वा, अरे अयि मैत्रेयि, अस्य प्रकृतस्य महतः अनवच्छिन्नस्य भूतस्य परमार्थस्य चिद्वस्तुनः परमात्मनः निश्वसितं विना प्रयत्नोद्भूतं यत् एतत्—सामान्ये नपुंसकैकवचनम्—ऋग्वेदः, यजुर्व्वेदः, सामवेदः, अथर्व्वाङ्गिरसः आथर्व्वणः, इतिहासः, पुराणं, विद्या देवविद्यादयः (३।१७), उपनिषदः, श्लोकाः, सूत्राणि, अनुव्याख्यानानि व्याख्यानानि। एतानि सर्व्वाणि एतस्य एव परात्मनः निश्वसितानि। षष्ठे "व्याख्यानानानि" इत्यस्यानन्तरम्,

इष्टं हुतमशितं पायितमयञ्च लोकः परश्च लोकः सर्व्वाणि च भूतान्यस्यैव

इत्यधिकम्।

स यथा सर्व्वासामपाᳬ समुद्रएकायनमेवᳬ सर्व्वेषाम् स्पर्शानां त्वगेकायनमेवᳬ सर्व्वेषां रसानां जिह्वैकायनमेवᳬ सर्व्वेषां गन्धानां नासिके एकायनमेवᳬ सर्व्वेषाᳬ रूपाणाञ्चक्षुरेकायनमेवᳬ सर्व्वेषाᳬ शब्दानाᳬ श्रोत्रमेकायनमेवᳬ सर्व्वेषाᳬ सङ्कल्पानां मनएकायनमेवᳬ सर्व्वेषां विद्यानाᳬ हृदयमेकायनमेवᳬ सर्व्वेषां कर्म्मणाम् हस्तावेकायनमेवᳬ सर्व्वेषामानन्दानामुपस्थ एकायनमेवᳬ सर्व्वेषां विसर्गाणां पायुरेकायनमेवᳬ सर्व्वेषामध्वनां पादावेकायनमेवᳬ सर्व्वेषां वेदानां वागेकायनम्।

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलोयते नहास्योद्ग्रहणायेव स्यात् यतोयतस्त्वाददीत लवण-

स आत्मा तथा एकायनं यथा सर्व्वासाम् अपां समुद्रः एकायनम्। एवं सर्व्वेषां स्पर्शानां त्वक् एकायनम्, एवं सर्व्वेषां रसानां जिह्वा एकायनम्, एवं सर्व्वेषां गन्धानां नासिके एकायनम्, एवं सर्व्वेषां रूपाणां चक्षुः एकायनम्, एवं सर्व्वेषां शब्दानां श्रोत्रम् एकायनम्, एवं सर्व्वेषां सङ्कल्पानां मनः एकायनम्, एवं सर्व्वासां विद्यानां हृदयम् एकायनम्, एवं सर्व्वेषां कर्म्मणां हस्तौ एकायनम्, एवं सर्व्वेषाम् आनन्दानाम् उपस्थः एकायनम्, एवं सर्व्वेषां विसर्गाणां पायुः एकायनम्, एवं सर्व्वेषाम् अध्वनां पादौ एकायनम्, एवं सर्व्वेषां वेदानां वाक् एकायनम्।

स आत्मा तथा यथा सैन्धवखिल्यः सैन्धव एव खिल्यः—खिलएव खिल्यः अप्रहतः अनाक्रष्टभूमिः, तत्साद्दश्यात् अचूर्णीकृतसैन्धवखण्डः—उदके जले प्रास्तः निक्षिप्तः उदकम् एव अनु विलीयते, न पुनः अस्य सैन्धखिल्यस्य उदग्रहणाय—इव अनर्थकः—उद्धरणाय स्यात्

मेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघनएव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः।

सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अरे इदं विज्ञानाय।

समर्थः। तु किन्तु यतः यतः उदकम् आददीत स्वादयेत् लवणम् एव। एवं वा अरे अयि मैत्रेयि, इदम् अनन्तम् अपारम् महत् भूतं चिद्वस्तु विज्ञानघन एव—सिन्धोरुत्थितं सैन्धवं लवणं यथा तथा—एतेभ्यः भूतेभ्यः समुत्थाय—विज्ञानघनत्वेन गोचरीभूय—उदके निक्षिप्तं सैन्धवं यथा तथा—तानि भूतानि एव अनु विनश्यति—णश अदर्शने—अदृश्यो भवति—सुषुप्तौ यथेति भावः; प्रेत्य न संज्ञा—देवदत्तः यज्ञदत्तः पतिः जायेत्यादि—विशेषनाम अस्ति इति अरे अयि मैत्रेयि, ब्रवीमि इति पुनः याज्ञवल्क्यः उवाच। को वा पुनः प्रज्ञानघनः? विषयज्ञानानुगतो विषयी। षष्ठे पुनरियं विस्पष्टोक्तिः,—

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः।

सा पुनः मैत्रेयी उवाच, न प्रेत्य संज्ञास्तीति अत्र एव भगवान् मा माम् अमूमुहत् मोहाच्छन्नां कृतवान्। षष्ठे पुनः,

सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिपत् न वा अहमिमं विजानामीति।

स याज्ञवल्क्यः पुन उवाच—न वा अरे अहं मोहं मोहनं वाक्यं ब्रवीमि, अरे अयि मैत्रेयि, इदं वचनं वै विज्ञानाय साक्षाज्ज्ञानाय अलं पर्य्याप्तम्। भूतानां प्रज्ञानघनस्य च तिरोधाने शुद्धचैतन्यं शुद्धा-चैतन्यं परा चापरा च प्रकृतिरिति पौराणिकानामवशिष्यते, अतएव हि माण्डुक्ये परस्य ततो भेदप्रदर्शनाय प्रज्ञानघनानन्तरं "न प्रज्ञं

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति। यत्र वा अस्य सर्व्वमात्मैवाभूत्तत् केन कं जिघ्रेत् केन कं पश्येत् केन कꣳ शृणुयात् केन कमभिवदेत् तत् केन कं मन्वीत तत् केन कं विजानीयात्। येनेदं सर्व्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्।

बृ, ४।४।१—१४। ६।५।१—१५।

नाप्रज्ञम्" ( ३।५[५८पृ] ) इत्युक्तिः। प्राज्ञालिङ्गितः प्रज्ञोनित्यमविभक्ततया स्थितोऽपि भूतसंसर्गात् तदंश इव प्रतिभातीति शाखान्तरे तस्मिन्नंशो दासः कितव इत्यादि व्यपदेशः (२।३।४३)। देवदत्तादिसंज्ञापि तस्मिन्नेव। अतएव 'दैवेन चक्षुषा मनसा…पश्यन्' इत्यादि दृश्यते। दैवेन भूतसंघटितेन (११।२४)। न संज्ञास्तीति वचनेन विनाशित्वमुच्छेदाधीनत्वं न तेनाभिप्रेतं यत् तद्विस्पष्टमुक्तं षष्ठे—

स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा।

संज्ञाहीनत्वेऽप्यात्मनः साक्षाज्ज्ञानाय कथं तत् पर्य्याप्तं तद्दर्शयति—यत्र हि द्वैतं विभक्तम् इव भवति—इवशब्दोऽत्र "सर्व्व पर आत्मनि संप्रतिष्ठते पृथिवी पृथिवीमात्रा च" 'विज्ञानात्मा पुरुषः स परेऽक्षरे आत्मनि सम्प्रतिष्ठते (३।५)" "यद्वैतन्न पश्यति पश्यन् वै तन्न पश्यति" इत्याद्युक्तत्वात्—अविभागद्योतकः—तत् तत्र इतरः एकः इतरम् अन्यं पश्यति, तत् तत्र इतरः इतरं जिघ्रति, तत् तत्र इतरः इतरं शृणोति, तत् तत्र इतरम् अभिवदति, तत् तत्र इतरः इतरं मनुते मननविषयं करोति, तत् तत्र इतरः इतरं विजानाति। यत्र पुनः अस्य ब्रह्मविदः सर्व्वम् आत्मा एव अभूत्—प्रपञ्चस्य ब्रह्मस्वरूपे विलयेन सच्चिदानन्द-

मात्रत्वेन पर्य्यवसानात् तच्छक्तितया तदभिन्नत्वेन च दर्शनात्—तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं जिघ्रेत्, तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं पश्येत्, तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं शृणुयात्, तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं अभिवदेत्, तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं मन्वीत, तत् तत्र केन आत्मातिरिक्तेन कम् आत्मातिरिक्तं विजानीयात् येन आत्मना अन्तर्यामिणा इदं सर्व्वं वेद तम् आत्मानम् अन्तर्यामिणं केन प्रकारान्तरेण विजानीयात्। विज्ञातारं—येन सर्व्वं विजानाति स स्वयं सर्व्वविज्ञानमयः, अन्यथा जीवे तत्तज्ज्ञानोत्पादनं न जातु सम्भवति; "अयमात्मा ब्रह्म सर्व्वानुभूः" (२।२१) इत्येषा श्रुतिस्तदेव प्रतिपादयति—केन प्रकारान्तरेण विजानीयात्। विज्ञातारमिति चेत् पातञ्जलभाष्यानुरोधात् पुरुषत्वेन गृह्यते तद्विज्ञानोत्पादकस्य परमात्मनस्तेनैवात्र ग्रहणं स्यात्। षष्ठे उत्तरमैत्रेयीब्राह्मणे "विज्ञातारमरे केन विजानीयात्" इत्यस्याग्रे

स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न हि व्यथते न रिष्यति

इत्यधिकम्। व्याख्यातश्चैतत् पूर्व्वम् (३।२३)। उपसंहारे पुनः

इत्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार।

विजहार प्रवव्राज।

तृतीये जनकयाज्ञवल्क्यसंवादे (५८पृ) यत्तत्त्वमुक्तं तस्यात्र नियोगोऽस्य ब्राह्मणस्य गूढ़ार्थमुद्घाटयति। तत्र पश्यन् जिघ्रन् रसयन् वदन् शृण्वन् मन्वानः स्पृशन् विजानन्—न पश्यति न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशति न विजानाति इति यदुक्तं, तत्र कारणं परमात्मालिङ्गनेन तेनैकीभूय तं विनाऽन्यत् किञ्चन न दर्शनादिविषयं करोति ब्रह्मवित्; यच्च दर्शनादिविषयं करोति तत् "तज्जलानिति" (२३०पृ) इति श्रौतन्यायेन परमात्मक्रियात्वेन। "एष

५। अथ हैनं जारत्कारव आर्त्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्राहा इति अष्टौ ग्रहा अष्टावतिग्राहा इति ये तेऽष्टौ ग्रहाः कतमे ते।

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धं जिघ्रति।

म आत्मा" (६।४) इति च वचनेनात्मानमपि परमात्मान्तर्भूततया गृह्णन् तेनाविभक्तः "देव इव राजेवाहमेवेदꣳ सर्व्वोऽस्मीति मन्यते सः।" अहमत्र परात्मालिङ्गितो जीवः सर्व्वस्मिन् दर्शनादिविषये "अहमात्मानमिदं सर्व्वं करोमि" इति परात्मभावभावितात्मा। "एषोऽस्य परम आनन्दः" इत्यानन्दाब्धौ मग्नत्वात् "प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्" इत्येषावस्था ब्रह्मविदु-पतिष्ठते।

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन्॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन्॥ ( गी ५।८-९ )

इति यदुक्तं कर्म्मसन्न्यासयोगमाश्रित्य तदेवात्रोक्तं परमात्मयोग-मवलम्ब्य।

५। अविभागाद्विभाग उपतिष्ठते सुतरां विभागोऽनोपेक्षणीय इतीन्द्रियाणां तद्विषयाणाञ्च व्यवहितत्वेऽपि कथं सम्बन्धो भवति तत् प्रदर्श्यते अथेति। अथ पुनः एनं जनकसभागतं याज्ञवल्क्यं जारत्-कारवः जरत्कारुगोत्रः आर्त्तभागः ऋतभागस्यापत्यं पप्रच्छ पृष्टवान्। हे याज्ञवल्क्य इति सम्बोध्य स उवाच—कति ग्रहाः कति अतिग्राहाः इति। याज्ञवल्क्य उवाच—अष्टौ ग्रहाः अष्टौ अतिग्राहाः इति। आर्त्त-भाग उवाच—ये ते अष्टौ ग्रहाः, अष्टौ अतिग्राहाः कतमे ते इति।

याज्ञवल्क्य उवाच—प्राणः घ्राणं वै ग्रहः—गृह्णाति गन्धादीनिति

वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति।

जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान् विजानाति।

चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति।

ग्रहः। स ग्रहः अपानेन नासाविवरं विशता श्वासेन अतिग्राहेण—अतिक्रम्य ग्राहयत्यात्मानम् अतिग्राहः तेन ; किमतिक्रम्य ? विषयेन्द्रिययोरन्तरा व्यवधानम्—गृहीतः आयत्तीकृतः। कथं ज्ञायते तेनायत्तीकृत इति ?—हि यस्मात् स घ्राणः घ्राणं गन्धान् जिघ्रति। घ्राणेन्द्रियश्च पुष्पादिनिष्ठः गन्धश्च उभौ व्यवहितौ तिष्ठतः, वायुना गन्धवाहिना घ्राणेन्द्रियायत्तीकरणेन तिरोधापितं तद्व्यवधानम्।

वाक् वागिन्द्रियं वै ग्रहः। स ग्रहः नाम्ना अतिग्राहेण गृहीतः। कथं ज्ञायते तेनायत्तीकृतइति ? हि यस्मात् वाचा नामानि अभिवदति वस्तुनिष्ठं हि नाम, तस्माद्वागिन्द्रियात् तस्य व्यवधानम्। व्यवहारतस्तन्नाम वागिन्द्रियं स्वायत्तीकरोति, सुतरां ततस्तस्याभिव्यक्तिः।

जिह्वा रसनेन्द्रियं वै ग्रहः। स ग्रहः रसेन अतिग्राहेण गृहीतः। कथं ज्ञायते तेनायत्तीकृत इति ? हि यस्मात् जिह्वया रसान् विजानाति। अत्र वस्तुनिष्ठरसः रसरूपया लालया विद्रावितः रसनां संस्पृश्यात्मानं ग्राहयति।

चक्षुः वै ग्रहः। स ग्रहः रूपेण अतिग्राहेण गृहीतः। कथं ज्ञायते तेनायत्तीकृत इति ? हि यस्मात् चक्षुषा रूपाणि पश्यति। रूपं हि लोहितकृष्णादिवर्णघटितम् (१२।२)। तत् पुनर्दर्शनार्थमादित्यनिष्ठं ( ११।२१ ; १२।८ )। सुतरामत्र सूर्य्यरश्मिना तिरो-

श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति।

मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते।

हस्तौ वै ग्रहः स कर्म्मणातिग्राहेण गृहीतो हस्ताभ्याᳫं हि कर्म्म करोति।

त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान् वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्राहाः।

बृ, ५।२।१—६।

धापितं व्यवधानमिति विज्ञेयम्। रूपशब्देनैवैतत् तत्त्वं वेदान्तविदो बुद्धिस्थं भवतीति नेदं स्पष्टमुक्तम्।

श्रोत्रं वै ग्रहः। स ग्रहः शब्देन अतिग्राहेण गृहीतः। कथं ज्ञायतएतत्? हि यस्मात् श्रोत्रेण शब्दान् शृणोति। वस्तुसमुत्थित-ध्वनिरिव शब्दः (१२।४) सुतरां व्यवहितः। स च तत्सन्नताकाशादे-वोत्पद्यते; "आकाशाद्वायुः" (८।४) इति तदुत्पन्नेन वायुना स श्रोत्र-सङ्कुल्यां नीयते। उत्पन्नस्य शब्दस्य श्रोत्रस्पर्शएवोक्तो न पुनर्व्यवधाना-पनोदनक्रमः।

मनो वै ग्रहः। स ग्रहः कामेन अतिग्राहेण गृहीतः। कथं ज्ञायतएतत्? हि यस्मात् मनसा कामान् कामयते। कामो यद्यप्या-त्मनिष्ठस्तथापि वस्तुनिष्ठरूपादिभिरस्योद्बोधस्तैर्व्यवधानञ्च।

हस्तौ वै ग्रहः। स ग्रहः कर्म्मणा अतिग्राहेण गृहीतः। कथं ज्ञायते? हि यस्मात् हस्ताभ्यां कर्म्म करोति हस्तयोश्च कर्म्मणश्च क्रियाव्याप्यविषयजातेन व्यवधानम्।

त्वक् वै ग्रहः। स ग्रहः स्पर्शेन अतिग्राहेण गृहीतः। कथं

६। अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्व्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओतश्च प्रोतश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन् खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्व्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्व्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्र-

ज्ञायते? हि यस्मात् त्वचा स्पर्शान् वेदयते। वस्तुनिष्ठशैत्यादि व्यवहितमेव। इति एते अष्टौ ग्रहाः, अष्टौ अतिग्राह्याः।

६। वेदान्तसिद्धलोकतत्त्वं विवृणोति अथेति। अथ पुनः एनं जनकसभागतं याज्ञवल्क्यं वाचक्नवी वचक्नोर्दुहिता गार्गी पप्रच्छ पृष्टवती। याज्ञवल्क्य इति सम्बोध्य सा उवाच—यत् यदि इदं सर्व्वम् अप्सु—सूक्ष्मवाष्पाकारेणावस्थितासु—ओतं च प्रोतं च, कस्मिन् नु खलु आपः ओताः च प्रोताः च इति। याज्ञवल्क्य आह—हे गार्गि, वायौ। गार्गी—कस्मिन् नु खलु वायुः ओतः च प्रोतः च इति। याज्ञवल्क्यः—हे गार्गि, अन्तरिक्षलोकेषु इति। गार्गी—कस्मिन् नु खलु अन्तरिक्षलोकाः ओताः च प्रोताः च इति। याज्ञवल्क्यः—हे गार्गि, गन्धर्व्वलोकेषु इति। गार्गी—कस्मिन् नु खलु गन्धर्व्वलोकाः ओताः च प्रोताः च इति। याज्ञवल्क्यः—हे गार्गि, आदित्यलोकेषु इति। गार्गी—कस्मिन् नु खलु आदित्यलोकाः ओताः च प्रोताः च इति। याज्ञवल्क्यः—हे गार्गि, चन्द्रलोकेषु इति।—तदालोकेनालोकिता वहवश्चन्द्रमसस्तं परिवेष्ट्य भ्रमन्तीति तथोक्तम्। गार्गी—कस्मिन् नु खलु चन्द्रलोकाः ओताः च प्रोताः च इति। याज्ञवल्क्यः—हे गार्गि, नक्षत्रलोकेषु। गार्गी—कस्मिन् नु खलु नक्षत्रलोकाः ओताः च प्रोताः च इति। याज्ञवल्क्यः—हे गार्गि, देवलोकेषु इति। गार्गी—कस्मिन्

लोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम । बृ ५।६।१ ।

७ । अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तोहन्ता-

नु खलु देवलोकाः ओताः च प्रोताः च इति । याज्ञवल्क्यः—इन्द्रलोकेषु इति । गार्गी—कस्मिन् नु खलु इन्द्रलोकाः ओताः च प्रोताः च इति । याज्ञवल्क्यः—हे गार्गि, प्रजापतिलोकेषु इति । गार्गी—कस्मिन् नु खलु प्रजापतिलोकाः ओताः च प्रोताः च इति । याज्ञवल्क्यः—हे गार्गि, ब्रह्मलोकेषु इति ।—लोकलोकान्तरव्यापत्वात् सर्व्वान् लोकानात्मन्यन्तर्भूय विद्यमानत्वात् बहुवचनम् । गार्गी—कस्मिन् नु खलु ब्रह्मलोकाः ओताः च प्रोताः च इति । स याज्ञवल्क्य उवाच—हे गार्गि, मा अतिप्राक्षीः न्यायागमसिद्धान्तमतिक्रम्य मा प्रश्नं कार्षीः । मा ते तव मूर्द्धा शिरः व्यपप्तत् यथा न पतेत् । अनतिप्रश्न्यां—न्यायागममतिक्रम्य यः प्रश्नः सोऽतिप्रश्नः, न अतिप्रश्नमर्हतीति अनतिप्रश्न्या तां—देवतां परात्मदेवतां ब्रह्मलोकाधिष्ठात्रीं ब्रह्मलोकस्वरूपां च अतिपृच्छसि, मा गार्गि, अतिप्राक्षीः इति । ततः तदनन्तरं वाचक्नवी गार्गी उपरराम निवृत्ता बभूव ।

७ । लोकविषयकप्रश्नव्यापनानन्तरं तत्र यन्मूलं तत्त्वं तदेव

हमिमं द्वौ प्रश्नौ प्रच्यामि तौ चेन्मे वच्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति।

सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहोवोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ वाणवन्तौ सपत्नातिव्यधिनौ हस्ते कृत्वोपतिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति।

स होवाच यदूर्द्ध्वं याज्ञवल्क्य दिवो यदर्व्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्चेति।

विवृणोति अथ हेति। अथ पुनः वाचक्नवी गार्गी उवाच समागतान् ब्राह्मणान् सम्बोध्य—हे भगवन्तः ब्राह्मणाः, हन्त—वाक्यारम्भे—अहम् इमं याज्ञवल्क्यं द्वौ प्रश्नौ पृच्छामि, से मम तौ प्रश्नौ वच्यति चेत्, न वै जातु युष्माकं कश्चित् ब्रह्मोद्यं ब्रह्मवदनं प्रति इमं याज्ञवल्क्यं जेता—लुट्—इति। याज्ञवल्क्यः आह—हे गार्गि, पृच्छ।

सा गार्गी पुनः उवाच—हे याज्ञवल्क्य, यथा काश्यः—काशीषु भवः—वा, वैदेहः—विदेहानां राजा वा उग्रपुत्रः शूरान्वयः उज्ज्यम् अवतारितज्याकं धनुः अधिज्यम् आरोपितज्याकं कृत्वा सपत्नातिव्यधिनौ शत्रुपीड़ाकरौ वाणवन्तौ तीक्ष्णफलकयुक्तौ शरौ हस्ते कृत्वा उपतिष्ठेत् समागतः आत्मानं दर्शयेत्, एवम् एव अहं त्वां द्वाभ्यां प्रश्नाभ्याम् उपोदस्थां समीपतः उत्थितवती अस्मि। तौ प्रश्नौ मे मम ब्रूहि इति। याज्ञवल्क्यः—हे गार्गि, पृच्छ इति।

सा गार्गी पुनः उवाच—हे याज्ञवल्क्य, यत् दिवः ऊर्द्ध्वम् उपरि, यत् पृथिव्याः अर्व्वाक् अधः, यत् इमे द्यावापृथिवी अन्तरा मध्ये, यत् भूतम् अतीतं च, भवत् वर्त्तमानं च, भविष्यत् च इति आचक्षते कथयन्ति, तत् कस्मिन् च ओतं च प्रोतं च इति।

स होवाच यदूर्द्ध्वं गार्गि दिवो यदर्व्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतञ्च प्रोतञ्चेति।

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति।

सा होवाच यदूर्द्ध्वं याज्ञवल्क्य दिवो यदर्व्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतञ्च प्रोतञ्चेति।

स होवाच यदूर्द्ध्वं गार्गि दिवो यदर्व्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतञ्च प्रोतञ्चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति।

स याज्ञवल्क्य उवाच—हे गार्गि, यत् दिवः ऊर्द्ध्वं, यत् पृथिव्याः अर्व्वाक्, यत् इमे द्यावापृथिवी अन्तरा, यत् भूतं च भवत् च भविष्यत् च आचक्षते, आकाशे तत् ओतं च प्रोतं च इति।

सा गार्गी उवाच—हे याज्ञवल्क्य, यः त्वं मे मम एतं प्रश्नं व्यवचः उक्तवान् असि, ते तुभ्यं नमः अस्तु। अपरस्मै प्रश्नाय धारयस्व आत्मानं दृढ़ीकुरु। याज्ञवल्क्यः—हे गार्गि, पृच्छ इति।

सा गार्गी पुनः उवाच—हे याज्ञवल्क्य, यत् दिवः ऊर्द्ध्वं, यत् पृथिव्याः अर्व्वाक्, यत् इमे द्यावापृथिवी अन्तरा, यत् भूतं च, भवत् च, भविष्यत् च इत्यादि प्रश्नं पुनरुल्लिख्य—

स होवाच यदूर्द्ध्वं, गार्गि, दिव इति प्रश्नोत्तरं दृढ़ीकृत्य सा पप्रच्छ —कस्मिन् नु खलु आकाशः ओतः च प्रोतः च इति।

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति इत्यादि (४।१४)। वृ, ५।८।१—७।

८। पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच।

काम एव यस्यायतनꣳ हृदयं लोको मनो ज्योति

स होवाचेतद्वै तदक्षरं गार्गि इत्याद्याः पूर्व्वं व्याख्याताः (४।१४)।

८। देवतानिर्व्वचनानन्तरं (८।११) प्राणस्य परोक्षब्रह्मणोऽष्टधा भेदमुपदिश्य त्रिशिवेणात्मतत्त्वं विवरितुं पुनरेव शाकल्यः प्रश्नमुत्थापयति पृथिवीति। यस्य पुरुषस्य पृथिवी एव आयतनम् आश्रयः शरीरम्, अग्निः लोकः—लोकयत्यनेनेति—दर्शनं प्रकाशसाधर्म्म्यात्; मनः ज्योतिः सर्व्ववस्तुबोधकत्वात्; तं पुरुषं यो वै विद्यात् जानीयात्, स वै सर्व्वस्य आत्मनः आध्यात्मिकस्य कार्य्यकारणसंघातस्य परमम् अयनम् आश्रयं—कर्म्म (पा, २।३।६८)—वेदिता स्यात्। हे याज्ञवल्क्य, तं सर्व्वात्मनः परायणं पुरुषम् अहम् वेद वै, यं त्वम् आत्थ कथयसि। याज्ञवल्क्यस्तन्मनोगतं भावं विज्ञायाह—यः एवायं शारीरः पुरुषः—शरीरे भवः मातृशोणितजत्वङ्मांसरुधिराख्यः—स एषः। हे शाकल्य, वद एव—किन्तत्र विशेषं पृच्छनीयं ते तत् वद। शाकल्यः—का तस्य शरीरस्य देवता? याज्ञवल्क्यः पुनः उवाच—अमृतम् अन्नरसः इति। "यो भुक्तस्यान्नस्य रसो मातृजस्य लोहितस्य निष्पत्तेर्हेतुस्तस्मादन्नरसाल्लोहितं निष्पद्यते स्त्रियाश्रितं ततश्च लोहितमयं शरीरं बीजाश्रयम्" इति भाष्यकारः।

कामः स्त्रीव्यतिकराभिलाषः यस्य आयतनं शरीरं, हृदयं लोकः

र्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच।

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच।

आकाशएव यस्यायतनꣳ श्रोत्रं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै

—दर्शनं ज्ञानसाधनत्वात्, मनः ज्योतिः तं पुरुषं यो वै विद्यात्, सर्व्वस्य आत्मनः परायणं स वेदिता स्यात्, हे याज्ञवल्क्य, तं सर्व्वस्यायतनं पुरुषम् अहं वेद वै, यं त्वम् आत्थ। याज्ञवल्क्य आह—यः एव अयं काममयः पुरुषः स एषः। हे शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति। याज्ञवल्क्यः पुनः उवाच—स्त्रियः इति।—स्त्रीतो हि कामस्य दीप्तिर्जायते।

रूपाणि एव यस्य आयतनं, चक्षुः लोकः, मनः ज्योतिः इत्यादि। य एव असौ आदित्ये पुरुषः, स एष—सर्व्वेषां रूपाणां प्रकाशकत्वात् रूपैरारब्धतनुः सः। हे शाकल्य वद एव। शाकल्यः—का तस्य देवता इति। याज्ञवल्क्य पुनः उवाच—सत्यम् इति। सत्यं चक्षुः, ततस्तदुत्पत्तिश्रवणात्।

आकाशः एव यस्य आयतनं, श्रोत्रं लोकः, मनो ज्योतिः इत्यादि यः एव अयं श्रौत्रः श्रोत्रे भवः, प्रातिश्रुत्कः—प्रतिश्रवणं प्रतिविषय-

वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं श्रोत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच।

तमएव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणं स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एव वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच।

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणं स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच।

श्रवणं तद्वेलायां विशेषेणाधिष्ठितः—पुरुषः स एषः—हे शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति। याज्ञवल्क्यः पुनः उवाच—दिश इति। ताभ्यो निष्पत्तेः।

तमः अन्धकारः एव यस्य आयतनं, हृदयं लोकः, मनः ज्योतिः इत्यादि। यः एव अयं छायामयः पुरुषः स एषः। हे शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति। याज्ञवल्क्यः पुनः उवाच—मृत्युः इति—अध्यनायया परिलक्षितो हिरण्यगर्भः (८।१०)।

रूपाणि एव यस्य आयतनं, हृदयं लोकः, मनः ज्योतिः इत्यादि। यः एव अयम् आदर्शे स्वच्छादौ पुरुषः प्रतिबिम्बाख्यः स एषः। हे

आपएव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच।

रेतएव यस्यायतनꣳ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच।

शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳस्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता इति३।

शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति। याज्ञवल्क्यः पुनः उवाच—असुः प्राणः इति।—प्राणात् रूपस्य निष्पत्तेः।

आपः एव यस्य आयतनं, हृदयं लोकः, मनः ज्योतिः इत्यादि। यः एव अयम् अप्सु पुरुषः स एषः। हे शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति। याज्ञवल्क्यः उवाच—वरुणः इति।

रेतः एव यस्य आयतनं, हृदयं लोकः, मनः ज्योतिः इत्यादि। यः एव अयं पुत्रमयः पुरुषः स एषः। हे शाकल्य, वद एव। शाकल्यः—तस्य का देवता इति? याज्ञवल्क्यः पुनः उवाच—प्रजापतिः। "प्रजापतिः पितोच्यते, पितृतोहि पुत्रस्योत्पत्तिः" इति भाष्यकारः। "अस्थिमज्जाशुक्राणि पितुर्जातानि" इति वैद्यकमाश्रित्य तेनोक्तमिदम्।

शाकल्य इति सम्बोध्य पुनः याज्ञवल्क्यः उवाच—इमे ब्राह्मणाः

याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्मविद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः।

किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन् प्रतितिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतितिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतितिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य।

सभागताः त्वां—स्वित्-वितर्के—अङ्गारावक्षयणम्—अङ्गारा अवक्षियन्ते स्थाप्यन्ते यस्मिन् कटाहादौ तत्—अङ्गाराणामाश्रयम् अकृत कृतवन्तः। ज्वलदङ्गारसदृशोऽहम, मया वादे नियोज्य त्वां मरणोन्मुखं कृतवन्तस्ते इति भावः।

शाकल्यः हे याज्ञवल्क्य इति सम्बोध्य पुनः उवाच—यत् इदं कुरुपाञ्चालानां ब्राह्मणान् अत्यवादीः अतिक्रम्य उक्तवान् असि, किं त्वं ब्रह्मविद्वान् इति? याज्ञवल्क्य आत्मब्रह्मवित्त्वं ज्ञापयितुमाह—सदेवाः सप्रतिष्ठाः दिशः वेद जाने इति। शाकल्यः—यत् यदि सदेवाः सप्रतिष्ठाः दिशः वेत्थ जानासि—

प्राच्यां दिशि किंदेवतः—का देवता अस्य तव—त्वम् असि इति—आत्मप्रतिष्ठत्वाद्देवतायास्तथा प्रश्न उत्तरञ्च। याज्ञवल्क्यः—आदित्यदेवतः अस्मि। शाकल्यः—स आदित्यः—आत्मप्रतिष्ठितः—कस्मिन् प्रतितिष्ठते इति। याज्ञवल्क्यः—चक्षुषि इति। शाकल्यः—कस्मिन् नु चक्षुः प्रतिष्ठितम् इति। याज्ञवल्क्यः—रूपेषु इति।

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन् प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाᳪं ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य।

कथम्? हि यस्मात् चक्षुषा रूपाणि पश्यति। शाकल्यः—कस्मिन् नु रूपाणि प्रतिष्ठितानि इति। याज्ञवल्क्यः पुनः उवाच—हृदये इति। कथम्? हि यस्मात् हृदयेन रूपाणि जानाति हृदये एव हि रूपाणि प्रतिष्ठितानि भवन्ति इति। रूपारब्धतनोरादित्यस्य रश्मिचक्षुषा गृहीतः हृदयेन विशेषविशेषाकारेण भिद्यमानस्तत्त्वेव रूपत्वेन प्रतितिष्ठति, तत्त्वमेतदुक्तमत्र। शाकल्यः—हे याज्ञवल्क्य, एवम् एतत्।

शाकल्यः—अस्यां दक्षिणस्यां दिशि किंदेवतः असि इति। याज्ञवल्क्यः—यमदेवतः अस्मि इति। शाकल्यः—स यमः कस्मिन् प्रतिष्ठितः इति। याज्ञवल्क्यः—यज्ञे इति यज्ञानुसारिशास्तृत्वात् तस्य। शाकल्यः—कस्मिन् नु यज्ञः प्रतिष्ठितः इति। याज्ञवल्क्यः—दक्षिणायाम् इति।—दक्षिणया यज्ञस्य सिद्धत्वात्। शाकल्यः—कस्मिन् नु दक्षिणा प्रतिष्ठिता इति। याज्ञवल्क्यः—श्रद्धायाम् इति—श्रद्धया तस्य सफलत्वात्। तदेव स्पष्टं कथयति—यदा हि एव श्रद्धत्ते तदा दक्षिणां ददाति, श्रद्धायां हि दक्षिणा प्रतिष्ठिता इति। शाकल्यः—कस्मिन् नु श्रद्धा प्रतिष्ठिता इति। याज्ञवल्क्यः पुनः उवाच—हृदये इति। कथम्? हि यस्मात् हृदयेन श्रद्धा जानाति

किंदेवतोऽस्यां प्राच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन् प्रतिष्ठित इत्यप्स्विति कस्मिन्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्म्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य।

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु

—तद्दृत्तित्वात्, हृदये एव हि श्रद्धा प्रतिष्ठिता भवति इति। शाकल्यः—हे याज्ञवल्क्य, एवम् एव एतत्।

शाकल्यः—अस्यां प्रतीच्यां दिशि किंदेवतः असि इति। याज्ञवल्क्यः—वरुणदेवतः अस्मि इति। शाकल्यः—स वरुणः कस्मिन् प्रतिष्ठितः इति। याज्ञवल्क्यः—अप्सु इति। शाकल्यः—कस्मिन् नु आपः प्रतिष्ठिताः इति। याज्ञवल्क्यः—रेतसि इति। शाकल्यः—कस्मिन् नु रेतः प्रतिष्ठितम् इति। याज्ञवल्क्यः पुनः उवाच—हृदये इति—यद्यप्याधुनिकैर्मुष्केऽस्य स्थानं निर्णीतं तथापि हर्षाधिक्याद्‌स्योपचयदर्शनात् हृदयप्रतिष्ठत्वमस्य वक्तुं सुकरम्। शारीरस्थाने पुनरस्य सर्व्वदेहगत्वं तद्यथा—"यथा पयसि सर्पिस्तु गूढ़श्चेक्षुरसो यथा। एवं हि सकले काये शुक्रं तिष्ठति देहिनाम्॥" इति, सुतरामस्य हृदयप्रतिष्ठत्वं हर्षोपचयत्वादेव। कथं हृदयेऽस्य प्रतिष्ठोक्ता तत्कारणं स्वयं श्रुतिर्वक्ति—तस्मात् हृदयाधिष्ठानकारणात् प्रतिरूपं जातं पुत्रं जना आहुः—हृदयात् इव सृप्तः निःसृतः हृदयात् इव निर्म्मितः, हि अतएव हृदये एव रेतः प्रतिष्ठितं भवति इति। शाकल्यः—हे याज्ञवल्क्य, इदम् एवम् एव।

शाकल्यः—अस्याम् उदीच्यां दिशि किंदेवतः असि इति। याज्ञ-

दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य।

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन् प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति।

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्म-

वल्क्यः----सोमदेवतः अस्मि इति। शाकल्यः----स सोमः कस्मिन् प्रतिष्ठितः इति। याज्ञवल्क्यः----दीक्षायाम् इति। शाकल्यः---- कस्मिन् नु दीक्षा प्रतिष्ठिता इति। याज्ञवल्क्यः----तत् कारणं दर्शयति----तस्मात् सत्यप्रतिष्ठत्वकारणात् दीक्षितम् आहुः ऋत्विजः सत्यं वद इति, हि यस्मात् सत्ये एव दीक्षा प्रतिष्ठिता इति। शाकल्यः---- कस्मिन् नु सत्यं प्रतिष्ठितम् इति, याज्ञवल्क्यः पुनः उवाच---हृदये इति। हि अतएव हृदयेन सत्यं जानाति, हृदये एव हि सत्यं प्रतिष्ठितं भवति। शाकल्यः---हे याज्ञवल्क्य: एवम् एव एतत्।

शाकल्यः----अस्यां ध्रुवायाम् ऊर्द्ध्वायां दिशि----"मेरोः समन्ततो वसतामव्यभिचारादूर्द्ध्वा दिग्ध्रुवेत्युच्यते"—किंदेवतः असि त्वमिति। याज्ञवल्क्यः—अग्निदेवतः अस्मि इति। शाकल्यः—स अग्निः कस्मिन् प्रतिष्ठितः इति। याज्ञवल्क्यः—वाचि इति। शाकल्यः—कस्मिन् नु वाक् प्रतिष्ठिता इति। याज्ञवल्क्यः—हृदये इति। शाकल्यः— कस्मिन् नु हृदयं प्रतिष्ठितम् इति ;—

याज्ञवल्क्यः पुनः अहल्लिक इति शाकल्यं नामान्तरेण सम्बोध्य उवाच—यत्र यस्मिन् काले एतत् हृदयम् अस्मत् अन्यत्र—अस्मत्तः

न्यासै यत्रैतदन्यत्रास्मत् स्याच्छ्वानो वैनदद्युर्वयाᳬसि वैन-द्विमथ्नीरन्निति।

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्व-पानः प्रतिष्ठित इति व्यानइति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समानइति स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति।

देशान्तरे—मन्यासै मन्यसे—शोभते तदेव प्रश्न इति भावः। कथम्? हि यस्मात् यदि एतत् हृदयम् अस्मत् अन्यत्र स्यात् श्वानः कुक्कुराः वा एनत् शरीरं अद्युः खादेयुः, वयांसि वा गृध्रादयः एनत् विमथ्नीरन् विलोड़येयुः विकर्षेरन् इति। "शरीरस्यापि नामरूपकर्म्मात्मकत्वाद्धृदये प्रतिष्ठितत्वम्" इति भाष्यकारः।

शाकल्यः—कस्मिन् नु त्वं च आत्मा च प्रतिष्ठितौ स्थः इति। याज्ञवल्क्यः—प्राणे—प्राणवृत्तौ—इति। शाकल्यः कस्मिन् नु प्राणः प्रतिष्ठितः इति। याज्ञवल्क्यः—अपाने इति—"सापि प्राणवृत्तिः प्राङेव प्रेयादपानवृत्त्या चेन्न निगृह्यते"। शाकल्यः—कस्मिन् नु अपानः प्रतिष्ठितः इति। याज्ञवल्क्यः—व्याने इति। "साप्यपान-वृत्तिरधएव यायात् प्राणवृत्तिः प्राङेव,मध्यस्थया चेद्व्यानवृत्त्या न निगृ-ह्यते।" शाकल्यः—कस्मिन् नु व्यानः प्रतिष्ठितः इति। याज्ञवल्क्यः —उदाने इति। "सर्व्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धा विष्वग् भवेयुः"। शाकल्यः—कस्मिन् नु उदानः प्रतिष्ठितः इति। याज्ञवल्क्यः—समाने इति। "हृदि प्राणोगुदेऽपानः समानो नाभिदेशतः। उदानः कण्ठदेशस्थो व्यानः सर्व्वशरीरगः॥" इति स्मरणात् नाभिर्मूलदेशत्वात् तत्रोद्भूतान्नरसत्वात् च सर्व्वाः प्राणवृत्तय-

एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तन्त्वौपनिषदं पुरुषं पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यतीति। तꣳह न मेने शाकल्यस्तस्य ह मूर्द्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः।

तस्मिन् पोषणं लब्धा स्वस्वक्रियायामाधिकारं च परित्याय समर्त्तं भजते; अतस्तदाश्रयत्वं सर्व्वासाम्। प्राणो हि मुखमागत्याशमन्नः प्रवेशयति; अपानः शकृन्मूत्रादीन्यधः प्रेरयति; व्यानः सर्व्वशरीरे रसं वाहयति, स्वेदशोणितं च प्रवर्त्तयति, गत्युत्क्षेपणनिमेषोन्मेषणादिचेष्टाः साधयति; उदानो भाषणगीतादि निर्व्वाहयति; समान आमाशयपक्वाशयचरोऽन्नं पचति। एवं क्रियाभेदात् तासां नामभेदः। "सर्व्वा दिशः सर्व्वे प्राणाः स एव नेति नेत्यात्मा (३।२२)" इत्यत्र यथा सर्व्वात्मत्वमुपदिष्टं तथैवात्र; व्याख्यातञ्च तत्रैव।

याज्ञवल्क्यः—एतानि अष्टौ आयतनानि "पृथिव्येव यस्यायतनम्" इत्येमादीनि, अष्टौ लोकाः—अग्निलोकादयः, अष्टौ देवाः—"अमृतमिति होवाच" इत्येवमादयः, अष्टौ पुरुषाः—"शारीरः पुरुषः" इत्यादयः। स यः तान् पृथिव्याद्यायतनसहितान् अष्टौ पुरुषान् निरुह्य निश्चयेन ऊह्य गमयित्वा—अष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य—प्रत्युह्य—दिगादिक्रमेण आत्मनि तान् उपसंहृत्य—अत्यक्रामत् हृदयाद्युपाधिधर्म्मम् अतिक्रान्तवान्; तम् औपनिषदम् उपनिषद्गम्यं पुरुषं पृच्छामि। तं पुरुषं चेत् मे मह्यं न विवक्ष्यसि विस्पष्टं न कथयिष्यसि, ते तव मूर्द्धा विपतिष्यति इति शाकल्यः तम् उपनिषदं पुरुषं न मेने न ज्ञातवान्। सुतराम् अभिशापेन तस्य शाकल्यस्य पुनः मूर्द्धा विपपात, अपि पुनः—किञ्च—अस्य अस्थीनि सत्कारार्थं शिष्यैर्नीयमानानि परिमोषिणः तस्कराः अपजह्रुः अपहृतवन्तः। कथमस्थी-

अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्व्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्व्वान् वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः।

तान् हैतैः श्लोकैः पप्रच्छ—

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।
तस्य लोमानि पर्णानि त्वगस्योत्पाटिका वहिः॥
त्वचएवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः।
तस्मात्तदातृणात् प्रैति रसो वृक्षादिवाहतात्॥

ऽपक्रान्तवन्तस्ते इति तत्कारणं कथयति—अन्यत्—न अर्थोनि किन्तर्हि धनं—मन्यमानाः। ब्रह्मविदि विनोतेन भवितव्यमित्या-चारोल्लङ्घनस्य फलप्रदर्शनाय मूर्द्धपतनाद्युक्तिः।

अथ अनन्तरं पुनः याज्ञवल्क्यः उवाच—हे भगवन्तः ब्राह्मणाः—यः वः युष्माकं मध्ये कामयते अभिलषति मां प्रष्टुं स मा मां पृच्छतु, सर्व्वे वा मा मां सम्भूय पृच्छत। यः वः कामयते—याज्ञवल्क्यः पृच्छतु इति—तं वः अहं पृच्छामि, सर्व्वान् वा वः युष्मान् मिलितान्—अहं पृच्छामि। ते पुनः ब्राह्मणाः न दधृषुः न प्रगल्भाः बभूवुः।

तान् ब्राह्मणान् अप्रगल्भान् एतैः श्लोकैः याज्ञवल्क्यः पप्रच्छ—यथा वनस्पतिः महान् वृक्षः, तथा एव पुरुषः अमृषा सत्यम्। तस्य पुरुषस्य यथा लोमानि, तथा वृक्षस्य पर्णानि पत्राणि; अस्य पुरुषस्य वहिः त्वक्, वृक्षस्य उत्पाटिका नीरसत्वक्। अस्य पुरुषस्य त्वचः चर्म्मणः रुधिरं प्रस्यन्दि—स्यन्दते, वृक्षस्य त्वचः उत्पटः निर्यासः। आहतात् वृक्षात् रसः इव, आतृणात् आहतात् तस्मात् पुरुषात् तत् शोणितं प्रैति। अस्य पुरुषस्य मांसानि, वृक्षस्य शकराणि शकलानि आर्द्रा त्वक्। वृक्षस्य किनाटं काष्ठसंलग्नं वल्कलं पुरुषस्य स्नाव—नाम्नो-

मांसान्यस्य शकराणि किनाटं स्नाव तत् स्थिरम् ।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥
यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥
रेतस इति मा वोचत जीवतस्तत् प्रजायते ।
धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥
यत् समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥

ऽयं पुंसि अत्र क्लीवे—स्नायुः । तत् स्नाव काष्ठलग्नवल्कलवत् स्थिरं दृढम् । अन्तरतः स्नायोरभ्यन्तरे पुरुषस्य अस्थीनि, वृक्षस्य दारूणि । पुरुषस्य मज्जा वृक्षस्य मज्जोपमा कृता तत्सादृश्यात् । एवं सादृश्यं प्रदर्श्य वैसादृश्यं दर्शयति—यत् यदि वृक्णः छिन्नः वृक्षः नवतरः सन् पुनः मूलात् रोहति मर्त्यः मनुष्यः स्वित्—वितर्के—मृत्युना वृक्णः छिन्नः, कस्मात् मूलात् प्ररोहति—इति प्रश्नः । रेतसः प्ररोहति इति, हे ब्राह्मणाः, मा वोचत नैवं वक्तुमर्हत । कथम् ? तत् रेतः जीवतः —न मृतात्— प्रजायते । वृक्षः पुनः धानारुहः बीजरुहः- इव— अनर्थकः । वृक्षः प्रेत्य मृत्वा अञ्जसा साक्षात्सम्बन्धेन सम्भवः भवेत् धानातः, न तथा पुरुषः । यत् यदि वृक्षस्य आमूलं धानादिसहितम् आवृहेयुः उत्पाटयेयुः, न पुनः आभवेत् न उत्पद्येत । मृत्युना यदि मर्त्यः वृक्णः स्वित् कस्मात् मूलात् प्ररोहति इति पुनः प्रश्नः । स पुरुषः जातः एव नित्यविद्यमानएव प्रथमजत्वात्, न जायते न मृतः पुनः जायते, को नु एवं पुरुषं पुनः जनयेत् । ब्राह्मणानां मूकीभावे कुतोऽस्यागमनं तत् स्वयमेव विवृणोति—तिष्ठमानस्य नित्यं ब्रह्मणि विद्यमानस्य, तद्विदः तस्मिन् विद्यमान इति ज्ञानवतः, रातिर्दातुः— रातेः—षष्ठ्यर्थे प्रथमा—धनस्य दातुः—'ययेदं धार्य्यते जगत्' इति

जात एव न जायते कोन्वेवं जनयेत् पुनः ।
विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।
तिष्ठमानस्य तद्विद इति ।　बृ ५।६।१०—२८ ।

९ । तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः ।
नानुध्यायेद्वहूञ्छब्दान् वाचो विग्लापनꣳ हि तदिति ॥
　　　　　　　　　　　बृ ६।४।२१ ।

१० । सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भू ब्रह्मणे नमः ।　बृह ६।६।३ ।

न्यायेन—स्वसम्प्रदितरणशीलस्य ( ११।१५ ) पुरुषस्य परायणं परमाश्रयः विज्ञानम् आनन्दं ब्रह्म । ब्रह्मैव तस्य मूलं नान्यत् किञ्चन इति भावः । प्रज्ञानघनेन प्राज्ञेनानन्दमयेनालिङ्गितस्य जीवस्य विज्ञानस्वरूपात् विज्ञानमयत्वेन सृष्टिमुखे प्रथमजत्वं विभजनात्, अतएव "अनेन जीवेनात्मनानुप्रविश्य" इत्युक्तिः । प्रकरणमिदमष्टावायतनान्यष्टौ लोकाः, अष्टौ देवाः, जीवशक्तेः प्रवेशात् तत्त्वनिष्ठाः पुरुषाः, सर्व्वानेतानात्मनि प्रथमजे पुनरुपसंहृत्यापगतहृदयाद्युपाधिधर्म्मं परात्मनि तिष्ठन्तं पुरुषं ज्ञानगोचरमकारयत् ।

९ । ब्रह्मयोगानुगृहीता बुद्धिरनायासेन निखिलं तत्त्वमायत्तीकरोति, अन्यथा बहुशास्त्राभ्यासेनापि न तत्स्फूर्त्तिर्जायते । एतदेव कथयति श्रुतिस्तमेवेति । तं परात्मानम् एव (४।१५) विज्ञाय साक्षात् सम्बन्धेन ज्ञात्वा धीरः प्रज्ञावान् ब्राह्मणः प्रज्ञां जिज्ञासानिवृत्तिकरीं कुर्व्वीत । बहून् शब्दान् योगविच्छेदकरान् न अनुध्यायेत् न अनुचिन्तयेत् । कथम् ? तत् अनुचिन्तनं वाचः विग्लापनं विशेषेण ग्लानिकरं—तत्त्वप्रकाशप्रातिकूल्यात् वृथा श्रममात्रं स्यादिति भावः ।

१० । आचार्य्यपरम्पराक्रमो हि वंशः । तत्कीर्त्तनमुपनिषदि

दृश्यते। ईश्वरानुगृहीतबुद्धौ स्वयं वेदः प्रतिभातीति प्रदर्शनाय 'सनारौः सनारुः, सनातनात् सनातनः, सनगात् सनगः, परमेष्ठिनः परमेष्ठी, ब्रह्मणः ब्रह्म स्वयम्भू' इति चरमांशो वंशकीर्त्तनस्य परिगृहीतोऽत्र। परमेष्ठी विराट्, ब्रह्म हिरण्यगर्भः। ईश्वरानुगृहीता बुद्धिरेव हिरण्यगर्भः। अतएवाह टीकाकृत्—"स्वयं प्रतिभातवेदो हिरण्यगर्भो नाचार्य्यान्तरमपेक्षते। ईश्वरानुगृहीतस्य बुद्धावाविर्भूताद्वेदादेव विद्यालाभसम्भवात्" इति। एष वंशानुक्रमः :—

अथ वंशः। पौतिमाष्यो गौपवनात् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनात् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्यात् शाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः।

आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लातात् चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्यां सैतवप्राचीनयोग्यौ पाराशर्य्यात् पाराशर्य्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्य्यात् पाराशर्य्यो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिः।

घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात् पाराशर्य्यायणः पाराशर्य्यात् पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेः त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्यात् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात् काप्यात् कैशोर्य्यः काप्यः कुमारहारितात् कुमारहारितो गालवात् गालवो विदर्भीकौण्डिन्यात् विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् वत्सनपात् बाभ्रवः पथःसौभरात् पन्थाः—सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्रात् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्व्वणोऽथर्व्वणो दैवादथर्व्वा दैवो मृत्योः प्राध्वंसनात् मृत्युः प्राध्वंसनः प्रध्वंसनात् प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः। बृह, ४।६।१—३।

अत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्य्यः। चरमाध्यायेऽष्टमे स्त्रीप्राधान्यात् गुणवान् पुत्रो भवतीति स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्य्यपरम्परा कीर्त्यते। तद्यथा,

अथ वंशः। पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः।

११। ओं ब्रह्मवादिनो वदन्ति।

किं कारणं ब्रह्म कुतः स्म जाता

जीवाम केन क्व च संप्रतिष्ठिताः।

अधिष्ठिताः केन सुखेतरेषु

वर्त्तामहे ब्रह्मविदो व्यवस्थाम्॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रः भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः।

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान्वाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्याऽऽदित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते।

समानमाऽऽसांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः। बृह, ६।५।१—४।

११। वेदान्ततत्त्वसंग्रहभूतोऽयमध्याय आरभ्यते 'ओं ब्रह्मवादिनो वदन्ति' इति निवचनेन। तत्रादौ प्रश्नमुखेन ब्रह्मव्यतिरिक्तं कारणान्तरं निरसितुमाह—किं ब्रह्म कारणम्? कुतः वयं जाताः स्मः? जाताः सन्तः केन जीवाम जीवनधारणं करवाम? क्व च वयं सम्प्रतिष्ठिताः—अन्ते स्थितिं कुर्मः? हे ब्रह्मविदः, केन व्यवस्थां—स्थितेः शः—विविधव्यवसायम् अधिष्ठिताः अधिकृत्य स्थापिताः वयं सुखेतरेषु सुखदुःखेषु वर्त्तामहे।

कालः स्वभावो नियतिर्यदृच्छा
भूतानि योनिः पुरुष इति चिन्त्या।
संयोग एषां न त्वात्मभावा-
दात्माप्यनीशः सुखदुःखहेतोः॥

ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढ़ाम्।
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः॥

एवं प्रश्नमुत्थाप्य ब्रह्मव्यतिरिक्तं कारणान्तरं निरस्यति कालइति। कालः—सर्व्वभूतानां विपरिणामहेतुः, स्वभावः—पदार्थानां प्रतिनियता शक्तिः, नियतिः—अविषमपुण्यपापलक्षणं कर्म्म, यदृच्छा—आकस्मिकी प्राप्तिः, भूतानि—आकाशादीनि, योनिः—प्रकृतिः, पुरुषः—जीवः इति—चिन्त्या चिन्त्यं निरूपणीयम्। तेषामकारणत्वं निरूपयति—एषां कालादीनां न तु संयोगः कार्य्योत्पादने मिलितभावः। कथम्? आत्मभावात्—जीवचैतन्याधिष्ठानवशात् स संयोगो भवति। यद्येवम् आत्मैव भवतु कारणम्? तदपि न—सुखदुःखहेतोः सुखदुःखाधीनत्वात् आत्मापि अनीशः अस्वतन्त्रः।

एवं कारणान्तरनिरसनानन्तरं ध्यानयोगेन ब्रह्मविदो निखिलशक्तिप्रस्रवणं परमात्मानमेव साक्षात्कारणत्वेनापश्यन्नित्याह तइति। ध्यानयोगानुगताः ते ब्रह्मविदः स्वगुणैः स्वस्वगुणैः द्रव्याश्रितपृथिव्यादैश्वर्य्यैः निगूढ़ां प्रच्छन्नां देवात्मशक्तिं देवस्य परात्मनः आत्मशक्तिं निजां शक्तिं चिच्छक्तिम् अपश्यन्। कोऽसौ देवः यस्येयमात्मशक्तिः? यः एकः अद्वितीयः कालात्मयुक्तानि निखिलानि तानि स्वभावादीनि कारणानि अधितिष्ठति।

तमेकनेमिं त्रिवृतं षोड़शान्तं
शतार्द्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं
त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥
पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्रवक्रां
पञ्चप्राणोर्म्मिं पञ्चबुद्ध्यादिमूलाम् ।

तं चक्रत्वेन वर्णयति तमिति । यः एकः निखिलानि कारणानि अधितिष्ठति तम् एकं नेमिं त्रिवृतं त्रिभिः सत्त्वरजस्तमोभिः प्रकृति-गुणैः वृतं ; षोढ़शान्तं—पञ्चभूतानि एकादशेन्द्रियाणि इति षोड़शविकारः अन्तः अवसानं यस्य, अथवा प्रश्नोपनिषदुक्तषोड़शकलाः (५।७) अवसानं यस्य ; शतार्द्धारं—पञ्चाशत् अराः यस्य—"पञ्च विपर्य्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् । अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥" इति सांख्यकारिकोक्ताः पञ्चविपर्य्ययभेदा अष्टाविंशतिभेदा चाशक्तिर्नवधा तुष्टिरष्टधा सिद्धिरिति पञ्चाशत्, विशेषस्तु कारिकायास्तद्व्याख्यायाश्च ज्ञातव्यः (सां ३।३७—४०सू) ; विंशतिप्रत्यराभिः—दशेन्द्रियाणि तेषाञ्च विषयाः शब्दस्पर्शरूपरसगन्ध-वचनादानविहरणोत्सर्गानन्दाः प्रत्यराः अराणां दार्ढ्याय कीलकाः तैः ; षड्भिः षट्संख्यकैः अष्टकैः (१) भूम्यादि प्रकृत्यष्टकम्, (२) त्वगादि धात्वष्टकम् (३) अणिमाद्यैश्वर्य्याष्टकम् (४) धर्म्मज्ञानादि भावा-ष्टकम् (५) ब्रह्मप्रजापत्यादि देवाष्टकम् (६) दयादिगुणाष्टकं तैः—युक्तम् ; विश्वरूपैकपाशं विश्वरूपः नानारूपः पुत्राद्यादिभेदात् एकः कामएव पाशो यस्य ; त्रिमार्गभेदं—धर्म्माधर्म्मज्ञानमार्गभेदा यस्य ; द्विनिमित्तैकमोहं—द्वयोः पापपुण्ययोः निमित्तम् एकः मोहः अना-त्मसु आत्माभिमानः यस्य ; एवम्भूतं ब्रह्मचक्रम् अधीमः इति परे-णान्वयः ।

पुनश्च तं नदीत्वेन वर्णयति—पञ्चस्रोतोऽम्बुम्—पञ्चस्रोतांसि चक्षु-

पञ्चावर्त्तां पञ्चदुःखौघवेगां
पञ्चाशद्भेदां पञ्चपर्व्वामधीमः ॥

सर्व्वाजीवे सर्व्वसंस्थे वृहन्ते
तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारञ्च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ॥

रादीनि ज्ञानेन्द्रियाणि अम्बुस्थानानि यस्यं ; पञ्चयोनुग्रग्रवक्रां—पञ्च-योनिभिः कारणभूतैः पञ्चभूतैः उग्रां भीषणां वक्रां च ; पञ्चप्राणोर्म्मिं —पाण्यादीनि पञ्च कर्म्मेन्द्रियाणि ऊर्म्मयः यस्याः ; पञ्चबुद्ध्यादिमूलां —पञ्चज्ञानेन्द्रियजन्यबोधानाम् आदिकारणं मनो यस्याः ; पञ्चावर्त्तां —पञ्च शब्दादिविषयाः आवर्त्ताः यस्याः ; पञ्चदुःखौघवेगां—गर्भदुःख-जन्मदुःख-जरादुःख-व्याधिदुःख-मरणदुःखानि प्रवाहवेगाः यस्याः ; पञ्चाशद्भेदां,—विपर्य्ययादयः पञ्चाशत् भेदाः यस्याः ; पञ्चपर्व्वाम्— अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः पर्व्वाणि यस्याः तां नदीम् अधीमः अधिगच्छामः स्वायत्तीकुर्म्मः ।

एवं ब्रह्मचक्रे ब्रह्मस्रोतस्यां वर्त्तमानानां जीवानां कथं वा चक्र-भ्रमितो मुक्तिर्भवति तदाह सर्व्वेति । सर्व्वाजीवे सर्व्वेषाम् आजीवः आजीवनं यस्मिन्, सर्व्वसंस्थे—सर्व्वेषां संस्था सम्यक् स्थितिः यस्मिन्, वृहन्ते सर्व्वान्तर्भावके अस्मिन् ब्रह्मचक्रे हंसः जीवः आत्मानं स्वं प्रेरि-तारं प्रेरयितारं च पृथक्—अन्योऽहम् अन्योऽसौ इति स्वरूपपार्थक्यं— मत्वा तत्प्रेरणावमाननात् भ्राम्यते परिवर्त्तते विविधावस्थाधीनो भवति । ततः विविधविपरिवर्त्तनानन्तरं तेन प्रेरयित्रा जुष्टः सेवितः अनुगृहीतः अमृतत्वम् एति प्राप्नोति । दुःखतापकरविविधपरिवर्त्तने-नापगतमलः परात्मानुग्रहभाक् भवति ततोऽस्य विमुक्तिः ।

उद्गीतमेतत् परमन्तु ब्रह्म
तस्मिंस्त्रयं सुप्रतिष्ठाक्षरञ्च।
अत्रान्तरं ब्रह्मविदो विदित्वा
लीना ब्रह्मणि तत्परा योनिमुक्ताः॥
संयुक्तमेतत् क्षरमक्षरञ्च
व्यक्ताव्यक्तं भरते विश्वमीशः।
अनीशश्चात्मा बध्यते भोक्तृभावा-
ज्ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥
ज्ञाज्ञौ द्वावजावीशानीशा-
वजाह्येका भोक्तृभोग्यार्थयुक्ता।

उद्गीतमिति। एतत् सर्व्वान्तर्भावकं ब्रह्म तु परमं सर्व्वोत्कृष्टम् उद्गीतम्। तस्मिन् ब्रह्मणि तुरीये त्रयं—भोक्ता भोग्यं प्रेरयिता इति, सुतरां तत् सुप्रतिष्ठा शोभनप्रतिष्ठा सर्व्वस्य निश्चलतया स्थिति-स्थानम्। कथम्? अक्षरं स्वयमविच्युतस्वभावम्। ब्रह्मविदः अन्तरं सर्व्वान्तरात्मानम्—"अवसरमध्येऽन्तरात्मनि च" इत्यमरः—विदित्वा अत्र ब्रह्मणि परमे लीनाः अपृथग्भावेनावस्थिताः सुतरां तत्पराः तदेक-परायणाः सन्तः योनिमुक्ताः—योनिः प्रकृतिः तत्कार्य्यजातञ्च ततो मुक्ताः स्वातन्त्र्येण स्थिताः स्वरूपप्रतिष्ठाः—भवन्ति।

संयुक्तमिति। क्षरं विनाशि—तिरोधानस्वभावत्वात्, अक्षरं अविनाशि—नित्यविद्यमानत्वात्, व्यक्ताव्यक्तं—व्यक्तं विकारजातम् अव्यक्तं कारणं—संयुक्तं परस्परमिलितं सत् विश्वं निखिलम्। तदे-तन्निखिलम् ईशः सर्व्वशक्तिमान् भरते बिभर्त्ति। अनीशः अल्पशक्तिः च आत्मा जीवः भोक्तृभावात् बध्यते भोगस्पृहया बद्धो भवति। देवं परेशं ज्ञात्वा सर्व्वपाशैः सर्व्वविधबन्धनैः मुच्यते।

एवं जगज्जीवपरब्रह्ममुक्तितत्त्वं संक्षेपेणोक्त्वा सुस्पष्टमभिदधाति

अनन्तश्चात्मा विश्वरूपोह्यकर्त्ता
त्रयं यदा विन्दते ब्रह्ममेतत् ॥

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देवएकः।
तस्याभिध्यानाद्योजनात् तत्त्वभावाद्
भूयश्चान्ते विश्वमायानिवृत्तिः ॥

ज्ञाज्ञाविति। ज्ञाज्ञौ—ज्ञः ईशः अज्ञः जीवः तौ—द्वौ ईशानीशौ शक्ताशक्तौ अजौ जन्मरहितौ; भोक्तृभोग्यार्थयुक्ता—भोक्तुः जीवस्य भोगयोग्यविषययुक्ता—अजा जन्मरहिता प्रकृतिः हि एका—विविधरूपेण प्रकाशमानापीश्वरशक्तित्वेन केवला—एतत् त्रयं ब्रह्मं ब्रह्म—"तस्मिंस्त्रयम्" इत्युक्तत्वात् एकस्मिन्नेव परब्रह्मणि भोक्तृभोग्यप्रेरयितृरूपेण विभजनं, भोक्तृभोग्ययोस्तच्छक्तितया प्रेरयितुश्चात्मतया तुरीयादविभागः, "तत् सर्व्वमभवत्" (८।१२) इति तत्सत्तया सत्त्वावत्त्वात् स्वरूपतस्त्वैकम्, स्वरूपन्तु ब्रह्मानुरूपमन्तर्भावकत्वं, नियन्तरि जगज्जीवानां, जीवशक्तौ "ययेदं धार्य्यते जगत्" (गी ७।५) इति निखिलस्य जगतः, जगद्रूपायां प्रकृतिशक्तौ भूतनिचयानां तदुत्पन्नानाञ्चान्तर्भूततया स्थितिः; अतएव च त्रयाणां ब्रह्मत्वम् (८।१४)—यदा विन्दते लभते अविभागं भजते, तदा विश्वरूपः—जगज्जीवनियन्तृत्वेन विविधरूपेण प्रकाशमानः—अनन्तः सर्व्वान्तर्भावकतया परिपूर्णस्वभावः आत्मा हि अकर्त्ता—"तदात्मानꣳ स्वयमकुरुत" (८।६) इति विभजनस्य न कर्त्ता।

एतदेव स्फुटतया विवृणोति। क्षरं—प्रधानम्, अमृताक्षरं—अमृतञ्च तत् अक्षरंच—हरः ईश्वरः अज्ञानादिहरणात्, क्षरात्मानौ प्रधानपुरुषौ—कर्म्म—एकः देवः ईशते ईष्टे। तस्य देवस्य अभिध्यानात्, योजनात् सर्व्वेष सत्तामात्राणां सत्ताभूततया संयोजनात्, भूयश्च

ज्ञात्वा देवं सर्व्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः।
तस्याभिध्यानात् तृतीयं देहभेदे
विश्वैश्वर्य्यं केवल आप्तकामः॥

एतज्ज्ञेयं नित्यमेवात्मसंस्थं
नातःपरं वेदितव्यं हि किञ्चित्।
भोक्ता भोग्यं प्रेरितारञ्च मत्वा
सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्॥

असकृत् तत्स्वभावात् सर्व्वस्य तत्सत्तया सत्तावत्त्वदर्शनात्, अन्ते तत्त्वसाक्षात्कारपरिपाके विश्वमायानिवृत्तिः—विश्वरूपायाः मायायाः प्रकृतेः निवृत्तिः कार्य्योपरतिरविभक्ततया प्रकाशमानत्वात्।

ज्ञात्वेति। देवं ज्ञात्वा सर्व्वपाशापहानिः—सर्व्वेषां पाशानां बन्धनानां हानिः छेदः, क्षीणैः क्षयप्राप्तैः अविद्यादिभिः क्लेशैः जन्ममृत्युप्रहाणिः जननमरणदुःखनाशः, तस्य देवस्य अभिध्यानात् देहभेदे देहभङ्गे विश्वैश्वर्य्यं प्रभवाप्ययादिनिखिलैश्वर्य्यलक्षणं तृतीयं जीवपरित्यक्तुः स्थानं ज्ञात्वेति शेष, केवलः निरस्तसमस्तैश्वर्य्याभिध्यानः आप्तकामः पूर्णनिखिलाभिलाषः भवति।

एतदिति। एतत् परं ब्रह्म स्थानत्रयेऽस्य प्रकाशमानत्वेऽपि नित्यम् एव आत्मसंस्थम् आत्मनि सम्यक् स्थितं ज्ञेयम् एकात्मप्रत्ययत्वात्; अतःपरं तस्यात्मसंस्थत्वज्ञानानन्तरं किंचित् न वेदितव्यम् अस्ति, तुरीये सर्व्वज्ञानस्य पर्य्यवसानात्। भोक्ता भोक्तारं जीवं, भोग्यं जगत्, प्रेरितारं नियन्तारं मत्वा मननविषयं कृत्वा सर्व्वम् एतत् त्रिविधं त्रिप्रकारं—प्रकारास्त्रयः प्रकारि त्वेकं तुरीयम्—ब्रह्म प्रोक्तम्। विना हि मननात् त्रिविधप्रकाशस्य मूलतत्त्वैकत्वं न जातु प्रतिभाति स्वभावतो विभक्ततया प्रतिभासमानत्वात्। एक एव आत्मा विश्वे

वह्नेर्यथा योनिगतस्य मूर्त्ति-
र्न दृश्यते नैव च लिङ्गनाशः।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभयं प्रणवेन देहे ॥

भोग्यात्मतया, मानसे भोक्त्रात्मतया, जीवे नियन्त्रात्मतया प्रकाशमानः, अतएवैकस्यैव ब्रह्मणः स्थानत्रये विद्यमानत्वात् त्रयं ब्रह्मेत्युक्तिः तदन्तरा तत्सत्तया त्रितयस्य सत्तावत्त्वात्। विपरीतमिदं यदविकारी चैतन्यस्वरूप आत्मा भोग्यात्मतया भोक्त्रात्मतया नियन्त्रात्मतयात्मानं प्रकाशितवानथच नित्यात्मसंस्थएव सः। "सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः" (६।४) इत्यत्र भोग्यात्मतया, "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः" इत्यत्र भोक्त्रात्मतया, "एष म आत्माऽन्तर्हृदये" इत्यत्र नियन्त्रात्मतया प्रकाशस्य मूलमन्वेष्टव्यं, "ज्यायान् पृथिव्याः" इत्यादिष्वविकारित्वस्य च, सर्व्वान्तर्भावकं तुरीयन्तु "एतद्ब्रह्म" इत्यत्र। मधुब्राह्मणे पुनस्तत्त्वमिदं परिस्फुटम्। उपासनासिद्ध्यर्थमुपासकदृष्टावपृथक्त्वेऽपि पृथक्तया प्रतिभातीति नैतद्विपरीतं यदि तत्त्वमिदं जातु दृष्टितो नापसरति। "ज्यायान् पृथिव्याः" इत्याद्युक्तिः दृष्टिवैगुण्यवारणायेति मन्तव्यम्। एवं "रूपं रूपं प्रतिरूपो वहिश्च (५।६) इत्यत्र वहिःशब्दः।

वह्नेरिति। योनिगतस्य अरणिगतस्य वह्नेः मूर्त्तिः यथा मथनात् प्राक् न दृश्यते, न एव च—निर्व्वाणप्राप्तेर्मूर्त्तिमत्त्वाभावात्—तस्य वह्नेः लिङ्गनाशः सूक्ष्मतनोरत्यन्ताभावः। कथं ज्ञायते न तस्य सूक्ष्मतनोरभावइति ? स एव निर्व्वाणप्राप्तः भूयः एव पुनरेव इन्धनयोनिगृह्यः इन्धनेन कारणेन गृह्यः दृष्टिगोचरविषयः। तत् उभयं वा—तदुभयमिव—देहे अरणिस्थानीये प्रणवेन उत्तरारणिस्थानीयेन आत्मा वह्निस्थानीयः गृह्य इति शेषः।

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्म्मथनाभ्यासाद्देवं पश्येन्निगूढ़वत्॥
तिलेषु तैलं दधिनीव सर्पि-
रापः स्रोतःस्वरणीषु चाग्निः।
एवमात्मात्मनि गृह्यतेऽसौ
सत्येनैनं तपसा योऽनुपश्यति॥
सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्।
आत्मविद्यातपोमूलं तद् ब्रह्मोपनिषत्परम्॥
तद्ब्रह्मोपनिषत् परम्॥ श्वे, १।१—१६।

एतदेव सुस्पष्टं प्रथयति स्वदेहमिति। स्वदेहम् अरणिं प्रणवं च उत्तरारणिं कृत्वा ध्याननिर्म्मथनाभ्यासात्—ध्यानरूपस्य निर्म्मथनस्य अभ्यासात् निगूढ़वत् निगूढ़ाग्निवत् देवं द्योतनस्वभावं परमात्मानं पश्येत् साक्षात्कुर्य्यात्।

तिलेष्विति। तिलेषु तैलं, दधिनि सर्पिः घृतम् इव, स्रोतःसु अन्तःसलिलप्रवाहेषु आपः, अरणीषु अग्निः मथनादिना गृह्यते। एवम् आत्मनि देहे असौ देवः गृह्यते। केन गृह्यते? यः सत्येन—भूतहितार्थवचनेन, तपसा—इन्द्रियमनसामैकाग्र्यलक्षणेन—एनं देवम् अनुपश्यति।

कथमेनमनुपश्यतीत्यपेक्षयाह सर्व्वव्यापिनमिति। सर्व्वव्यापिनं सर्व्वस्मिन् जगज्जीवादौ व्यापिनं व्याप्य अवस्थितम्, आत्मानम् अन्तर्यामिणं, क्षीरे सर्पिः इव अर्पितं सारतया नित्यसम्बद्धम्, आत्मविद्यातपोमूलम्—"धियोयोनः प्रचोदयात्" (ऋक् ३म, ६२सू, १०ऋक्) "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" (गीता १०।१०) इति—आत्मविद्यायाः तपसश्च मूलं कारणम्—तत् प्रसिद्धं ब्रह्म—तुरीयं

१२। ऋचोऽक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति
य इत् तद्विदुस्त इमे समासते॥
छन्दांसि यज्ञाः क्रतवो व्रतानि
भूतं भव्यं यच्च वेदा वदन्ति।
यस्मान्मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया सन्निरुद्धः॥

सर्व्वातीतं सर्व्वात्मभाविकम्, उपनिषत्परं उपनिषत्सु परं सर्व्वश्रेष्ठम् —उपनिषत्समस्मिन् परं श्रेय इति भाष्यकारः—द्विर्व्वचनमध्यायपरिसमाप्त्यर्थम्।

१२। परतत्त्वसाक्षात्कारं विना वेदादीनां विफलत्वमाह ऋच इति। यस्मिन व्योमन् आकाशकल्पे परमे अक्षरे ऋचः तत्प्रतिपाद्याः विश्वे देवाः अधिनिषेदुः आश्रिताः तिष्ठन्ति, यः तत् अक्षरं न वेद, स ऋचा किं करिष्यति। ये इत् पुनः तत् अक्षरं विदुः, ते इमे समासते आत्मस्वरूपतया तिष्ठन्ति (ऋक् १म, १६४सू, ३८ऋक्)।

तस्मादक्षरात् सर्व्वं प्रभवतीत्याह छन्दांसीति। छन्दांसि वेदाः, यज्ञाः यूपसम्बन्धविरहिताः विहितक्रियाः वेदपाठादयः, क्रतवः स्वर्गसाधकक्रियाः, व्रतानि चान्द्रायणादीनि, यत् भूतं भव्यं चकारात् वर्त्तमानं वेदाः वदन्ति कथयन्ति, एतत् विश्वं निखिलं यस्मात् अक्षरात् अन्तर्निहितनिखिलात् मायी मायाधिष्ठाता सृजति आविष्करोति, तस्मिन् अक्षरे एव अन्यः जीवः मायया भगवच्छक्त्या संनिरुद्धः उपाध्यवच्छिन्नः।

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्व्वमिदं जगत् ॥

श्वे ४।८—१० ।

१३ । तपःप्रभावाद्देवप्रसादाच्च
ब्रह्म ह श्वेतश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्यः परमं पवित्रं
प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥

मायेयं न कुहकः किन्तर्हि भगवच्छक्तिरित्याह मायामिति । मायां तु प्रकृतिं मायिनं तु महेश्वरं विद्यात् जानीयात्, तस्य महेश्वरस्य अवयवभूतैः—तदवयवत्वमापन्नैः ऐश्वर्य्यैः, चिच्छक्तिशकलभूतैः पुरुषैरिति श्रीकण्ठः—इदं सर्व्वं जगत् तु व्याप्तम् ।

१३ । "वेदोऽसीति" (१०।४०) श्रुतेर्जीवमात्रस्य वेदप्रभवत्वं यद्यपि स्वाभाविकं तथापि तेषु केषुचिदस्फुटतया केषुचित् प्रकटतयाऽसौ विराजते । एवं तस्य विराजमानतायाः कारणं दर्शयति श्वेताश्वतरः स्वदृष्टान्तेन तपइति । तपःप्रभावात् मननादिसामर्थ्यात् वेदप्रसादात् ज्ञानस्वरूपस्य अनुग्रहात् च विद्वान् श्वेताश्वतरः परमं पवित्रम् ऋषिसंघजुष्टं ऋषिसमूहसेवितं ब्रह्म वेदं अत्याश्रमिभ्यः आश्रमधर्म्मविरक्तेभ्यः प्रोवाच ।

तद्ब्रह्म कस्मै दातव्यं तदाह वेदान्ते इति । पुराकाले आदिपुरुषाय प्रचोदितम् उपदिष्टं वेदान्ते परमं गुह्यं तत् ब्रह्म न अप्रशान्ताय न चञ्चलचित्ताय, न अपुत्राय, न वा पुनः अशिष्याय दातव्यम् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः
प्रकाशन्ते महात्मनः॥ श्वे ६।२१—२३।

कथं वाऽयं नियमः कुतस्तत्कारणमाह यस्येति। हि यस्मात् यस्य देवे परम पुरुषे परा विषयानुरागाव्यवधाना भक्तिः, यथा देवे तथा गुरौ उपदेष्टरि परा भक्तिः, एते कथिताः अर्थाः तस्य महात्मनः समीपे प्रकाशन्ते, विना हि भक्तिं न जातु गूढोऽर्थः प्रतिभाति—अनुरागनिर्मले हृदये तस्य स्वतः प्रतिभासमानत्वात्। द्विरभ्यासोऽध्यायसमाप्त्यर्थः।

*
* *

वस्तुतस्तत्त्वानां समन्वयोऽभूदिति मनसिकृत्य सर्व्वेषां वादिनां मतसामञ्जस्यविधानाय प्रयत्नः स्वभावतः समुपतिष्ठते। प्रकृतिः पुरुषः परात्मा चेति तत्त्वत्रयमविरोधितया श्रुतिः सर्व्वत्र प्रादर्शयत्। एकविज्ञानेन सर्व्वविज्ञानं वेदान्तस्य प्रतिज्ञा, सुतरां वेदान्ते ब्रह्मविज्ञानस्य प्राधान्यं, सांख्यादिषु न पुनस्तथा। यत्सत्तया प्रकृतिपुरुषयोः सत्ता तदेव वेदान्तसूत्रे मुख्यं, इयमन्यत् तत्र गुणीभूतम्, तद्विशेषज्ञानन्तु दर्शनान्तरादवगन्तव्यम्। तथा हि गौरवगरिमा विज्ञानभिक्षुः— "या चेयं योगसांख्ययोः प्रमाणतत्फलादिप्रक्रिया प्रदर्शितैवात्रापि दर्शने ग्राह्या प्रमाण-प्रमादिप्रक्रियाया अत्रानुक्तत्वादविरोधाच्च। स्वकीयतन्त्रानुक्तेऽर्थे स्वतन्त्राविरुद्धस्य परतन्त्रसिद्धान्त-स्यैव सर्व्वतन्त्रसिद्धत्वात्, अन्यथा निर्णयासम्भवात्। अतो ज्ञानोत्पत्तिप्रक्रियायामात्मानात्म-विवेके पदार्थनिरूपणादौ च सांख्ययोगोक्तसिद्धान्त एव मन्वादिसमादृततया ग्राह्योऽस्मद्दर्शनसूत्राभा-वात्।........स्मृतास्त ज्ञानोत्पत्तिप्रक्रियाया अभावेन तयोः प्रक्रियैव ग्राह्याऽनरक्तत्वात्। सांख्य-योगयोश्चेत्थं ज्ञानोत्पत्तिप्रक्रिया—विषयेन्द्रियसंयोगादिना बस्तमालिन्यस्यैव यौद्धतमोद्रव्यस्यापसा-रणे सति यथा निर्म्मलवस्त्रे कुसुम्भसंयोगात्तु कुसुम्भाकारता भवति तथैव निर्म्मले बुद्धिसत्त्वे विषय-संयोगात् विषयाकारा भवति। सा बुद्ध्यवस्था विषयाकारा बुद्धिवृत्तिरित्युच्यते। सा तु स्वप्न-ध्यानादौ बाह्यविषयाभावकाले विषयतुल्या बुद्ध्यवस्थाऽन्तरैवोपलभ्यमाना केनाप्यपलपितुं न शक्यते। सा वृत्तिः—'प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः (१।६)' इति योगसूत्रेण वृत्तिविभ-जनात्। वृत्तेश्च प्रमाणत्वमनुभवाख्यफलायोगव्यवच्छिन्नत्वात्, रथारूढस्य ग्रामसम्बन्धं रथस्येव चेतनस्य विषयसम्बन्धं वाच्यत्वाच्च। सा वृत्तिर्जायमानेव चेतने प्रतिबिम्बिता भवति 'वृत्तिसारूप्य-मितरत्र' (१।४) इति सूत्रयोगात्। ततश्च स्वप्रतिबिम्बिता विषयोपरक्तां तां बुद्धिवृत्तिं स एव

प्रतिबिम्बाधिष्ठानचैतन्योऽवभासयति यथा स्वप्रतिबिम्बितकुसुमरक्तिमानं स्फाटिकभित्तिः। 'चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्' (४।२२) इति योगसूत्रात् तदाकारापत्तौ—बुद्धिसमानाकारतापत्तौ सत्याम्—अप्रतिसंक्रमायाः—बुद्ध्यवस्थासंचारिण्याः अप्रसक्तायाः अपि—चितेः स्वीयोपाधिबुद्धिसंवेदनं भवतीत्यर्थः। तदुक्तं—

'तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥'

तथा च चेतने प्रतिबिम्बनादेव बुद्धिवृत्तितद्विषययोर्भानं मरुमरीचिकाध्यस्तजलस्येव मरीचिकाप्रकाशनमिति। न ह्यन्यथा विभोश्चित्स्वरूपस्यात्मनः सदा सर्व्वसंयोगेन कादाचित्कं परिच्छिन्नञ्च विषयसंवेदनं केनाप्युपपादयितुमञ्जसा शक्यते। अस्मदुक्तप्रकारे तु बुद्धिवृत्तेः कादाचित्कत्वेनाप्रतिबद्धात् विषयप्रतिबिम्बस्य कादाचित्कत्वेन परिच्छिन्नत्वं चोपपद्यते। यथा च सन्निकर्षसाम्येऽपि चक्षूरूपमेव गृह्णाति न रसं, तथैव सर्व्वसंयुक्तोऽप्यात्मा स्वबुद्धिवृत्तिमेव साक्षात् गृह्णाति नेतरदिति फलबलात् कल्पनमर्थाकारतयैव चार्थग्रहणम्, सा च कूटस्थे प्रतिबिम्बाद्यन्यद्युक्ता। अतो बुद्धिवृत्तेरेव चेतने साक्षात् प्रतिबिम्बनसामर्थ्यं नेतरस्येत्यपि कल्प्यते बुद्धिवृत्तेरेवाज्ञातसत्ताभावान्नेतरस्येति। तस्मादर्थोपरक्तवृत्तिस्फुरणार्थं चेतने तत्प्रतिबिम्बः सिद्ध्यति।.........तदेतत् बुद्धिपुरुषयोः परस्परप्रतिबिम्बनं वेदान्तिभिः परस्पराध्यास इत्युच्यते। यत्तु अनयैव रीत्या चेतनेऽध्यस्ततया जगतः प्रकृतिपर्य्यन्तस्य सिद्धत्वात् चिदेवैकं तत्त्वम्, अन्यत् सर्व्वं दृश्यजातं मरीच्युदकादिवत् तुच्छमित्याधुनिका विवर्त्तवादिनोऽभ्युपगच्छन्ति तन्न। तथापि बिम्बरूपाणामिव प्रतिबिम्बरूपेणैव भानात् प्रतिबिम्बरूपतया चैतन्ये बाधेऽपि स्वतो बाधाभावादिति। तदुक्तं साङ्ख्ये 'सदसत्ख्यातिर्बाधाबाधात् (५।५६)' इति। एतेनात्मतत्त्वस्वरूपमपि करतलामलकवत् प्रतिपादितं, तथाहि—यदेतत् घटपटाद्याकारैरवभासमानं चैतन्यं, एतदेवाकारविवेकेनात्मतत्त्वं भवति, स्वप्रतिबिम्बितमुखादिविवेकेन दर्पणतत्त्वमिव 'तदा द्रष्टुः स्वरूपेऽवस्थानम् (१।३)' इति योगसूत्रात्।.........या चेयं ज्ञानोत्पत्तिप्रक्रिया बहिर्विषयेष्ववधारिता एषैवात्मन्यपि प्रत्येतव्या, एकरूपकल्पनायाः सर्व्वथैवौचित्यात्। तथाहि शास्त्रादिना योगधर्म्मेण वा बुद्धेस्तमोऽभिभवे सति निर्म्मलायां बुद्धावात्माकारा वृत्तिर्जायते 'अहं ब्रह्मास्मि' इत्यादिरूपा सा प्रमाणम्, सा च वृत्तिर्जायमानैव चेतने प्रतिबिम्बिता सती भासते, तदेतत् पुरुषनिष्ठफलमात्मज्ञानमुदेति। घटादिज्ञानादात्मज्ञानस्यायं विशेषो यदात्मतत्त्वाकारवृत्त्या अभिमानो निवर्त्तते, घटाद्याकारबुद्धिवृत्तिभिस्तु मिथ्याज्ञानं न नियमेन निवर्त्त्यत इति।" इति।

अथाद्योऽस्मिन् विमृष्टमाकरपद समर्थेन व्याख्यातव्यविषयान् व्याख्यातवानिति क्रममुक्त्वा

तत्त्वानां समन्वयसाधनेऽत्र यत्नो नानपेक्षित इति मन्यामहे। प्रथमन्तावत् तत्त्वानां सत्यत्वं विचार्य्यम्। विषयविषयिणोः सत्यत्वमेव सर्व्वत्र प्रतिज्ञातम्। "नापि भगवान् बादरायणः क्वचिदपि सूत्रे संसारस्याज्ञानकल्पितत्वमुक्तवान् प्रत्युत स्वप्नसृष्टिनिराकरणेन जाग्रत्सृष्टेः सत्यत्वम्" इति (३।१५७पृ) यदुक्तं श्रीमत्स्वप्नेश्वरेण सूत्रविषये, समग्र वेदान्तविषये तदेव योज्यम्। "त इमे सत्याः कामा अनृतापिधानाः" (११।२१) इत्यत्रत्येनानृतशब्देन मिथ्याज्ञानपरिकल्पनं पूर्व्वापरवाक्यानां पर्य्यालोचनया न प्रतिपद्यते, कामानां सत्यत्वात् तिरोहितस्वरूपत्वेऽपि हार्द्दाकाशे प्रच्छन्नतया तेषां विद्यमानत्वात् "सदसत्ख्यातिर्बाधाबाधात्" (५।५६) इति सांख्योक्तप्रक्रियात एव यत् प्रवर्त्तते। न खलु वक्तव्यं सांख्यप्रक्रिया न श्रुतिमूलिकेतीश्वरास्वीकारेऽपि श्रुतिवाक्यानां तत्र प्रमाणतया परिग्रहात्। इदमवश्यमभ्युपगन्तव्यं यत् प्रत्यक्षविषया श्रुतिरुपजीव्यमनुमानस्य। श्रुत्यनुमोदिता सांख्यप्रक्रिया वेदान्तस्याप्यप्रक्रियेति सुधीभिर्विना वादेनावश्यं स्वीकर्त्तव्यम्। एवञ्च न दृश्यते कुत्रापि वेदान्ते प्रक्रियाया अस्या विप्रतिवादः। यत्र तु ब्रह्मतत्त्वं विना तत्त्वमन्यदस्वीकृतमित्युपलभ्यते तत्राविभक्तत्वं स्वरूपाविलुप्तत्वञ्च तत्त्वानां स्वयं श्रुतिरेव कण्ठरवेण घोषयति। तद्यथा "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्।" (३।५८पृ) इत्याद्यासु विषयविषयिणोरविभक्तत्वमविलुप्तशक्तित्वञ्च प्रदर्श्य "सलिल एको द्रष्टाऽद्वैतो भवति एष ब्रह्मलोकः" इति विषयेरविभक्तस्य विषयिणः प्राज्ञालिङ्गनद्वारेण ब्रह्मण्येकत्वं नास्य विलोपसाधकमिति "एषाऽस्य परमा गतिः" इत्याद्याभिः स्फुटं सूचयति। वेदान्तप्रोक्तमविभक्तत्वं भवति तदनुमोदितसांख्यप्रक्रियासिद्धमिति साधनाभिरवगन्तव्यम्। ब्रह्ममननेनान्यमननं तिरोधायापरेषामसत्त्वं ब्रह्मण सत्त्वं साक्षात्कारविषयं भवतीति योगप्रक्रियैषा तेषामभ्यर्हिता। ननु "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यनेन विषयिणोऽविलुप्तशक्तित्वं विस्पष्टं न पुनर्विषयस्य। अस्त्येव तत्राविलुप्तशक्तित्वमुभयोर्यतः "पश्यन् वै तन्न पश्यति" इत्यनेन शक्तिमात्रे पर्य्यवसन्नं विषयमनुभवति न तद्विकारजातमिति—तत्त्वत्रयाणामेकत्वेनैकत्रावस्थितिरविभक्ततया स्वरूपानपहान्या चोपलभ्यते। स्वरूपमत्र पुनर्निरुपाधिकं ज्ञानञ्च वस्त्विति नाविभागविरोधि, अविभागस्यैव पारमार्थिकत्वात् योगावस्थायां स एव सर्व्वत्र कीर्त्यते, व्यावहारिकावस्थायां पुनरेकस्य परब्रह्मणो भोक्तृभोग्यप्रेरयितृरूपस्त्रिविधो विभागः। व्याकारापरनामा व्यवहार इति पूर्व्वमुक्तम् (१६४पृ)। एवञ्चैकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञाहानिर्मन्यसे तत् तुच्छम्; परा चापरा च शक्तिर्ब्रह्मणोऽनन्या, न ताभ्यामेकत्वहानिस्तस्यैत्यस्यावश्याभ्युपगन्तव्यत्वात्। अतएव हि वेदान्तभाष्यभूता गीतोपनिषत् "एतद्योनीनि भूतानि" (७।६) इत्याह। वेदान्तसूत्रस्य प्रथमाध्यायस्य चतुर्थपादस्था-

मेवानुसरतीति विज्ञाय विज्ञानभिक्षुकृततद्व्याख्यानमेव वयं बहुमन्यामहे। तदादिमसूत्रस्य व्याख्याने ऽन्यैर्भाष्यकारैर्या श्रुतिरुद्धृता न साऽस्य विषय इति स्वल्पविचारेणैव प्रतिभाति। "आत्मानं रथिनं विद्धि शरीरं रथमेव च (७।६)" इत्यत्र शरीरस्य रथरूपत्वं न लभ्यमस्य। तत्र यत् "इन्द्रियेभ्यः परा ह्यर्था" इत्यादिनोत्तरोत्तरश्रैष्ठ्यं प्रादर्शि तत्तु संयमालम्बनानामुत्तरोत्तरश्रैष्ठ्यप्रदर्शनायेत्युद्देश्ये भिन्नतैव। तथैवास्याः श्रुतेर्नियोगो दृश्यते गीतोपनिषद्यपि। "आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (१।४।१)।" इत्यस्य व्याख्यानेऽयमर्थो निष्पन्नो भवति—एकेषां शाखिनां मते आनुमानिकमपि—प्रधानमपि—जगत्कारणमिति चेत्, तन्न। कथम्? शरीररूपकविन्यस्तगृहीतेः—शक्तित्वादशरीरत्वेऽपि शरीररूपकविन्यस्तस्य—शरीरमेवरूपकं विन्यस्तं यस्मिन् तस्य—प्रधानस्य ग्रहणात्—स्थूलप्रसवधर्मित्वमेवास्यारोपस्य मूलम्। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् (८।११)" इत्यत्र 'प्रजाः सृजमानाम्' इत्युक्तेरादजायानिरपेक्षप्रजासृष्टिः प्रतीयते, तन्न। कथम्? उपमानोपमेययोरभेदरूपेण रूपकेणात्र अजा यथा बह्वीः प्रजाः प्रसूते तथा अजारूपा प्रकृतिः बह्वीः प्रजाः सृजतीत्युक्त्वा रूपकेण समग्रायाः प्रकृतेः शरीरित्वं साधितं, न तु कारणस्य ब्रह्मणस्तथात्वं क्वापि दृश्यते, तथा सति स्वरूपप्रच्छादनेन तस्य कारणत्वस्यैव हानिः प्रसज्येत। अतएव हि सर्वत्र सृष्टिप्रकरणे तस्यात्मतया ग्रहणं न जातु मुख्यापनीयते। यथा

"अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥ (८।३)"

इत्यत्र रूपकत्वेऽपि "सर्वभूतान्तरात्मा" इत्युक्तेस्तत्रात्मत्वमस्यापहतम्। अजारूपायाः प्रकृतेरूपमानभूताया अजाया यथाऽजसंसर्गात् प्रजाप्रसवधर्मित्वं तथा अजस्य जन्मरहितस्य परमात्मनोऽधिष्ठानादेव प्रजासर्जनम्,—'दर्शयति च'—तत् स्वयं श्रुतिरेव—"जहात्येनां भुक्तभोगामजोऽन्यः"—भुक्ताः पालिताः क्रीडापिताः भोगाः विषयाः यस्याः। ततो विषयाणां तत्प्रसूतानां प्रकाशः परात्मन एव। 'जहात्येनाम्' इति वचनेन प्रकृतिनिरपेक्षा तस्य विद्यमानता नियन्तृतयेति सिद्ध्यति। कृत्स्नत्वरूपणं मनसिकृत्य प्रकृतावजा जन्मरहितेत्यर्थग्रहणं तेजोऽबन्नरूपविभक्तावस्थाव्यञ्जकेन 'लोहितशुक्लकृष्णाम्' इति विशेषणेन बाध्यते। परमात्मनि त्वजानिरपेक्षत्ववचनात् जन्मरहितत्वं मुख्यार्थः। कृत्स्नत्वघटितव्यङ्ग्यार्थं 'भुक्तभोगाम्' इत्यस्य च श्लिष्टार्थं स्वरूपहानिप्रसङ्गादुपेक्षन्ते सुधियः। 'दर्शयति' इति सूत्रेण सूत्रकारस्याप्ययमभिप्राय इति सूच्यते। "परात्मैव तत्प्रकृतिस्तद्योनिस्तद्बीजमिति वेदान्तकृतान्तः" इति यत् पूर्वमुक्तं (१५४पृ) तेनायं सिद्धान्तो बाध्यत इति चेत् न, प्रकृतेरङ्गत्वात् परात्मा प्रकृतिः परात्मनो वा प्रकृतिरिति वचने

बाधाभावात्। अनेन च विविधभाष्यकारैरविरोध उपतिष्ठत इति 'वेदान्तशास्त्र:' इति अयन' सुधीभिर्विवेक्तव्यम्। 'नाप्रयम्' इति निषेधवचनात् पूर्व्वभाविभक्तावस्थाया अथ पुनर्व्विभक्ताव-स्थाया निवचनमित्यपि तैरवधारणीयम्।

सिद्धान्तस्यास्य तत्त्वानां सत्यत्वप्रतिपादकस्य वेदान्तप्रतिष्ठितत्वे वेदान्त एव प्रमाणम्। तद्यथा,

"उद्गीतमेतत् परमन्तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरञ्च।

अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः॥"

( १।२।११ ) इति।

अनन्तमपर्य्यैकयाऽभ्युक्तं तदेव समयमाख्युक्तोपनिषद्यतिविशदतया प्रख्यातम्। भोग्यं भोक्ता प्रेरयिता परञ्च ब्रह्मेत्यात्मा चतुष्पात्तेन तत्रोपवर्ण्यते। न खलु वक्तव्यं, पादत्रयमत्र मायिक-मलीकं तुरीयमेवैकं सत्यमिति तथा सति तुरीयस्यैवाप्रामाण्यमुपतिष्ठते। उक्तञ्च भाष्यकारैश्च "यदि हि त्र्यवस्थाविलक्षणं तुरीयमन्यत् तत्प्रतिपत्तिद्वाराभावात् शास्त्रोपदेशानर्थक्यं शून्यताप-त्तिर्व्वा" इति। वदसि चेदवस्थात्रयेण मायिकेनालीकेनेन्द्रजालिकवत् तत्कारणत्वेन ब्रह्म विज्ञा-तव्यं, विज्ञाते पुनस्तस्मिन् वितथस्य तस्य सर्पवत् मिथ्यात्वं, सत्यत्वं पुनस्तुरीयस्य रज्जुवदिति न कोऽपि दोष इति; काऽसौ माया येवमुपकरोति तुरीयज्ञानलाभाय, कोऽसौ पुनर्यमुपकरोति सा? इत्यादिविविधप्रश्नैर्व्याकुलः—"परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युप-गम्यते न स्वतन्त्रा। सा चावश्यमभ्युपगन्तव्या, अर्थवती हि सा। न हि तया विना परमे-श्वरस्य स्रष्टृत्वं सिद्ध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः" ( १।४।३ भा ), "कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यम् ( २।१।१८ भा ) "यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति एवं कार्य्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति।" ( २।१।१६ भा ) "ब्रह्मस्वरूपो हि प्रपञ्चः" ( ३।२।२१ भा ) "उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः। श्रुतौ तावत् 'अनेन जीवेनात्मना' इति सर्गमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेना-भिलपन्ननादिसंसार इति दर्शयति। आदिमत्त्वे तु ततः प्रागनवधारितः प्राणः स कथं प्राण-धारणनिमित्तेन जीवशब्देन सर्गमुखेऽभिलप्येत" ( २।१।३६ भा ) "सर्व्वञ्च नामरूपादि सदात्म-नैव सत्यं विकारजातं स्वतस्त्वनृतमेव ...... तथा जीवोऽपि" ( छा, भा, ) इत्यादीन् भाष्यकारवत् यः कोऽपि स्वीकुर्य्यात्। वेदान्ते सर्व्वत्र विभक्तादारोप्यमविभक्तं दृश्यते। विभक्तं व्यावहारिकं व्याकृतम्, अविभक्तं पुनः पारमार्थिकमव्याकृतमिति तत्रैकस्यासत्त्वमपरस्य सत्त्वमिति ये मन्यन्ते ते सदसद्बाधाबाधाभ्यामिति वेदान्तानुमोदितसांख्यप्रक्रियां विसृज्य तद्विपरीतपन्थानमवलम्बन्ते। "असद्वा इदमग्र आसीत्" (२।६) "आत्मा वा इदमेकएवाग्र आसीत्" ( ८।७ ) "सदेव सोम्येदमग्र

आसीदेकमेवाद्वितीयम्" (८।६) "ब्रह्म वा इदमग्र आसीत्" (८।११) इत्याद्यखिलशब्दैर्न विभक्तं व्याकृतं विश्वं गृह्यते। ततो विभक्तात् सदसद्‌ब्रह्मेत्यविभक्तं समारोहणम्। अस्मादविभक्तात् विभक्तानां विनाशादेन प्रोद्भवः

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं
तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं
तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥
यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात् केशलोमानि तथा चरात् पुरुषात् सम्भवतीह विश्वम्॥"
"सतो वै सदजायत। तदात्मानं स्वयमकुरुत"
"स ईक्षत लोकान् नु सृजा इति। स इमान् लोकानसृजत"
"तदैक्षत बहुस्यां प्रजायेयेति"
"तदात्मानमेवावेत् अहं ब्रह्मास्मीति, तस्मात् तत् सर्व्वमभवत्"

इत्यादिषु वाक्येषु सुव्यक्तं प्रतिभाति। इत्यादवरोहः समारोहः, ततोऽवरोहश्च समवरोह इत्येषा प्रक्रिया प्रतिदिनं जाग्रत्स्वप्नसुषुप्तिदशायामुपलभ्यत इति प्रत्यक्षव्यापारमिममेवाव-लम्ब्य श्रुतिः सृष्टस्रष्टोः सम्बन्धरहस्यं प्रदर्शितवती। जाग्रदवस्थायां द्यु-सूर्य्य वाय्वादिविषयैः प्राणमनोबुद्ध्यहङ्कारचित्तज्ञानकर्म्मेन्द्रियाणां सम्बन्धात् बहिःप्रज्ञत्वं, स्वप्नावस्थायां वासना-कारेण प्रकाशमानैर्न्तर्विषयैः प्राणादीनां सूक्ष्मज्ञानाकारेण भासमानानां सम्बन्धादन्तःप्रज्ञत्वं, सुषुप्त्यवस्थायामन्तर्बहिर्विषयकरणानां ज्ञानाकारेणैकत्वात् सुखानुभवलक्षणप्रज्ञानघनत्वमेकस्यै-वात्मनस्त्रिपात्त्वं तत्तदुपाधिसम्बन्धात्। बहिःप्रज्ञत्वादिसकललक्षणविलक्षणस्य निरुपाधिकस्य तस्य शिवत्वं सर्व्वात्मत्वमन्तर्भूय सर्व्वतोविसारि "यत्ते रूपं कल्याणतमं तत्ते पश्यामि" (१।२) इति लिङ्गादवगन्तव्यम्। शिवस्वरूपेऽस्मिन् तुरीये पादचतुर्थी विभक्तावस्था विलुप्ता तथा-विभागेन तेषां स्थितिवशादिति चेत्, कथं तेषां ततः प्रज्ञानघनत्वादिरूपेण पुनः प्रकाशः सम्भवति? सम्भवत्यात्मत्वेन प्रेरकत्वेनेति "तदात्मानं स्वयमकुरुत" "स ईक्षत" "तदैक्षत" "तदात्मानमेवावेत् अहं ब्रह्मास्मीति" इत्याद्याः श्रुतयो दर्शयन्ति। यदविभागावस्थायामप्यात्म-त्वात् प्रेरकत्वं नियन्तृत्वं न तं जहाति किमनेनाविभागपरिकल्पनेनेति। इहस्वादनन्तत्वात् व्यक्ताव्यक्तभावस्याविरुद्धे दोऽवस्थाद्वयी तस्मिन्निति युगपदेव तस्मिन् सर्व्वातीतत्वं सर्व्वगतत्वं, तदेव च विभागाविभागपरिकल्पनमुद्भावयति। यद्यत्र पुनरात्मत्वमभवति न तन्नियन्तृ शक्यते तेनेत्या-त्मनो व्यापित्वं तन्नियन्तृत्वपरिच्छिन्ने हेतुः। कथमेकस्य तस्य बहिःप्रज्ञत्वादिविभागः? जाग्र-

इदवस्थायां यदा जीवो वहिर्विषयेषु चित्तादीन् नियोजयति, तदासौ प्रेरयिता वहिर्विषयकं ज्ञानं सञ्चिष्य ज्ञापयति । सुतरां वहिःप्रज्ञसंज्ञया तं विभजन्ति तज्ज्ञाः । एवं स्वप्ने सुषुप्ते च विज्ञेयम् । सुषुप्ते 'एकीभूतः प्रज्ञाघनः'' इति पाठो भाष्यसम्मत इति परिलक्ष्यते । अर्थे पुनरविशेषात् माण्डुक्योपनिषत्कारिकाव्याख्यायान्तु 'एकीभूतः प्रज्ञानघनः' इति पाठदर्शनात् श्रीमद्भास्करानन्द-स्वामिभिः 'प्रज्ञानघनः' इति पाठोऽत्र परिगृहीतः, तुरीये प्रोक्तं 'न प्रज्ञानघनम्' इत्यनेन सामञ्जस्यरक्षणाय । प्रज्ञानघनएव निषेधकोटिमारोहति न त्वानन्दमयः, 'शान्तं शिवम्' इत्यनयो-रस्यानन्यत्वात् । 'प्रज्ञानघन एवानन्दमयः' इत्यत्र एवशब्दश्चेतोमुखेनानन्दसम्भोगवशादभिभूतस्य जीवस्यानन्दमयेनातिरिक्तभावेन स्थितिं सूचयति । अत्रापि सदसद्बाधाबाधाभ्यामिति नियमस्य सामाज्यं जीवस्य युगपत् सर्व्वदर्शनसामर्थ्याभावात् । किन्तु भगवत्कृपया युगपत् त्रितयस्यैकेन परिग्रहः सम्भवति ? सम्भवति ज्ञाने, तत्र त्रयस्यैकाकारत्वात्, न तु सम्भोगे, भिन्नभिन्नरसानुभवस्य तत्र स्वाभाविकत्वात् ।

त्रितयस्य तुरीयस्य च साक्षात्कारविषये परमोपकारिणी श्रुतिः पद्यानमदर्शयत् । सोऽत्र साधकानां हितार्थं वैदान्तिकसम्प्रदायानां विरोधभञ्जनार्थं च पर्य्यालोच्यते । स च चतुर्धा विभक्तः—वहिर्जगति चान्तर्जगति शारीरपुरुषे च प्रकाशमानस्यात्मनस्तुरीयस्य च साक्षात्कार-भेदेन ।

तत्र प्रथमः ।

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥
सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्वाह्यदोषैः ।
एकस्तथा सर्व्वभूतान्तरात्मा न लिप्यते लोकदुःखेन वाह्यः ॥
एकोवशी सर्व्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥
नित्यो नित्यानां चेतनश्चेतनानामेकोबहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

( ५।६ ) ।

एताः श्रुतयः पथप्रदर्शनमकुर्व्वन्। तथापि द्रष्टाऽहमीशोऽहमाहमत्र इत्यादीश्वरेशवर्त्तमः साधनार्थिभिरभ्युपगन्तव्यः। 'रूपं रूपं प्रतिरूपो बहिश्च' इत्यत्र बाह्यात् रूपात् सर्व्वभूतनिव-त्स्यात्मनो रूपं—तदनुरूपतन्नियमनस्वरूपं—पृथगतो निर्णीय ततस्तदनुरूपतन्नियमनस्वरूपात् बाह्य-रूपस्याविर्भाव इति विभाव्यते। एवञ्च प्राणस्य प्राणः, चक्षुषश्चक्षुः, श्रोत्रस्य श्रोत्रं, सूर्य्यस्य सूर्य्य इति नियाम्यनियन्त्रोः नित्यसम्बन्धमनुभूय नियाम्यमात्रस्य दर्शनादौ भवति तन्नियामकस्य च परात्मनो दर्शनादिकं तेन नित्यानुस्यूतत्वादिति हेतोः वेदान्ते तस्यैकस्योल्लेखे "सर्व्वत्र प्रसिद्धोप-देशात् ।१।२।१।" इत्यन्यस्योपदेशो भवतीति निर्णीतम्। आकाशादीनामुल्लेखे भवति व्यक्त-स्याव्यक्तानुक्तेऽपि तत्तन्नियन्तुरुल्लेख इति वेदान्तशैली। सा तु "प्राणस्य प्राणः" इत्याद्युक्तितो विस्पष्टी-कृता। यत्र तदनुरूपतया नियन्तुः साक्षात्कारो भवति, न तत् तमात्मन्यवरुणद्धि तदतीतोऽपि स इति प्रदर्शनाय 'रूपं रूपं प्रतिरूपो बहिश्च' इति बहिःशब्दः। एवञ्च प्राणादौ तत्प्राणादि-रूपेणानुभूयमानः परात्मा न निरवशेषो भवति तस्य बृहत्त्वमनन्तत्वञ्च साधकहृदये नित्यजागरूकतया रक्षति सः। यत्रायं साक्षात्क्रियते तद्दोषैर्नायं लिप्यते सूर्य्यादिदृष्टान्तेन तत् प्रतिपाद्यते। एकोऽपि सन् बहुधात्मप्रकाशं करोति स रूपं रूपं प्रतिरूपत्वेन। प्रथमपादोपयोगिश्रुतिनिचय-मेव ये निखिलवेदान्तवाक्यानामर्थनिष्पत्तये योजयन्ति तेषां मते भोग्यं भोक्ता प्रेरयितेति त्रितयं नित्यमविभागेन तिष्ठति। त्रितयस्यैकं स्वतन्त्रं द्वयं तत्परतन्त्रमिति विशेषः। अभेद-श्रुतिस्तु नियन्त्रपेक्षया।

श्रीमन्मध्वः।

श्रीमन्मध्वः पञ्चमतमवलम्ब्य भाष्यमकरोत् सम्प्रदायञ्च प्रावर्त्तयत्। सुतरां तन्मते परा प्रकृतिः परात्माधीनेत्र—

"नासत्यो भेदः ( जीवेशयोः ) ( १।२।१२ )।"

"न चैक्यं वाच्यं ( तयोः ) (१।३।५ )।"

"सोऽहमस्मीत्यादिरन्तर्याम्यपेक्षया ( १।२।१३ )।"

"नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ( २।३।१९ )।"

"विभक्तत्वाच्च विकारित्वं युक्तं, विकारिण एव हि विभक्ता लोके दृश्यन्ते—

'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते।

प्रकृतिः पुरुषः कालस्त्वयएते विभागिनः॥' (२।३।७)।"

"भिन्न एव जीवः ( २।३।२८ )" तथापि

"ज्ञानानन्दादिब्रह्मगुणा एवास्य यत सारः स्वरूपमतोऽभेदव्यपदेशः।

यथा सर्व्वगुणात्मकत्वात् सर्व्वात्मकत्वं ब्रह्मण उच्यते 'सर्व्वं खल्विदं ब्रह्म' इति

( २।३।२९ ) ।"

"जीवोऽपि कर्त्ता ( २।३।३३ ) ;"

"यथाज्ञाने इदं जानामीत्यनियम: प्रतीयते एवं कर्म्मण्यपि जीवस्य ।

कुत: ? अल्पशक्तित्वाज्जीवस्य ( २।३।३७।३८ ) ।"

"सा च कर्त्तृत्वशक्ति: परादेव ( २।३।४१ ) ।"

"परानुज्ञया प्रवृत्ति: परतोबन्धनिवृत्तिश्च जीवस्य प्रतीयते (२।३।४८) ।"

"जीवेनैव स्वकरणै: कारयति परमात्मा (२।४।१६) ।"

"अनादिनित्यत्वाज्जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुति: (२।४।१७) ।"

"ये भोगा: परात्मना भुज्यन्ते तएव मुक्तैर्भुज्यन्ते (४।४।४) ।"

"शरीरमनुविश्यापि तत् प्रकाशयन्त: पुण्यानेव भोगाननुभवन्ति न दु:खादीन् (४।४।१५) ।"

"सर्व्वान् कामानाप्ता अमृत: समभवदित्युच्यते ।

तत्र सृष्टादिभ्योऽन्यान् व्यापारानाप्नोति (४।४।१७) ।"

"विकारावर्त्तिव्यापारोमुक्तानां न विद्यते (४।४।२०) ।"

"तत्रानन्दादीनां वृद्धिर्ह्रासश्च न विद्यते । एकप्रकारेणैव सर्व्वदा स्थिति: ( ४।४।२१ ) ।" । * ।

अपरा प्रकृतिस्तु सर्व्वथा परतन्त्रा—

"चशब्देन ( द्रव्यं कर्म्म च कालश्च इति ) प्रकृतिसत्त्वादिप्रदत्वम् (२।१।५) ।"

"तदभिध्यैव च प्रकृतिशब्देनोच्यते (१।४।२५) ।"

"प्रकृतिशब्दवाच्योऽपि स एव ( १।४।२४ ) ।" तत्र कारणं

"प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च । प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणाम-नियामकतया तत्र स्थित्वा आत्मनोबहुधाकरणात् (१।४।२७) ।" इति । * ।

नियन्ता पुन:—

"अधिदैवादिषु तद्धर्म्मव्यपदेशात् विष्णुरेवान्तर्यामी (१।२।१८) ।"

"वहत्वं चाविकारेणैवोक्तम् ( १।३।१३ ) ।"

"स्वतन्त्रा बहुसाधना सृष्टिर्लोके दृष्टा नैवं ब्रह्मण:, किन्तु स्वरूपसामर्थ्यादेव तस्य सृष्टि:

( २।१।१५ ) ।"

"न च ब्रह्मण: श्रमचिन्तादिदोषैर्भि:, अधिकशक्तित्वात् (२।१।२४) ।"

"परात्मनो विचित्राश्च शक्तय: सन्ति नान्येषाम् (२।१।२९) ।"

"न केवलं विधिवशक्तिः किन्तु सर्वशक्तिरेव (२।१।३१)।"

"यदात्मको भगवान् तदात्मिका व्यक्तिः। किमात्मको भगवान्? ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक इति (३।२।४१)।"

"स्थानापेक्षयापि परमात्मनो न भिन्नं रूपम् (३।२।११)।"

"प्रकृत्यादिप्रवर्त्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म (३।२।१४)।"

"वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वम् (३।२।१६)।"

"न कर्म्म परप्रवर्त्तकं पर एव कर्म्मणः प्रवर्त्तकः (३।२।४२)।"

"सर्व्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः (३।३।६)।"

"आध्यानार्थं हि सर्व्वे गुणा उच्यन्ते (३।३।१५)।"

"आत्मेत्येवोपासीत इत्यनुपसंहारे प्रमाणम् (३।३।१६)।"

"सर्व्वगुणानामन्वय आत्मशब्दे भवति (३।३।१८)।"

"सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः (३।३।३९)।"

"सत्यो ज्ञानः परमानन्दरूप आत्मत्येवं नित्यदोपासनं स्यात् (३।३।६८) इति।

रूपोपहितत्वादस्मिन् पक्षे स्थूलमचित् स्थूलचित् ब्रह्मणोऽत्यन्तं भिन्नम्। तमदभिव्यक्तौ ज्ञानशक्त्यैश्वर्यदर्शनं प्रधानम्।

तत्र द्वितीयः।

**"इयं पृथिवी सर्व्वेषां भूतानां मध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु, यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो, यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व्वम्।" इत्यादि प्रक्रम्य "तदेतद्ब्रह्मापूर्व्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूः।" (३।२१)।**

अत्र पृथिव्यादीनां सर्व्वेषां मधुत्वं परस्परोपकारित्वात् तदन्तर्यामिपुरुषस्य सिद्ध्यति। सुतरां तदनुध्यायी जीवस्तमेव नियन्तारं भक्त्यानुगुणचिन्तनानुध्यानेन तत्र तत्र परमोपकारितया पश्यन् तेनैकात्मतमापद्यते। एवमैकात्म्ये सम्पन्ने सर्व्वात्मभावके परब्रह्मणि सिद्धिमासाद्य तदनुभवानुभविता सन् सम्पन्नो भवति सः। अत्रापि 'अयमात्मा ब्रह्म सर्व्वानुभूः' इत्यस्मिन् वाक्ये द्रष्टव्यद्रष्टेऽद्रष्टव्याद्रष्ट्य इति नियतचिन्तनानुगुणतया नियोज्यः। तथाहि पृथिव्यादीनां मधुत्वं कल्याणकारित्वं न जातु विनानुध्यानेन प्रतिभाति। अत्र हि पृथिव्यादिभ्यः साक्षात्सम्बन्धेन सुखमुत्-

पद्यते, न तत्रास्ति सम्भावना कुतोऽस्य प्रवृत्तिरिति निर्णयाय गभीरानुध्यानस्य, किन्तु दृश्यमानानां दुःखादीनां कल्याणे परिणतिर्न यतो दुःखादीनामुत्पत्तिस्ततो भवतीति चिन्तामुद्भावयति। एतया चिन्तया पुनः सर्व्वत्र पापौत्यदोषप्रत्यनीकस्य कल्याणस्यैकस्य विद्यमानतोपलभ्यते। उपलभ्यमानस्य कल्याणस्यास्य प्रवर्त्तयिता स्वयं कल्याणगुण इत्यवधार्य्य तदनुभवः कल्याणानुभव इति चिन्तया प्रत्यक्षीक्रियते। सुतरां चिन्मयोपलभ्यमानात् दृश्यसदृशात् कल्याणात् नियन्तुरदृश्यकल्याणगुणत्वं प्रत्यक्षीकृत्य यथा कर्त्तृत्वात् नियन्तानुभवति सर्व्वेषां कल्याणं तथा भोक्तृत्वात् जीवोऽप्यनुभवति तत्-प्रेरणयेत्यदृश्याद्दृश्येऽवतरणम्। तदेतत्प्रेरणानुसरणे जीवस्य कृतार्थता। एवं नियन्तुः कल्याण-गुणो येषां वेदान्तवादिनां ध्येयः, ते पुनरेकत्वपक्षपातिनोऽपि मुक्तौ तदनुभवितया तिष्ठन्तीत्यवधारणं तेषां द्वितीयपक्षाश्रयित्वस्य लिङ्गम्।

श्रीरामानुजः।

श्रीमद्रामानुजः पक्षमिममाश्रित्य भाष्यमकरोत् सम्प्रदायञ्च प्रावर्त्तयदित्युपलभ्यते। तन्मते प्रकारिणः परात्मनः प्रकारभूतो जीवः—

"[ यदा ] अस्य ईश्वरस्य महिमानञ्च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति ( १।३।४ )।" इति।

"[ प्राक् सृष्टेः ] चेतनवस्तु परित्यक्तनामरूपं ब्रह्मशरीरतयापि पृथग्व्यपदेशानर्हमतिसूक्ष्म-मवतिष्ठते (२।१।३५)।"

"नात्मोत्पद्यते ( २।३।१८ )।"

"ज्ञातृस्वरूपएव न ज्ञानमात्रम् ( २।३।१९ )।"

"नायं सर्व्वगतः (२।३।२०)।"

"आत्मैव कर्त्ता न गुणाः ( प्रकृतिः ) (२।३।३३)।"

"तत् कर्त्तृत्वं परात् परात्मन एव हेतोर्भवति ( २।३।४० )।"

"यथाभूतो जीवस्तथाभूतो न परो यथा हि प्रभायाः प्रभावोऽन्यथाभूतः तथा प्रभास्थानीयात् स्वांशाज्जीवादंशी परोऽप्यर्थान्तरभूतः (२।३।४५)।"

"तत्सङ्कल्पादेवास्य जीवस्य बन्धमोक्षौ श्रुतौ (३।२।४)।"

"सहश्रुतिस्तु ( 'सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा' ) एवंभूतस्यैव ( ब्रह्मसमानभुक्ति-मापन्नस्य ) प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयति (४।४।४)।"

"यतो मुक्तः सत्यसङ्कल्पः, अतएवानन्याधिपतिश्च (४।४।९)।"

"मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते (४।४।१२)।"

"अमुक्तस्य कर्म्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सम्भवति, मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः (४।४।१५)।"

"न चैतेषु जगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति (४।४।१७)।"

"निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारान्तर्वर्त्तिलोकानामपि मुक्तभोग्यत्वम् (४।४।१९)।" ।*।

प्रकृतिः—

"मायाशब्दो विचित्रार्थसर्गकराभिधायी, प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव।"

"परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते मायत्वेन जीवस्यैव मायया तिरोधः (अनुक्त)।"

अतश्च प्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः स्थित्यभिधानात् जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चाचिद्वस्तु नित्यमेव (१।४।२३)।

कारणावस्थायामात्मतयावस्थितः परमात्मैव कार्य्यरूपेण विक्रियमाणद्रव्याणामात्मतयावस्थाय तत्तदभवदित्युच्यते।.........परमात्मा त्वनयोः (चिदचितोः) स्वशरीरभूतयोर्नियन्तृतयात्मभूतः तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते (१।४।२७)।

परात्मा—"परं ब्रह्म......निरस्तनिखिलदोषत्व-कल्याणगुणाकरत्वलक्षणोपेतम् (३।२।११)।"

"जीवस्य कर्म्मतन्त्रत्वात् तत्तत्कर्म्मानुगुणेन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थता, परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात् (३।२।१२)।"

"'सत्यं ज्ञानमनन्तम्' इत्यादि वाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति (३।२।१६)।"

"सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारो नान्यत्र (३।२।२३)।"

"सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म स्थूलचिदचिद्विशिष्टं कार्य्यभूतं ब्रह्मेति कारणात् कार्य्यस्यानन्यत्वम्। कारणभूतब्रह्मविज्ञानेन कार्य्यस्य ज्ञातता (३।१।२९)।"

"येन गुणजातेन विना कृतं ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न सम्भवति तदेव सर्व्वत्रानुवर्त्तनीयम् (३।३।३४)।"

"उपासितुरात्मत्वेन ब्रह्मोपास्यम् (४।१।३)।"

"उपासनोद्योगप्रभृत्याप्रयाणान्मध्ये यः कालः तत्र सर्व्वत्रापि दृष्टमुपासनम् (४।१।१२)।"

"विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यात् उत्तर पूर्व्वाघयोरश्लेषविनाशावुपपद्येते (४।१।१३)।"

अस्मिन् पक्षे रूपोपहितं कार्य्यभूतं स्थूलं चिदचिद्रूपे कारणभूते सूक्ष्मे चिदचिति तिरोधाय तद्विशिष्टे ब्रह्मणि कल्याणैकतानतादर्शनं प्रधानम्।

तत्र तृतीयः।

"सर्व्वं खल्विदं ब्रह्म तज्जलानिति। शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति। स क्रतुं कुर्व्वीत। (२।११)।

"मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादरः।

"एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्व्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः।

"सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः।" (६।४)।

अत्र पुनर्हं स्यादहमश्चं सर्व्वं ब्रह्मणि विलीय तेनाविभक्तभावापन्नः साधको दर्शनश्रवणस्पर्शनमननरसनेङ्गनादौ प्रवृत्तोऽपि ब्रह्मैकरसतापन्नत्वात् तत्सुखत्वमहत्त्वाभिभूतः केवलतद्रसानुभवितया विचरति विना वाङ्निष्पत्तिं विषयान्तरनिरपेक्षः शान्तो द्वेषेर्षादिविरहितः। इत्यादहमश्चेऽहमशाद्दश्च इति नियमोऽत्रापि नियोज्यः। पूर्व्वोक्तं पञ्चदयं आयतनप्राणरूपमयन्तु सुषुप्तस्येति चेत्, दर्शनादौ प्रवृत्तिः कुतः? दर्शनादौ स प्रवृत्तोऽप्यप्रवृत्तवत्, यतः तत्र तत्र नात्मनः किन्तर्हि ब्रह्मक्रियानुभवात् क्रियायाश्च रसत्वात्, रसस्वरूपालिङ्गनसुग्धत्वाच्च सर्व्वत्र तदेकरसानुभवं विनान्यत् किञ्चन तस्मिन्न विद्यते। "सर्व्वं खल्विदं ब्रह्म तज्जलान्" इत्यनत्यानपदस्य क्रियावाचित्वात्, क्रियायाश्च "यद्वैतत् सुकृतं। रसो वै सः" (४।१२) इति रसत्वात् रसस्वरूपे मग्नानां 'कोह्येवान्यात् कः प्राण्यात्' इत्युक्तदिशाऽक्रतुमत्त्वं जातु न सम्भवति। तत्स्वरूपसाक्षात्कारधीशावकत्वे निदर्शनं श्रियोनिरन्तरोद्यमशालित्वम्। "मुक्तानां ब्रह्मणा साहचर्यं तत्समरसीभूतप्रपञ्चदर्शित्वम् (१।३।८)" इति श्रीकण्ठोक्तिरेतत्पक्षीयसाधकानुभवं व्यनक्ति। तत्सम्प्रदायोचितं तदचितं शाश्वत एवोदाहर्त्तव्यं तृतीये। आधुनिकाः पुनः परात्मना योगेनैकीभूय महोद्यमाविष्कृतावपि स्व-स्वकर्त्तृत्वं तत्र न पश्यन्ति किन्तर्हि परस्य। योगेऽस्मिन् सुतरां रसनिमग्नत्वस्य प्राधान्यम्।

श्रीमच्छ्रीकण्ठः ।

श्रीमद्रामानुजेनास्य साधारणतो मतसाम्येऽपि महत् पार्थक्यं मुक्तिविषये। ततएव तयोर्भिन्नः पन्थाः। नायं भेदः सामान्यः—जीवतोऽपि—"वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपागतस्य विगलितमनुष्यादिदेहविषयकल्पिताहंभावसङ्कोचस्य प्रपन्नविश्वाकारपराहं-भावस्य"—मुक्तत्वावगमात्। श्रीमच्छ्रीकण्ठमते जीवः—

"ब्रह्मणो न जायत एव (२।३।१८)।"

"संसारे (तस्य) किञ्चिज्ज्ञत्वं मुक्तौ सर्व्वज्ञत्वम् (२।३।१९)।"

"विभुत्वे जीवस्य एता उत्क्रान्तिगतागतयो नोपपद्येरन् (२।३।२०)।"

"व्याप्त्या विश्वभुवनाभिभावित्वं यदुक्तं तत्तु मलतिरोधानापगमप्रकटितशक्तिमरीचिव्याप्तमुक्त-जीवविषयम् (२।३।२१)।"

"आत्मा कर्त्तैव ( २।३।३३ )।"

"परमेश्वरायत्तमेव जीवस्य कर्त्तृत्वं न स्वायत्तम् ( २।३।४० )।"

"ब्रह्मणोऽंशत्वेपि तद्व्यपदेशो युक्तः। यथा वह्निना व्याप्तस्य काष्ठादेर्वह्निव्यपदेशतयापि हि तयोर्वह्निकाष्ठयोर्नामभेदः। तस्माज्जीवो ब्रह्मणोऽंशभूतएव तत्स्वरूपः प्रतिपाद्यते ( २।३।४२ )।"

"मायिनः परमेश्वरस्यावयवलेशः पुरुषः ( २।३।४३ )।"

"परमेश्वरसङ्कल्पादस्य बन्धमोक्षौ भवतः ( ३।२।४ )।"

"स्वाभाविकमेव मुक्तस्य स्वरूपं चिदानन्दघनं सर्व्वज्ञत्वादिविशिष्टञ्चाविर्भवति ( ४।४।१ )।"

"प्रादुर्भूतस्वाभाविकापहतपाप्मत्वादिकोमुक्तआत्मा ब्रह्मसदृशगुणस्वरूपः ( ४।४।३ )।"

"मुक्तआत्मा सादृश्यात् ब्रह्मस्वरूपाविभागेन स्वस्वरूपमनुभवति ( ४।४।४ )।"

"ज्ञानरूपत्वेन स्वयम्प्रकाशमपहतपाप्मत्वादियोगात् कल्याणगुणविशिष्टञ्च ब्रह्मसदृशं मुक्त-स्वरूपम् ( ४।४।७ )।"

"मुक्तस्य शिवसदृशस्य सर्व्वज्ञत्वमनादिबोधरूपत्वं नित्यतृप्तत्वं स्वतन्त्रत्वं मलुप्तशक्तिमत्त्वमनन्त-शक्तिकत्वमनन्तशक्तित्वञ्चेति ( ४।४।९ )।"

"स्वप्ने पुरुषो यथा शरीरेन्द्रियादिनिरपेक्ष्येण केवलेन मनसैव ईश्वरसम्पादितान् विषयान् भुङ्क्ते तथा मुक्तोऽपि स्वभूतेन मनसैव ब्रह्मस्वरूपरसमनुभुङ्क्ते ( ४।४।१३ )।"

"मुक्तेन ब्रह्माकारं हि दृश्यते विश्वमेतत्।......तस्य जीवतएव ब्रह्मणश्च तुल्य आनन्दः ( ४।४।१४ )।"

"मुक्तानां विभुत्वम् ( ४।४।१५ )।"

"मुक्तस्य परमेश्वरसाम्येऽपि जगत्सृष्ट्यादिव्यापारवर्ज्जमेव स्वातन्त्र्यं स्वभोग्यवस्तुषु (४।४।१७)।"

"मुक्तानां ब्रह्मानन्दानुभवव्यापारमन्तरेण सृष्ट्यादिव्यापारः स्वेच्छया न सम्भवति (४।४।१९)।"

"भोगमात्रसाम्यं मुक्तस्य ब्रह्मणा (४।४।२१)।"।*।

शक्तिः—

"सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानन्दरूपा देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः शिवस्य स्वरूपञ्च गुणश्च भवति। तद्व्यतिरेकेण ब्रह्मणः सर्व्वज्ञत्व-सर्व्वशक्तित्व-सर्व्व-कारणत्व-सर्व्वनियन्तृत्व-सर्व्वोपास्यत्व-सर्व्वानुग्राहकत्व-सर्व्वपुरुषार्थहेतुत्वादिकं सर्व्वगतत्वञ्च न सिध्यति।......'सर्व्वं खल्विदं ब्रह्म' इति सर्व्वचिदचित्प्रपञ्चशरीरकं ब्रह्माभिधीयते ततो ब्रह्म-रूपत्वात् प्रपञ्चस्य द्वेषाद्यविषयत्वात् शान्त एव ब्रह्मोपासीत इति (१।२।२)।"

"'मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्।

तस्यावयवभूतेन व्याप्तं सर्व्वमिदं जगत्॥'

इति श्रवणात् मायायाः सकलप्रकृतित्वं तद्विशिष्टत्वं महेश्वरस्य तदवयवभूतेनांशभूतेन चिच्छक्ति-शकलभूतेन भोक्तृत्वदशायां पुरुषसंज्ञकेन सकलजगद्व्याप्तिश्चावगम्यते (१।४।२७)।"।*।

ईश्वरः—

"ब्रह्मणो जडाजडप्रपञ्चविलक्षणत्वेन स्वतन्त्रत्वं सिद्धम्, सर्व्वविषयस्वातन्त्र्येण ब्रह्मणः सर्व्वकर्तृत्व-सिद्धिः। स्वाभाविकशक्तिमत्त्वमनुग्रहशक्तिमत्त्वम्।.........अनन्ताभिरेव शक्तिभिर्जगतो जनकं शासकञ्च ब्रह्म भवति।........अनन्तशक्तिमत्त्वात् ब्रह्मणोऽपरिच्छिन्नप्रपञ्चसमवायिकारणत्वं सिध्यति (१।१।२)।"

"सूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्य्यकारणरूपः सत्पदाभिधेयः ('सदेव सोम्येदमग्र आसीत्') (१।१।५)।"

"सर्व्वशरीरिणः कैवल्यावस्थानुत्पत्तिमत् मायिनः परमेश्वरात् सकलचेतनाचेतनप्रकृतिपुरुषो-ऽभिव्यक्तो भवति।...चिदचिद्विशिष्टः परमेश्वरः कारणं कार्य्यञ्च तत्तदवस्थाविशेषात् (१।४।२७)।"

"जीवेश्वरयोः स्वातन्त्र्यमस्वातन्त्र्यञ्च स्वतःसिद्धमेव। अतः स्वतन्त्रस्य परमेश्वरस्य जीवादस्वतन्त्रात् शरीरसम्बन्धसामान्येन नाविभागप्राप्तिः (१।१।१४)।"

"सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत् तदा सत्ताস্फूर्त्तिभ्यां विनाकृतं कथं मूर्त्तिः स्फुरतीति दृश्यते अवस्तुव भवेत्। अतो मृदा घटादिकमिव कारणेन शिवेन कार्य्यमिदं व्याप्तं तदनन्य-भूतञ्च (२।१।१६)।"

"पुंसं स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिमद्भेदेन कैवल्यी भवति। पुनः

शक्त्यात्मिका तादृशी शक्तिं पुनरदृष्टानिरोधिन्यनन्तनामरूपविभागार्हचिदचिद्रूपां बहिर्विकासयति ; तत्र शक्तिमतः शिवस्य सर्वोपावस्था प्रलयो विकाशावस्था सृष्टिः ( २।१।१८ ) ।"

"परमकारणात् परब्रह्मणः शिवादभिन्नमेव कार्य्यम् ( २।१।१ )।"

"कार्य्यत्वेन स्वानन्यभूतादपि चेतनाचेतनप्रपञ्चादि विश्वादधिकएव सर्व्वेशः सर्व्वशक्तिः परमेश्वरः ( २।१।२३ ) ।"

"सर्व्वावस्थासु सर्व्वान्तर्यामितया स्थितेऽपि परमेश्वरस्य न कश्चिद्दोषकलङ्कप्रसङ्गः। कुतः ? सर्व्वेषु श्रुतिषु चास्य निरस्तदोषकलङ्कत्वं निरतिशयमङ्गलाकरत्वं चेत्युभयलिङ्गं हि प्रसिद्धम् ( ३।२।११ ) ।"

"ध्यानरूपं ज्ञानेन सम्यगाराधने ब्रह्मस्वरूपं गच्छति (३।२।२०) ।"

"इयदेव गुणजातं सर्व्वोपसंहार्य्यं येन गुणजातेन सकलेतरव्यावृत्तब्रह्मसनन्वं भवति (३।३,३३) ।"

"सहशब्दः ('सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा') ब्रह्मणानन्दभोगस्य च यौगपद्याभिप्रायः ( ३।३।४१ ) ।"

"यद्यपि जीवादधिकमेव शिवाख्यं परं ब्रह्म तथाप्युपासिता 'अहं ब्रह्मास्मि' इति तदुपासीत ( ४।१।३ ) ।"

"उपासकानामात्मनि ब्रह्मस्वरूपस्य प्रकाशदर्शनात् तत्प्रकाशकारणभूता ब्रह्मभावना नैरन्तर्य्येण आप्रायणं कर्त्तव्या, न कदापि विच्छेद्येति (४।१।१२) ।"

"उपासकानां पूर्व्वोत्तराघयोरश्लेषविनाशौ भवतएव (४।१।१३) ।"

अस्मिन् मते ब्रह्मस्वरूपाविभागेन स्वस्वरूपानुभवस्य प्राधान्यम् ।

अथ चतुर्थः ।

**"ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। ( ८।१२ )।**

अयं हि प्रथमं विवेकम्। चतुर्थे सर्व्वविशेषशान्तं विलीयमथवा तमस्त्वेऽप्यपरीक्षणात्मानाय न कश्चिदन्तराय इत्यभ्युपगन्तव्यम् ? "चिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः कदाचिदपि न निर्व्विशेषत्वमित्यनेन सिद्धम्" इति वचनेन ब्रह्मणो निर्व्विशेषत्वं प्रत्याख्यायत आचार्य्याः केवलं न बहुमन्यन्ते किन्तु हि विशेषत्वं विकारसंसृष्टमिति प्रतिपादयन्तो निर्व्विशेषं ब्रह्म परं ब्रह्म सविशेषन्त्वपरमिति ब्रह्मण्यपि भेदो कल्पयन्ति। अस्ति नास्ति वात्मनि परे कश्चिदीदृशो भेद इति विचारणीयम्। अत्रोक्तमाह श्रीमद्भाष्यकारः—"विरूपा स्थितिमात्रावाप्तः 'ताव-

श्रीमच्छङ्करः ।

तन्मते "सर्व्वस्यात्मत्वाच्च ब्रह्मात्मत्वप्रसिद्धिः । सर्व्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्व्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म" इति । स आत्मा अप्रत्यक्षोऽतः शरीरादिसम्बन्धस्यासत्त्वसंसाधनेनापरोक्षज्ञानविषयो भवति । तद्वचनम्— "सर्व्वदुःखविमुक्तैकचैतन्यात्मकोऽहमिति एष आत्मानुभवः । न चैवमात्मानमनुभवतः किञ्चिदन्यत् कृत्यमवशिष्यते ।" इति । वस्तुतस्तु परात्माखिलज्ञानविलुप्ताद्यभावे च तस्मिन् केवलात्मस्वरूपोऽहं ब्रह्मास्मीति भावः प्रसिद्ध्यति सर्व्वक्रियाकर्तृत्वाज्ञस्याकर्त्तुर्भोक्तुः सन्निधौ । न सर्व्वेषामेवमपरोक्षज्ञान-सम्भावनास्तीति हेतोः तत्प्रतीते मृषभावे जगतोऽस्य ऐकान्तिकसत्त्वं यथा दृश्यते तथाऽविद्योप-स्थापितत्वञ्च । एवं विभिन्नितत्वं पश्यता तज्ज्ञाप्यस्य सन्दिग्धार्थता चेति न मन्तव्यम् । तन्मते जीवस्य—

"उपाध्युत्पत्तौ चास्योत्पत्तिः तत्प्रलये च प्रलयः । उपाधिप्रलये नात्मप्रलयः ।......अवि-कृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात् । लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव (२।३।१७) ।"

"नित्यचैतन्योऽयमात्मा । अतएव यस्मादेव नोत्पद्यते परमेव ब्रह्माविकृतमुपाधिसम्पर्काज्जीव-भावेनावतिष्ठते (२।३।१८) ।"

"अस्यात्मत्वसिद्धिः (२।३।२०) ।"

"न स्वाभाविकं कर्तृत्वमात्मनः सम्भवत्यनिर्मोक्षप्रसङ्गात् ।......न हि विवेकिनां परस्मादन्यो जीवो नाम कर्त्ता भोक्ता वा विद्यते ।......अयमात्मा सर्व्वव्यापारेष्वपेक्षेत मनआदीनि करणानि कर्त्ता भवति स्वात्मना त्वकर्त्तैव (२।३।४०) ।"

"अविद्यावस्थायां कार्य्यकारणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादा-त्मनः कर्म्माध्यक्षात् सर्व्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिस्तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिः (२।३।४१) ।"

"परायत्तेऽपि कर्तृत्वे करोत्येव जीवः कुर्व्वन्तं हि तमीश्वरः कारयति (२।३।४२) ।"

"चैतन्यञ्चाविशिष्टं जीवेश्वरयोर्यथाग्निविस्फुलिङ्गयोरौष्ण्यम् । अतो भेदाभेदावगमाभ्यामंश-त्वावगमः (२।३।४३) ।"

"किं पुनर्जीवस्येश्वरसमानधर्म्मत्वं नास्त्येव ? न नास्तीति । विद्यमानमपि तु तत्तिरोहित-मविद्याव्यवधानात् । तत् पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वा-न्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्य्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति न स्वतएव सर्व्वेषां जन्तूनाम् (३।२।५) ।"

"केवलेनैवात्मनाभिनिष्पद्यते नागन्तुकेनापररूपेणापि (४।४।१) ।"

"अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते (४।४।४)।"

"सङ्कल्पादेव तेषां यावत् प्रयोजनं स्थैर्योपपत्तिः (४।४।८)।"

"अनन्यसङ्कल्पत्वादनन्याधिपतिर्विद्वान् भवति (४।४।९)।"

"शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामा भवन्ति (४।४।१३)।"

"भावे पुनस्तनोर्जाग्रतीति विद्यमाना एव पित्रादिकामा भवन्त्येवं मुक्तस्यापि (४।४।१४)।"

"यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात् एवमेकोऽपि सन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति (४।४।१५)।"

"जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य (४।४।१७)।"

"नित्यसिद्धेश्वरायत्तम् ( आधिकारिकाणाम् ) इतरेषामैश्वर्यम् (४।४।१८)।"

"भोगमात्रमेषामनादिसिद्धेनेश्वरेण समानम् (४।४।२१)।" ।७।

माया—

"अविद्यात्मिका ( प्रत्यगात्मन्यनात्माध्यासोऽविद्या ) हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः। तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम् 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति श्रुतेः। क्वचिदक्षरशब्दोदितम् 'अक्षरात् परतः परः' इति श्रुतेः। क्वचिन्मायेति सूचितं 'मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति मन्त्रवर्णात्। अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् ( १।४।३ )।"

"यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति। यथा च स्वप्नदृगेकः स्वप्नदर्शनमायया न संस्पृश्यते प्रबोधसंप्रसादयोरनन्वागतत्वात् एवमवस्थात्रयसाक्ष्येकोऽव्यभिचार्यवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते। मायामात्रं ह्येतत् परमात्मनोऽवस्थात्रयात्मनावभासनं रज्ज्वा इव सर्पादिभावेनेति ( २।१।९ )।" इति ।८।

ईश्वरः—

"ननु ईश्वरोऽपि शरीरी भवति? सत्यं शरीरी भवति न तु शारीर एव भवति ( १।२।६ )।"

"अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ सम्भवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतो यथा घटाकाशो महाकाश इति ( १।२।२० )।"

"ननु शुद्धब्रह्मवादिन एकत्वैकान्त्यात् ईशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेत्, न, अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् सर्व्वज्ञत्वस्य, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात् सर्व्वज्ञात् सर्व्वशक्तेरीश्वराज्जगदुत्पत्तिस्थिति-लयाः, नाचेतनात् प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातो 'जन्माद्यस्य यतः' इति। सा प्रतिज्ञा तदवस्थैव न तद्विरुद्धोऽर्थः पुनरिहोच्यते। कथं नोच्येत—अत्यन्तमात्मन एकत्वमद्वितीयत्वञ्च ब्रुवता। शृणु यथा नोच्यते,—सर्व्वज्ञस्येश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वा-भ्यामनिर्व्वचनीये संसारप्रपञ्चबीजभूते सर्व्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिल-प्येते, ताभ्यामन्यः सर्व्वज्ञ ईश्वरः 'आकाशो वै नामरूपयोर्निर्व्वहिता ते यदन्तरा तद् ब्रह्म' इति श्रुतेः। 'नामरूपे व्याकरवाणि' 'सर्व्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' 'एकं बीजं बहुधा यः करोति' इत्यादिश्रुतिभ्यश्च। एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि। स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापि-तनामरूपकृतकार्य्यकरणसङ्घातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये। तदेव-मविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्व्वज्ञत्वं सर्व्वशक्तित्वञ्च न परमार्थतो विद्ययापास्त-सर्व्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्व्वज्ञत्वादिव्यवहार उपपद्यते। तथा चोक्तम्—'यत्र नान्यत्-पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति। 'यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादि च। एवं परमार्थावस्थायां सर्व्वव्यवहाराभावं वदन्ति वेदान्ताः।......सूत्र-कारोऽपि परमार्थाभिप्रायेण 'तदनन्यत्वम्' इत्याह, व्यवहाराभिप्रायेण तु 'स्याल्लोकवत्' इति महा-समुद्रस्थानीयतां ब्रह्मणः कथयति, अप्रत्याख्यायैव कार्य्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति सगुणोपा-सनेषूपयुज्यते (२।१।१४)।"

"यदा तत्त्वमसीत्येवं जातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवत्यपगतं तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्। समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् (२।१।२२)।" । ० ।

तथा—

"द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतञ्च सर्व्वोपाधिवर्ज्जितम्। ...... यद्यप्येक आत्मा सर्व्वभूतेषु स्थावरजङ्गमेषु गूढः, तथापि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यस्यैकरूपस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्य्यशक्तिविशेषैः श्रूयते। ... एवमेकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धञ्चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते (१।१।११)।"

सूचनात्; जीवेत् सर्गाभावेऽधिकारिब्रह्मादिरूपेणापि वर्त्तेतेति। एतत्तु पक्षद्वयमनुक्तमपि पुनः वर्ण्यते।

“इदं शास्त्रं जीवनिरूपणपरं न भवति। ‘अथातो ब्रह्मजिज्ञासा’ इति परब्रह्मविचारस्यैव प्रतिज्ञातत्वात् अन्ते च परब्रह्मण्येवोपसंहारात्।

‘उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥’

इति सर्वसम्मतानां तात्पर्यग्राहकलिङ्गानामत्र दर्शनात् ब्रह्मशेषत्वेन सांख्यादिशास्त्रैरेव जीवतत्त्वस्य निरूपितत्वात्, तन्निरूपणस्य पूर्वमीमांसानिरूपितकर्मशेषतया निरूपयितव्यत्वात्। न चात्र ब्रह्मात्मैक्यतया जीवनिरूपणेन वैयर्थ्यं स्यादिति वाच्यम्। तथा सति तस्यैव मुख्यतः शास्त्रार्थतया ‘अथातो जीवब्रह्मैक्यजिज्ञासा’ इत्येव प्रतिज्ञासूत्रं युज्येत न पुनरेवंरूपप्रतिज्ञाकरणम्। जिज्ञास्यता यदि कुत्रापि सूत्रे स्फुटमुपलभ्येत तदेवमपि तथा कथञ्चित् कल्प्येत तदेव तु नैव। वयं यथाश्रुतार्थं परित्यज्य मुमुक्षवः भ्रान्तीरन्निति दिक्।” इति।

अजातमक्षतमशोकममूलं मूलमेव यत्।
को न तच्छरणं यातो वेदान्ते द्वेषवान् कुतः॥

वेदान्तसूत्राणि विविच्य धीराः
पक्षैः समस्तैरविरोधमाप्ता।
निरस्तवैषम्यकला विचारं
कुर्वन्तु वेदान्तसमन्वयस्य॥

इति तत्त्ववल्ली द्वादशोऽध्यायः।

समाप्तश्चायं वेदान्तसमन्वयः।

---

# परिशिष्टाख्य-प्रपूर्त्तिः ।

## प्रश्नानुक्रमम् ।

३ पृष्ठे ६खण्डे —

ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्व्वविद्याप्रतिष्ठामथर्व्वाय ज्येष्ठपुत्राय प्राह । १ ।

अथर्व्वणे यां प्रवदेत ब्रह्माथर्व्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भरद्वाजाय सत्यवाहाय प्राह भरद्वाजोऽङ्गिरसे परावराम् । २ ।

## आरोहक्रमम् ।

४९ पृष्ठे ५मखण्डे —

अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति कस्मिन्नु सर्व्वे संप्रतिष्ठिता भवन्ति । १ ।

तस्मै स होवाच ।

८८ पृष्ठे १४खण्डे —

अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳस्मः प्रापय न आचार्य्यकुलम् । १ ।

तत्र ८९ पृष्ठे—

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यथाभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश । १ ।

तमग्निरभ्युपवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । २ ।

तत्र ९० पृष्ठे—

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश । १ ।

**तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । २ ।**

तत्र तस्मिन् पृष्ठे —

**मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय पश्चादग्नेः प्राङुपोपविवेश ।१।**

**तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । २ ।**

परात्मवर्णनम् ।

१८२ पृष्ठे ७मस्यार्थे —

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौशल्यो राजपुत्रो मामुपेत्यैवं प्रश्नमपृच्छत । षोड़शकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिदं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तुष्णीं रथमारुह्य प्रवव्राज ।**

समाप्तौ पुनः प्रश्नस्य —

ते तमर्चयन्तस्त्वं नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।

जीवात्मवर्णनम् ।

२२८ पृष्ठे इतः प्रोक्तव्याख्यानस्य मूलमितत —

**उशन् ह वै वाजश्रवसः सर्व्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । १ ।**

**तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश सोऽमन्यत । २ ।**

उशन्निति । उशन् कामयमानः —सर्वमेधयज्ञफलमिति शेषः— ह वै —इत्यैतिह्यार्थको निपातौ —वाजश्रवसः तदाख्यो नृपतिः सर्व्ववेदसं सर्वस्वं धनं ददौ दत्तवान् । तस्य राज्ञः नचिकेताः नाम पुत्रः—ह किल—आस बभूव । १ ।

तमिति । तं पुत्रं सन्तं कामक्रोधविकाररहितं कुमारं बालं दक्षिणासु दक्षिणार्थासु गोषु नीयमानासु ऋत्विग्भिर्गृहं नीयमानासु सतीषु श्रद्धा सत्यावधारणवती बुद्धिः आविवेश आविष्टवती । तदाविष्टः स नचिकेताः अमन्यत । २ ।

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः।
अनन्दानाम ते लोकास्तान् स गच्छति ता ददत् ॥ ३
सहोवाच पितरं तत कस्मै मां दास्यसीति।
द्वितीयं तृतीयं तꣳहोवाच मृत्यवे त्वा ददामीति ॥ ४
बहूनामेमि प्रथमो बहूनामेमि मध्यमः।
किꣳस्विद् यमस्य कर्त्तव्यं यन्मयाद्य करिष्यति ॥ ५
अनुपश्य यथा पूर्व्वे प्रतिपश्य तथापरे।
शस्यमिव मर्त्त्यः पच्यते शस्यमिवाजायते पुनः ॥ ६
वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।
तस्यैताꣳ शान्तिं कुर्व्वन्ति हर वैवस्वतोदकम् ॥ ७
आशाप्रतीक्षे सङ्गतꣳ सूनृताञ्चेष्टापूर्त्ते पुत्रपशूꣳश्च सर्व्वान्।

किमसन्वत तदाह पीतोदका इति। पीतोदकाः पीतम् उदकं याभिः ताः, जग्धतृणाः जग्धं भक्षितं तृणं याभिः ताः, दुग्धदोहाः दुग्धः दोहः क्षीराख्यः यासां ताः—पुनस्तत्‌क्रियास्वक्षमाः—निरिन्द्रियाः प्रजननसामर्थ्यरहिताः—जीर्णाः निष्फलाः इत्यर्थः—ताः गाः ददत् स यजमानः तान् लोकान् गच्छति ये ते लोकाः अनन्दाः अनानन्दाः असुखाः नाम—तन्नाम्ना प्रसिद्धाः। ३।

स इति। स नचिकेताः पुनः पितरमुवाच—हे तत तात, कस्मै ऋत्विग्विशेषाय मां दास्यसि इति। पिता उपेक्षमाणोऽपि द्वितीयं तृतीयम् अपि उवाच—कस्मै मां दास्यसि कस्मै मां दास्यसि इति। राजा पुनःपुनरुपद्रुतः क्रुद्ध उवाच—त्वां त्वाम् मृत्यवे ददामि इति। ४।

एवमुक्तः स चिन्तयामास—बहूनां पुत्राणां शिष्याणां वा प्रथमः सन् एमि गच्छामि यमम् इति शेषः। केषु केषाञ्चिदपि—बहूनां मध्यमः सन् एमि, न जात्वधमः। किंस्वित् यमस्य कर्त्तव्यं करणीयम् अस्ति, यत् अद्य पिता मया करिष्यति साधयिष्यति ?। ५।

सत्यपालनप्रोत्साहनाय पितरमुवाच अनुपश्येति। यथा पूर्व्वे अतिक्रान्ताः पितृपितामहादयः कृतवन्तः तत् अनुपश्य आलोचय, तथा अपरे वर्त्तमानाः साधवः यथा वर्त्तन्ते तत् प्रतिपश्य आलोचय। पुत्रवात्सल्यादसत्याचरणेन न कश्चिल्लाभः यतः मर्त्त्यः मरणशीलः मानवः शस्यम् इव पच्यते जीर्णो भवति। शस्यम् इव पुनः आजायते आविर्भवति। ६।

सएव मुक्ता यमालयं जगाम। तत्र दिनत्रयानन्तरं गृहे प्रत्यागतं यमं तदमात्याः प्रोचुः—अतिथिः ब्राह्मणः ब्रह्माधिष्ठानः अतएव वैश्वानरः अग्निस्वरूपः—तस्य देवी अग्नेः स लोकसंज्ञोपलक्षितः नेता—परात्मा गृहान् प्रविशति तत्कालेन—अतिथौ तादृशी दृष्टिः कर्त्तव्या। हे वैवस्वत यम, उदकं पानीयम् हर आहर। कथम्? तस्य आतिथेयस्य एतां वर्त्तमानां संवरणरूपां शान्तिं कुर्व्वन्ति पाद्येनार्घ्यादिना अतिथय इति शेषः। ७।

किञ्च आशेति। आशा प्रतीक्षे—आशा अप्राप्तार्थप्रार्थना, प्रतीक्षा अविज्ञातप्राप्तार्थ प्रतीक्षणं ते,

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठाम् विद्धि त्वमेतं निहितं गुहायाम् ॥ १४
लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत् प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥ १५
तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥ १६
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ १७
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८
एष तेऽग्निर्नचिकेतः स्वर्ग्योऽयमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९

प्र ते इति । लोकादिमिति । व्याख्याते (१।१) । १४ । १५ ।

तम् आह तामिति । प्रीयमाणः महात्मा यमः तं नचिकेतसम् अब्रवीत्—इह अद्य भूयः तव वरं ददामि । कोऽसौ वरः ? असौ अग्निः तव एव नाम्ना—नचिकेत इति—भविता । इमाम् अनेकरूपां विचित्रां सृङ्कां शब्दवतीं रत्नमयीं मालां गृहाण । अनेकगतिहेतुत्वात् सृङ्केति भावः । १६ ।

त्रिणाचिकेत इति । व्याख्यातः (१।१) । १७ ।

त्रिणाचिकेत इति । यः त्रिणाचिकेतः—त्रिकृत्वो नाचिकेतोऽग्निश्चितो येन सः—एवं विद्वान् नाचिकेतम् एतत् त्रयम् इष्टकात्रयं विदित्वा—तत्र तत्र लोकादिदृष्टिमग्नौ च सङ्ख्यादियत्वं विज्ञाय—चिनुते स पुरतः शरीरपातात् पूर्वं मृत्युपाशान् प्रणोद्य अपहाय शोकातिगः सन् स्वर्गलोके मोदते । १८ ।

एष इति । हे नचिकेतः, एष ते अग्निः स्वर्ग्यः स्वर्गसाधनः द्वितीयेन वरेण एतम् अग्निं अवृणीथाः । जनासः जनाः तव एव एतम् अग्निं प्रवक्ष्यन्ति । हे नचिकेतः, अतः तृतीयं वरं वृणीष्व । १९ ।

१५३ पृष्ठे तृतीयवल्ल्यन्ते—

नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६
य इमं परमं गुह्यꣳ श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पते ॥
इति । १७ ।

## कठोपनिषत् ।

११० पृष्ठे चतुर्थवल्ल्याम् —

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते । ४।२ ।

ये बाला: पराच: बहिर्गतान् कामान् अनुयन्ति अनुसरन्ति ते विततस्य सर्वतो व्याप्तस्य मृत्यो: पाशं यान्ति बध्यन्ते। अथ अतएव धीरा: ध्रुवं शाश्वतम् अमृतत्वं विदित्वा आत्मा इह संसारे अध्रुवेषु बहिर्विषयेषु न प्रार्थयन्ते न अभिलषन्ति किमपि ।

तत्रैव पञ्चमवल्ल्याम् —

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ५।६।७ ।

मरणं प्राप्य मरणानन्तरं यथा च आत्मा भवति गतिं प्राप्नोति। देहिनः जीवा: शरीरत्वाय शरीरग्रहणार्थं यथाकर्म यथाश्रुतं यथाविज्ञानं योनिमन्यां प्राणिवर्गं प्रपद्यन्ते आश्रयं लभन्ते, अन्ये अधमा: स्थाणुं वृक्षादिकम् अनुसंयन्ति अनुगच्छन्ति तदाकारा भवन्ति। अयमर्थ: छान्दोग्ये बृहदारण्यके च ।

६०० पृष्ठे ३य अध्याये —

जनको वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र च कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति। स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः । १ ।

तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति। ते च ब्राह्मणा न दधृषुः। अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच—एताः, सोम्य, उदज, सामश्रवा३ इति ता होदाचकार। ते ह ब्राह्मणाश्चुक्रुधुः—कथं नो ब्रह्मिष्ठो ब्रुवीतेति। अथ ह जनकस्य वैदेहस्य होताश्वलो बभूव, स हैनं पप्रच्छ—त्वं नु खलु नो, याज्ञवल्क्य, ब्रह्मिष्ठोऽसी३ इति। स होवाच—नमो वयं ब्रह्मिष्ठाय कुर्मः, गोकामा एव वयं स्म इति। तं ह तत एव प्रष्टुं दध्रे होताश्वलः । २ ।

---

# उपनिषत्-प्रतीकानि ।

कुत्र वाक्यमुद्धृतानि पृष्ठसंख्यया निर्णेयानि ।

"ईश-केन-कठ-प्रश्न-मुण्ड-माण्डुक्य-तित्तिरिः ।
ऐतरेयञ्च छान्दोग्यं बृहदारण्यकन्तथा ॥"
"......श्वेताश्वः......"

## ईश ।



## केन ।

## मुण्डकः ।

## बृहदारण्यकम्।

---

## भ्रमशोधनम्।

७२८पृष्ठा।

सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम। बृ, ३।८।१२।

जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज। तं होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति। उभयमेव सम्राडिति होवाच। बृ, ४।१।१।

---

